# BṚHATĪ

OF

# PRABHĀKARA MIŚRA

WITH

ṚJUVIMALĀ PAÑCIKĀ OF ŚĀLIKANĀTHA

PART V

*EDITOR*:

S. SUBRAHMANYA SASTRI

MADRAS UNIVERSITY SANSKRIT SERIES No. 26.

# BṚHATĪ

OF

## PRABHĀKARA MIŚRA

[A COMMENTARY
ON THE MĪMĀMSĀ SŪTRABHĀṢYA OF
ŚABARASVĀMIN]

WITH

ṚJUVIMALA PANCIKĀ OF ŚĀLIKANĀTHA

PART V

(Adhyayas 6, 9, 10, and 12)

*Critically Edited by* :

**S. SUBRAHMANYA SASTRI**, M.A., SIROMANI

*Reader in Sanskrit,*

*University of Madras*



UNIVERSITY OF MADRAS

1967

मद्रपुरीयविश्वविद्यालय संस्कृतग्रन्थावलिः २६.

ग्रन्थाङ्कः २६

# बृहती

( शबरभाष्यव्याख्या )

श्रीप्रभाकरमिश्रविरचिता

श्रीशालिकनाथमिश्रप्रणीतया ऋजुविमलापञ्चिकया समेता

( षष्ठ नवम दशम एकादश द्वादशाध्यायाः )

संपादकः

एस्. सुब्रह्मण्यशास्त्री

पण्डितराजः शास्त्ररत्नाकरः न्यायवेदान्तविद्वान् मीमांसकशिरोमणिः

मद्रपुरीयविश्वविद्यालयः

१९६७

# PREFACE

We have great pleasure in issuing Vol. V of the Bṛhatī of Prabhākara with its commentary Ṛjuvimalā by Śālikanātha. Among the three schools of Mīmāmsā, *Bhaṭṭa* School was built up and developed by various scholars right from Kumarila Bhaṭṭa down to Sri Appayya Dixita, Khaṇḍadeva and Śambhu bhaṭṭa through their immortal works which are taught and studied even today in Sanskrit Pāṭhasālas and Colleges. The *Murāri miśra School* of Mīmāmsā founded by Murārimiśra did not flourish long. Trīpādī Nītinayana a solitary work in that school was published by the late T. R. Chintamani a former lecturer in Sanskrit of this University. The *Prābhākara* School of Mīmāmsā founded by Prabhākaramiśra though scholarly and full of vitality did not make much headway in Bharat. Its existence was known to Sastric scholars only through its references made for condemning its tenets in later Nyaya, Vedanta and Bhāṭṭa Mimāmsā works. Prakaraṇa pancikā a primer of this school by Śālikanātha was the only work known to us in the early years of this century. Later when Mahamahopadhyaya Kuppuswami Sastri of revered memory became the curator of the Oriental Manuscripts Library, Madras, he found out the existence of some more works pertaining to this School in Kerala and Bengal and got all of them copied for that library. Under his able guidance and supervision Sri S. K. Ramanatha Sastri a former junior lecturer of this Department brought out a critical edition of the first Pāda of the first chapter of Bṛhatī of Prabhākara with Ṛjuvimalā of Śalikanātha in 1934. When I took charge of his post in 1948 I took up the editing of Bṛhatī with Ṛjuvimalā according to the wishes of the late professor Kunhanraja and brought out two volumes of this rare and valuable work comprising chapters I ii to V. The volume now issued comprises Bṛhatī along with Ṛjuvimalā upto Pāda ii of chapter VI and thereafter Ṛjuvimalā alone for Pādas 3 to 8 of chapter VI, the whole of chapter IX, three Pādas and some adhikaraṇas in Pāda IV of chapter X and a few pages of chapter XII.

It is a surprise that nowhere in India a manuscript of Brhati extending upto Chapter XII is available though the

commentary is available in fragments in almost all libraries of India. Even in Kerala the birth place of Prabhākara where this school of Mīmāmsā was built up and studied traditionally till recent times, no manuscript of Bṛhatī is available. The text was however made perfect with the help of Ṛjuvimalā which quotes whole passages of Bṛhatī for commenting on them. As Ṛjuvimalā is free from errors and gives a perfect idea of the views of Prabhākara by itself without the text I have included all the text-less portions of Ṛjuvimalā also in this volume.

I take this opportunity to thank the Curator Oriental Mss. Library, Madras and the Librarian, Adyar Oriental Research Institute for making the manuscripts of Ṛjuvimalā and Bṛhatī in their custody available for my use in editing this work.

My thanks are due to Dr. V. Raghavan Professor of Sanskrit for all his help.

**Manuscripts Used**

(1) *Bṛhati*—Paper manuscript belonging to the Government Oriental Mss. Library, Madras.

(2) *Ṛjuvimalā* (i) One palm leaf ms. in Malayalam containing chapter VI.—G.O.M.L., Madras.

(ii) One palm leaf manuscript in Grantha containing chapter IX and three padas of Chapter X. *ibid.*

(iii) Paper mss. containing chapters IX and X belonging to he Adyar Mss. Library.

(iv) Paper ms. of a few pages of chapter XII belonging to the G. O. M. L. Madras.

S. SUBRAHMANYA SASTRI

# ॥ विषयसूचिका ॥

## ॥ षष्ठाध्याये प्रथमः पादः ॥

(१) लोके न नियोज्यो नाम कश्चिद्वाक्यार्थेऽन्वयी प्रतीयते। नियोज्याभावेपि फलत एव प्रमाणान्तरमधिगम्य तत्कर्मणि फलार्थिनोऽधिकारावगमात् उपपन्नमनुष्ठानम्। न नियोज्यत्वे कश्चिच्छब्दोऽस्तीति प्राप्ते ब्रूमः, सत्यमेवं लोके, वेदे तु कार्यप्रतिपादकत्वाल्लिङादीनां अनुष्ठानं विना कार्यस्य कार्यत्वानुपपत्तेः अनुष्ठानसिद्ध्यर्थमधिकारोऽभ्युपगमनीयः। वैदिकं च फलं न प्रमाणान्तरावसेयम्। तस्मात् अधिकारसिद्ध्यर्थं स्वर्गकामादीनां नियोज्यत्वेनान्वयो वाच्यः। यः कार्यं स्वीयतया बुद्ध्यते स नियोज्यः। न चाकामोपायं कामी कार्यतया प्रतिपत्तुमर्हति। न च कालान्तरभाविनि फले यागः कार्यतयाऽन्वयीति यागातिरिक्तं कार्यं सिद्ध्यति यागः तत्प्रतिसाधनत्वेन सम्बध्यते। ततश्चानुष्ठानमुपपद्यत इति। अतस्सिद्धो वेदे नियोज्यः॥ १

(२) विनियोगस्याधिकारपूर्वकत्वात् यथाधिकारं व्यवस्थायां सामर्थ्यानुसारेण विनियोगः। ततश्च देवतादीनामपि यागाधिकारः इति प्राप्ते अनिर्धारितविशेषेणाप्यधिकारिणा साधिकारित्वोपपत्तौ विनियोगासिद्धेः तदनुसारेण तत्समर्थाधिकारिविशेषाश्रयणं न्याय्यम्। अतः असमर्थानां देवादीनां नाधिकार इति राद्धान्तः। अयं विचारः तिर्यक्षु पङ्ग्वादिषु देवतासु च तुल्य इत्यैकाधिकरण्यम्। —५५

(३) कर्तृगतमेकत्वं सङ्ख्यान्तरमिव लिङ्गमपि लिङ्गान्तरं निवर्तयतीति पुंस एवाधिकारः न स्त्रियाः, न च सहाधिकारः इति प्राप्ते, नरजात्यवच्छन्नस्याधिकारात् स्त्रिया अप्यधिकारः तत्रापि "अनया सह" इत्युक्तेः नातिचरितव्येयं इत्युक्तेः, क्षौमे वसानौ इति द्विवचनश्रुतेः सहितयोरधिकारः। —५९

(५) वसन्ते ब्राह्मणोऽग्नीनादधीत इति आधाने एकत्वं पुंस्त्वं च श्रूयते। पुनश्च क्षौमे वसानौ अग्नीनादधीयातां इत्यत्र द्विवचनं श्रूयते। तत्र द्वयोः पुंसोरधिकारः, न स्त्रीसहितस्य पुंसः, युगपदधिकरणे द्वन्द्वविधानात्। औकारान्तशब्देन एकः पुमान् तावदवगम्यते तस्य द्वितीयोऽपि पुमानेव न स्त्री, वाचकाभावात्। इति प्राप्ते।

नायं द्वयोः पुंसोर्वाचकः अप्रवृत्तिविशेषकरतया क्षौमपदवैयर्थ्यात् वसनाधानयोश्च प्राप्तत्वात् । सद्वितीयपुंविशिष्टाधानानुवादेन क्षौमविधाने सति सद्वितीयत्वं मृग्यं किं स्त्रिया उत पुरुषेणेति तत्र पत्न्या सहधर्मचरणात् तयैव सद्वितीयत्वं युक्तम् । —६६

(६) स्त्रीपुंसोः सहभावेन कर्तृत्वे किं सर्वेषु याजमानपदार्थेषु सहभावः उत केषुचिदेवेति संशये सहाधिकारात् सकलेष्वेवेति प्राप्ते प्रयोग एव सहकर्तृत्वं न यागे । तत्र एकेनापि कृते पदार्थे प्रयोगः कृतो भवति इति न स्त्रियाः सकलप्रयोगकर्तृत्वम् । सहाधिकारवचनेन अन्यतरेणापि कृतं कृतमेव भवतीति ॥ —७१

(७) किमुपनयनमध्ययनाङ्गं उताचार्यकरणविध्यङ्गमिति । पूर्वपक्षस्तु उपनयनमध्ययनाङ्गं, ततश्च उपनयनेन प्राप्तविद्यः विद्यासाध्यासु कामश्रुतिषु अधिक्रियते । ततश्च कामश्रुतयः विद्यां प्रयुञ्जानाः कामित्वाविशेषात् शूद्रस्यापि विद्यां तदङ्गभूते उपनयनाध्ययने च प्रयुञ्जते इति भवति तस्याप्यधिकारः । सिद्धान्तस्तु अष्टवर्षं ब्राह्मणमुपनयीतेत्यात्मनेपदश्रवणात् आचार्यत्वसंपादकमुपनयनम् । ततश्चाचार्यकरणविधिप्रयुक्तमध्ययनं अन्यविधिप्रयुक्तविद्यालाभात् कामश्रुतयो न विद्याङ्गं प्रयुञ्जते । ततश्च अध्ययनविधिभ्यः शूद्रस्य मन्त्रवत्स्वनधिकारो विद्याविरहात् । ७३

(८) अद्रव्यस्य कर्मस्वनधिकारः अनाहिताग्नेरिवेति चेन्न, अद्रव्यस्यापि स्वाभाविकी द्रव्यसाध्यकर्मानुष्ठानशक्तिरस्त्येव । तथा च तस्य कदाचिद्द्रव्यं भवत्येव । अधिकृतस्य जीवनायेव कर्मार्थमपि द्रव्योपादानं भवत्येवेति । —७६

(९) अङ्गहीनस्य न याग इति प्राप्ते, यस्य रोगश्चिकित्सितुं शक्यते तस्य स्यादेवाधिकारः यस्य पुनरचिकित्स्यरोगः न तस्याधिकारः । —७९

(१०, ११) एकं वृणीते द्वौ वृणीते त्रीन् वृणीते इत्यत्र वचनानि त्वपूर्वत्वात् इति सर्वत्र विधिकल्पना । एकवाक्यतासम्भवे तद्भेदो न युक्तः । अवगम्यते च परस्परसम्बन्धः त्रिषु विधीयमानेषु न चतुरो वृणीते इत्यादीनामनुवादोपपत्तेः तत्रैव विधिः एकस्य द्वयोश्च प्राप्तत्वादनुवाद एव । —८०

(१२) त्रैवर्णिकानामेवोपनयनं येषामुपनयनं तेषामेव विद्या आचार्यकरणविधिप्रयुक्तत्वादध्ययनस्य । येषां विद्या तेषामेवाधानं ततश्च रथकारजातीयस्याधानासम्भवात्

## ।। तृतीयः पादः ।।

॥ चतुर्थः पादः ॥



॥ पञ्चमः पादः ॥

॥ षष्ठः पादः ॥

## ॥ सप्तमः पादः ॥



## ॥ अष्टमः पादः ॥

## ॥ नवमाध्याये प्रथमः पादः ॥

## ॥ द्वितीयः पादः ॥

## ॥ तृतीयः पादः ॥



## ॥ चतुर्थः पादः ॥

॥ दशमाध्यायस्य प्रथमः पादः ॥

## ॥ द्वितीयः पादः ॥

॥ अथ तृतीयः पादः ॥

## ॥ चतुर्थः पादः ॥



## ॥ द्वादशाध्यायस्य प्रथमः पादः ॥



---

# बृहती

## शाबरभाष्यव्याख्या

## षष्ठाध्यायस्य प्रथमः पादः

—: * :—

॥ १ ॥ द्रव्याणां कर्मसंयोगे, गुणत्वेनाभिसम्बन्धः ॥ १ ॥

अथ वृत्तेन संबन्धकथनं किमित्यत्र तु न क्रियते । संबन्धाभावादिति ब्रूमः । पञ्चलक्षणापेक्षो ह्यधिकार इति ।

[ पञ्चलक्षणापेक्षे ह्यपेक्षा । एवं तर्हि पञ्चापि कीर्तनीयानि । न

---

ऋजुविमला - पञ्चिका

द्रव्याणाम् । अत्रैवमाक्षिपति-यदि वृत्तेन सह संबन्धोऽस्ति तदाऽसौ किमिति न कीर्तितः । अथ न तदाऽस्मिन्नेव स्थाने किमित्यधिकारलक्षणस्यारम्भ इत्यनेनाभिप्रायेणाह—**अथ वृत्तेन सह संबन्धकथनं किमित्यत्र तु न क्रियते** । सर्वत्र कृतस्य सम्बन्धकथनस्यात्राकरणे हेतुर्वर्णनीय इत्यर्थः । उत्तरं—**सम्बन्धाभावादिति ब्रूमः** । कथं तर्ह्यस्मिन्नेव स्थाने अधिकारलक्षणारम्भः ? अत आह—**पञ्चलक्षणापेक्षो ह्यधिकारः** पञ्चानां प्रमाणादीनां लक्षणमपेक्षते अधिकारःचिन्ताप्रारम्भाय न पुनरवगतय इति । आशयमबुद्ध्वा चोदयति—**पञ्चलक्षणापेक्षे ह्यपेक्षा । एवं तर्हि पञ्चापि कीर्तनीयानि** । प्रमाणभेदविनियोगोपादानक्रमलक्षणं वृत्तं इदानीमधिकारलक्षणं वर्तयिष्यामः इत्येवं पञ्चापि कीर्तनीयानि । परिहरति—**न कीर्तनीयानि** । एवं तर्हि यस्मात्तैरपि प्रत्येकं संबन्धो नोपपद्यते । विनियोगोपादानक्रमास्तावत् अधिकारापेक्षा एव[1] । ग्राहक-

---

1. पेक्षैव - मा.

कीर्तनीयानि। न च समुदायो नाम कश्चिदर्थान्तरभूतो विद्यते। यदि पञ्चभिरपि संबन्धो नास्ति कथं तर्हि पञ्चलक्षणापेक्षो ह्यधिकार इत्युच्यते।]

परस्परापेक्षेषु पञ्चसु परिसमाप्तेषु अधिकारस्यावसर इति पञ्चलक्षणापेक्षो ह्यधिकार इत्युच्यते न पुनर्हेतुतः। न क्रमपर्यन्त उपदेशोऽधि-

---

पूर्वको विनियोगः परार्थे नेष्यते। तथा साधिकारस्य विधेरुत्पत्तिविनियोगप्रयोगाक्षेपः। अधिकाराक्षेपस्तु सिद्धे सति अधिकारलक्षणसंबन्धे भवति इति वक्ष्यामः। क्रमः पुनः प्रयुक्त्युत्तरकालभावी। अधिकारपूर्वकः शास्त्रभेदोऽपि नाधिकारं प्रति हेतुः। अभिन्नेऽपि शास्त्रार्थे शब्दतोऽधिकारावगतेः। नन्वभिन्नेऽपि शास्त्रार्थेऽनुष्ठानसामर्थ्याभावादधिकारो नोपपद्यते। सत्यम्। तथाप्यधिकारपूर्वकः शास्त्रभेदोऽपि लक्षणसंबन्धशरीरावगतिः शब्दत एव भवति। यदि परं शास्त्रभेदं विना न निर्वहति अनुष्ठानपर्यन्तत्वादधिकारस्येति निर्वाहे हेतुः शास्त्रभेदः अधिकारस्यावगमे तु शब्द एव हेतुः। तथा प्रमाणलक्षणमपि नाधिकारं प्रति, सापेक्षेऽपि हेतुशब्दे 'देवदत्त गामानय' इत्यादिष्वधिकारदर्शनात्। अतः प्रत्येकं पञ्चभिरपि संबन्धो नोपपद्यते। नन्वेवं समुदितैः संबन्धो भविष्यति तत्राह— **न च समुदायो नाम कश्चिदर्थान्तरभूतो विद्यते।** यदि समुदायोऽर्थान्तरभूतो विद्यते तदा प्रत्येकमसंबन्धेऽपि कदाचित् समुदायेनापि संबन्धः संभाव्येत। न चैतदस्ति। तस्मात् पञ्चानामपि कीर्तनं नोपपद्यते। **यदि पञ्चभिरपि सम्बन्धो नास्ति कथं तर्हि पञ्चलक्षणापेक्षो ह्यधिकार इत्युच्यते।** उत्तरं— **परस्परापेक्षेषु पञ्चसु परिसमाप्तेषु अधिकारस्यावसर इति पञ्चलक्षणापेक्षो ह्यधिकार इत्युच्यते। न पुनर्हेतुतः।** अस्यायमर्थः—अधीतवेदस्य प्रथमं तावत् वेदार्थजिज्ञासैवोत्पद्यते। अतः चोदनालक्षणोऽर्थो धर्म इत्यनेन चोदनैकप्रमाणकः कार्यरूपो वेदार्थ इत्युक्ते पुनरियमपेक्षा जायते-कथमनपेक्षा चोदना प्रमाणं? येन चोदनैकलक्षण[:]कार्यरूपो वेदार्थो भवेत् इति। ततश्चानपेक्षत्वसाधकं प्रमाणलक्षणमारब्धव्यम्। उक्ते च प्रमाणलक्षणे पुनरियमपेक्षा जायते-किं तत्प्रमाणं भिन्नमुताभिन्नमिति। अतः द्वितीयाध्यायेन शास्त्रभेदः प्रतिपाद्यते। प्रतिपादिते च शास्त्रभेदे शास्त्रार्था अपि भिन्नाः। तत्रेयमपेक्षा पुनरापतति—किमेते शास्त्रार्थाः अन्योन्यसंबद्धा उत असंबद्धा इति तत्र शेषलक्षणेन संबन्धः प्रतिपाद्यते। प्रतिपादिते च श्रुत्यादिनिबन्धने शास्त्रार्थानां परस्परसंबन्धे पुनरियमपेक्षोपजायते—किं श्रुत्यादि-

**कारस्य हेतुः । किं तर्हि क्रमपर्यन्त उपदेशे कश्चिदधिकारी विद्यते उत नेति चिन्ता । किमनधिकारोऽप्युपदेशो विद्यते । बाढं विद्यते । देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्येवमादिषु प्रमाणान्तरप्रमितार्थविषयेषु । न तत्र कश्चिन्नियुज्यते । प्रमाणान्तरप्रमितविषयत्वादेव ।**

---

भिरेव परस्परसंबन्धः उतापरमप्यस्ति कारणमस्य? तत्रोपादानलक्षणं अपरमपि कारणमिति तत्प्रतिपादनाय उपादानलक्षणमारब्धव्यम् । औपादानिकविनियोग-चिन्तायां च प्रकृतायां अपरमप्यौपादानिकं सर्वमेव चिन्तितम् । उपादाननिबन्धनायां च प्रयुक्तौ चिन्तितायां कथमियं निर्वर्तते निर्वहति एकत्वात्कर्तुः अनेकत्वाच्च पदार्थानां इत्यपेक्षोदये क्रमतो निर्णीयते । तत्र च कः क्रम आदर्तव्य इत्यपेक्षायां क्रमलक्षणमारब्धव्यम् । एवं परस्परापेक्षत्वात् पञ्चानां न तावदधिकारः एषामवसरे निपतितुमर्हति । किन्तु एषु समाप्तेषु किं क्रमपर्यन्ते उपदेशार्थे[1] अधिकारी विद्यते नेति जिज्ञासोदेति । ततश्चाधिकारलक्षणमारब्धव्यम् । एवं चिन्तासिद्ध्यर्थं पञ्च-लक्षणान्यधिकारोऽपेक्षते यावत्तानि न चिन्त्यन्ते तावदधिकारचिन्तावकाश एव नास्तीति । न पुनर्हेतुभावेन पञ्चलक्षणान्यधिकारोऽपेक्षते । तेन संबन्धाभावात् संबन्धो नोच्यते । अन्यत्रावसरालाभात् इदानीं चावसरलाभात् अस्मिन्नेव स्थानेऽधि-कारलक्षणमारभ्यत इत्याक्षेपप्रतिसमाधानाय हेतुहेतुमद्भावेनापेक्षा नास्ति किन्त्वव-सरलाभायापेक्षेति दर्शयति—**न क्रमपर्यन्त उपदेशोऽधिकारस्य हेतुः । किन्तु क्रमपर्यन्त उपदेशे कश्चिदधिकारी विद्यते नेति चिन्ता ।** ननूपदेश-बलेनैवाधिकारोऽवगम्यते उपदेशस्याधिकाराविनाभावित्वात् इत्यनेनाशयेन पृच्छति—**किमनधिकारोऽप्युपदेशो विद्यते** येन भवान्नोपदेशस्य अधिकारं प्रति हेतु-तामाह । उत्तरं—**बाढं विद्यते देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्येवमादिषु प्रमाणान्तरप्रमितार्थविषयेषु** प्रमाणान्तरप्रमितार्थः विषयो येषां वाक्यानां तेषूपदेशो निरधिकारोऽपि विद्यते । **न तत्र कश्चिन्नियुज्यते** । कथं न नियुज्यत इत्यत्राह—**प्रमाणान्तरप्रमितविषयत्वादेव** । यस्मात् प्रमाणान्तरप्रमित एषां विषयः तस्मा-दित्यर्थः । भवतु प्रमाणान्तरप्रमितविषयता तथापि किमित्यधिकारशून्यता ।

---

1. मा. अपदेशार्थे ।

लक्षणान्तरेण हि प्रतीतस्य स्वरूपस्य शक्तेश्च कथनमात्रमेव द्रव्यादीनां वर्तमानापदेशैः क्रियते अर्थादर्थित्वेनोपदेशसिद्धिः । इह पुनः उपदेशादेव शक्तिज्ञानमिति विशेषः । तस्मान्न संबन्धाभिधानम् । किं पुनः कारणं स्वर्गकाम एवोदाह्रियते न पुनर्ग्रामकामादयोपि ? किं वा सर्वमेवोदाहरणीयं न्यायप्रसिद्ध्यर्थमेकमेवोदाहरणीयम् । उच्यते । सत्यमेवं, अत्र पुनः स्वर्गशब्दवाच्यनिरूपणमुखेन पूर्वोत्तरपक्षौ निरूपयति भाष्यकारः । न च ग्रामकामादिष्वेतत्संभवति प्रीत्यपगमेऽपि ग्रामशब्दप्रयोगात् । अतो ग्रामकामादिष्वधिकरणान्तरं वा वक्तव्यम् ।

---

अधिकारशून्यताभावात् कथमनुष्ठानसिद्धिरित्यत्राह—**लक्षणान्तरेण हि प्रतीतस्य स्वरूपस्य शक्तेश्च कथनमात्रमेव द्रव्यादीनां वर्तमानापदेशैः क्रियते । अर्थादर्थित्वेनोपदेशसिद्धिः** उपदेशार्थमनुतिष्ठति । ननु यद्यर्थादर्थित्वेनोपदेशार्थसिद्धिः किमर्थं तर्ह्यधिकार इह प्रतिपाद्यत इत्यत्राह—**इह पुनरुपदेशादेव शक्तिज्ञानं इति विशेषः ।** उपदेशव्यतिरेकेणात्र शक्तिज्ञानं नास्तीति साधिकार उपदेशो वर्णनीयः । अन्यथा शक्तिज्ञानाभावेनानुष्ठानासिद्धिः । तस्मादुपदेशोऽधिकारव्यभिचारित्वात् नायमधिकारमवगमयतीति हेतुत्वाभावान्नास्ति संबन्धः । **तस्मान्न संबन्धाभिधानं** भाष्यकारस्येति । **किं पुनः कारणं स्वर्गकाम एवोदाह्रियते न पुनः ग्रामकामादयोऽपीति ।** सर्वेषामप्यधिकारप्रदर्शनार्थं सर्वाण्येवोदाहरणीयानीति भावः । परिहरति—**किं वा सर्वमेवोदाहरणीयं** येनैवं पृच्छसि ? **न्यायसिद्ध्यर्थं तु एकमेवोदाहरणीयं** एकस्मिन्नप्युदाहरणे न्यायः प्रदर्शयितुं शक्यते यतः । प्रत्युतोदाहरणान्तरमकिञ्चित्करम् । अतः एकमेवोदाहरणीयमिति । आक्षेप्ता आह—**उच्यते, सत्यमेवं अत्र पुनः स्वर्गशब्दवाच्यनिरूपणमुखेन पूर्वोत्तरपक्षौ निरूपयति भाष्यकारः ।** तत्र एकेनाप्युदाहृतेन सर्वोदाहरणेषु न्यायव्युत्पत्तिर्भवति यदि सर्वव्यापी विचारो भवति । इह तु स्वर्गशब्दस्य प्रीतिमद्द्रव्यवचनतया पूर्वपक्षो निरूप्यते । राद्धान्तश्च प्रीतिमात्रवचनतया । **न च ग्रामकामादिष्वेतत्सम्भवति** प्रीत्यपगमेपि ग्रामे **ग्रामशब्दप्रयोगात् ।** अस्यार्थः- प्रीत्यपगमे द्रव्ये स्वर्गशब्दस्याप्रयोगात् प्रीतिवचनः स्वर्गशब्द इत्युक्त्वा राद्धान्तः कृतः । न चायं प्रकारो ग्रामकामे संभवति ; प्रीतिं विनापि ग्रामे ग्रामशब्दप्रयोगात् अतो द्रव्यमात्रवचनो ग्रामशब्दः इति राद्धान्तो न लभ्यत इति । **ग्रामकामादिष्वधि-**

साधनाभिधानं वा द्रव्यवचनत्वात् ग्रामादि(काम)शब्दानाम् ।

अत्रोच्यते - सर्वाण्येवोदाहरणीयानि । प्रदर्शनार्थं तु स्वर्गकामपदमुदाहृतम् । ननु च काम्यमानाभिधाननिवन्धनपूर्वोत्तरपक्षौ न ग्रामकामादिषु सम्भवत इत्युक्तम् । तत्त्वयुक्तमुक्तम् । कथमयुक्तम् ? इत्थमयुक्तम् । काम्यमानतया स्वर्गशब्दः काम्येषु वर्तत इत्युक्तम् ।

एवं ग्रामकामादिष्वपि द्रष्टव्यम् । न ह्यकाम्यं कामनायुक्तं भवति । अत एव देशवचनतामभ्युपगम्य स्वर्गशब्दस्य तथापि कामनायोगात् प्रीति-

---

करणान्तरं वा वक्तव्यम् यद्यधिकृतविशेषणमभिप्रेतम् । साधनाभिधानं वा द्रव्यवचनत्वात् ग्रामादिशब्दानां यागादिसाधनताभिधानमङ्गीकरणीयम् । कर्तृविशेषणाभिधायकत्वं वा आश्रयणीयम् । अत्रोच्यते सर्वाण्येवोदाहरणीयानि । प्रदर्शनार्थं तु स्वर्गकामपदमुदाहृतम् । तुल्यन्यायतया सर्वाण्येवोदाहरणानि । वस्तुतः स्वर्गकामपदं तु प्रदर्शनार्थमुदाहृतम् । ननु च काम्यमानाभिधाननिवन्धनपूर्वोत्तरपक्षौ न ग्रामकामादिषु संभवत इत्युक्तम् । काम्यमानो यः स्वर्गः तदभिधाननिवन्धनं यदि स्वर्गशब्दो द्रव्यवचनः तदा पूर्वः पक्षः यदा प्रीतिवचनः तदा राद्धान्तः इति ग्रामकामादिषु न संभवत इत्युक्तं द्रव्यवचनत्वात् ग्रामकामादीनाम् । समर्थयिता आह—तदयुक्तम् । आक्षेप्ता आह—कथमयुक्तम् । समर्थयिता आह - इत्थमयुक्तम् । काम्यमानतया स्वर्गशब्दः काम्येषु वर्तत इत्युक्तम् । अस्यार्थः-प्रीतिवचनः स्वर्गशब्द इति यदुक्तं तेनेदमुक्तं भवति - काम्यमानतया कामनाव्याप्यतया कामनां प्रति प्रधानतया स्वर्गशब्दः काम्येषु स्रक्चन्दनादिषु वर्तत इति । प्रीतिर्हि काम्यमाना भवति । तेन प्रीतिवचनतया काम्यमानाभिधायकता उक्ता भवति । एवं ग्रामकामादिष्वपि द्रष्टव्यम् । ग्रामकामादिष्वपि काम्यमानतयैव ग्रामशब्दो वर्तते । न ह्यकाम्यं कामनायुक्तं भवतीति ग्रामकाम इत्यत्र ग्रामः कामेनेच्छया युक्तः संबद्धः प्रतीयते । स च काम्यमानमेव भवितुमर्हति । यत एव काम्यमानं कामनायुक्तं भवति अत एव देशवचनतामभ्युपगम्य स्वर्गशब्दस्य तथापि कामनायोगात् प्रीतिमद्द्रव्यवचन एवायं स्वर्गशब्द इति कृतः पूर्वःपक्षः । अस्यार्थः - पूर्वपक्षवादिना प्रीतिमद्द्रव्यवचनः स्वर्गशब्द इत्युक्ते चोदितं - उपमानात् स्वर्गशब्दः प्रीतिमद्द्रव्ये प्रयुज्यत इति । पुनश्च समाहितः

मद्द्रव्यवचन एवायं स्वर्गशब्द इति कृतः पूर्वःपक्षः । राद्धान्तेऽपि न ह्यसत्यां प्रीतौ कामना प्रवर्तते द्रव्य इति प्रीतिपरमेव प्रयोगं दर्शितवान् स्वर्गशब्दस्य, न पुनर्देशो निराकृतः । एवं ग्रामकामादयोऽपीति प्रीतिविषय तया प्रयुक्ताः । न पुनस्साधनतयेत्युक्तं भवति । अत एव स्वर्गः साध्यः यागो वेत्युपन्यस्य कामस्साध्य इत्युक्तम् । एतदुक्तं भवति[किं]कामविषयः

---

मुख्यार्थान्तराभावात् नोपमानेन प्रयुज्यत इति । पुनश्चोदितः-देशविशेषे शीतोष्णादिरहिते स्वर्गशब्दः प्रसिद्ध इति । परिहृतं च तादृशे देशे प्रमाणाभावात् न तत्र स्वर्गशब्दो मुख्य इति । पुनश्चोक्तं - यद्यपि तादृशोपदेशोऽस्ति तथापि प्रीतिमद्द्रव्यवचनः स्वर्गशब्दो वर्तेत । तत्र चायं हेतुः कामनायोगोऽत्र स्वर्गशब्दार्थस्यावगम्यते । न च प्रीतिरहितस्य कामनायोगोऽस्ति । **राद्धान्तेऽपि न ह्यसत्यां प्रीतौ कामना वर्तते द्रव्य इति प्रीतिपरमेव स्वर्गशब्दस्य प्रयोगं दर्शितवान् न पुनर्देशो निराकृतः ।** सत्यां प्रीतौ द्रव्ये कामना प्रवर्तते इत्यनयैव युक्त्या राद्धान्तेऽपि स्वर्गशब्दस्य प्रीतिपरमेव प्रयोगं दर्शितवान् भाष्यकारः न पुनर्देशो निराकृतः । यदि हि स्वर्गशब्दस्याभिधानबलेनैव प्रीतिवचनता स्यात् तदा प्रयत्नेन देशवचनतां निराकृत्य प्रीतिवचनता साधिता भवेत् । न च देशनिराकरणे यत्नः कृतः । तस्मात् कामनासंबन्धबलेनैव प्रीतिवचनता स्वर्गशब्दस्य भाष्यकारस्याभिमता । अक्षरार्थोऽप्येवं वर्णनीयः—यस्यैव प्रीतिसाधनस्य द्रव्यस्य वक्ता स्वर्गशब्दः तदेव द्रव्यं यदा न प्रीतेः साधनं भवति तदा स्वर्गशब्देन नाभिधीयत इत्यर्थः । एवं च सति यथा स्वर्गशब्दः कामनायोगेन प्रीतिपरः । **एवं ग्रामकामादयोऽपीति प्रीतिविषयतया** प्रीतिः विषयः प्रतिपाद्यो येषां ते प्रीतिविषयाः तेषां भावः प्रीतिविषयता तया **प्रयुक्ताः** कामनायोगात् **न पुन**र्यागं प्रति **साधनतयेत्युक्तं भवति** राद्धान्तिना । तेन सर्वत्र तुल्यो न्यायः । यत एव काम्यमानविषयोऽयं विचारः न स्वर्गमात्रविषयः **अत एव स्वर्गः साध्यो यागो वेत्युपन्यस्य पुनः कामः साध्य इति** दर्शयति काम्यत इति कामः सामान्येन काम्यमात्रं साध्यत इति वदामः । अन्यथा हि स्वर्गः साध्यत इत्येवोच्येत । यदा सर्वाण्येवात्रोदाहरणानि तदा किं प्रीतिः स्वर्ग उत द्रव्यं इत्यनेन ग्रन्थेन । **एतदुक्तं भवति—किं कामविषयतया स्वर्गशब्दः**

स्वर्गशब्दः प्रयुक्तः उत काम्यमानतया कर्तृविशेषणमिति। तदाहि काम्य-मुपसर्जनं भवति। ननु च स्वर्गकाम इत्यत्रोपसर्जनभूत एव कामः प्रतीयते। एतदेवात्र विचार्यते - किं यथाभिधानं संबन्धः उत यथाविनियोगमभि-धानमिति। किं यथाविनियोगमभिधाने बहुव्रीहिरयं न भवति? केन वोक्तं नायं बहुव्रीहिरिति। यदि बहुव्रीहिरुपसर्जनं तर्हि कामः काम्यः

---

प्रयुक्तः उत काम्यमानतया कर्तृविशेषणमिति। किं काम्यमानविषयतया काम्यमानावस्थाप्रतिपादकतया प्रयुक्तः स्वर्गशब्दः उत काम्यमानतया कामनां कर्तृविशेषणभूतां विशिंषन् कर्तृविशेषणमिति। तत्र प्रीतिः काम्यमाना-वस्थाऽभिप्रेता। काम्यमानतया कर्तृविशेषणं द्रव्यमभिमतम्। ननु च द्रव्यपक्षे स्वर्गस्योपसर्जनतामाह भाष्यकारः न कर्तृविशेषण[त्व]मित्यत्राह—तदा हि कर्तृ-विशेषणत्वे हि कामे काम्यं स्वर्गादिरुपसर्जनं भवति। तेनोपसर्जनताप्रति-पादनेन कर्तृविशेषणतैवोक्ता। यद्युपसर्जनत्वे कर्तृविशेषणता तर्हि सिद्धान्तो न लभ्यत इत्यनेनाभिप्रायेण चोदयति—ननु च स्वर्गकाम इत्यत्रोपसर्जनीभूत एव कामः काम्यस्वर्गादिः प्रतीयते। परिहरति—एतदेवात्र विचार्यते। किं यथाभिधानं विनियोगसंबन्धः उत यथाविनियोगमभिधानमिति। किं स्वर्गकामाभिधानानुसारेण स्वर्गस्य कामनायाश्च संबन्धः, अभिधानं ह्येतदन्य-पदार्थपरं तदनुसारेण च संबन्धे गुणतैव स्वर्गस्य। उत यादृशः काम्यकाम-नयोर्विनियोगः परस्परसंबन्धः प्रतीयते तदनुरोधेनाभिधानमिति। काम्यकामनयोर्हि संबन्धे काम्यः प्रधानभूत इति। तेनोपसर्जनतैवात्र विचार्यते। तत्र पूर्वपक्षवादी यथाभिधानं विनियोगमिच्छन् उपसर्जनतामाह। राद्धान्ती तु यथासंबन्धमभि[द]धानः अनुपसर्जनतामाहेति। अत्र चोदयति—किं यथाविनियोगमभिधाने बहुव्री-हिरयं न भवति। अयमभिप्रायः-यथाविनियोगेप्यभिधाने बहुव्रीहिरेवायं बहुव्रीहिश्चेदु-पसर्जनता दुष्परिहरा। यदि हि यथाविनियोगपक्षे बहुव्रीहिरयं न स्यात् तदैवानु-पसर्जनता स्यात्। न चैदस्ति। परिहरति—केन वोक्तं नायं बहुव्रीहिरिति। चोदयति—यदि बहुव्रीहिरुपसर्जनं तर्हि कामः काम्यः पदार्थान्तरभूतपुरुष-परत्वादस्य समासस्य। यत एव चार्थान्तरभूतपुरुषपरता अस्य समासस्य अत

पदार्थान्तरपरत्वात् । अत एवाख्यातगतया कर्तृसङ्ख्यया अस्य संबन्धोऽवगम्यते 'यजेत स्वर्गकामः' 'यजेरन् ऋद्धिकामाः' इति । एवं च सति संशयोऽनुपपन्नः । न च भगवतः पाणिनेः स्वार्थेऽपि बहुव्रीहिरिति स्मरणमस्ति । उच्यते । वयमपि स्वार्थ एव न बहुव्रीहिं वदामः किन्तु परार्थोऽयं बहुव्रीहिः उत स्वार्थः । कथं पुनः परार्थः कथं वा स्वार्थः ? सिद्धार्थस्तु परार्थो भवति । अथ साध्यार्थः तदा स्वार्थो भवति । तत्रेदानीं न विद्मः किं सिद्धार्थस्योपादानं परार्थतया उत साध्यतयोपदीयत इति । अन्यपदार्थश्च साध्यार्थश्च इति ननु विप्रतिषिद्धम् यतः । नात्र विप्रतिषेधः यतः साध्योऽप्यन्यार्थ एव । उक्तं च 'फलं च पुरुषार्थत्वात्' इति । तस्मादुपपन्न एव संशयः ।

---

एवाख्यातगतया कर्तृसङ्ख्ययाऽस्य संबन्धः यजेत स्वर्गकामः यजेरन् ऋद्धिकामाः इत्येकवचनबहुवचनदर्शनात् । यदा चोपसर्जनं काम्यं एवं च सति संशयोऽनुपपन्नः सिद्धान्तवचनव्यक्त्यभावात् । न च भगवतः पाणिनेः स्वार्थेपि बहुव्रीहिस्मरणमस्ति येन बहुव्रीहिपक्षेऽपि काम्यमेव प्रधानं भवेत् । समाधाता आह—उच्यते । वयमपि स्वार्थ एव न बहुव्रीहिं वदामः । किन्तु परार्थोऽयं बहुव्रीहिः, उत स्वार्थ इति । समस्यपदप्रतिपाद्याभ्यां पदार्थाभ्यां परो यः पुरुषः तदर्थोऽयं बहुव्रीहिः, उत समस्यमानपदप्रतिपाद्यकाम्यार्थः इति वदामः । आक्षेप्ता आह —कथं पुनः परार्थः कथं वा स्वार्थः । समाधाता आह—सिद्धार्थस्तु परार्थो भवति । यदि स्वर्गकामादिशब्दः सिद्धार्थो भवति तदा परार्थो भवति । अथ साध्यार्थः तदा स्वार्थो भवति । स एवाह-तत्रेदानीं न विद्मः । किं सिद्धार्थस्योपादानं समुच्चारणं परार्थतया उत साध्यतयोपादीयत इति । आक्षेप्ता आह —अन्यपदार्थश्च साध्यार्थश्चेति ननु विप्रतिषिद्धम् । साध्यं हि अन्यार्थं न भवति । ततश्चान्यपदार्थश्च साध्यार्थश्चेति परस्परं विरुद्धम् । समाधाता आह—नात्र विप्रतिषेधः यतः साध्योप्यसौ स्वर्गादिः अन्यार्थ एव पुरुषार्थ एव । तेन साध्यार्थता अन्यार्थता चाविप्रतिषिद्धा । उक्तं च ऋषिणा 'फलं च पुरुषार्थत्वात' इति फलस्य पुरुषार्थत्वम् । तस्मादुपपन्नार्थोऽयं भाष्यकारीयः संशयः—किं प्रीतिः स्वर्गः उत द्रव्यमिति ।

ननु चैवमपि संशयो नोपपद्यते कर्तृविशेषणमिदं प्रतीयते आख्यात-गतकर्तृसङ्ख्यासंयोगात् । तदाख्यातकर्तरि च सङ्ख्यां स्मरति भगवान् पाणिनिः । स्वर्गे च साध्ये स्वर्गसिद्धौ स्वर्गकामस्य कर्तृत्वम् न याग-सिद्धौ । न चान्यत्र व्यापृतयाख्यातान्तरगतया सङ्ख्यया योगो भवति । यथा पचतीति पठतः । इह च यजेत स्वर्गकाम इत्येकवाक्यताऽवगम्यते । कस्मात् सिद्धार्थ एवायं बहुव्रीहिः न साध्यार्थः ? एतदेवात्र युक्तम् । न हि साध्यार्थं नाम प्रातिपदिकं भवतीति भावार्थाधिकरणे उक्तम् । अतो यागस्यैव कर्तव्यतात्रावसीयते भावार्थत्वाद्यजतिशब्दस्य । न च साध्यवादि-

---

ननु चैवमपि संशयो नोपपद्यते यस्मात् कर्तृविशेषणमिदं प्रतीयते आख्यातगतकर्तृसङ्ख्यासंयोगात् - यजेत स्वर्गकाम इति । ननु चाविकारि-विशेषणेऽपि स्वर्गसिद्धावस्त्येव स्वर्गकामस्य कर्तृत्वं तेनाख्यातसङ्ख्यासंयोगो भविष्यती-त्यत्राह — तदाख्यातकर्तरि च सङ्ख्यां स्मरति भगवान् पाणिनिः इति । अस्यार्थः-यस्मिन्नाख्याते सङ्ख्या श्रूयते तस्य आख्यातस्य यःकर्ता तत्र सङ्ख्यां स्मरति पाणिनिरिति । स्वर्गे च साध्ये स्वर्गसिद्धौ स्वर्गकामस्य कर्तृत्वं न यागसिद्धौ तेन यागगतया सङ्ख्यया योगो न स्यात् यदि यागे कर्ता स्वर्गकामो न स्यात् । तेन यागं प्रत्येव स्वर्गकामः कर्तृतयोपदिश्यते । कस्मात् पाणिनिः (न) स्मरतीत्यत्राह — न चान्यत्र व्यापृतस्य आख्यातान्तरगतया सङ्ख्यया योगो भवति - यथा पचतीति पठतः । समर्थः पदविधिरिति पाणिनेः स्मरणम् । स्वार्थसंबन्धश्च सामर्थ्यम् । अन्यत्र व्यापृतस्य च आख्यातान्तरगतया सङ्ख्यया संबन्धो न भवति, यथा - पचतीत्यनया सङ्ख्यया पठतो योगो न भवति । तेनाख्यातान्तरग[त](ता) सङ्ख्य[या] अन्यत्र व्यापृतस्य संबन्धो नास्तीति पाणिने-रनुस्मरणम् । इह तु यजेत स्वर्गकाम इत्येकवाक्यताऽवगम्यते । परं न परस्परसंबन्धं विना एकवाक्यता भवति । अतः कर्तृविशेषणम् । कस्मात् सिद्धार्थ एवायं बहुव्रीहिः न साध्यार्थः ? आक्षेप्तैव युक्त्यन्तरमाह - एतदेवात्र युक्तम् सिद्धार्थं नामेति । न हि साध्यार्थं नाम प्रातिपदिकं भवतीति भावार्थाधि-करणे भाष्यकारेणोक्तम् । अतो यागस्यैवाख्यातोपात्तस्य कर्तव्यतात्रावसीयते । भावार्थत्वात् साध्यार्थत्वात् यजतिशब्दस्य । युक्त्यन्तरं चाह — न च साध्यवादिनोऽपि यागेन सहैकवाक्यता नास्ति । साध्यमपि स्वर्गं यो वादी

नोऽपि यागेन सहैकवाक्यता नास्ति । अस्ति चेत्तर्हि एकस्मिन्नेव वाक्ये न साध्यद्वयावगतिः ।

ननु यथा व्रीहीन् प्रोक्षतीति संस्कारे व्रीहिगते साध्येऽपि प्रोक्षणेन साध्यभूतेनास्यैकवाक्यता तद्वदिहापि भविष्यति । मैवं वोचः । तत्र हि कारकतया व्रीहयः संबद्धाः संस्कारभाजो भवन्तीति । इह पुनः स्वर्गयागयोः नान्यतः क्रियाकारकसंबन्धसिद्धिः । नापि यूपवदिहैवावसीयते । किमिति ? यद्युत्पाद्यस्यापि कारकयोगो भवति । यदि भवति [1]भवतु । नैवोत्पाद्यस्य कारकयोगो भवति । कथं तर्हि यूपं छिनत्ति इति ? छेदनेन

---

वदति तस्यापि मते यागेन सह स्वर्गकामस्यैकवाक्यता न नास्ति । अपि त्वस्त्येव ।

अस्ति चेत्तर्ह्येकस्मिन्नेव वाक्ये साध्यद्वयावगतिर्न युज्यते । अत्र कश्चिच्चोदयति—ननु यथा व्रीहीन् प्रोक्षति इति संस्कारे व्रीहिगते साध्येऽपि प्रोक्षणेन आख्यातोपात्तेन साध्यभूतेनास्यैकवाक्यता यथा तद्वत् इहापि भविष्यतीति । आक्षेप्ता परिहरति—मैवं वोचः तत्र हि कारकतया व्रीहयः संबद्धाः संस्कारभाजो भवन्तीति । अस्यार्थः- युक्तं 'व्रीहीन् प्रोक्षति' इत्यत्र । यस्माच्चत्र प्रथमावस्थायां कारकतया व्रीहयः प्रोक्षणेन संबध्यन्ते । तच्च प्रोक्षणं पश्चाद्व्रीहिषु संस्कारमारभते । तेन भाविसंस्कारयोगिकारकतया व्रीहयः प्रोक्षणं प्रति द्वितीयान्तेन शब्देनोपादीयन्ते । इह पुनः न यागस्वर्गयोः द्वयोरपि साध्ययोः अन्यतः प्रमाणान्तरात् क्रियाकारकसंबन्धसिद्धिः यतः परस्परसंबन्धः स्यात् । ननु मा नाम प्रमाणान्तरात् क्रियाकारकसंबन्धः सेत्स्यति वेदेनैव यूपं छिनत्तीति वदता अवसायिष्यत इत्यत्राह— नापि यूपवदिहैवावसीयते । पृच्छति—किमिति । नावसीयते । यद्युत्पाद्यस्यापि कारकयोगो भवति । उत्पाद्यस्यापि यूपस्य च्छेदे यदि कारकतया संबन्धो भवति, तदा किमिति वेदे तद्वदेव क्रियाकारकसंबन्धो नावसीयत इत्यर्थः । उत्तरं—यदि भवति उत्पाद्यस्यापि कारकयोगः भवतु न पुनरुत्पाद्यस्यासद्भूतस्य क्रियां प्रति कारकतायोगो भवति । चोदयिता आह—कथं तर्हि यूपं छिनत्तीति । असति यूपस्य कारकत्वे द्वितीयान्तं पदं द्वितीयायाः कारकविभक्तित्वात् । समाधाता आह— छेदनेन सबद्धं यूपं करोतीत्यर्थः यूपं छिनत्तीत्यस्य वाक्यस्य । एतदुक्तं भवति-

---

1. भवत्वेव-मा.

**संबद्धं यूपं करोतीत्यर्थः । अलौकिकत्वात् चोदनालक्षणो यूप इत्युच्यते । संबन्धश्च [ क्रियया ] अलौकिकश्चेति किमिदं ? यूपशब्दाभिधेयतयाऽलौकिकत्वम् । न पुनः छिदिसंबन्धितया । अतोऽत्रापि कारकस्यैव खदिरादेः छेदनेन किञ्चित्क्रियते । स्वर्गस्य पुनः यज्यर्थं प्रति कारकत्वमेवालौकिकम् । तस्मात् व्रीहीन् प्रोक्षतीतिवत् संबन्धो नोपपद्यते यजेत स्वर्गकाम इति । न च संबन्धान्तरं स्मरति शब्दवित् स्मरन् वा प्रमाणाभावात् विहन्येत । तस्मात् संशयमत्र देवाः करिष्यन्ति ।**

**अत्राभिधीयते—स्यादेतदेवं यदि प्रमाणचतुष्टयावगम्य एव संबन्धः**

---

अत्रापि खदिरादेरेव छेदनस्य संबन्धः । त एव तु खदिरादयः छेदनेन कारकतया संबन्धात छेदनेन संस्क्रियन्ते । संस्कारयोगिनश्च यूपशब्देनोच्यन्ते छेदनेन यूपीक्रियन्त इति । यदि तत्रापि प्रमाणान्तरावगत एव क्रियाकारकभावः कथं तर्हि चोदनालक्षणो यूप इति प्रसिद्धिः तत्राह—**अलौकिकत्वात्** लोके यूपशब्दवाच्यतया संस्कृतानां खदिरादीनामविदितत्वात **चोदनालक्षणो यूप इत्युच्यते** । अभिप्रायमजानन् पृच्छति—**संबन्धश्च क्रियया अलौकिकश्चेति किमिदं ?** क्रियाकारकसंबन्धस्य सर्वस्य लौकिकत्वात् । उत्तरं—**यूपशब्दाभिधेयतयाऽलौकिकत्वम्** । वैदिकशब्दप्रयोगवशेनैव यूपशब्दस्य स्वार्थे व्युत्पत्तेः । न पुनः छेदनसंबन्धितयाऽलौकिकत्वम् । **अतोऽत्रापि कारकस्यैव खदिरादेः छेदनेन किञ्चित्क्रियते ।** अतो व्रीहीन् प्रोक्षतीत्यनेन तुल्यता । **स्वर्गस्य पुनः** साध्यभूतस्य **यज्यर्थं प्रति कारकत्वमेवालौकिकम्** । उपसंहरति—**तस्मात् व्रीहीन् प्रोक्षतीतिवत् संबन्धो नोपपद्यते यजेत स्वर्गकाम** इति । यथा व्रीहीन् प्रोक्षतीति संबन्ध उपपद्यते न तथा यजेत स्वर्गकाम इत्यत्रोपपद्यत इत्यर्थः । **न च संबन्धान्तरं शब्दवित् स्मरति । स्मरन् वा प्रमाणाभावात्** निर्मूलस्मरणानुपपत्तेः **विहन्येत** इति । सिद्धान्तवचनव्यक्त्यभावेन संशयमाक्षिप्योपसंहरति—**तस्मात्संशयमत्र देवाः करिष्यन्ति** यदि कर्तव्यं मंस्यन्ते ।

समाधत्ते—**अत्राभिधीयते । स्यादेतदेवं यदि प्रमाणचतुष्टयावगम्य एव संबन्धः स्यात् ।** तेन प्रमाणचतुष्टयेनावगतमपि शब्द एव किं संबन्धान्तरं बोधयति नेतीति युक्त एव संशयः ।

स्यात्। उक्तं च शब्दस्य प्रामाण्यमनपेक्षत्वादिति, सत्यमुक्तं तदेवात्रावसीदति। कथं? अधिकारसिद्धौ प्रयोगसिद्धिः प्रयोगसिद्धावुपदेशसिद्धिः। एवं तर्हि प्रमाणलक्षणमेवेदं प्राप्तं भवति! [भवति च लक्षणान्तरमपि सत् प्रमाणलक्षणं] पञ्चलक्षणशेषत्वात् अधिकारस्य। कथं तर्हि लक्षणान्तरमिदं व्यपदिश्यते। एवं व्यपदिश्यते। सत्यप्यधिकारे प्रमाणाक्षेपः प्रथमलक्षणे समाहितः, स एवाधिकारः उपपद्यते नेति विचार्यते। न च अप्रामाण्येनैव अधिकाराक्षेपः। कथं तर्हि अधिकारसंबन्धानवगमात्। ननु चानवगमोऽप्यप्रामाण्यमेव। सत्यमेवं

---

आक्षेप्ता आह—उक्तं शब्दस्य प्रामाण्यमनपेक्षत्वादिति। तेन तत्प्रामाण्यबलेनैव संबन्धान्तरं सेत्स्यतीति नाधिकरणमारब्धव्यम्। समाधाता आह—सत्यमुक्तं प्रामाण्यम्। तदेवात्रावसीदति। कथं? उत्तरं—अधिकारसिद्धौ प्रयोगस्य अनुष्ठानस्य सिद्धिः प्रयोगसिद्धौ सत्यां उपदेशसिद्धिः। कार्यरूपः उपदिष्टो नियोगार्थः स सिद्ध्यतीति। अन्यथा अनुष्ठातर्यसति कार्यमेव तन्न स्यात्। ततश्चाकार्यं कार्यतया प्रतिपादयन् शब्दः प्रमाणं न स्यादित्यस्मिन्नधिकरणे अधिकारलक्षणसंबन्ध[न्धा]माधके सति प्रामाण्यमेवावसीदतीति प्रामाण्यनिर्वाहार्थमिदमधिकरणमारब्धव्यम्। आक्षेप्ता आह—एवं तर्हि प्रमाणलक्षणमेवेदं प्राप्तं। न लक्षणान्तरम्। समाधाता आह—भवति च लक्षणान्तरमपि सत् प्रमाणलक्षणम् पञ्चलक्षणशेषत्वात् अधिकारस्य। विनियोगोपादानक्रमलक्षणशेषत्वं उत्पादकतया दर्शितम्। वेदप्रामाण्यतद्भेदलक्षणशेषत्वं तु तन्निर्वाहकतया, अधिकारं विना प्रमाणत्वानिर्वाहात्। असति तन्निर्वाहे तद्भेदो दूरापेत इति। यदि प्रमाणलक्षणमिदं भवति कथं तर्हि लक्षणान्तरमिदं व्यपदिश्यते? समाधत्ते—एवं व्यपदिश्यते सत्यप्यधिकारे प्रमाणाक्षेपः प्रमाणलक्षणे समाहितः। इहेदानीं स एवाधिकारः उपपद्यते नेति विचार्यते। एतदुक्तं भवति - सापेक्षतया शब्दस्याप्रामाण्यं प्रमाणलक्षणे परिहृतम्। इह तु स्थितेऽप्यनपेक्षत्वेऽधिकाराभावेनाक्षिप्य प्रतिसमाधीयते। यदि च यावदप्रामाण्येनैव शब्दस्य अधिकार आक्षिप्येत तदाऽऽक्षेपहेतुभूताप्रामाण्यनिराकरणेनेदं न लक्षणान्तरं व्यपदिश्येत। नचैतदेवं, तदाह—न चाप्रामाण्येनैवाधिकाराक्षेपः किं तर्हि? अधिकारसंबन्धानवगमात्। आक्षेप्ता आह—ननु चानवगमोऽप्यप्रामाण्यमेव। तेनानवगमेनाप्याक्षेपः अप्रामाण्येनैव। समाधाता

**अधिकारेऽप्रामाण्यं न पुनः शब्दार्थमात्रे । प्रमाणलक्षणे पुनः शब्दोऽर्थं न स्पृशतीत्ययमर्थो निराकृतः । तस्मादुपपन्नो लक्षणान्तरव्यपदेशः । अतः पञ्चभिर्लक्षणैः कार्यावगतिरुक्ता न पुनरस्येदं कार्यमिति । असत्यां चैतस्यामवगतौ कार्यमात्रावगतिः तथापि भवन्ती न तथा भवति अनुष्ठानाभावात् ।**

**ननु चतुर्थे असत्यप्यधिकारे फलकल्पना उक्ता स स्वर्गः स्यादिति । सत्यमुक्ता । अधिकारसंभवे तु सा अधिकारनिबन्धनैव अश्रुतेऽप्यधिकारो विद्यत इत्युक्तम् । असंभवे पुनरधिकारस्य कस्याश्रुतस्य कल्पना ? तस्मादधिकारो वक्तव्यः ।**

---

आह—सत्यमेवमनवगमोऽधिकारेऽप्रामाण्यम् न पुनः शब्दार्थमात्रे । तेनाधिकारिव्यतिरिक्तकार्यमात्रावगमकत्वात् अस्ति प्रामाण्यमिति नाप्रामाण्येनाक्षेपः । न चैवं तर्हि यद्यनवगमेऽपि प्रामाण्यं तदा कथं प्रमाणलक्षणे[ऽ] प्रामाण्यं निराकृतमित्यत्राह—**प्रमाणलक्षणे पुनः शब्दोऽर्थं न स्पृशतीत्ययमर्थो निराकृतः ।** सर्वथैवार्थास्पर्शित्वे तदप्रामाण्यम् । विशिष्टार्थप्रतिपादकत्वे तु अर्थान्तरप्रतिपादकतयापि प्रामाण्यमुपपद्यत एव ।

**तस्मादुपपन्नो लक्षणान्तरव्यपदेशः । अतः पञ्चभिर्लक्षणैः कार्यमात्रावगतिरुक्ता न पुनरस्येदं कार्यमित्युक्तम् । असत्यां चैतस्यामवगतौ कार्यमात्रावगतिः तथापि भवन्ती न तथा भवति अनुष्ठानाभावात् ।** यावदिदं मम कार्यमिति नाववुध्यते न तावत् कश्चित् प्रवर्तते । अतो यद्यपि कार्यमेतदित्यवगतिर्भवति तथाप्यसौ कार्यस्यानुष्ठानं विना कार्यत्वानुपपत्तेः अवगम्यमानशून्यतया अनवगतिरेव स्यात् । तस्मादस्येदं कार्यमिति सिद्धयेऽधिकारलक्षणमारब्धव्यम् । **ननु चतुर्थेऽसत्यप्यधिकारे फलकल्पना उक्ता स स्वर्गः स्यात्** सर्वान् प्रत्यविशिष्टत्वादिति । अस्यार्थः-किमर्थोऽयमधिकारः प्रतिपाद्यते ? यावता विनाप्यधिकारेण फलत एवानुष्ठानं भविष्यति यथा लोके । अधिकारं विना फलावगतिरेव न स्यादिति चेत्, न, विनाप्यधिकारेण विश्वजिदादिषु चतुर्थे फलकल्पनाया उक्तत्वात् इति । परिहरति—सत्यं फलकल्पनेनोक्ता । **अधिकारसंभवे तु सा अधिकारनिबन्धनैव** न प्रमाणान्तरनिबन्धना । नन्वधिकार एव तत्र तत्र न श्रूयते कथं तन्निबन्धना कल्पनेत्यत्राह—**अश्रुतेऽप्यधिकारो**

**ननु च तत्र भवन्तो वैयाकरणाः केचित् कर्तारमेवाधिकृतं मन्यन्ते। यो यस्मिन् कर्तृतयाऽवगम्यते स तत्राधिकृत इति वदन्तः। नाधिकारो नाम कश्चिदर्थान्तरभूतः। स च क्रियया संबध्यत इति मन्यन्ते। ब्राह्मणादयश्च कर्तृतयाऽवगम्यन्ते स्मृतेः - द्विजातीनामध्ययनमिज्यादानमिति। कर्तॄणां च फलकल्पना आत्मनेपदादिभिर्लिङ्गैः अयमेव चासौ बादरिपक्षः। द्रव्यगुणसंस्कारेष्वित्येवं संबन्धावगमं मन्यते। न यागफलपुरुषेष्विति। एवं च क्रियासंबन्ध उपपन्नो भविष्यति। अन्यथा हि अधिकृतस्य क्रिया-**

---

**विद्यते इत्युक्तम्** तत्रैव। तेनाश्रुतेप्यधिकारेऽन्विताभिधानबलेन कृते पश्चात्तन्निबन्धना फलकल्पना। **असंभवे पुनरधिकारस्य कस्याश्रुतस्य कल्पना।** यदि पुनरधिकार एव न संभवेत् कस्याश्रुतस्य कल्पना भवेत्। अधिकारसम्भवे हि अधिकारिविशेषणतया फलकल्पना भवेत। तदसंभवे तु कस्य कल्पना भवति। नहि कार्यं फलमपेक्षते येन फलतया कल्पयेत स्वर्गः। तस्मादन्यतोऽनुष्ठान[ना]सिद्धेरधिकारो वक्तव्यः। एवं तावच्छब्दस्य प्रमाण्यात शब्दैकगम्यसंबन्धः अस्ति नास्तीति संशयः समर्थितः। पुनराक्षेपमाह—**ननु चात्र भवन्तो वैयाकरणाः केचित् कर्तारमेवाधिकृतं मन्यन्ते। यो यस्मिन् कर्तृतयाऽवगम्यते स तत्राधिकृत इति वदन्तः। नाधिकारो नाम कश्चिदर्थान्तरभूतः** कर्तृत्वात्। **सच कर्ता क्रियया संबध्यते इति मन्यन्ते।** तेन क्रियाकारकसंबन्ध एव परस्परसंबन्धः नापरः संबन्धः शब्देनापि प्रतिपाद्यते। **ब्राह्मणादयश्च कर्तृतयाऽवगम्यन्ते स्मृतेः। द्विजातीनामध्ययनमिज्यादानं इति।** मन्वादिस्मृतिरपि ब्राह्मणादीन् कर्तृत्वेन प्रतिपादयति नार्थान्तरतया 'द्विजातीनामध्ययनं इज्या दानं' इति 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठीस्मरणात्। **कर्तॄणां च फलकल्पना आत्मनेपदादिभिर्लिङ्गैः।** कर्तॄणां हि फलकल्पना। न पुनः कर्तृव्यतिरिक्तानां 'कर्त्रभिप्राये क्रियाफले' इति स्मरणात्। **अयमेवासौ बादरिपक्षः।** बादरेरपि सम्मतो यः पक्ष इति। यदुक्तं तृतीये—**द्रव्यगुणसंस्कारेष्वेव संबन्धावगमं मन्यन्ते न यागफलपुरुषेष्विति। एवं च क्रियासंबन्ध उपपन्नो भवति** यदि कर्ता स्वर्गकामः एवं क्रियया संबध्यते **अन्यथा ह्यधिकृतस्य क्रियया संबन्धो दुर्भणः।** अवगम्यते च संबन्धः, अन्यथा ह्येकवाक्यता न स्यात। यतस्संबन्धान्तरं नास्ति तेन

संबन्धो दुर्घणः। अतः स्वर्गकामादीनि पदानि कर्तृविशेषणान्येव भिन्ने जुहोतीतिवत्।

ननु चैवं सति कर्त्रन्तरानुप्रवेशो न प्राप्नोति। न प्राप्नोतु नाम, नैतावता संबन्धावगमकल्पना न शक्यते वक्तुम्। वचनाच्चोपपन्नो भविष्यति अत एव च कारकविभक्तेरनुत्पत्तिः। तिङाऽभिधानात् सङ्ख्यायाः प्रथमायाश्चोत्पत्तिः। अन्यथा ह्यधिकारिणो विभक्त्यन्तरं मृग्यम्, शेषलक्षणषष्ठ्या वा भवितव्यं यजेत स्वर्गकामस्येति। कर्तृनिर्देशश्चायमन्वयव्यतिरेकाभ्यामवगम्यते यजेत स्वर्गकामः इज्यते स्वर्गकामेनेति। अन्यथा हि भावसाधनेऽपि तृतीया न स्यात् अकारकत्वात् स्वर्गकामस्य। यत्पुनरिदमुक्तं अफलं कर्म भवति। न च निष्फले प्रवर्तन्त इति। तत्र ब्रूमः;

---

स्वर्गकामादीनि पदानि कर्तृविशेषणान्येव 'भिन्ने जुहोति'इतिवत्। यथा भेदनेन दर्शपूर्णमासकर्ता विशेष्यते तथा स्वर्गकामादिभिरपि। इयान् विशेषः होमसंबन्धार्थं दर्शपूर्णमासकर्ता भेदनेन विशेष्यते। स्वर्गकामनया तु नान्यत्र संबन्धयितुमिति। चोदयति—ननु चैवं सति कर्तृनियमविधानात् कर्त्रन्तरभूतानामृत्विजामनुप्रवेशो न प्राप्नोति नियमेन निवर्तितत्वात्। परिहरति— न प्राप्नोतु नाम। नैतावता कर्त्रन्तराननुप्रवेशमात्रेण[1] संबन्धः स्यात्। अदृष्टपूर्वस्य कल्पनाऽऽश्रयितुं शक्यते। वचनाद्वा ऋत्विग्वरणभरणविधानात् कर्त्रन्तरानुप्रवेश उपपन्नो भविष्यति यत एव च कर्तृपराण्येतानि अत एव च कारकविभक्तेरनुत्पत्तिः। तिङाभिधानात् सङ्ख्यायाः प्रथमायाश्चोत्पत्तिः। अन्यथाहि कर्तृव्यतिरिक्तस्याधिकारिणः विभक्त्यन्तरं वा मृग्यं शेषलक्षणषष्ठ्या वा भवितव्यं यजेत स्वर्गकामस्येति। युक्त्यन्तरं चाह— कर्तृनिर्देशश्चायं अन्वयव्यतिरेकाभ्यामवगम्यते - यजेत स्वर्गकामः इज्यते स्वर्गकामेन इति—अनभिहितायां आख्यातेन कर्तृसङ्ख्यायां तृतीयान्वयात्, अभिहितायां च व्यतिरेकात्। यदि हि कर्तरि तृतीयेयं स्यात् तदैव युज्यते नान्यथा कर्तर्येवेयं तृतीयेति कर्तृनिर्देश एवायं स्वर्गकाम इति। अन्यथाहि कर्तृनिर्देशो न स्यात्। तदाह—भावसाधनेपि स्वर्गकामेनेज्यते इत्यादौ तृतीया न स्यात् अकारकत्वात् स्वर्गकामस्य। यत्पुनरिदमुक्तं अधिकारं कर्तृभावा[व]व्यतिरिक्तं

कर्मस्वाभाव्यात् किमपि भावयिष्यतीति । तच्चाभ्युदयाय नित्येष्विव भवत्पक्षेपि ।

कर्तव्यतावगमादेव कर्मानुष्ठानं न पुनः फलसंबन्धात् । फलसंबन्धे हि प्रमाणान्तरावगम्यता प्राप्नोति । ततश्चानपेक्षत्वादिति स्थितो हेतुरुद्धृतो भवति, सापेक्षत्वप्रसङ्गात् । अतः कर्म कर्तव्यं कर्तृभिरिति अनधिकारः ।

उच्यते । नायं पूर्वपक्षः श्रेयान् स्वर्गकामपदं ह्यस्मिन् पक्षे यथा न संबध्यते तथोपरिष्टाद्व्याख्यास्यामः । यद्येवं कथं तर्हि संशयः—किं धात्वर्थः साध्यतयोपदिश्यते उत काम इति । ननु च धात्वर्थे साध्ये कामपदं

---

विना निष्फलं कर्म भवति न च निष्फले प्रवर्तन्त इति । तत्र ब्रूमः कर्मस्वाभाव्यात् कर्मणोऽयं स्वभावः यदभूतं किंचिद्भावयतीति । तत्र यागादिकमपि कर्माश्रुतं किमपि भावयिष्यति । तच्च कर्मणामभ्युदयाय भविष्यतीति अभ्युदयरूपं किमपि भविष्यति अभ्युदयः(त्वं) विशिष्टशरीरेन्द्रियादिप्रादुर्भावः नित्येष्विव भवत्पक्षेऽपि [यस्य] स्वर्गकामादीन्यधिकारिविशेषणानि तस्यापि मते जीवनाधिकारे फलाश्रवणेऽपि कर्मस्वाभाव्यात् यथा किमपि फलमभ्युदयरूपं कल्प्यते तथेहापि भविष्यति । एवं तावत् असत्यपि व्यतिरिक्तेऽधिकारे फलतः प्रवृत्तिरित्युक्तम् । इदानीं विनाप्यधिकारं विनापि फलं प्रवृत्तिर्भविष्यतीत्याह—कर्तव्यतावगमाच्च कर्मानुष्ठानम् । यद्धि कर्तव्यतयाऽवगम्यते तत्र प्रवृत्तिः न पुनः फलसम्बन्धात् । फलसंबन्धे ह्यङ्गीक्रियमाणे प्रमाणान्तरावगम्यता प्राप्नोति वेदार्थस्य फलत एव कर्तव्यतावगमात् । ततश्चानपेक्षत्वादिति हेतुरुद्धृत उन्मूलितो भवति सापेक्षत्वप्रसङ्गात् प्रमाणान्तरानवगम्यमानार्थतया हि अनपेक्षत्वम् प्रमाणान्तरावगम्यार्थत्वे तु सापेक्षता प्राप्नोति वेदार्थस्य । ततश्चानपेक्षत्वं प्रथमपादे उक्तम् । उपसंहरति—अतः कर्म कर्तव्यं कर्तृभिरिति अनधिकारः कर्तुरेवाधिकारः । एवमाक्षिप्ते संशये समाधाता आह—उच्यते, नायं पूर्वपक्षः श्रेयान् स्वर्गकामपदं ह्यस्मिन् पक्षे यथा न संबध्यते तथोपरिष्टाद्वक्ष्यामः । अन्यथानुपपद्यमानः स्वर्गकामशब्दः संबन्धान्तरमवगमयतीति भावः । पुनराक्षेप्ता आह—यद्येवं यदि स्वर्गकामशब्दोऽन्यथा नोपपद्यते कथं तर्हि संशयः - किं धात्वर्थः साध्यतयोपदिश्यते उत काम इति ।

[1]अन्यथा न सम्बध्यत इत्युक्तम् । न न संबध्यते अङ्गतया च समुद्रं मनसा ध्यायेदितिवत् कामनं कर्तव्यं प्राप्नोति ।

नन्वेवं सति उभयोः कर्तव्यतोक्ता भवति । न, सत्यमुक्ता गुणप्रधानभावस्त्वत्र चिन्त्यते । कथं तर्हि सिद्धार्थतया स्वर्गकामशब्दस्य पूर्वपक्षः । [पूर्वपक्षोऽपि साध्यार्थतयैव] कथं तर्हि भूतं भव्यायोपदिश्यत इति ब्रवीति । नायं दोषः, भूतमेव ह्यत्रोपदिश्यते । न चेत्प्रमाणान्तरप्राप्तमुपादानसिद्धयर्थं क्रियते । उपदेशे तु भूतमेव । अत एव चैकादशे

---

अस्यार्थः—आख्यातपदसंबन्धात् यागोऽपि कर्तव्यतया प्रतिभाति, कामनासंयोगात् कामोऽपि । तत्र कः साध्यतया संबध्यतामिति सन्देहः । काम्यत इति कामः स्वर्गादिः । ननु धात्वर्थे साध्ये दूषणमिदमुक्तं स्वर्गकामपदमन्यथा कर्तृविशेषणत्वेन न सम्बध्यत इति । समाधाता आह—न न सम्बध्यते, अपि तु सम्बध्यत एव । कुतः? अङ्गतया हि 'समुद्रं मनसा ध्यायेत्' इतिवत् कामनं कर्तव्य प्राप्नोति । यदि धात्वर्थः साध्यो भवति तदा तदङ्गतया समुद्रस्य ध्यानवत् स्वर्गादिकामनापि कर्तव्या भविष्यति । तेन स्वर्गकामशब्दोऽपि कामनामेवाङ्गतया समर्पयन् संबध्यत इति । नन्वेवं सत्युभयोः कर्तव्यता उक्ता भवति । धात्वर्थकामनयोः ततः कथं संबन्ध इत्यर्थः । समाधाता आह—न, सत्यमुक्ता, गुणप्रधानभावस्त्वत्र चिन्त्यते । एकस्य गुणतया कर्तव्यता, अपरस्य प्रधानता । पुनश्चोदयति - यदि स्वर्गकामनापि साध्या कथं तर्हि सिद्धार्थतया स्वर्गकामशब्दस्य पूर्वः पक्षः । पूर्वपक्षोऽपि साध्यार्थतयैव तथा । भूतं भव्यायोपदिश्यत इति च कथं ब्रवीति भाष्यकारः । समाधाता आह—नायं दोषःयस्मात् भूतमेवात्रोपदिश्यते । न चेत् प्रमाणान्तरप्राप्तमुपादानसिध्यर्थं क्रियते । अन्यथा उपादानासंभवात् । उपदेशे तु भूतमेव । तेन संबन्धोऽप्युपदिश्यते । साध्यसाधनभावेन सिद्धार्थतया च पूर्वपक्षोऽप्यनुपपन्नः । भूतव्यपदेशश्च । यत एवमत्र सन्देहो न—किं यागः साध्यः उत काम इति । अत एव चैकादशे यदधिकरणं तदप्यपुनरुक्तं न्यायतः । अत्र हि यागः साध्यतया नोपदिश्यत इत्युक्तम् ॥ तत्र स्थितेऽपि यागस्य साध्यत्वेनानुपदेशे स्वर्गकामादेः कर्तृविशेषणत्वं

---

1. अव्यवधानसम्बन्धत-मा.

**यदधिकरणं तदपि अपुनरुक्तं न्यायतः । एवं स्थिते विशये पूर्वपक्षवादी भूतं भव्यायेति पूर्वपक्षितवान् । शाब्दोक्ताभिश्च युक्तिभिः ।**

**इदमपरं चिन्त्यते इति कथं ? स्वर्गशब्दः किं प्रीतिवचनः उत द्रव्यवचन इति । [1]तथा द्व्यष्टवर्षाद्युपन्यासो देशाद्यपलापोऽभ्युपगमश्च नातीवोपयुज्यते । ननु चोक्तमस्माभिः किं कामविषयतया स्वर्गशब्दः प्रयुक्तः उत द्रव्यपरतयेति । यद्येवं देशापलापे किं प्रयोजनम् ? साधनसिद्धिः ।**

---

निराकृतम् । तदत्र अयं मूलभूतस्सन्देहः—किं स्वर्गकामपदं नियोज्यसमर्पकं उत नेति । तत्र यदाहि नियोज्यविशेषणं तदा काम्यमानस्य साध्यता स्वार्थता च काम्यमानतया चोपादानं यागस्य च साधनता । कार्यविशेषणपक्षे तु काम्यसिद्ध्यर्थता परार्थता च । कामनायाः साधनतयोपादानं यागस्य च साध्यतेति । **एवं स्थिते विशये पूर्वपक्षवादी भूतं भव्यायेति पूर्वपक्षितवान् । शाब्दोक्ताभिश्च युक्तिभिः** अभ्युच्चयरूपाभिः । अस्यार्थः—आख्यातोपात्ततया यागः साध्यतया प्रतीयते । न च साध्येन साध्यस्य संबन्धो युज्यत इति भूतार्थतयैव स्वर्गकामशब्दोऽन्वयं याति । तेनात्र कर्तृविशेषणतैव । वैयाकरणेन च या युक्तय उक्ताः न कर्तृव्यतिरिक्तः कश्चिन्नियोज्यो नामास्तीति ताभिश्च कर्तृविशेषणतेति पूर्वः पक्षः ।

भाष्यं व्याख्यातुं आक्षिपति—**इदमपरं चिन्त्यत इति कथं ? स्वर्गशब्दः किं प्रीतिवचनः उत द्रव्यवचन इति ।** अस्यार्थः-यदि यागस्साध्यः तथापि कथं द्रव्यवचनता स्वर्गशब्दस्य । तथा यदि स्वर्गः साध्यः तथापि कथं प्रीतिवचनता । यो हि शब्दः स्वशक्त्या च यद्वचनोऽवगम्यते तद्वचन एव युक्तः न पुनः साध्यतासाधनताभ्यां व्यवस्थाप्यते । **तथा द्व्यष्टवर्षाद्युपन्यासः देशापलापोऽभ्युपगमश्च नातीवोपयुज्यते ।** यदि यागस्य साध्यतया द्रव्यवचनता स्वर्गशब्दस्य, तदा किं "द्व्यष्टवर्षाः स्त्रियः स्वर्ग" इत्येवमादिना प्रयोगोपन्यासेन । तथा देशापलापोऽपि पूर्वपक्षिणो निष्प्रयोजनः देशस्यापि द्रव्यत्वात् द्रव्यवचनता हि तस्याभिमता । तथा यदि देशो निराकृतः तदा अभ्युपगमः किमर्थ इति । समाधत्ते—**ननु चोक्तमस्माभिः किं कामविषयतया स्वर्गशब्दः प्रयुक्तः उत द्रव्यपरतयेति** अस्यार्थः—नात्र वाचकता चिन्त्यत इति । [किं]तर्हि ? प्रयोगः । तेन साध्यत्वासाध्यत्वविचारः तस्य हेतुर्भवति । यदा स्वर्गः साध्यः तदा प्रीतिपरतया प्रयोगः यदा च यागस्साध्यः तदा द्रव्यपरतयेति प्रीतिशब्दः । नचात्र काम्य-

स किल देशो नोपलभ्यते जीवद्भिः । न चानुपलब्धस्योपादनोपसर्जनता समुद्रवत्संभवति । अतो द्व्यष्टवर्षाद्युपन्यासः पेशलः अभ्युपगमेपि देशस्य । यद्यपि केवलसुखश्रवणादिति तथाप्यसमत्पक्षो न दुष्यतीति पक्षसिद्ध्यर्थ-वचनमेव । सामान्यावगमे तु व्यवहारासिद्धिः सुखसाधनत्वमात्रं परिगृह्यत इत्युपसंहारः । अतः पूर्वपक्षवादी याग एवोपदेशं मन्यते । अत एव च "भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयेत" इति समर्थितं भवति । अन्यथा ह्युक्तो विरोधः ।

ननु चास्मिन् पक्षे यत्तत्किमपि भविष्यति तथा भविष्यति । न हि

---

मानावस्थाऽभिप्रेता । यद्येवं देशापलापे किं प्रयोजनं ? द्रव्यपरतया यदि प्रयोगः पूर्वपक्षवादिनोऽभिमतः एवं तर्हि देशापलापे किं प्रयोजनं ? देशस्यापि द्रव्यत्वात् । उत्तरं —साधनसिद्धिः प्रयोजनम् । कामनाया यागं प्रति साधन-भूतायाः सिद्धिः प्रयोजनम् । स किल देशो जीवद्भिर्नोपलभ्यते । नचानुप-लब्धस्योपादानोपसर्जनता समुद्रवद्भवति । यथा समुद्रस्योपलब्धस्य ध्यानोप-सर्जनता संभवति तथाऽनुपलब्धस्य देशस्य कामनोपादानोपसर्जनता न संभवतीति । अतो द्व्यष्टवर्षाद्युपन्यासः पेशलः । तस्योपलब्धस्योपादानोपसर्जनत्वसंभवादभ्युप-गमेपि देशस्य । यद्यपि केवलसुखश्रवणादित्यनया युक्त्या तथाप्यसत्पक्षो न दुष्यति इति पक्षसिद्ध्यर्थवचनमेव । देशस्य स्वर्गत्वे कदाचिदस्माकं पक्षो न सिद्ध्यतीति मन्यसे तदपि नास्तीत्युक्तं भवति । तस्यापि केवलसुखश्रवणार्थापत्ति-सिद्धस्य कामनोपादानोपसर्जनत्वसंभवात् । सामान्यावगमे तु व्यवहारासिद्धेः सुखसाधनत्वमात्रं परिगृह्यत इत्युपसंहारः । कश्चिद्देशोऽस्तीत्येतावताप्यवगमेन कामनाव्यवहारसिद्धेः सुखसाधनमात्रमेव च किं[न]गृह्यत इत्युपसंहारः कृतः । अतः पूर्वपक्षवादी याग एवोपदेशं मन्यते । यागः साध्यतयोपादीयत इत्यर्थः । यत एव यागः साध्यः अत एव च "भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयेत" इति समर्थितं भवति । अन्यथा चादीनामपि साध्यार्थः स्यात् तदा उक्तो विरोधः । संप्रति पूर्वपक्षसारं निष्कर्षयितुं चोदयति—ननु चास्मिन् पक्षे यत्तत् किमपि भविष्यति तथा भविष्यति । न ह्यकारकाधारं क्रिया-

---

1. मा. तत्र

अकारकाधारं कर्मफलमुपलभ्यते । ननु च सोमं यजतीत्येवमादिषु कारकमुपलभामहे । तदिदमयुक्तम् । नवमे निराकृतत्वात् उक्तदेवताप्राधान्यस्य ।

ननु अनिर्ज्ञातपुरुषार्थस्य साक्षात् प्रणाडिकया वा संस्कारो नोपपद्यत इति सक्त्वधिकरणे उक्तम् । न च देवता पुरुषार्थतया केनचित् प्रकारेण ज्ञापिता । ननु च देवताः मनुष्यान् पालयन्तीति प्रसिद्धिः । निर्मूलत्वान्नादरणीयेत्युक्तं वटयक्षवन्नवम एव ।

ननु च देशस्येव यागोपदेशः प्रमाणं भवितुमर्हति अस्याः प्रसिद्धेः । अवश्यं नित्यार्थमप्येतदभ्युपगमनीयम् । नैतदुपपद्यते । उपदेशो हि यागं कुर्यादित्येतावत्यर्थे प्रमाणं न पुनः पुरुषस्योपकारको याग इति ।

---

फलमुपपद्यते । न चाधारभूतं फलस्य कर्माख्यं कारकमुपलभ्यते । ननु च सोमं यजतीत्येवमादिषु कारकमुपलभामहे । देवता कर्मभूता यागे तद्गतं फलं भविष्यति । निराकरोति—तदिदमयुक्तम् नवमे निराकृतत्वात् प्राधान्यस्य यदि यागं प्रति प्रधानभूता देवता भवेत् तदा स्यादेवम् । नवमे निराकृतं देवताप्राधान्यं विग्रहादिनिराकरणेन । इतश्च देवतायाः प्राधान्यं नास्तीत्याह—ननु अनिर्ज्ञातपुरुषार्थस्य साक्षात् प्रणाडिकया वा संस्कारो नोपपद्यत इति सक्त्वधिकरणे उक्तम् । साक्षात् प्रणाडिकया वा अनिर्ज्ञातपुरुषार्थोऽयम् । तस्य संस्कारो नोपपद्यत इति सक्त्वधिकरणे दर्शितम् । न च देवता पुरुषार्थतया केनचिज्ज्ञापिता । ननु च देवता मनुष्यान् पालयन्तीति प्रसिद्धिः । तेन पुरुषार्थतया देवता ज्ञापितेति निर्मूलत्वात् वटयक्षप्रसिद्धिवत् नादरणीयेत्युक्तं नवम एव । ननु च देशस्येव यागोपदेशः प्रमाणं भवितुमर्हति अस्याः प्रसिद्धेः । यथा देशविशेषस्य सुखमात्रायतनस्य स्वर्गपदाभिधेयस्य यागोपदेशः तथा देवतायाः मनुष्यपालनकर्तृत्वस्यापि भविष्यति । तन्मूला चेयं प्रसिद्धिरिति । स एवाह—अवश्यं चैतद्देवताप्राधान्यं नित्यार्थमभ्युपगमनीयम् । तत्र हि क्रियाफलमेवाभ्युदयोऽभ्युपेयः । परिहरति—नैतदुपपद्यते उपदेशो हि यागं कुर्यादित्येतावत्यर्थे प्रमाणं न पुनः पुरुषस्योपकारको याग इति ।

ननु चानुष्ठानाभावात् तथापि भवतूपदेशः न तथा भवतीत्युक्तम्। न ह्यनुपकारके कश्चित् प्रवर्तत इति। ननु चेदमप्युक्तं कर्तव्यतावगमात् [प्रवर्तनीयं, नोपकारावगमात्] सापेक्षत्वप्रसङ्गात्। एवं च नित्यप्रतिबन्धकोऽप्ययमप्रतिबन्धक एव। यद्येवं भवतु सर्वमिदं नित्यमनुष्ठेयं फलमपि, तथाप्यस्मत्पक्षः सिध्यत्येव। अतो न कामः साध्यः भूततयाऽवगमात्। कथं तर्हि काम्यं नित्यमिति याज्ञिका भेदेनोपदिशन्ति। निर्मूलत्वादसदुपदेशो भविष्यति।

एवं तर्हि तदेवेदमायातं कर्तुरेवाधिकार इति। निराकृतं च कर्तृ. भिधाने न स्वर्गकामपदं संबध्यत इति।

सत्यं निराकृतं निरुपादानोपसर्जनत्वं, सोपादानोपसर्जनत्वं

---

चोदयति—**ननु चानुष्ठानाभावात् तथापि भवतूपदेशः [न] तथा भविष्यतीत्युक्तम्। न ह्यनुपकारके कश्चित्प्रवर्तत** इत्युक्तम्। परिहरति—**ननु चेदमप्युक्तं कर्तव्यतावगमात् प्रवर्तनीयं नोपकारावगमात् सापेक्षत्वप्रसङ्गात्** इति। यदा च कर्तव्यतावगममात्रेण फलं विनापि प्रवृत्तिः। **एवं च नित्यप्रतिबन्धकोऽप्ययमप्रतिबन्धक एव**। नित्याधिकारो भवता प्रतिबन्धको दर्शितः स प्रतिबन्धक एव न भवति। तत्र फलानभ्युपगमात्। बन्धक उपग्रहो यदीति लोकप्रसिद्धिः(?)। एवमुक्ते च पूर्वपक्षवादी स्वाभिप्रायसारमाविष्करोति—**यद्येवं भवतु तर्हि सर्वमेवेदं नित्यवदनुष्ठेयं फलमपि तथाप्यस्मत्पक्षः सिद्ध्यत्येव** यागः कर्तव्यतयोपदिश्यते कर्तृविशेषणं च स्वर्गकामपदमिति। यतो यागः कर्तव्यतयोपदिश्यते **अतो न कामः** काम्यः **स्वर्गादिः साध्यो भवति भूततयाऽवगमात्**। यदि स्वर्गः साध्यो न भवति **कथं तर्हि नित्यं काम्यमिति याज्ञिका भेदेनोपदिशन्ति** सर्वस्य नित्यत्वात् कामोऽस्या निमित्तमिति। काम्यं गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् इति यत्। समाधत्ते—**निर्मूलत्वादसदुपदेशो भविष्यति** याज्ञिकानाम्। पुनराक्षिपति—यदि यागस्साध्यः **एवं तर्हि तदेवेदमायातं कर्तुरधिकार इति**। स एवाह—**निराकृतं च कर्तृभिधाने स्वर्गकामपदं न संबध्यत** इत्येकादशाद्ये। समाधत्ते—**सत्यं निराकृतं निरुपादानोपसर्जनत्वं,** निरुपादाने कामे उपसर्जनत्वं निराकृतम्। **सोपादा-**

स्थापितमेव । गुणत्वेनाभिधानात् । कः पुनरनयोर्विशेषः ? उक्तं सोपादानत्वंनिरुपादानत्वं च । सत्यमुक्तं, प्रतीतौ विशेषं पृच्छामि । प्रतीतौ चेत् संबन्धोपगमतः विशेषोऽनपेक्षः किं विशेषाभिधानेन । सत्यं यदि विशेषानपेक्षः संबन्धः अवगम्यते सत्वनुपादाने नावगम्यत इत्युक्तम् । तस्मात् न कर्तृतोऽधिकृतत्वं नाम पृथगस्ति किञ्चित् । वक्तव्यो वा विशेषः ।

ननु च [प्रवर्तमानस्य लिङादिभिः प्रवृत्तिः क्रियते यथा दर्शितं णिजुत्पत्तौ कुरु कुर्विति । अत एव 'वेदैवासौ मयैतत्कर्तव्यं इति उपायं तु न वेद' इति भाष्येऽप्यस्ति । दर्शितं च अभिचरन् यजेत इति समामनन्ति न अभिचरितव्यमिति ।] न तावदिदं शक्यते वक्तुं प्रवर्तमानस्यैव प्रवृत्तौ

---

नायां तु कामनायां उपसर्जनत्वं समुद्रवत् स्थापितमेव । गुणत्वेनाभिधानात् । कामनायाः कर्मणि गुणत्वेनाभिधानात् । पृच्छति—कःपुनरयोः सोपादाननिरुपादानपक्षयोर्विशेषः । उभयत्रापि कर्तृविशेषणत्वात् । उत्तरं—उक्तं सोपादानत्वं निरुपादानत्वं च । एकत्र कामना उपादेया । अन्यत्रानुपादेयेति विशेषः । प्रष्टा आह—सत्यमुक्तं प्रतीतौ विशेषं पृच्छामि । प्रतीतौ चेत् संबन्धोपगमतो विशेषोऽनपेक्षः किं विशेषाभिधानेन । उत्तरं—सत्यं यदि विशेषानपेक्षः संबन्धोऽवगम्यते । स त्वनुपादाने नावगम्यत इत्युक्तम् । तस्माद्विशेषो वक्तव्यः । उपसंहरति–तस्मान्न कर्तृतोऽधिकृतत्वं नाम पृथगस्ति किञ्चित् । वक्तव्यो वा कर्तृत्वाधिकृतत्वयोर्विशेषः । ननु च प्रवर्तमानलिङादिभिः प्रवृत्तिः क्रियते यथादर्शितं णिजुत्पत्तौ कुरुकुर्विति । अस्यार्थः-प्रवर्तमानस्य प्रवर्तकलक्षणे प्रयोजकव्यापारे णिजुत्पद्यते । तत्र लिङादयः प्रयुज्यमाना दृश्यन्ते यथा कुरुकुर्विति यथा । अतो लिङादयोऽपि प्रवर्तमानस्यैव प्रवृत्तिं कुर्वन्ति । तेन वेदे प्रवृत्तिसिद्ध्यर्थं कर्तृत्वातिरेक्यधिकृतत्वं नाम पृथक् वाच्यमिति । कुरुकुर्विति संभ्रमे द्विर्वचनम् । यत एव प्रवर्तमानस्यैव प्रवर्तने लिङादयः अत एव च वेदैवासौ मयैतत्कर्तव्यमिति उपायं तु न वेद इति भाष्येऽप्यस्ति । अनेन सामान्येन प्रवृत्तः उपायदर्शनेन विशेषे प्रवर्तत इति दर्शयन् भाष्यकारः प्रवृत्तप्रवर्तने लिङादय इति दर्शयति । दर्शितं च 'अभिचरन् यजेत' इति समामनन्ति नाभिचरितव्यमिति । अनेनापि अभिचारे तत्साधने च सामान्यप्रवृत्तौ विशेषे प्रवर्तत इति दर्शितम् । परिहरति - न तावदिदं शक्यते वक्तुम् प्रवर्तमानस्यैव प्रवर्तने

लिङादय इति लक्षणाश्रवणात्। प्रयोगव्यभिचाराच्च। लक्षणं तावत् प्रवर्तमानस्याप्रवर्तमानस्य वेति [न] विशेषमाचष्टे। प्रयोगोऽप्याज्ञादिषु [1]अप्रवृत्तस्यैव दृष्टः। ननु प्रतिपन्नाज्ञस्यैव लिङादयो भवन्ति। न प्रवृत्त-प्रवर्तने प्रयोगः आमन्त्रणादिषु व्यभिचारात्। आज्ञायामपि अप्रवृत्तप्रवर्तन एव प्रयोगविशेषे अप्रवृत्तस्यैव प्रवृत्तिः क्रियते। न च सामान्यतः प्रवृत्तिः लिङादिभ्योऽवगम्यते। विशेषनिष्ठत्वात्। अन्विताभिधानं च पदानामुक्तं तद्भूताधिकरणे। यत्पुनरिदमुक्तं णिजुत्पत्तौ कुरुकुर्विति दर्शयतीति। न प्रयोगमात्रात् शब्दार्थोऽवगन्तुं शक्यते। अनन्यथासिद्धदर्शनं हि

लिङादय इति लक्षणाश्रवणात (लक्षणे श्रवणात्)। विधौ हि लिङादयः श्रूयन्ते। प्रवर्तकश्च विधिः नत्विदमपरं प्रवृत्तस्याप्रवृत्तस्य चेति। **प्रयोगव्यभिचाराच्च।** प्रयोगे व्यभिचार इति। अप्रवृत्तप्रवर्तने लिङादिप्रयोगात्। एतदेव विवृणोति-**लक्षणं तावत् प्रवर्तमानस्याप्रवर्तमानस्य वेति न विशेषमाचष्टे। प्रयोगोऽप्याज्ञादिषु अप्रवृत्तस्यैव दृष्टः। ननु प्रतिपन्नाज्ञस्यैव लिङादयो भवन्ति।** अस्यार्थः - यः प्रतिपन्नाज्ञः येनाज्ञा प्रतिपन्ना अङ्गीकृता यदि स एव तं प्रत्याज्ञां ददाति। तेन सामान्येन प्रवृत्तस्य आज्ञया प्रवर्तन[ात्]प्रवृत्तेः प्रवृत्तप्रवतनाज्ञामपि प्रयोगमिति चोदयति(?)। परिहरति—**न प्रवृत्तप्रवर्तने प्रयोगः आमन्त्रणादिषु व्यभिचारात्।** आमन्त्रणे हि अप्रवृत्तप्रवर्तने प्रयोगो दृष्टः। **आज्ञायामप्यप्रवृत्त-प्रवर्तन एव प्रयोगविशेषेऽप्रवृत्तस्यैव प्रवृत्तिः क्रियते।** ननु सामान्यतः प्रवृत्त एव विशेषे प्रवर्तते। तत्राह—**न च सामान्यतः प्रवृत्तिः लिङादिभ्योऽवसीयते। विशेषनिष्ठत्वात्** शब्दार्थस्य। तेन या प्रवृत्तिर्विशेषविषया लिङादिभिः क्रियते सा अप्रवृत्तस्यैव। या तु सामान्यतः प्रवृत्ता न तत्र लिङादेर्व्यापार इति। ननु प्रवृत्तिमात्रं लिङादिभिः विशेषविषयसंबन्धे हि विशेषनिष्ठतेति। तत्राह—**अन्विताभिधानं च पदानामुक्तं तद्भूताधिकरणे।** तेन विशेषविषयतान्विता-मेव प्रवृत्तिं लिङादयो वदन्ति। **यत्पुनरिदमुक्तं णिजुत्पत्तौ कुरुकुर्विति दर्शयतीति** अत्रोच्यते—**न शब्दप्रयोगमात्रात् शब्दार्थोऽवगन्तुं शक्यते अनन्यथा-सिद्धदर्शनं हि शब्दार्थनियमे हेतुः।** वाचकतां विना यस्य प्रयोगस्य

1. अप्रवर्तमानस्य।

शब्दार्थनियमे हेतुः अव्यभिचारि कारणं कारणवतामिष्टमुक्तम् ।

नतु चैवं सत्याज्ञादीनामप्यनैकान्तिक एव प्रयोगः । तस्माच्छब्दार्थनियमे कारणं वक्तव्यम् । इदमुच्यते । प्रवर्तनं लिङादयो न व्यभिचरन्ति । सर्वत्रावगतेः । प्रवर्तमाने च [णिजुत्पत्तिविषयेऽप्रवृत्ते चाज्ञादौ] अतोऽन्वयव्यतिरेकाभ्यां तावन्मात्रमेव शब्दार्थ इति शक्यतेऽवगन्तुम् । यत्पुनः 'वेदैवासौ' 'मयैतत्कर्तव्यं' 'अभिचरन् यजेत' इति च दर्शितं तत् स्थिते व्यतिरिक्तेऽधिकारे कामसंयुक्तेषु प्राप्त्यप्राप्तिविवक्षयोक्तम् । इह तु व्यतिरिक्तो नास्तीत्युक्तम् । तस्माददर्शनं तत् । यदि च प्रवर्तमानस्यैवायमुपदेशः तदा उपदेशार्थतैव हीयते । अस्येदं साधन-

---

दर्शनं नोपपद्यते स प्रयोगो वाचकतां नियमयति । यस्य तु लक्षणया गौण्या वा वृत्त्या सामान्यवाचितया दर्शनं ततो न वाचकताध्यवसानम् । प्रवर्तकतामात्राभिधायकतया च प्रवृत्तप्रवर्तने प्रयोग उपपद्यत एवेति न ततो वाचकताया निश्चयः । किञ्च सर्वेषामेव कारणवतां कार्याणां यदव्यभिचारि तदेव कारणमुक्तमित्युक्तम् । तेन व्यभिचारितया प्रवृत्तप्रवर्तनमस्य प्रयोगस्य न कारणम् । यच्च यच्छब्दप्रयोगे कारणं तत् तद्वाच्यम् । अतो न प्रवृत्तप्रवर्तनम् लिङादीनां वाच्यम् । ननु चैवं सति आज्ञादीनामप्यनैकान्तिक एव प्रयोगः आज्ञादीनामपि अप्रवृत्तप्रवर्तनात्मकानां यः प्रयोगस्सोऽपि व्यभिचारी । णिजुत्पत्तौ प्रवृत्तप्रवर्तनात् । तस्मादुभयोर्व्यभिचारात् शब्दार्थनियमे कारणं वक्तव्यम् । परिहरति—इदमुच्यते प्रवर्तनं लिङादयो न व्यभिचरन्ति सर्वत्रावगतेः प्रवर्तमाने च णिजुत्पत्तिविषये अप्रवृत्ते चाज्ञादौ । अतोऽन्वयव्यतिरेकाभ्यां तावन्मात्रमेव शब्दार्थ इति शक्यते वक्तुम् । यत्पुनः 'वेदैवासौ' इति 'अभिचरन् यजेत' इति च दर्शितं तत् स्थिते व्यतिरिक्तेऽधिकारे कामसंयुक्तेषु प्राप्त्यप्राप्तिविवक्षयोक्तम् । इह तु व्यतिरिक्तो नास्तीत्युक्तम् । तस्माददर्शनं तत् । अस्यार्थः—एतदधिकरणसिद्धान्ते स्थिते सत्येतदुच्यते कामसंयुक्तेषु कर्मसु अधिकारापादितसाधनभावेषु फलाभिप्रायेणैव सामान्यतः प्रवृत्तिः प्राप्ता विशेषतस्त्वप्राप्तेत्युक्तम् । इह त्वधिकार एव कर्तृव्यतिरेकेण नास्तीत्याक्षेपः । तेनायं ग्रन्थः प्रतिपक्षतयोपन्यसितुं पूर्वपक्षिणं प्रति न

मित्येवं परत्वाद्वाक्यस्य । न च साधनस्वरूपे शाब्दं प्रमाणमस्तीत्युक्तम् । किं तर्हि? अनुष्ठान एव । तस्मादुपदेशार्थोऽप्रवृत्तप्रवर्तनं इति युक्तम् । अत एव च शब्दविदः प्रवर्तमानस्य हेत्वभिधानं णिचो मन्यन्ते अप्रवृत्तस्यैव लिङादीनाम् । तस्मात्कर्तव्यतावगतिरेवानुष्ठानहेतुः न पुनः फलाभिलाषः । तथा च भावार्थाधिकरणे कुर्यादित्युक्त्वा स्वर्गकामपद-संबन्धात् स्वर्गं भावयेदित्युक्तम् । न स्वर्गकामः[स्वर्गं]कुर्यादिति । अवश्यं चैतदेवमवगन्तव्यं, अन्यथा हि यावज्जीवादिष्वनधिकारः स्यात् साध्या-न्तराभावात् ।

---

शक्य[:](म्) । यदि च प्रवर्तमानस्यैवायमुपदेशः तदा उपदेशार्थतैव हीयते अस्येदम् साधनमिति सिद्धकर्मशक्तिसमर्पणपरत्वात् वाक्यस्य । कस्मात् पुनरेवं-परत्वेप्युपदेशस्यार्थवत्ता नास्तीत्याह—न साधनस्वरूपे[1] शाब्दं प्रमाणमस्ती-त्युक्तम्, किं तर्हि? अनुष्ठान एव । उक्तमिदं चोदनासूत्रे कार्य एवार्थे शब्दस्य प्रामाण्यं व्युत्पन्नमिति । व्युत्पत्त्यपेक्ष च शाब्दं प्रामाण्यमभ्युपगन्तव्यमिति न साधनरूपे प्रामाण्यम् । किन्त्वनुष्ठान एव । तस्मादप्रवृत्तप्रवतनमुपदेशार्थ इति युक्तम् । यत एवाप्रवृत्तप्रवर्तन एव लिङादीनामुपदेशकत्वं अत एव च शब्दविदः प्रवर्तमानस्य हेत्वभिधानं णिचो मन्यन्ते । अप्रवृत्तस्यैव लिङा-दीनाम् । प्रवर्तमानस्य हेतोः प्रवर्तकस्य(ापि) अभिधानं णिचा क्रियते । अप्र-वृत्तस्य प्रवर्तकाभिधानं लिङादिभिरिति शाब्दा मन्यन्ते । अन्यथा णिचो लिङादीनां च तुल्यमभिधानं स्यात् । यतोऽप्रवृत्तप्रवर्तनमेव लिङाद्यर्थः तस्मात् कर्तव्यताव-गतिरेवानुष्ठानहेतुः न पुनः फलाभिलाषः । कर्तव्यतावगतिपूर्वं च फलम् । तथा च भावार्थाधिकरणे कुर्यादित्युक्त्वा स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदित्युक्तम् । न स्वर्गकामः स्वर्गं कुर्यादिति फलावगमपूर्वकं कर्तव्य-तावगमो नोक्तः । अवश्यं चैतदेवं यथा विनापि कर्तव्यताभ्युपगमो भवतीत्यभ्युप-गन्तव्यं, अन्यथा यावज्जीवादिष्वनधिकारः स्यात् । कर्तव्यतावगतिर्न स्यात् इत्यर्थः । कुतः साध्यान्तराभावात् । यदि कर्तृत्वातिरिक्तोऽधिकारो नास्ति सर्वेषा-मधिकारशून्यतया समत्वात् प्रयाजादीनामाग्नेयादीन् प्रत्यङ्गतैव न स्यात् । तदाह—

---

1. मा. न साधनभूतं

ननु चैवमङ्गसंबन्धो न प्राप्नोति न प्राप्नोत्यङ्गसंबन्धः यदि श्रुत्यादीनि न प्रमाणानि। न चैषां प्रामाण्यं साध्यान्तरप्रयुक्तम्। नित्येष्वपि साङ्गोपदेशात्। यदि च न प्राप्नोति किं कुर्मः? उक्तं चास्माभिः पृथक्प्रयोज्या एव भवन्तु प्रयाजादय इति। ये तु पुनः दृष्टार्था नियमायोपदिश्यन्ते नैवानङ्गं कर्तुरधिकारेऽपि। तस्माद्धात्वर्थ एवोपदेशः न कामे इति।

यदि निष्फले न प्रवर्तन्ते कर्तव्यतावगमेऽपि कथं नित्येषु अनुशास्याः। सफलेऽपि चाप्रवर्तमानाः कं दण्डमर्हन्ति। अतः प्रवृत्त्यवगतिरेव प्रवर्तने हेतुः। तत्राप्रवर्तमानाः श्रुतमुत्सृजन्ति कर्तव्यं न कुर्वन्ति इति। फलवन्ति[ति] पुनः सकामाः प्रवर्तमाना अपि न शास्त्रमुत्सृजन्ति नापि कर्तव्यं न कुर्वन्ति। अतः सुतरामस्मिन् पक्षे शास्त्रस्यानानुष्ठानम्।

---

ननु चैवमङ्गसंबन्धो न प्राप्नोति। परिहरति न प्राप्नोत्यङ्गसंबन्धः यदि श्रुत्यादीनि न प्रमाणानि। ननु श्रुत्यादीनां प्रामाण्यमधिकारायत्तमित्यत्राह—न चैषां प्रामाण्यं साध्यान्तरप्रयुक्तं नित्येष्वपि साङ्गोपदेशात्। यत्रापि फलं नास्ति नित्ये तत्रापि अङ्गसंबन्धाय(?) श्रुत्यादीत्यभ्युपगमात्। स्वर्गादीनामफलत्वेऽपि प्रयाजाद्यङ्गसंबन्धो भविष्यति। एतच्चापातमात्रेणोक्तम्। परमार्थोत्तरमाह—यदि च न प्राप्नोति अङ्गसंबन्धः किं कुर्मः? प्रमाणानुसारिणो वयं यदि प्रमाणतो न यागसंबन्धो भवति न भवतु। उक्तं चास्माभिः बादरिमतानुवर्तिभिः पृथक् प्रयोज्या एव भवन्तु प्रयाजादय इति। ये पुनः दृष्टार्थाः द्रव्यगुणसंस्कारा नियमायोपदिश्यन्ते नैवानङ्गं कर्तुरधिकारेऽपि। तदिदं बादरेरपि सम्मतम्। पूर्वपक्षमुपसंहरति—तस्माद्धात्वर्थ एवोपदेशः न कामे। याग एव कर्तव्यतावगमेऽपि कथं नित्येषु प्रतिषिद्धेषु फलशून्येषु अनुशास्या इति। अनुशास्या इति रूपसिद्धौ यत्नः कर्तव्यः "एतिस्तु शास्वृ" इति क्यप् भवति। सफलेऽपि चाप्रवर्तमानाः कं दण्डमर्हन्ति ये फलायोपदिश्यन्ते न स्वर्ग इत्यर्थ(?)। अयं च क्रियावाक्यार्थरक्षो लोकव्यवहारानुगुण्याय। ये च [फलावगमे सत्यपि] न प्रवर्तन्ते तेषां कर्तव्यम्। अतः प्रवृत्त्यवगतिरेव प्रवर्तने हेतुः। न फलम्। प्रवृत्त्यवगमे जातेऽपि अप्रवर्तमानाः श्रुतमुत्सृजन्ति कर्तव्यं न कुर्वन्तीति। अतः सुतरां त्वत्पक्ष एव शास्त्रस्यानानुष्ठापकत्वम्। अस्मत्पक्षे

ननु च कर्त्रधिकारपक्षे नियोगोऽनर्थकः। कर्ता हि व्यापृतो व्यापृतान् व्यापारयिष्यतीति वा कारकव्यपदेशं लभते। तत्र ब्राह्मणादयो यागादिषु किं व्यापृतवन्त इति कर्तृव्यपदेशं लभन्ते। अथ व्याप्ररन्तीति अथवा व्यापारयिष्यन्तीति सर्वथा नोपपद्यते। यदि तावद्व्यापृतवन्तः किं नियोगः करिष्यति। अथ व्याप्ररन्ति तथाप्यनर्थक एव। अथ व्यापारयिष्यन्तीत्यभिप्रायः प्राङ्नियोगात् विज्ञानमिदं कुतः? नियोगादेव भविष्यतीति चेत्; न तर्हि कर्तुर्नियोगः नियोगसंबद्धस्य कर्तृता प्राप्नोति। तस्मात् कर्तुरधिकारो दुर्भणः। ननु चैवं सति सर्वकारकसंबन्धापलापः प्राप्नोति। कारकशून्यासु च क्रियासु किं नियोगः करिष्यति। अथानुष्ठेयतया सर्वकारकग्राममवगम्य तस्य नियोगो भविष्यतीति कर्तर्यपि तुल्यम्। एवं

---

तु शास्त्रस्य प्रवर्तकत्वात् सकामस्यापि प्रवृत्तिरित्यनुष्ठानसिद्धिः। एवं स्थिते चोदयति —ननु च कर्त्रधिकारपक्षे नियोगोऽनर्थकः। कथमनर्थकः? उत्तरं—कर्ता हि व्यापृतो व्यापृतान् व्यापारयिष्यतीति वा कारकव्यपदेशं लभते। वर्तमानेन भूतेन भाविना वा व्यापारेण कारकव्यपदेशः न पुनः कालत्रयेऽपि व्यापाराभावे। व्यापरन्ति इति प्रकृत्य(न)न्तरं भौवादिकम् न पुनः पृङ् व्यायामे इति तौदादिकः। ततः किमित्याह तत्र ब्राह्मणादयो यागादिषु किं व्यापृतवन्त इति कर्तृव्यपदेशं लभन्ते। अथ व्यापरन्तीति अथवा व्यापारयिष्यन्तीति। यदि तावद्व्यापृतवन्तः किं नियोगः करिष्यति। अथ व्यापरन्तीति तथाप्यनर्थक एव द्वयोरपि प्रवृत्तत्वात् प्रवृत्त्यर्थं च नियोग इत्यानर्थक्यम्। अथ व्यापारयिष्यन्तीत्यप्यभिप्रायः। दूषयति — प्राङ्नियोगाद्विज्ञानमिदम् कुतः? यस्य नियोगसंबन्धोऽस्ति स तद्वशात् व्यापारयिष्यतीति ज्ञायते। यस्य पुनर्नियोगसंबन्धो नास्ति स(ह)[न]व्यापारिष्यतीत्येतच्छक्यं विज्ञातुम्। नियोगादेव भविष्यतीदं ज्ञानमिति चेत्। न तर्हि कर्तुर्नियोगः नियुक्तस्य कर्तृत्वं नियोगसंबद्धस्य कर्तृता प्राप्नोति तस्मात् कर्तुरधिकारो दुर्भणः। परिहरति— ननु चैवं सति सर्वकारकसंबन्धापलापः प्राप्नोति। प्राङ्नियोगसंबन्धात् तत्रापि कारकत्वायोगात्। कारकशून्यासु च क्रियासु किं नियोगः करिष्यति। अथानुष्ठेयतया सर्वकारकग्राममवगम्य तस्य नियोगो

**कर्तृकर्तृकं यत् कर्म तत् तेनैव कर्तव्यमिति करिष्यतीत्यभिप्रायेण संबन्धसिद्धिः। अतः कर्तर्यधिकारेऽप्यनवद्यम्। अवश्यं चैतत् अभ्युपगमनीयं कारकान्तरसंबन्धोऽर्थः। तेषामपि हि नैवान्य(त)ः संबन्धो विज्ञायते नियोगसिद्धिं मुक्त्वा। तस्मादसंबन्धो वा प्राङ्नियोगादभ्युपगमनीयः तन्निमित्तैव प्राक् संबन्धावगतिः इति, शब्दस्य वा प्रामाण्यं स्थितमुद्धरणीयम्।**

**ननु राज्यादिषु एवंकर्तृके एष भवानधिक्रियत इति प्रागधिकारात् क्रियाकारकसंबन्धो दृष्टः। कथंकर्तृके?। युक्तं राज्यादिषु**

---

भविष्यतीति **कर्तर्यपि तुल्यम्। एवं कर्तृकर्तृकं यत् कर्म तत् तेनैव कर्तव्यमिति करिष्यमाणाभिप्रायेण** च **संबन्धसिद्धिः।** यो यत्र कर्तृत्वेनावगम्यते तत्तेनैव कर्तव्यम्। अन्यथा कर्तृनियमावगमबाधः। ततश्च करिष्यमाणाभिप्रायेण कर्तृत्वेन संबन्धः सिद्ध्यति। **अतः कर्तर्यधिकारेऽप्यनवद्यम्। अवश्यं चैतत्** यत्कर्तृकं यत्कर्म तत् तेनैव कर्तव्यमित्य**भ्युपगमनीयम्।** सिद्धान्ती कारकाणां कारकातिरेकिणीं दशां नाङ्गीकरोति यथा कर्तुरधिकारेऽपि अनवद्यरूपात्। **तेषामपि** संबन्धसिद्ध्यर्थं **हि** यस्मा**न्नैवान्यः संबन्धो विज्ञायते** विशिष्टकारकनियमवर्ती **नियोगसिद्धिं मुक्त्वा।** एतदुक्तं भवति—यथा करणविशेषनियमात् तदेव करणं तथा कर्तृविशेषनियमात् स एव कर्ता भविष्यति। उपसंहरति—**तस्मादसंबन्धो वा प्राङ्नियोगादभ्युपगमनीयः।** अथ भविष्यदवस्थापेक्षया नियोगनिमित्तं कारकाणां संबन्धः तदा **तन्निमित्तैव** सा **प्राग**पि विनियोगकर्तृसंबन्धावगति**रिति।** यदि पुनरेकस्यापि कारकस्य संबन्धो नाभ्युपगम्यते तदा कारकशून्यासु क्रियासु नियोगानुपपत्तेः नियोगैकविषयस्य **स्थितं प्रामाण्यमुद्धरणीयम्।** न च तद्युक्तं स्थितत्वादेव इति। अथ कश्चिच्चोदयति—**ननु राज्यादिषु प्रागधिकारात् क्रियाकारकसंबन्धो दृष्टः।** तेन किमिति करिष्यमाणाभिप्रायेण संबन्धसिद्ध्या अभिरुच्यते। कीदृशे लौकिके प्रयोगे इत्यत्राह—**एवंकर्तृके** राज्ये। मध्ये पृच्छति—**कथंकर्तृके?** विद्वच्छराभिजनकर्तृके भवानधिक्रियत इत्येवंविधे दण्डनीत्यादिशास्त्रवर्तिनि प्रयोगे विशिष्टकर्तृविषयं प्रागुक्त्वा अधिकारः क्वचिदुच्यत इति। परिहरति—**युक्तं राज्यादिष्वतीतेषु पुरुषेषु तद्गुणस्य** विद्यादिगुणशक्तीनां **कर्तृभावदर्शनात्।** अस्यार्थः - राज्यादिषु युक्त एवायं प्रयोगः पूर्वपुरुषाणां

अतीतेषु पुरुषान्तरेषु तद्गुणकर्तृभावदर्शनात्। इह पुनः नियोगादृते पुरुषान्तरमपि न शक्यते वक्तुम्। सर्वस्य तत्पूर्वकत्वात् प्रवृत्तेः। दण्डनीत्यादिषु पुनः दर्शनान्तरपूर्वकत्वादुपदेशस्य उपपद्येतापि अनुभूतकर्तृके पुरुषविशेषस्याधिकारः। तत्रापि च अर्हार्थकथनमात्रमेवेति कर्त्रधिकार एव नाधिकारात् कर्तृत्वम्। कर्त्रधिकारे च स्वर्गकामित्वं कर्तृविशेषणं न फलविशेषणमिति सिद्धम्। एवं च सर्वं सर्वस्यानुष्ठेयम्। तथा च विद्योपदेशोऽयं सर्वस्य सर्वानुष्ठानात् कृत्स्नसिद्धिः।

तदिदमुक्तं सर्वं ब्रह्म भागश उपदेशमुखेन ज्ञानतोऽनुष्ठानतश्चोपदि-

---

यत्कर्तृकत्वमवगतं तदभिप्रायेणोच्यते विद्वच्छराभिजनकर्तृक इति। तथा संप्रति न तस्य तादृशे विषये कर्तृत्वप्रदर्शनायेदमुच्यते भवानधिक्रियत इति। तेन युक्तमेव तत्र भूतकर्तृप्रदर्शनम्। इह पुनः **नियोगादृते पुरुषान्तरं** कर्तृत्वेन न **शक्यते वक्तुं तत्पूर्वकत्वात् सर्वपुरुषाणां प्रवृत्तेः**। तेन भविष्यदभिप्रायेण कर्तृसंबन्धवर्णनम्। **दण्डनीत्यादिषु पुनः दर्शनान्तरपूर्वकत्वादुपदेशस्योपपद्येतापि अनुभूतकर्तृकेपि विषये पुरुषविशेषस्याधिकारः**। कर्त्रन्तरकर्तृके कर्मणि कर्त्रन्तरसंबन्धानुपपत्तेः न कर्तृप्रतिपादनमुपपद्यत इति कर्तृत्वातिरिक्तता अधिकृतस्योच्यते अतः कर्तुरन्योऽधिकृत इति तत्राह—**तत्रापि च अर्हत्यर्थकथनमात्रमेवेति कर्त्रधिकार एव; नाधिकारात् कर्तृत्वम्**। अस्यार्थः-विद्वच्छराभिजनइत्यस्यार्थः यत्र राज्ये विद्वच्छरोऽभिजातः कर्तृत्वमर्हति तत्र भवतः कर्तृत्वमिति न कर्त्रन्तरावरोधदोषः। अतः कर्तैवाधिकृतः। (कर्तुरिति) **कर्त्रधिकारे च स्वर्गकामित्वं कर्तृविशेषणं न फलविशेषणमिति सिद्धम्। एवं च सर्वं सर्वस्यानुष्ठेयम्**। यदि हि नियोज्यविशेषणानि स्वर्गकामादीनि पदानि स्युः तदा भेदेनैव कामनोपादानात् सर्वं सर्वस्यानुष्ठेयं न स्यात्। यदा तु कर्तव्यतावगममात्रेण कामनामङ्गभूतामुपादाय कर्म कर्तव्यं तदा सर्वं कर्म सर्वस्य पुरुषस्यानुष्ठेयम् तथा भागशो विद्योपदेशोऽयम्। एवं च भागशः भागेन कर्मोपदेशेन **विद्योपदेशोऽयं सर्वपुरुषस्य सर्वकर्मानुष्ठानात् कृत्स्नसिद्धिः** चोदितकृत्स्नार्थानुष्ठानसिद्धिः। एतदुक्तं भवति—सर्वस्य सर्वानुष्ठानं वदन् एक एवानुष्ठातेति दर्शयति। तेनात्मैक्यप्रदर्शनमिदं अनुष्ठानोपदेशमुखेन। **तदिदमुक्तं**—

**श्यत इति । अत एव चोद्गारः कर्त्रधिकारवादिनां (मतत्वेन) ‘असत्ये वर्त्मनि स्थित्वा ततस्सत्यं प्रकाशयेत्’ सर्वोपदेशानामयं सर्वस्य सर्वानुष्ठानार्हं-विधिरिति मन्यते। “त इमे सत्याः कामाः अनृतापिधानाः” इति श्रुतेः। भागशो भागश उपदेशोऽनृतमभिप्रेतम्। रागादिनिबन्धनश्च व्यवच्छेदः। तस्मात्कारकाधिकारदर्शनात् अधिकारान्तरदर्शनं व्यामोहः। अत एव च धर्मशास्त्रकाराः पठन्ति ‘कामात्मता न प्रशस्ता’ इति फलसिद्धिमवैदिकीं मन्वानाः। काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिक इति ज्ञाने कर्मणि च विनियोगं मन्यते। “सर्वं खल्विदं ब्रह्म**

---

**सर्वमिदं ब्रह्म भागश उपदेशमुखेन ज्ञानतोऽनुष्ठानतश्चोपदिश्यत इति**। ततस्तत्त्वं प्रकाशयेदिति विधानात्। कर्मविधीनां तत्त्वज्ञाने विनियुक्तत्वात् ज्ञानतो भागशः उपदेशमुखेनात्मैक्यमुपदिश्यते— सर्वस्य सर्वमनुष्ठेयमिति ऐकात्म्यमनुष्ठानत उपदिश्यते। यत एवास्मात् कर्मोपदेशात् ऐकात्म्यमवगम्यते **अत एवोद्गारः कर्त्रधिकारवादिनां ‘असत्ये वर्त्मनि स्थित्वा ततस्सत्यं प्रकाशयेत्’ इति। सर्वोपदेशानामयं विधिरिति मन्यते**। ततस्तत्त्वं प्रकाशयेदिति **सर्वोपदेशानां** तत्त्वप्रकाशनायायं विनियोगविधिः, सर्वोपदेशास्तत्त्वप्रकाशने विनियुक्ता इत्यर्थः। तेन तत्त्वप्रकाशने विनियुक्तत्वात् कर्मोपदेशप्रतिभासोऽविद्यैव अन्यपरत्वाद्वाक्यस्य **‘त इमे सत्याः कामा अनृतापिधाना’ इति श्रुतेः**। **भागशोभागश उपदेशोऽनृतमभिप्रेतं** तत्त्वप्रकाशने विनियुक्तत्वात्। अतोऽन्यपराद्वाक्यात् कर्मोपदेशप्रतीतिरनृतमिति। तथा च **रागादिनिबन्धनश्च व्यवच्छेदो**ऽनृतमभिप्रेतम् सत्याः कामादय इति श्रवणात्। तस्मात् कारकाधिकारदर्शनात् अधिकारान्तरदर्शनं व्यामोहः। अनेन प्रकृतमुपसंहृतम्। यत एव च कर्त्रधिकारः **अत एव च धर्मशास्त्रकाराः पठन्ति-कामात्मता न प्रशस्तेति** कामसिद्धिं **फलसिद्धिमवैदिकीं मन्वानाः** निष्फलत्वात् कामनाया(यां) अप्रशस्तां(स्ततां) कामात्मतामाह। **काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिक** इति **ज्ञाने कर्मणि च विनियोगं मन्यते**। यदा ऐकात्म्यलक्षणतत्त्वप्रतिपत्तिपरतया सर्वोपदेशा विनियुक्ताः तदा विहितत्वात् काम्यो वेदाधिगमो वेदार्थाधिगमः। यदा च (न) कर्मोपदेशमात्रपर[रा] भागश उपदेशाः तदा वेदेऽपि विहितत्वात् कर्मयोगोऽपि काम्य एव। **“सर्वं खल्विदं ब्रह्म तज्जला-**

तज्जलानिति शान्त उपासीत" इत्यमुमेव पक्षं ब्राह्मणवादो द्योतयति। काम्ये हि उपदिश्यमाने न सर्वकर्तृसाध्यं भवति। भेदेन कामदर्शनात्१ अतः सर्वस्यैक्यं न सिध्यति। ततश्च 'पुरुष एवेदं सर्वं' इत्यादयो मन्त्रार्थवादाः अनुपपन्ना न स्युः। भेदवादास्तु भागश एव चेदुपदेशो यस्तदाश्रित इति परिहृतम्। एकत्वं तु पारमार्थिके भेदे किमाश्रितं भविष्यति। अत एव भगवान् पाणिनिः पच्यादिषु क्रियाकारकव्यतिरेकेण न नियोगार्थे नियोज्यं नाम कर्मान्तरं स्मरति। ननु युजिरपि पच्यादिषु पठ्यते। सत्यं पठ्यते न पुनर्युजेः कर्म यागादिषु कर्तेति स्मरति।

---

निति शान्त उपासीत इत्यमुमेव कर्त्रधिकारपक्षं ब्राह्मणवादो द्योतयति। कथं द्योतयतीत्याह— काम्ये हि कर्तव्यतया उपदिश्यमाने न सर्वकर्तृसाध्यं कर्म भवति। भेदेन अधिकारिविशेषणभूतकामदर्शनात्। अतः सर्वस्यैक्यं न सिद्ध्यति। सर्वस्य सर्वानुष्ठानपक्षे सर्वोऽनुष्ठाता एक इति सिद्ध्यति सर्वस्यैक्यम्। ततश्च पुरुष एवेदं सर्वमित्यादयो मन्त्रार्थवादा अनुपपन्ना न स्युः। ननु च अत्रापि पक्षे भेदवादानां का गतिरित्याह—भेदवादास्तु भागश एव चेदुपदेशो यः कर्मविशेषविषयः तदाश्रित इति परिहृतम्। एकत्वं तु पारमार्थिके भेदे किमाश्रितं भविष्यति। यत एव कर्त्रतिरेकी नियोज्यो नास्ति अत एव भगवान् पाणिनिः पच्यादिषु धातुषु क्रियाकारकव्यतिरेकेण न नियोगार्थे नियोज्यं नाम कर्मान्तरं स्मरति। ननु [1]युजिरपि पच्यादिष्वेव पठ्यते तेन हि पूर्वस्यैव युजेः कर्मस्मरणात् पाणिनिना नियोज्योऽपि स्मृत एव। परिहरति—सत्यं पठ्यते न पुनः युजेः कर्म यागादिषु कर्तेति। एतदुक्तं भवति। पूर्वं नियोज्यस्य सतः पश्चात् कर्तृत्वमिति न स्मरति। ए(क)तमर्थमगृहीत्वैव पुनश्चोदयति — ननु च भवतैवेदमुक्तं कर्ता हि नियुज्यत इति। एवं च वदता तदिदमुक्तं भवति यागादिषु कर्ता युजेः कर्मेति। परिहरति—यदि युजेः साधनं कर्तृरूपं नियुज्यत इत्युच्यते सिद्धो नः पक्षः यदा कर्तुः नियोज्यत्वं स्मरति तदा सिद्धः एव पूर्वः पक्षः किं तर्हि इदमुक्तं न स्मरति

---

1. तिपूर्वकयुजेरित्यर्थः—मा.

ननु च भवतैवेदमुक्तं कर्ता हि नियुज्यत इति । तदिदमुक्तं भवति यागादिषु कर्ता युजेः कर्मेति । यदि युजेः साधनं नियुज्यत इत्युच्यते सिद्धो नः पक्षः । किं तर्हि इदमुक्तं न स्मरति भगवान् पाणिनिरिति । अकारकाभिप्रायं तदुक्तम् । तत्र कामे साध्ये नियोगात् कारकत्वम् । कर्तृत्वं नियोग इति अर्थान्तरापत्तिः । अर्थान्तरे च अनवगतस्तुतिरस्तीत्युक्तम् । तदिदं कामिनां फलाशंसनं आकाशे बकबन्धनप्रभं कामिनां मोह इत्युक्तम् ।

तस्मात् कर्तुरधिकारः सूरिभिरुक्तः—" भूतं भव्यायोपदिश्यते इति । अत एव चाख्यातभेदोऽपि (भेदलक्षणमपि न घटते) किञ्चिद्गुणकर्म किञ्चित्प्रधानकर्मेति । काम्ये पुनः साध्ये सर्वाख्यातानां गुणभावापत्तिः ततश्च तानि द्वैधमिति सूत्रार्थोऽनुपपन्नः स्यात् ।

ननु च नित्याभिप्रायः स भविष्यति । न नित्याभिप्रायः तत्रापि कारणमर्थान्तरापत्तिदर्शनात् यैस्तु द्रव्यं चिकीर्ष्यत इति गुणतैव प्राप्नोति ।

---

भगवान् पाणिनिरिति । अकारकाभिप्रायं तदुक्तम् । अकारकभूतं नियोज्यं न स्मरतीत्यर्थः । एतदेव विवृणोति— तत्र कामे साध्ये पूर्वं तावत् नियोगः ततश्च नियोगात् कर्तृत्वं नियोग इत्यर्थान्तरापत्तिः अर्थान्तरे चानवगतस्तुतिरस्तीत्युक्तम् । तदिदं कामिनां फलाशंसनं आकाशे बकबन्धन(मिव)-प्रभं कामिनां मोह इत्युक्तम् । तस्मात् कर्त्रधिकारः सूरिभिरुक्तः भूतं भव्यायोपदिश्यते इत्यनया युक्त्या । यत एव कामोपयोगेन[कामोऽपि नियोगेन न] साध्यते अत एव चाख्यातभेदोऽप्युपपद्यते किञ्चिद्गुणकर्म किञ्चित्प्रधान-कर्मेति । काम्ये पुनस्साध्ये सर्वाख्यातानां गुणभावापत्तिः फलं प्रति गुण-भूतत्वात् । ततश्च तानि द्वैधमिति सूत्रार्थोऽनुपपन्नः स्यात् । ननु च नित्याभि-प्रायः सूत्रार्थो भविष्यति । नित्यानां फलाभावात् । न नित्याभिप्रायः सूत्रार्थः । तत्रापि नित्येष्वपि कारणं अर्थान्तरापत्तिदर्शनात् "यैस्तु द्रव्यं चिकीर्ष्यत" इति गुणतैव प्राप्नोति । अस्यार्थः —यदा कामाधिकारे यागा गुण-भावेनाख्यातेनोच्यन्ते तदा नित्याधिकारेपि गुणभावेनैवाख्यातेनाभिधानं कर्तव्यम् । अन्यथाऽनेकार्थप्रसङ्गात् । न च गुणभावो निर्विषयः कारकाणां विशेषदर्शनेन

अस्मत्पक्षे तु द्रव्यपरतया उपदेशे गुणभावः चिकीर्ष्यत इति चोपदेशाभिप्रायमेव। क्रियापरे ह्युपदेशे प्राधान्यमिति सूक्तम् ।

अत्राभिधीयते-(स्व)स नाम कर्तृविशेषणं भवति यस्य विशेषणभा(व)वे कारक उपपद्यते । इह पुनः स्वर्गकाम इति प्रीत्यपगमे तदेव तु द्रव्यं न स्वर्गशब्दाभिलपनीयम् । किमतो यद्येवं ? इदं ततो भवति । इष्टं कामस्य विषय इति । ततः किं ? नेष्टं परनिष्पत्तये भवति । इष्टार्थं हि सर्वम् ।

एतदुक्तं भवति-इष्टसंयुक्ते हि वाक्ये तदर्थं एवान्वयोऽन्येषां पदार्थानामित्युक्तम् कर्माण्यपि च जैमिनिः फलार्थत्वादिति फलं च पुरुषार्थत्वात्

---

तदर्थतया गुणभावोपपत्तेः । अस्मत्पक्षे पुनः द्रव्यपरतया उपदेशे गुणभावः । क्रियापरे ह्युपदेशे प्राधान्यमिति सूक्तम् । ननु द्रव्यचिकीर्षामात्रेण सूत्रकारो गुणभावमाह न पुनर्द्रव्यपरत्वेनोपदेशस्य, तत्राह—चिकीर्ष्यत इति चोपदेशाभिप्रायेण । यदेव हि शास्त्रालोचनया प्रधानं प्रतिभाति तदेव चिकीर्ष्यते नान्यदिति । तेन यागादिषु क्रियापरत्वे उपदेशस्य प्रधानकर्मता । द्रव्यपरत्वे तु गुणकर्मतेति सिद्धं द्वैविध्यम् ।

अत्राभिधीयते । स नाम कर्तृविशेषणं भवति यस्य विशेषणभाव[वे]कारक उपपद्यते । इह पुनः प्रीत्यपगमे तदेव तु द्रव्यं न स्वर्गशब्दाभिलपनीयम् । अतः[न] प्रीतिवचनः स्वर्गशब्द इति । किमतो यद्येवं ? उत्तरं—इदं ततो भवति— इष्टं कामस्य विषय इति । ततः किं ? नेष्टं परनिष्पत्तये भवति । इष्टरूपा प्रीतिः यागनिष्पत्त्यर्था न भवति । इष्टार्थं हि सर्वम् । एतदेव विवृणोति – एतदुक्तं भवति— इष्टसंयुक्ते हि वाक्ये तदर्थकतयैव ह्यन्वयोऽन्येषां पदार्थानाम् । अतस्तथात्र वाक्यार्थो वर्णयितव्यः यथा इष्टनिष्पत्त्यर्थः इतरेषां पदार्थानामन्वयो भवति । तत्र यदि कर्तृविशेषणताऽऽश्रीयते समुद्रवदुपसर्जनता स्वर्गस्य स्यात् । नियोज्यविशेणत्वे तु वक्ष्यमाणन्यायेन काम्यसिद्धिपर्यन्तत्वान्नियोज्यभावस्य इष्टार्थे पदार्थानां [अन्वयो] भवतीति नियोज्यविशेषणता स्वर्गस्याश्रयणीया । यदिदमस्माभिरुक्तं 'नेष्टं परनिष्पत्तये' इति तदिदमुक्तं —प्रीतिरूपत्वात् कामसंबन्धाच्च इष्टार्थश्चान्वयोऽन्येषां पदार्थानां "कर्माण्यपि जैमिनिः फलार्थत्वात्" "फलं च पुरुषार्थत्वात्" इति ।

इष्टत्वादेव न क्रत्वर्थमित्यर्थः। ननु च इष्टः स्वर्ग इत्युक्तम्। स च पुरुषार्थ इति विप्रतिषिद्धम्। उच्यते। अपुरुषार्थस्य वा कथमिष्टता? एवं तर्हि पुरुषार्थमेवेदं सर्वमित्युक्तं भवति नेष्टार्थता। [सत्यमेवं प्राज्ञोऽप्यायुष्मान् भव। इष्टोपन्यासस्तर्हि किमर्थः? नेष्टार्थत्वादेव पुरुषार्थता सिध्यति शास्त्रस्य। इष्टत्वादेव तु स्वर्गस्य पुरुषार्थता शास्त्रस्य संभवतीति सार्थ एवेष्टोपन्यासः। यदिदं पुरुषस्य कर्मजन्यफलयोगितया कर्मणि शेषित्वं स चायमधिकार इत्युच्यते।] यदर्थं कर्म तत्र अधिक्रियत इत्युच्यते। ईश्वरवचनो ह्यधिकृतशब्दः। अत एव तुल्येऽपि च कर्तृत्वे स्वामिकर्मकरव्यपदेशः। ननु च यागे नैव स भवति। न नाम पदार्थे। शास्त्रार्थे

---

इष्टत्वादेव फलस्य न क्रत्वर्थं फलमित्यर्थः। फलं च पुरुषार्थत्वादित्यत्र चोदयति—ननु चेष्टः स्वर्ग इत्युक्तम् प्रीतिरूपत्वात् कामसम्बन्धाच्च इष्टार्थश्च त्वयाऽन्येषां पदार्थानामित्युक्तम्। स च पुरुषार्थ इति विप्रतिषिद्धम्। परिहरति—अपुरुषार्थस्य वा कथमिष्टता इच्छाविषयो हीष्ट इत्युच्यते। आत्मसंबन्धिनी च प्रीतिरिष्टेति नापुरुषार्थस्येष्टता। एवं तर्हि पुरुषार्थमेवेदं सर्वमित्युक्तं भवति नेष्टार्थता। राद्धान्ती परितुष्ट आशास्ते—सत्यमेवं प्राज्ञोऽप्यायुष्मान् भव। पुनश्चोदयति इष्टोपन्यासस्तर्हि किमर्थः? शास्त्रस्य पुरुषार्थत्वादेव नियोज्यविशेषणता स्वर्गकामस्योच्यतामिति भावः। उत्तरं नेष्टार्थत्वादेव पुरुषार्थता सिध्यति शास्त्रस्य। पुरुषार्थेनैव शास्त्रेण भवितव्यमिति नास्ति प्रमाणम्। इष्टत्वादेव तु स्वर्गस्य पुरुषार्थता शास्त्रस्य सम्भवतीति सार्थ एवेष्टोपन्यासः यदिदं पुरुषस्य कर्मजन्यफलयोगितया कर्मणि शेषित्वम् स चायमधिकार इत्युच्यते। ईश्वरवचनो ह्यधिकृतशब्दः। अस्मिन् ग्रामे अयमधिकृतः ईश्वर इति गम्यते। तेनैश्वर्यमेवाधिकारः कर्मणि। यत एव च कस्यचित् कर्मण्यप्यैश्वर्यमस्ति अत एव तुल्येऽपि कर्तृत्वे स्वामिकर्मकरव्यपदेशः। यदि कर्तृत्वातिरिक्तं स्वामित्वं न स्यात्। तस्मादधिकारादेव स्वामिव्यपदेशः। परार्थकर्मकारित्वाच्च कर्मकरव्यपदेशः। अत्र चोदयति—ननु च यागे नैव कर्मकरस्सम्भवति। स्वत्यागरूपत्वेन यागस्य स्वयमेव कर्तेति न पुरुषान्तरानुप्रवेशस्संभवति। परिहरति—न नाम पदार्थे यागमात्रे संभवति। शास्त्रार्थे तु अधिकारसाधनीभूते यागे अनेकपदार्थोपकृते पदार्थान्तरानुष्ठानसिद्धये संभवत्येव कर्मकरः। पदार्थास्तु

तु संभवति । पदार्थास्तु सामर्थ्येनापि व्यवतिष्ठेरन् । ननु च भावार्थाः कर्मशब्दा इत्युक्तम् न च कामे साध्ये यागे कर्तृत्वमुपपद्यत इति । कथं स्वर्गशब्द इष्टवचने ग्रामादिष्वधिकारसिद्धिः । उक्तं कामविषयतया स्वर्गाद्युपन्यासो न कामविशेषणतयेति ।

ननु चान्वयव्यतिरेकौ स्वर्ग एव संभवतः । उक्तमस्माभिः विषयप्रदर्शनार्थावन्वयव्यतिरेकौ । कामसंयोगात्तु ग्रामादीनां विषयत्वसिद्धिः । यदपि कामे साध्ये यागे कथं कर्तृत्वमिति ? केन चोक्तं यागे कर्तृत्वमिति यागे त्वधिकारः तत्सिध्यर्थं चार्थात्कर्तृत्वम् । अत एव च सङ्ख्यानिवेशः ।

---

सामर्थ्येनापि व्यवतिष्ठेरन् । कश्चिदेव कश्चिदेव पदार्थं करोति न सर्वः सर्वम् । ननु च भावार्थाः कर्मशब्दा इत्युक्तम् । अस्यार्थः-भावार्थाः कर्मशब्दा इत्यत्र भावार्थानां साध्यत्वमुक्तम् न च साध्यद्वयमेकस्मिन् वाक्ये संबध्यत इति न च कामे साध्ये यागे कर्तृत्वमुपपद्यत इति काम्ये स्वर्गादौ साध्ये यागे कर्तृत्वं नोपपद्यत इति यागे कर्तृत्वाभावात् कर्तृसंख्यावाचिनी यजेः परा किञ्चिद्विभक्तिर्न युज्यते । कथं स्वर्गशब्दे इष्टवचने ग्रामादिष्वधिकारसिद्धिः ग्रामादिशब्दानामिष्टवचनत्वाभावात् । अनन्तरं चोद्यं परिहरति उक्तं कामविषयतया स्वर्गाद्युपन्यासो न कामविशेषणतयेति । एतदुक्तं भवति - कामविषयवचनतया स्वर्गादीनां सिद्धान्तोऽभिमतः, सचायं प्रकारः ग्रामादिष्वविशिष्टः इति । ननु चान्वयव्यतिरेकौ स्वर्ग एव संभवतः । परिहरति उक्तमस्माभिः विषयप्रदर्शनार्थावन्वयव्यतिरेकौ । अन्वयव्यतिरेकाभ्यां हि प्रीतिवचनतया स्वर्गशब्दस्य कामविषयतया स्वर्ग उच्यत इति । कामसंयोगात्तु ग्रामादीनां विषयत्वसिद्धिः । न ह्यकाम्यं कामनामर्हतीत्युक्तम् । तस्मात्तेष्वपि सिद्धोऽधिकार इति । द्वितीयं चोद्यमनुभाषते—यदपि काम्ये साध्ये यागे कथं कर्तृत्वमिति । परिहरति—केन चोक्तं यागे कर्तृत्वमिति । यागे त्वधिकारः तत्सिद्ध्यर्थं चार्थात् कर्तृत्वं ईश्वरतैव । निष्पत्तिमन्तरेण क्रियायाः फलभावो(वे) नोपपद्यत इति यागसिद्धौ पुरुषस्य कर्तृत्वम् । यत एव यागेऽप्यर्थात् कर्तृत्वं अत एव सङ्ख्यानिवेशः । यदि स्वर्गसिद्धौ कर्तुः सतो यागेऽधिकारः तदा कर्तुरधिकार इत्युच्यते । यागे कर्तुरसतोऽधिकारो नास्ति । किन्तु यागेऽधिकृतस्य कर्तृत्वमिति तेन नास्ति दोषः । लोकव्यवहारानुसारितया

यागाभिप्रायेण कर्तुरधिकार इत्युच्यते । लोकेऽपि च अन्यत्राधिकृतोऽन्यत्साधयति । राजकर्मस्वधिकृतोऽमात्यस्स्वार्थं साधयति । तत्सिध्यर्थं तु राजकर्मणि कर्तृत्वम् ।

यदपि भावार्थाः कर्मशब्दा इति यत्राधिकारस्तेभ्यः फलावगतिरित्युक्तं भवति । तेन साधनेन स्वार्थमभिनिर्वर्तयेदित्यर्थः । अत एव च तृतीयासामानाधिकरण्यात् उद्भिदादीनां नामता उक्ता । तर्हि किमिदमुक्तं

---

स्वपक्षेऽभ्युच्चयमाह—**लोकेऽपि चान्यत्राधिकृतोऽन्यत् साधयति ।** तथा **राजकर्मस्वधिकृतोऽमात्यः स्वार्थं साधयति । तत्सिद्ध्यर्थं तु राजकर्मणि कर्तृत्वम् ।** प्रथमं चोद्यमनुभाष्य परिहरति—**यदपि भावार्थाः कर्मशब्दा इति यत्राधिकारः तेभ्यः फलावगतिरित्युक्तं भवति ।** अस्यार्थः - यदिदं यागस्य साध्यत्वमुक्तं भावार्थाः कर्मशब्दा इत्यनेन तेनेदमुक्तं भवति येषु यागेषु भावार्थेष्वधिकारः तेभ्यः फलावगतिरिति । एतदेव विवृणोति—**तेन साधनेन स्वार्थमभिनिर्वर्तयेदित्यर्थः ।** तेनाधिकारी विषयभूतेन भावार्थेन साधनेन स्वार्थमभिनिर्वर्तयेदित्यर्थः । एतदुक्तं भवति - भावार्थः साधनतयैव संबध्यते । साधनस्य हि तादृशं रूपं यत् कर्तृव्यापारविषयो भवति । यथा परशुः । उद्यमननिपातनलक्षणो हि कर्तृव्यापारः परशुविषय एव न साक्षात् द्वैधीभावविषयः । तथापि द्वैधीभावस्साध्यः साधनमेव परशुः । एवमिहापि पुरुषप्रयत्नसाध्यौ स्वर्गनियोगौ । न च तयोः साक्षात् पुरुषप्रयत्नविषयता । किन्तु यागादेः साधनस्य तथा सति अभूतस्वभावत्वात् भावार्थानामुत्पत्तिरनेन पुरुषप्रयत्नेन । न चैतावता साधनत्वहानिः साध्यत्वहानिः साध्यत्वापत्तिरेव वा, नियोगस्य फलस्य साध्यत्वावगमात् । तेन साधनभावापन्नस्यैव यागादेः कर्तृव्यापारविषयतया साध्यता भावार्थाधिकरणे प्रदर्शिता । कथं पुनः अन्यविषयस्य कर्तृव्यापारस्यान्यसाध्यता भवेत् ? उद्दिश्य प्रवृत्तत्वात् । नियोगं फलं चोद्दिश्य कर्तृत्वव्यापारः प्रवर्तते । नान्तरीयकतया तु साधनीभूतभावार्थविषयो भवति नान्तरीयककर्तृव्यापारविषयत्वादेव भावार्थानां अनीप्सितकर्तव्यता इष्यते । यत एव भावार्थाः साधनतयैव संबध्यन्ते **अत एव तृतीयासामानाधिकरण्यात् उद्भिदादीनां नामता उक्ता ।** अन्यथा हि तृतीयान्तानां भावार्थनि(इ)ष्ठत्वानवगमात् इच्छासामानाधिकरण्यं(न)स्यात् । यदि स्वर्ग एव साध्यः **तर्हि किमिदमुक्तं**

नाम्नः सकाशात् कर्तव्यता नावसीयत इति । केन वोक्तं ततोऽन्यथा । कथं तर्हि कामस्य कर्तव्यता ? इष्टत्वावगमात् इत्युक्तम् । अवश्यं चैतदेवमभ्युपगन्तव्यम् । नहि क्रियाकारकसंबन्धमात्रावगमात् अनुष्ठानसिद्धिः देवदत्तः काष्ठैःस्थाल्यामोदनं पचतीत्येवमादिषु । ननु च लिङादिभ्योऽनुष्ठानावगतिर्भविष्यति किमत्राधिकारः करिष्यति । कस्य लिङादयोऽनुष्ठानं ज्ञापयन्ति इति । ननु च कर्तरीत्युक्तम् । अयुक्तमुक्तं, इतरेतराश्रयप्रसङ्गात् इत्युक्तम् । तथा च कर्तुर्नियोगोऽनर्थक इति । यदि हि नियोगात्

---

नाम्नः सकाशात् कर्तव्यता नावसीयत इति । केन वोक्तं तदन्यथा, प्रातिपदिकं कर्तव्यतां नावगमयत्येव । कथं तर्हि कामस्य कर्तव्यता ? उत्तरं—इष्टत्वावगमात् इष्टविषयत्वादित्युक्तम् । ननु यदि नियोज्योऽसौ वाक्यार्थेऽन्वयी स्यात् तदा इष्टत्वावगमात् नियोज्यविशेषणतयाऽन्वयः स्यात् न चासावस्तीत्याशङ्क्य मूलयुक्तिमाह—अवश्यं चैतदेवमभ्युपगन्तव्यम् । कर्तृव्यतिरिक्तो नियोज्योऽवश्याङ्गीकरणीयः । न हि क्रियाकारकसंबन्धमात्रावगमादनुष्ठानावगतिः । देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्येवमादिषु वर्तमानापदेशेषु सत्यपि क्रियाकारकसंबन्धे अनुष्ठेयमित्यवगमाभावात् । ननु च लिङादिभ्योऽनुष्ठानावगतिर्भविष्यति । देवदत्तः पचेत् इति लिङादियुक्तवाक्यश्रवणे प्रवृत्तिदर्शनात् अनुष्ठानावगमं च विना तदसंभवात् लिङादिभ्योऽनुष्ठानावगतिर्भविष्यतीति विज्ञायते । कस्य लिङादयोऽनुष्ठानं ज्ञापयन्ति इति । अस्यार्थः-यद्यपि लिङादयः कार्यबोधकतया अनुष्ठानावगमं कुर्वन्ति इति यश्च स्वसंबन्धितयाऽनुष्ठानमवबुध्यते स प्रवर्तते । तेन यस्यानुष्ठानं ज्ञापयन्ति लिङादयः सोऽधिकारी तावदङ्गीकरणीयः । यदर्थं हि यत्कर्म तस्य तत्र कर्तव्यतावगतिः । यस्य नियोज्यत्वं तस्याधिकारिता । तेन पूर्वं नियोज्यत्वेन देवदत्तादीनां संबन्धः । पश्चादधिकारितायामनुष्ठानावगतिः । ततोऽनुष्ठानमिति ।

ननु च कर्तरीत्युक्तम् । कर्तुरनुष्ठानं लिङादयोऽवबोधयन्तीत्युक्तम् । पृथक् परिहरति—अयुक्तमुक्तम् । इतरेतराश्रयप्रसङ्गात् । यस्यानुष्ठानावगतिः तस्य कर्तृता । यस्य च कर्तृत्वं तस्यानुष्ठानावगतिरित्युक्तम् । तथा च कर्तुर्नियोगोऽनर्थक इति । यदि च कर्तृत्वं यावत्सम्पन्नं किमपरं कार्यत्वावगमेन ।

कर्तृत्वं कर्तृत्वे च नियोग इति इतरेतराश्रयापत्तिः । तस्मान्नियोगादेव कर्तृत्वमवगन्तव्यम् । नियोज्यावगतिस्त्वन्यतः एव । सा चेयमिष्टसंबन्धादित्युक्तम् ।

यद्येवं यावज्जीवादिषु कथं ? कथं वाऽत्र न भविष्यति । सिद्धवदुपदेशाज्जीवनस्य । त्वयैव तद्युक्तं न जीवनं कर्तृविशेषणतयाऽन्वेति सिद्धत्वादेवेति । अयुक्तमिदम् सिद्धमेव हि कारकं विशेषणतयाऽन्वेति न साध्यमिति न पुनरन्वयोऽपि । अन्वयाच्च फलावगतिः शाब्दी न फलवतोऽन्वयः सापेक्षत्वप्रसङ्गादित्युक्तम् । तस्मात् कथमत्राधिकार इति वक्तव्यम् ।

अयमुच्यते । यावज्जीवमिति यावच्छब्दो नान्वेति कर्तृविशेषणपक्षे ।

---

इतरेतराश्रयं विवृणोति—यदि हि नियोगात्[1] कर्तृत्वं कर्तृत्वे च नियोग इति इतरेतराश्रयापत्तिः । तस्मान्नियोग एव पूर्वमङ्गीकरणीयः ततो नियोगात् कर्तृत्वं मन्तव्यम् । नियोज्यावगतिस्तु अन्यतः एवायमत्र । नियोज्यो नाम कार्यस्य बोद्धा कार्यं प्रति बोद्धृतया स्वर्गकामादय उपादीयन्ते । लोके च संबोधनविभक्तियोगात् बोद्धृतयाऽन्वयो देवदत्तादीनाम् । तेन लोकव्यवहारानुसारेणापि नियोज्यो वाक्यार्थान्वयीति सिद्धम् । यदीष्टसंबन्धान्नियोज्यविशेषणसमर्पकता एवं तर्हि यावज्जीवादिषु कथं ? सिद्धान्ती पृच्छति—कथं वाऽत्र न भविष्यति ? पूर्वपक्षी त्वाह—सिद्धवदुपदेशाज्जीवनस्य यदि साध्यतया जीवनमुपदिश्यते तदा साध्यत्वावगमात् तदानुगुण्येन नियोज्यविशेषणं स्यात् । यदा तु सिद्धवज्जीवनमुपदिश्येत तदा न नियोज्यविशेणता । राद्धान्तैकदेशी वदति—त्वयैव तद्युक्तं न जीवनं कर्तृविशेषणतयाऽन्वेति सिद्धत्वादेवेति । दूषयति—यदि तावत् सिद्धत्वादेवेति निष्पन्नत्वादेवेत्यभिप्रायकं अयुक्तमिदं सिद्धमेव हि कारकं विशेषणतयाऽन्वेति न साध्यम् । अथ सिद्धत्वादवगतत्वादिति मतं तत्राह—यदि नाम विशेषणफलमत्र न सम्भवति न पुनरन्वयोऽपि अन्वयाच्च फलावगतिश्शाब्दी, न फलवतोऽन्वयः सापेक्षत्वप्रसङ्गादिति । यदि फलमवगम्यान्वयो वर्ण्यते तदा फलावगमापेक्षं वेदस्यावबोधकत्वमिति सापेक्षता स्यात् । तस्मात् कथमत्राधिकारो जीवनादिष्विति वक्तव्यम् ।

अयमुच्यते—यावज्जीवमिति यावच्छब्दो नान्वेति कर्तृविशेषण-

---

1. तन्नियोगात्

कथं ? न यावज्जीवं प्रयोगः संभवति । फलार्थिनो वीतायां फलेच्छायां अप्रयोगात् अतो बलान्निमित्तत्वमन्वेष्टव्यं जीवनस्य । तच्चाधिकृतसंबन्ध उपपद्यते न कर्तृसंबन्धे । कर्तृसंबन्धे हि यावदेवोक्तं यजेतेति तावदेव जीवता यष्टव्यमिति यावच्छब्दानुपपत्तिर्दर्शिता । न च प्रकर्तृसंयोगात् नियोज्यापरिज्ञाने कर्तृत्वसिद्धिरित्युक्तम् । पक्षान्तरावलम्बनेनापि प्रयोजनवत्ता वक्तव्येति न्यायविदो मन्यन्ते । न तर्हि इष्टत्वादधिकारसिद्धिः । न नामेष्टत्वात् । नहि अक्रियार्थत्वे शक्तिर्वाऽधिकृतविशेषणत्वम् (?) इति सिद्धो नित्ये नैमित्तिके चाधिकारः ।

---

पक्षे । कथं ? न यावज्जीवं प्रयोगस्संभवति फलार्थिनो यावज्जीवं प्रयोगस्संभवति । (यदि)वीतायां फलेच्छायामप्रयोगात् । यदि जीवनं कर्तृविशेषणं भवति तदा स्वर्गकामाधिकारानुप्रवेशिता, नाधिकारान्तरम् । न च फलार्थितया यावज्जीवं प्रयोगस्संभवति । यदि (जीवि)हि वीतायामपि फलेच्छायां प्रयोगः स्यात् तदा जीवनं प्रयोगे व्याप्येत । न चैतदस्ति । तस्माद्यथा जीवनव्याप्तिः प्रयोगे (न)स्यात् तथा वाच्यम् । निमित्तभूते च जीवने व्याप्तिरुपपद्यत इति निमित्तत्वमेव जीवनस्याभ्युपेयम् । तच्च जीवननिमित्तं[त्तत्वं] अधिकृतसंबन्ध उपपद्यते । अधिकारायत्तत्वादनुष्ठानस्य न कर्तृसंबन्धे निमित्तत्वोपपत्तिः । कर्तृसंबन्धे हि यावदेवोक्तं यजेतेति तावदेव जीवता यष्टव्यमिति । तेन न निमित्तत्वोपपत्तिः । ननु मामून्निमित्तत्वं किमेतेनेत्यत्राह—यावच्छब्दानुपपत्तिर्दर्शिता । असति निमित्तत्वे (न)कर्तृविशेषणनियोज्यविशेषणसन्देहे नियोज्यविशेषणतैव न्याय्या प्राथम्यादित्याह-न च प्राक्कर्तृत्वसंयोगात् नियोज्यापरिज्ञाने कर्तृत्वसिद्धिरित्युक्तम् । अपि च कर्तृविशेषणपक्षे आनर्थक्यात् पक्षान्तरावलम्बनेनापि (न) प्रयोजनवत्ता वक्तव्येति न्यायविदो मन्यते । तेनार्थवती नियोज्यविशेषणताऽऽश्रवणीया । यथा अवश्याश्रयणीयतया नियोज्यविशेषणता(या) स्वर्गकामादीनाम् । न तर्हि इष्टत्वादधिकारसिद्धिः । राद्धान्ती आह—न नाम यद्यप्यवश्याश्रयणीयतया नियोज्यश्रवणं तथापीष्टत्वं अधिकारिविशेषणत्वे न न हेतुः, अपि तु हेतुरेवेष्टत्वेन । न हि अक्रियाथता अक्रियार्थत्वेन चाधिकारिविशेषणमिति नेष्टम् । परनिष्पत्त्य इति स्यात् क्रियार्थता । अक्रियार्थत्वे च तदर्थतैव क्रियायाः तदर्था च क्रिया नियोज्यविशेषणत्वे भवतीति नियोज्यविशेषणत्वं निश्चीयते । उपसंहरति – इति सिद्धो

यत्पुनरिदमुक्तं साधनत्वेनेतरेषामिव कारकाणां कर्तृत्वसिद्धिरिति। अतश्चाक्रियासंबन्धितयैव नियोज्यावगतिरिति। अयुक्तमिदं अनुष्ठानतोऽपि क्रियासंबन्धोऽवगम्यते। संबन्धान्तरस्याविद्यमानत्वात्। तस्माद्यथोक्तमेव न्याय्यम्। कर्मणि नियुज्यमानस्य कामसिद्धौ यागः करणमिति कस्य शब्दस्यात्र निमित्तभावः? यजेतेति यजिस्तावत् यागमात्रमाचष्टे न पुनस्तस्यान्यसंबन्धिताम्। विभक्तिरपि (चाख्यातीति) चाख्याती] क्रियासाधनं कर्तारं तदन्तर्गतां सङ्ख्यामाचष्टे न पुनर्यागस्यान्यार्थताम्। स्वर्गकामपदमपि स्वर्गं पुरुषस्येष्टतया ज्ञापयति। न पुनर्यागं प्रति प्राधान्यं

---

नैमित्तिके नित्ये चाधिकारः। यत्पुनरिदमुक्तं [1]साधनत्वेनेतरेषामिव कारकाणां कर्तृत्वसिद्धिरिति। यथा करणादीनि कारकाणि साधनत्वेनावगम्यन्ते तथा कर्तापि साधनत्वेनैवावगम्यते। अतश्च क्रियासंबन्धितयैव नियोज्यावगतिरिति। अनुभाष्य दूषयति:—अयुक्तमिदं, अनुष्ठानतोऽपि क्रियासंबन्धोऽवगम्यते संबन्धान्तरस्याविद्यमानत्वात्। अस्यार्थः— कर्तुर्हि क्रियासंबन्धोऽनुष्ठाननिबन्धनः। न चानुष्ठानावगतिं विनाऽनुष्ठानमस्ति। न चाधिकारं विनाऽनुष्ठानावगतिः कर्मणि। न च स्वसंबन्धिकार्यबोधं विनाऽधिकारः। तेन नियोज्यता प्रागाश्रयणीया। तस्मात् यथोक्तमेव न्याय्यम्। इष्टत्वावगमात् स्वर्गादेः, इष्टार्थतया च सकलपदार्थान्वयात् नियोज्यविशेषणता स्वर्गकामादे(र्यु)रुक्ता, तामक्षममाण आह—कर्मणि नियुज्यमानस्य स्वर्गकामस्य कामसिद्धौ यागः करणमिति कस्य शब्दस्यात्र निमित्तभावः? अस्यार्थः-लोकव्यवहारानुसारितया कर्मैव कार्यतया लिङादिभिरवगम्यते। नियोज्योऽपि तदेव कार्यमवबुध्यते न कर्मण्येव नियुक्तिं तथा च सति कर्मणि नियुज्यमानस्य स्वर्गकामस्य कामसिद्धौ काम्यमानफलसिद्धौ यागः करणमिति कस्य शब्दस्यात्र व्यापारः? न कस्यचिदपीति भावः। तेन नियोज्यविशेषणत्वेऽपि नेष्टार्थतया सकलपदार्थान्वय इति न तद्बलेन नियोज्यविशेषणतया निश्चीयते। तदेव प्रपञ्चयति - यजेतेति यजिस्तावत् यागमात्रमाचष्टे, न पुनस्तस्यान्यसंबन्धिताम्। विभक्तिरपि तत्राख्याती यागसाधनं कर्तारं वैयाकरणमत्या तदन्तर्गतां वा सङ्ख्यां मीमांसकमतेनाचष्टे न पुनर्यागस्यान्यार्थतामपि। स्वर्गकामपदमपि च स्वर्गं पुरुषस्येष्टतया ज्ञाप-

---

1. साध्यत्वेनेतरेषामिव

स्वर्गस्य वा कामस्य वा । विभक्तिस्तु प्रथमाऽव्यतिरिक्तार्थैव । ज्योतिष्टोमादयस्तु नामत्वात् यागाभिधानपरतन्त्राः । न च यजेतेति शब्दो यागं करणत्वेनाचष्ट इत्युक्तम् । तस्मान्निर्मूलमेवेदं यागेन स्वर्गं साधयेत् इति । योऽप्यत्र नियोगार्थः स कामे वा पुरुषं नियुङ्क्ते यागे वा । अतोऽन्यतरत्र नियोगमात्रावगतिः भविष्यति । न पुनस्तयोः परस्परसंबन्धावगतिः ।

ननु चेष्टत्वं नान्यथोपपद्यते यदि न यागात् कामसिद्धिः [इत्युक्तम्] क्वेदं दृष्टं इष्टत्वं साधनादृते न भवतीति । इष्टत्वादेव तदिष्टं भवति इष्टं साध्यतयाऽवगम्यत इति चेत् अयुक्तं केन शब्देन साध्यतोच्यते । कामसंबन्धमात्रमवगम्यते स्वर्गस्य न पुनः साध्यः सिद्धो वेति । तस्माद्वक्तव्यमत्र निमित्तं येन अस्य कारणताऽवगम्यते । वरं पूर्वपक्ष एवास्तु ।

---

यति न पुनर्यागं प्रति प्राधान्यं स्वर्गस्य कामस्य वा इत्यनादरः । विभक्तिस्तु प्रथमाऽव्यतिरिक्तार्थैव न प्राधान्यावबोधिका । ज्योतिष्टोमादयस्तु नामत्वात् यागाभिधानपरतन्त्राः तत्सामानाधिकरण्येन नाममात्रावगमात् । न च यजेतेति शब्दः यागं करणत्वेनाचष्टे इत्युक्तम् । तस्मान्निर्मूलमेवेदं यागेन स्वर्गं साधयेदिति ज्ञानम् । योऽप्यत्र नियोगार्थः कार्यात्मकः स कामे वा पुरुषं नियुङ्क्ते यागे वा । कामो वा कार्यतयाऽवगम्यते यागो वा । अतोऽन्यतरत्र नियोगमात्रावगतिर्भविष्यति न पुनस्तयोः परस्परं संबन्धावगतिः ।

ननु चेष्टत्वं नान्यथोपपद्यते यदि न यागात् कामसिद्धिरित्युक्तम् । क्वेदं दृष्टम् ? इष्टत्वं साधनादृते न भवतीति । इष्टत्वादेव इच्छाविषयत्वादेव तदिष्टं भवति । आशङ्कयति—इष्टं साध्यतयाऽवगम्यत इति चेत् । दूषयति—अयुक्तं केन शब्देनास्य साध्यतोच्यते । कामसंबन्धमात्रमवगम्यते स्वर्गस्य न पुनः साध्यः सिद्धो वेत्यवगम्यते । साध्यत्वेपि चान्यसाध्यस्यैव कामनायोगो न विरुद्ध्यते । तस्माद्वक्तव्यमत्र निमित्तं येन यागस्य कारणताऽवगम्यते वरं पूर्वपक्ष एवास्तु कर्तृविशेषणं स्वर्गकामनिमित्तमिति भावः । अस्यार्थः - लोके व्यवहारानुसारितया कर्मैव कार्यतया लिङादिभिरवगम्यते । नियोज्योऽपि तदेव कार्यमवबुध्यते तेन कर्मण्येव नियुक्तिः । तथा च सति कर्मणि नियुज्यमानस्य स्वर्गकामस्य कामसिद्धौ काम्यमानफलसिद्धौ यागः करणमिति कस्य शब्दस्यात्र पदं

तस्माद्भवत्वधिकारिविशेषणं स्वर्गकामपदम्। भवतु स्वर्गकामो नियोज्यः न पुनः यागेन स्वर्गं [साधयेत्] इति। निमित्ताभावात्।

अत्राभिधीयते - काम्यमानत्वेन स्वर्गः पुरुषं विशिनष्टीत्युक्तम्। भावार्थे च नियोग इत्येतदप्युक्तम्। सेयं नियोगनियोज्यविषयतयैकवाक्यता। न वा अयथार्थत्वे एकवाक्यता संभवति। नियोगसिद्धिश्च वाक्यार्थः। तत्र तावद्यदि यागस्यैव कर्तव्यता न नियोज्यार्थोऽन्वेति[1] नियोगे। अथ कामः अनन्वितो विषयः स्यात् नियोज्येन। ततश्चैकनियोगावगतिः पीडयेत। यागप्राधान्ये चोक्तो दोषः। तस्मात् कामप्रधानतयैव एकनियोगसंबन्धः। तदिदमुक्तम् - अपि च यस्य स्वर्ग इष्टः स्यात् स यागं

---

विभक्तियोगात्। उपसंहरति — तस्माद्भवत्वधिकारिविशेषणं स्वर्गकामपदं, भवतु स्वर्गकामो नियोज्यः न पुनर्यागेन स्वर्गं साधयेदिति ज्ञानं भवति निमित्ताभावात्।

सिद्धान्ती वदति—अत्राभिधीयते काम्यमानत्वेन स्वर्गः पुरुषं विशिनष्टीत्युक्तम्। कामी तु नियुज्यत इत्येतदप्युक्तम्। भावार्थे च नियोग इत्येतदप्युक्तम्। सेयं नियोगनियोज्यविषयतयैकवाक्यता न वाऽयथार्थत्वे एकवाक्यता संभवति। यस्य योऽर्थः पदस्य तस्य तमतिक्रम्यैकवाक्यता न संभवति पदार्थानामेव वाक्यार्थत्वात्। नियोगसिद्धिश्च वाक्यार्थः कार्यं हि नियुञ्जानं [ज्ञत्]पुरुषं नियोग इत्युच्यते तस्य सिद्धिर्वाक्यार्थ इति चोदनासूत्रे उक्तम्। तत्र तावत् यदि यागस्य कर्तव्यता उच्यते तदा नियोज्यार्थो नान्वेति नियोगे। स हि स्वर्गं कामयते। यदि च याग एव कर्तव्यः स्वर्गकामितया तर्हि पुरुषो नियोगे नान्वेति अपि पुरुषमात्रतया। न च पुरुषमात्रं स्वर्गकामेनोच्यते। अथ कामः स्वर्ग एव कर्तव्यतयोच्यते, अनन्वितो विषयः स्यात नियोज्येन। ततश्चैकनियोगावगतिः पीडयेत। यद्येवं तर्हि याग एव कर्तव्यः इत्यत्राह—यागप्राधान्ये चोक्तो दोषः नियोज्यानन्वयलक्षणः तस्मात् कामप्रधानतयैव एकनियोगसंबन्धः। यागेन स्वर्गं साधयेदिति त्वाश्रीयमाणे सर्वान्वयोपपत्तिः। तदिदमुक्तं भाष्यकारेण—"अपि च यस्य स्वर्ग इष्टः स्यात् स यागमभि-

---

(1) m. s. एकसंबन्धनियोज्यसम्बन्धावगतिः

अभिनिर्वर्तयेत् इत्यसंबद्धमिव अन्यदिच्छत्यन्यत्करोतीति । पदमत्र निमित्तमिति शक्यते वक्तुम् । यत्तु अभिधानाविवेकप्रतिपादनमुक्तं तदन्विताभिधानेनैव प्रत्युक्तम् । एवं तर्हि तद्भूताधिकरण एवैतत्परिहृतम् - असंबद्धैव पदपदार्थावगतिरित्येतावत्परिहृतम् । प्रतिभास्यान्यापोहावापोद्धारप्रतिपक्षतया तदधिकरणम् । न पुनः पदैः पदार्थमात्राभिधानप्रतिपत्तये । तस्मात् यागेन स्वर्गं साधयेदिति युक्तम् ।

---

निर्वर्तयेदित्यसंबद्धमिव अन्यदिच्छत्यन्यत् करोति " इति ( 6 - 1 - 3 ) असाधनभूते कामिनो नियोज्यतया संबन्धो न स्यादित्यर्थः । निर्निमित्ततां कामस्य निराकरोति—**पदमत्र निमित्तमिति शक्यते वक्तुम्** । स्वर्गकामपदमेव यागस्य साध्यतयास्वर्गमाह । यजेतेति पदमेव स्वर्गसाधनतया यागमाह । नन्वत्रैवंविधार्थता न प्रतीयते इत्यत्राह—**यत्त्वभिधानाविवेकप्रतिपादनमुक्तं तदन्विताभिधानेनैव प्रत्युक्तम्** । अन्विताभिधायीनि पदान्युक्तानि तेनान्वययोग्यतया स्वर्गादिपदानामेवंभूतार्थत्वमस्ति । **एवं तर्हि तद्भूताधिकरण एवैतत्परिहृतम्** । तद्भूताधिकरणे हि वृद्धव्यवहारसिद्धार्थाभिधायकतया उपादानमित्युक्तम् । तेनात्रासिद्धा एवंविधार्थता नोपपद्यते इति तेनैवेदं परिहृतं प्रत्युक्तमित्यस्यार्थः । समाधत्ते — **असंबद्धैव पदपदार्थावगतिरित्येतावत्परिहृतम्** । असंबद्धान्येव पदानि पदार्थाश्चासंबद्धा एव इत्येतावत् तत्र परिहृतं भवति । कुत इत्याह—**प्रतिभास्यान्यापोहावापोद्धारप्रतिपक्षतया तदधिकरणम् । न पुनः पदैः पदार्थमात्राभिधानप्रतिपत्तये** । निमित्तशून्यप्रतिभासमात्रं संसृष्टवाक्यार्थावगतिरिति । तथा अन्यापोहविषयो विकल्पमात्रमेतदिति । तथा विद्यमानपदपदार्थावापोद्धारेण व्युत्पन्ना वाक्यार्थमवगमयन्ति इत्येतावता पूर्वपक्षं निराकर्तुं तदधिकरणम् । न पुनः पदैरन्वयव्यतिरेकानुविधयिपदार्थमात्रमभिधीयते इत्येवं परम् । तदनेनान्वयाभिधानात् अन्वयानवगतिर्निराकृता । **तस्माद्यागेन स्वर्गं साधयेदिति युक्तम्** । अतो नियोज्यविशेषणत्वे इष्टार्थ एवान्वयो निर्वहतीति तदेवाश्रयणीयम् । एषा चात्र दर्शनस्थितिः—चोदनासूत्रे कार्यं वाक्यार्थो न सिद्धमिति साध्यते । तस्य तु कार्यस्य स्वसंबन्धितया बोद्धा नियोज्योऽस्तीति षष्ठाद्ये व्युत्पाद्यते । कामिनि च नियोज्ये कामकार्ययोः साध्यसाधनभावोऽस्तीति बादर्यधिकरणव्युत्पाद्यमेवात्रोच्यते, नियोज्यावगमनिबन्धनत्वात् । तच्च कार्यं कामसाधनत्वान्वययोग्यमपूर्वं क्रियातिरेकि इत्यपूर्वाधिकरणे स्थाप्यते । तेन च

किमिदं असाधकं तु तादर्थ्यात् इति ? असाधकमिदं वाक्यं वाक्यार्थ इत्युक्तं भवति न एकनियोगसंबन्धप्रतिपादकं वाक्यं स्यादित्यर्थः । ननु च निमित्तत्वकल्पनायां न कस्यचिदेकस्य निमित्तता शक्यते वक्तुमित्युक्तम् । अत एव सर्वस्येत्युच्यते । पदपदार्थविवेचने हि प्रतिपदनिमित्तभाव इत्युच्यते । वाक्यार्थे पुनः सर्वमेव निमित्तमित्युक्तम् तत्रैव । नियोगनियोज्यसंबन्धेन किं संबन्धाभिधानं स्मरति इति यदुक्तं [तदयुक्तम्] शक्यते हि षष्ठीस्मरणेन सर्वमुप[1]संहर्तुम् । अभिधानं पुनः संबन्धिशब्दानामनियतमेव भगवतः कृत्तद्धितसमासेष्वदर्शनात् । एवं च

---

कार्येण सह साधनतया भावार्थोऽन्वयं यातीति भावार्थाधिकरणे निर्दिश्यते । साधनीभूतश्च भावार्थः नियोगमवच्छिन्दत् विषयो भवतीति शब्दान्तराधिकरणे निरूप्यत इति । **किमिदं 'असाधकं तु तादर्थ्यात्'** इति । **असाधकमिदं वाक्यं** स्यादित्यर्थः । यदि च याग एव कर्तव्यतया चोद्यते तदा नियोज्याभावात् संभूयकारित्वात् पदानां नैवेदं वाक्यं कञ्चिदर्थमवबोधयेत् ।

**ननु च निमित्तत्वकल्पनायां न कस्यचिदेकस्य निमित्तता शक्यते वक्तुमित्युक्तम्** । न पदव्यतिरेकि वाक्यं न च कस्यचित् पदजातनिमित्तता । तेन निमित्तशून्येयमवगतिः । परिहरति—यत एवैकस्य न निमित्तताऽस्ति **अत एव सर्वस्येत्युच्यते** । परस्परान्विताभिधायितया सर्वाण्येव पदानि अस्यार्थस्य निमित्तं भवन्ति, अन्यथाऽन्विताभिधानानुपपत्तेः । यदि सर्वपदजातं परस्परान्वयबोधे निमित्तं कथं तर्हि वाक्याधिकरणे प्रतिपदनिमित्तभाव उक्तः अत्राह—**पदपदार्थविवेचने हि प्रतिपदनिमित्तभाव इत्युच्यते** । अन्वितेषु पदार्थेषु एकैकस्य पदस्य निमित्तभावो वृद्धव्यवहारे व्युत्पन्नः । तत्प्रतिपादनद्वारेण **वाक्यार्थे पुनः सर्वमेव निमित्तम्** । वाक्यार्थो हि अन्वितानेकपदार्थविशिष्टः सचैकस्य पदस्य न शक्यं प्रतिपादयितुमिति सर्वस्य तत्र निमित्तभाव **इत्युक्तं तत्रैव** । **नियोगनियोज्यसंबन्धेन किं संबन्धाभिधानं** संबन्धप्रतिपादकं शब्दं **स्मरति** पाणिनिरिति **यदुक्तं तदयुक्तं शक्यते हि षष्ठीस्मरणेन सर्वमिदमुपसंहर्तुम्** शेषं कर्मादिभ्यः (प्रतिपादकं व्यतिरेकिणं) व्यतिरेकप्रतिपादकं स्मरता सर्वमेवोपसंहृतं भगवतेति शक्यते वक्तुम् । परमार्थतस्तु **अभिधानं पुनः संबन्धिशब्दानामनि-**

**नियोगसिद्ध्यर्थत्वात् वाक्यार्थस्य फलतः प्रवृत्तिरित्येतत् परिहृतम्। कथं तर्हि न फलं विधीयत इति तन्त्रे व्यवहारः? नियोगार्थत्वेऽवगते निमित्तचिन्तायां इदमन्यतः प्राप्तं इदमपि[न्यत] तत एवेति कल्पना, न पुनः वाक्यार्थे किञ्चित् प्राप्तं नाम दध्ना जुहोतीत्यत्र प्रदर्शितम्। पदवाक्यविषयमविविक्तज्ञानमत्राकुलीकरोति मन्दधियः। न पदं नाम वाक्ये किञ्चिदस्ति न पदार्थाः केचन वाक्यार्थे। विशेषावगतिर्हि**

---

यतमेव भगवतः पाणिनेः सर्वसंबन्धशब्दो भगवता स्मर्यत इति नियमो नास्ति **कृत्तद्धितसमासेष्वदर्शनात्**। सन्तमपि कृतं केलिमरार्भि(?) तद्धितमपि यन्त्रादि समासमपि अधीतपूर्वं इदं भगवान्न स्मरति। अतस्सतामपि शब्दानां स्मरणादर्शनात् [अ]स्मरणेन न शब्दाभावोऽर्थाभावो वा वक्तुं शक्यत इति। **एवं च नियोगसिद्ध्यर्थत्वात् वाक्यार्थस्य फलतःप्रवृत्तिरित्येतत् परिहृतं भवति**। यदि हि अन्यतः फलमवगम्येत तदा तद्वशेनैवाधिकारे सिद्धे प्रवृत्तिरिति नियोगनियोज्यसंबन्धो नावगम्यते। यदा तु नियोगसिद्धिः कथं स्यादिति वाक्येन वाक्यार्थः प्रतिपाद्यते तदा तदनुगुणकल्पनेति न फलतः प्रथमप्रवृत्तिः। यदि फलं नियोगलभ्यमेव **कथं तर्हि फलं न विधीयत इति तन्त्रे व्यवहारः**। उत्तरं— **नियोगार्थत्वेऽवगते निमित्तचिन्तायां** पदार्थो हि वाक्यार्थप्रतिपत्तौ निमित्तम्। तेन तच्चिन्तायां इदमन्यतः प्राप्तं **इदमन्यत एवेति कल्पना, न पुनः वाक्यार्थे किञ्चित् प्राप्तं नाम** नियोगान्विततया न किञ्चित् प्राप्तं नाम **दध्ना जुहोतीत्यत्र प्रदर्शितम्**। एकग्रन्थेनाह— **पदवाक्यविषयमविविक्तविज्ञानमत्राकुलीकरोति मन्दधियः**। पदं वाक्यं च ये विविक्तं न जानन्ति तेषां मन्दधियामेषा आकुलता कथं तदेव प्राप्तमप्राप्तं चेति। ये च पुनः पदवाक्ये विविक्तं जानन्ति ते पदार्थावस्थायां प्राप्तायां वाक्यावस्थायां चाप्राप्ततां निश्चिन्वन्त्येव। एकग्रन्थेनाह— **न पदं नाम वाक्ये किञ्चिदस्ति न पदार्थाः केचन वाक्यार्थे**। वाक्यावस्थायां पदं नाम नास्ति। वाक्यावस्थायां पदार्था नाम केचन न सन्ति। कुतः? **विशेषावगतिर्हि वाक्यार्थः**। अर्थविशेषोऽवगम्यमानो वाक्यार्थः **तदवगतिहेतुश्च वाक्यम्**। अतो विशेषावगमावस्थायामवगम्यमानतया वाक्यार्थे पदार्थो नास्ति। विशेषावगम-

---

1. सन्धातुं

**वाक्यार्थः । तदवगमहेतुश्च वाक्यम् । निमित्तकल्पनायां तु पदं पदार्थश्चेति व्यपदेशः । एवं तर्हि पदपदार्थज्ञानमनृतमेवेत्युक्तं भवति शाब्दैरिवेति । न निमित्तता अनृतमिति वदामः । किन्त्ववगम्यमानावस्थायामविवेकः वाक्यार्थे, अवगमकतया च वाक्ये ।**

**अत एवोक्तं पदेभ्य एव हि पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थस्य इति निमित्तनैमितिकभेदाश्रयम् न पुनः प्रमितौ भेदः । शाब्दैस्तु निमित्तमप्यपह्नुतमिति विशेषः तदिदं वाक्यपदीयमित्युक्तम् । भावा.... ।**

---

दशायां चावगमकं पदं नास्ति । तेन वाक्यार्थे सर्वमेवाप्राप्तं पदार्थविभागं दर्शयन् इदमाह — **निमित्तकल्पनायां तु पदं पदार्थश्चेति व्यपदेशः** । कश्चिदेव वर्णसमुदायः कञ्चिदर्थमन्वयितयाऽऽचक्षाणो वाक्यार्थे निमित्तीभवति । तेन तदभिप्रायेण पदपदार्थव्यपदेशः । तेन तामाश्रित्य प्राप्ततया यदि वाक्यार्थदशायां पदार्था नाम न सन्ति **एवं तर्हि पदपदार्थज्ञानमनृतमेवेत्युक्तं भवति शाब्दैरिवेति** । परिहरति—**न निमित्तताऽनृतमिति वदामः । किन्त्ववगम्यमानावस्थायां** विवेको नास्ति **वाक्यार्थे अवगमकतया च** वाक्ये ।

यत एव पदपदार्था निमित्ततया सन्ति **अत एवोक्तं** पदेभ्य **एव हि पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थस्य** । प्रमेयत्वादेकस्य प्रतीत्यवच्छिन्नः प्रत्यय इति **निमित्तनैमित्तिकभेदाश्रयम्** । पदानि स्वार्थानन्वितान् वदन्ति वाक्यार्थे निमित्ततां यान्ति इति निमित्तनैमित्तिकभेदाश्रयमेव तदुक्तं, न पुनः प्रमितौ भेदः एकस्य वाक्यार्थस्य प्रमेयत्वात् एकस्य प्रतीत्यवच्छिन्नस्य प्रमापकत्वात् । **शाब्दैस्तु निमित्तमप्यपह्नुतमिति विशेषः** । कस्मात् ? तेषां हि मते प्रत्यस्तमितावयवविभागं वाक्यं वाचकम् । मीमांसकमते तु पदान्येवार्थद्वारेण वाक्यार्थमवगमयन्तीत्युक्तं तद्भूताधिकरणे । **तदिदं वाक्यपदीयमित्युक्तम्** । वैयाकरणमते हि वाक्यमेव केवलं, पदं नाम नास्ति । तेन तद्भूताधिकरणमेव वाक्यपदीयमिति तत्रैवोक्तम् । **वाक्यार्थमातृकायां** चास्माभिरिति ।

अत्र चोदयति—यदि नियोगोऽनुष्ठानाक्षेपकतयाऽवगम्यते तदा नियोज्यं विनाऽनुष्ठानानुपपत्तेः नियोज्य आश्रीयते । न च नियोगोऽनुष्ठानाक्षेपकः नियोगशब्दावगम्यमानस्य तदाह—**भाव .... .... ....** तो लिङादि । अभिधेयस्यापि याऽनुष्ठानाक्षेपकतावगतिः सा काल्पनिकी । अनेनाभिप्रायेणाह—**किं निमित्तपूर्वस्य**

किं निमित्तपूर्वस्य यजेः विध्यर्थो वाच्यः। अस्ति किञ्चिद्वाच्यं स्वरूपतो वाच्यो न प्रमाणत इति कार्यावगम्यत्वात् प्रमाणभावस्य, अभिधानस्य च पदार्थमात्रनिष्ठत्वात् । तस्माल्लिङादिभिरेव प्रमाणतोऽभिधानं न कृदन्तैरिति निश्चीयते । तथा व्यवहारदर्शनात् व्यवहारपूर्वकत्वाच्च पदार्थावगतेः । अतः कल्पनापक्षोऽपि प्रत्युक्तः । यदि तर्हि षष्ठ्या स्मृत्युपसंहारः कथं तर्हि स्वर्गकामो यजेतेति प्रथमा । षष्ठी वा स्यात् अश्रवणं वा विभक्तेः । उच्यते । नैव नियोगापेक्षेयं प्रथमा । किं तर्हि कारकापेक्षा ।

ननु च नियोज्यपूर्वकत्वात् क्रियाकारकसंबन्धस्य तत्संबन्धस्य तत्संबन्धिन्यैव विभक्त्या भवितव्यम् । सत्यमाह भवान्, किन्तु न लिङ्वाच्ये नियोगे विभक्तिः सम्भवति । संबन्धमात्रापेक्षिणी हि षष्ठी न

---

यजेः विध्यर्थो वाच्यः इति न तावद्वाच्य इति शक्यते वक्तुम् । वाच्यश्चेत्किमित्यनुष्ठानं न प्रतिपादयति । परिहरति—अस्ति किञ्चिद्वाच्यम् । किं तद्वाच्यं ? स्वरूपतो वाच्यो न प्रमाणत इति वियोगवशेन विध्यर्थः स्वरूपतो वाच्यः न प्रमाणतः । धर्ममात्रं नियोगशब्द:[ब्दे न] उच्यते । अनुष्ठानप्रमाणभावालिङ्गितस्तु धर्मी लिङादिभिः । कुतः पुनरयं विभागोऽवगम्यते अत एवेत्यत्राह—कार्यावगम्यत्वात् [यत्र]प्रमाणकार्यमनुष्ठानरूपं अवगम्यते तत्र प्रमाणतोऽभिधानं, यत्र तु न, तत्र स्वरूपतोऽभिधानमिति विभागः । यदि प्रमाणभावो नास्ति कथं तर्हि कृदन्तेनाभिधानमिति तत्राह—अभिधानस्य पदार्थमात्रनिष्ठत्वात् । पदार्थमात्रतया स्वरूपमात्रेणाभिधानोपपत्तेः न स्वरूपेण लिङादिभिरभिधानम् । तस्माल्लिङादिभिरेव प्रमाणतोऽभिधानं न कृदन्तैरिति निश्चीयते । तथा व्यवहारदर्शनात् व्यवहारपूर्वकत्वाच्च पदार्थावगतेः लिङादियुक्तवाक्येऽनुष्ठानदर्शनात् कृदन्तश्रवणे चादर्शनादिति । अतः कल्पनापक्षोऽपि प्रत्युक्तः । उक्तेन न्यायेन कल्पनार्थे प्रमाणाभावात् । यदि षष्ठ्या स्मृत्युपसंहारः कथं तर्हि स्वर्गकामो यजेत इति प्रथमा प्रातिपदिकार्थमात्रनिमित्ता प्रथमा नियोज्यस्यातिरिक्ततयाऽत्र न प्रातिपदिकार्थमात्रता । अतः शेषत्वात षष्ठी वा स्यात् अश्रवणं वा विभक्तेः यदि षष्ठ्यपि न युक्ता । उच्यते । नैव नियोगापेक्षेयं प्रथमा, किं तर्हि कारकापेक्षा । नियोगापेक्षायां (वि)नियोज्यः प्रातिपदिकार्थातिरिक्त इति प्रथमा न स्यात् कर्तृभावापेक्षायां चाख्यातेनैव कर्तुरभिहितत्वात् शुद्धः प्रातिपदिकार्थ इति प्रथमोपपत्तिः ।

व्यापारविशेषापेक्षिणी। लिङादिभ्यश्च विशेषोऽवगम्यते। द्वितीया तर्हि भवतु। न, अनुपात्तत्वान्नियोगव्यापारस्य। धातूपात्तव्यापारे हि द्वितीयादयः भावापेक्षत्वात् कारकाभिधानस्य। धातूपात्तस्य च भावतामिच्छन्ति "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयत" इति वदन्तः। तस्मात् पश्चाद्भाव्यपि कर्तृभावोऽत्र विभक्त्युत्पत्तेः हेतुः प्रातिपदिकार्थमात्रतयैव नियोगसि(द्धिः)द्धेः। अत एव चाभिहिते कर्तुरेकत्वे न

---

ननु च नियोगापेक्षायां हि नियोज्यपूर्वकत्वात् क्रियाकारकसंबन्धस्य तत्संबन्धिन्यैव विभक्त्या भवितव्यम्। प्रथमोपनिपातिनियोज्यमात्रापेक्षया विभक्त्या भवितव्यम्, न पश्चाद्भाविकारकापेक्षया। सत्यमाह भवान् नियोज्यः प्रथमभावीति किन्तु न लिङ्वाच्ये नियोगे विभक्तिस्संभवति। ननु षष्ठी शेषत्वलक्षणा संभवति तत्राह—संबन्धमात्रापेक्षिणी षष्ठी न व्यापारविशेषापेक्षिणी। अस्यार्थः - क्रियाकारकगर्भः शेषसंबन्धः। तत्र क्रियाकारकभावं तिरस्कृत्य तद्द्वारा परिनिष्पन्ने संबन्धे षष्ठी प्रयुज्यते। न पुनर्व्यापारविशेषसंबन्धे तस्याशेषत्वात् कर्मादिरूपत्वात्। लिङादिभिश्च विशेषोऽवगम्यते नियोज्यनियोक्तृभावः। यदि नियोज्यतया स्वर्गकामस्यावगतिः तर्हि कर्मत्वात् द्वितीया भवतु। न, धातुना अनुपात्तत्वात् नियोगव्यापारस्य। नियुक्तिलक्षणो[णा]हि द्वितीया न भवति सत्यपि(न)[च] व्यापारव्याप्यत्वे। कुत इत्याह - धातूपात्तव्यापारे हि द्वितीयादयः। तदेव कुत इत्याह—भावापेक्षित्वात् कारकाभिधानस्य। कारके हि द्वितीयादयः। भावापेक्षया च कारकाण्यभिहितानि वैयाकरणैः। तथापि किमित्याह—धातूपात्तस्य भावतामिच्छन्ति। धात्वर्थादेव कुत इत्याह—केवलः शुद्धो भाव इत्यभिधीयते इति वदन्तः। तेनाधात्वर्थरूपत्वान्नियुक्तेः न भावरूपत्वम्। अभावरूपत्वे च न कारकत्वम्। अकारकत्वे च न द्वितीयेति। तस्मात् पश्चाद्भाव्यपि कर्तृभावोऽत्र विभक्त्युत्पत्तेः हेतुः। प्रातिपदिकार्थमात्रतयैव नियोगसिद्धिः[द्धेः]। विभक्तिं विनापि स्वर्गकामप्रातिपदिकार्थपर्यालोचनयैवोक्तेन न्यायेन नियोगसंबन्धसिद्धिः स्वर्गकामादीनाम्। यत एव प्रातिपदिकार्थमात्रतयैव नियोगसिद्धिः अत एव चाभिहिते कर्तुरेकत्वे न द्वितीयाप्रसङ्गः। यदि कर्ता नाभिहितः स्यात् तदा परत्वात् तृतीययैव द्वितीया बाधिता सती न भवेत्। अभिहिते कर्तरि तृतीयायामसंभवन्त्यां या द्वितीया भवति तत्रेयमपरा युक्तिः। प्राति-

**द्वितीयाप्रसङ्गः । भावद्वयोपन्यासश्च प्रत्युक्तः । धात्वन्तरानुपादानात् । गुणप्रधानभावश्च कारकाभिप्रायेणेत्येतदपि परिहृतमेव । अत एव च कामिगता सङ्ख्याऽतन्त्रम्, आख्यातगतैव[1]नाद्रीयते**

---

पदिकमात्रबलेनापि कर्मत्वसिद्धिरिति । अत एव चेति चकारो हेत्वन्तरसमुच्चये । अत एव लकारेणाभिधानसिद्धिश्च । यत एव नियोज्यतया स्वर्गकामः स्वर्गकामप्रातिपदिकपर्यालोचनया प्रतिभाति अत एव लकारेणाभिधानसिद्धिश्च । अन्यथा धातुरेव कार्यमभिदधत् नियोगमभिदध्यात् लोकव्यवहारानुसारेण । स्वर्गकामे हि फलपर्यन्ते नियोज्ये तदन्वययोग्यतया धात्वर्थातिरिक्तं कार्यं लकारेणाभिधीयत इति तत्र तत्रोक्तम् । यदि हि स्वर्गकामप्रातिपदिकपर्यालोचनया तस्य नियोज्यत्वं न प्रतिभासते तदा नियोज्य आश्रीयमाणोऽपि लोकव्यवहारानुसारिक्रियाकार्यत्वानुरूपो जीवति नवा न फलपर्यन्त आश्रीयते । क[तत]श्चापूर्वकार्याभिधायिका[ता] लिङादेर्न स्यात् इति दर्शनस्थितिरनुसरणीया ।

नन्‌ स्वर्गसिद्धेः यागात्मकभावद्वयसंभवात् यद्यपि यजेः कर्तृत्वमभिहितं तथापि स्वर्गसिद्धौ कर्तृत्वस्यानभिहितत्वात् तृतीया स्यादेवेति तत्राह—**भावद्वयोपन्यासश्च प्रत्युक्तः धात्वन्तरानुपादानात्** । स्वर्गसिद्धेः धात्वन्तरेणानुपादानात् न तेनापि क्रियाकारकविभक्तियोगाः । ननु यदि कर्तृत्वमपि स्वर्गकामस्य तदा कर्तृविशेषणत्वमपि स्वर्गस्यास्ति । तेन स्वर्गोऽपि गुणभूत इति तत्राह–**गुणप्रधानभावश्च कारकाभिप्रायेणेत्येतदपि परिहृतम्** । कारकाभिप्रायेण केवलं गुणप्रधानभावः स्वर्गनियोगयोः । नियोज्यदशायां तु प्रधानतैव स्वर्गस्य गुणतैव यागस्येति न दोषः । यत एव कारकावस्थायामियं विभक्तिः न नियोज्यावस्थायां **अत एव कामिगता सङ्ख्याऽतन्त्रम् आख्यातगतैव नाद्रीयते** । यदि हि कामिगता सङ्ख्या नियोज्यावस्थायामेव स्यात् तद्बलेनैव एकस्याधिकारः सिद्ध्येत् नाख्यातगताया आदरः स्यात् । यदा त्वेषा अधिकारपूर्वककर्तृदशावस्थैवाश्रीयते तदा नाधिकारनियमायालमिति ।

---

1. मा. व्याप्रियते

इदमपरं तर्हि कथमकामिनः प्रवृत्तिर्नास्तीति नियोगपरत्वाच्छास्त्रस्य । नियोगार्थसिद्ध्यर्थत्वात् कामनायाः । नैवाशङ्क्यते अङ्गता तु कामिनः प्राप्नोति । अविवेकोऽत्रापराध्यते भवतः । धात्वर्थापेक्षो ह्यङ्गाङ्गिभावो नेष्यते । गुणप्रधानभावोऽपि तदपेक्ष एव उक्तो भाष्ये । नियोगसिद्धौ तु सर्वं तदनुगुणमिति केन नेष्यते । तादर्थ्यनियमस्तु प्रदर्शितः । अत एव च भावार्थाधिकरणे नियोगप्रधानो वाक्यार्थो दर्शितः कुर्यादित्येवमादिना भाष्यकारेण । कथमिदानीमेतानि वेदवाक्यानि । त इमे सत्याः कामा अनृतापिधानाः सर्वं खल्विदं ब्रह्मेत्येवमादीनि । उक्ता

---

यदि स्वर्गकामो नियोज्यतया संबध्यते न कर्तृतया **इदमपरं तर्हि कथमकामिनः प्रवृत्तिर्नास्तीति** । यावता अकामिनोऽपि प्रवृत्त्या भाव्यम् । ननु कामसिध्यर्थत्वात्प्रवृत्तेः कथमकामिनः प्रवृत्तिराशङ्क्यते इत्यत्राह — **नियोगपरत्वाच्छास्त्रस्य** नियोगसिद्ध्यर्था हि कामिता न नियोगः कामसिद्ध्यर्थं इत्युक्तम् । नियोग एव कार्यताप्रयोज्यः । तस्य कर्त्रा विना सिद्ध्यनुपपत्तेः । कामनाविशेषणत्वेन तस्य लाभात् नियोगार्था कामिता । अतोऽकामिनोऽपि प्रवृत्तिः स्यात् । परिहरति — **नियोगार्थसिद्ध्यर्थत्वात् कामनायाः** । नियोगार्थसिद्ध्यर्थे वा कामित्वे कथमकामिनः प्रवृत्तिः इत्याशङ्क्यते ? चोदयिताऽऽह — **नैवाशङ्क्यते अङ्गता तु कामिनः प्राप्नोति** । नियोगं प्रति कामिनोऽङ्गता प्राप्नोतीत्युच्यते न चेष्यते मीमांसकैः । परिहरति — **अविवेकोऽत्रापराध्यते भवतः । धात्वर्थापेक्षो ह्यङ्गाङ्गिभावो नेष्यते** धात्वर्थमपेक्ष्य नियोज्यस्याङ्गता नेष्यते धात्वर्थस्य प्रधानता[च] । नियोगापेक्षया तु इष्यत एव । नन्वेवं स्वर्गो गुण एव स्यादिति तत्राह — **गुणप्रधानभावोऽपि तदपेक्ष एव**, धात्वर्थापेक्ष एव **उक्तो** भाष्ये । **नियोगसिद्धौ तु सर्वं तदनुगुणमिति केन नेष्यते** । नियोगसिद्धिदशायां तत्सर्वं तदनुगुणमिति कस्यात्र विप्रतिपत्तिः ? यदि सर्वं नियोगार्थं तदा परस्परनियोगार्थानां तादर्थ्यं न स्यादित्यत्राह — **तादर्थ्यनियमस्तु प्रदर्शितः कुर्यादित्यादिना** । भाष्येऽप्याह "किमपि भावयेत्" इति । भाष्यमर्थतो व्याख्यातम् । यदि नियोज्यविशेषणानि तानि **कथमिदानीमेतानि वाक्यानि "त इमे सत्याः कामा अनृतापिधानाः "सर्वं खल्विदं ब्रह्मे"त्येवमादीनि** । उत्तरं — **उक्ता अन्यपराणां मन्त्रार्थ-**

अन्यपराणां प्रतिपत्तिः ।

ननु चान्यपरतैव नास्त्युपनिषद्वाक्यानाम् तर्हि सिद्धार्थपरत्वम् । सिद्धार्थपरत्वे च तत्र प्रामाण्यव्युत्पत्तेः । तर्हि मृग्यतां प्रमाणान्तरम् । प्रमाणान्तरसद्भावे वा का नो बाधा । शास्त्रार्थस्तावदयं यथोपवर्णितोऽस्माभिः । ननु च प्रमाणान्तरसद्भावे शास्त्रार्थो विरुध्यते भेदेनावगम्यमानत्वात् । न खलु कश्चिद्विरोधः ।

अथ विरोधं मन्यसे न तर्हि प्रमाणान्तरमस्ति एतस्मादेव विरोधात् । न चानुमानादृते एकता शक्यते वक्तुम् । आगमविरोधे च नानुमानमात्मानं लभत इति नैयायिकाः । तस्माद्वाक्यशेषाणि

---

वादानां प्रतिपत्तिः । उक्ता अन्यपराणां मन्त्रार्थवादानां प्रतिपत्तिः गतिरुक्ता गौणी लाक्षणिकी वा । तेनैषामपि सा भविष्यति । ननु चान्यपरतैवोपनिषद्वाक्यानां नास्ति कार्यप्रतिपादकस्य वाक्यान्तरस्याश्रवणात् ; उत्तरं - यदि न कार्यप्रतिपादकं वाक्यान्तरमस्ति स्वतश्च कार्याश्रवणं तस्य तर्हि सिद्धार्थपरत्वं सिद्धार्थपरत्वे च शब्दस्य तत्र प्रामाण्यव्युत्पत्तेः अनुवादकत्वमङ्गीकरणीयं, अनुवादश्च प्रमाणान्तरापेक्ष इति प्रमाणान्तरापेक्षितैव प्राप्नोति । चोदयिता आह—तर्हि मृग्यतां प्रमाणान्तरं इति । सिद्धान्त्याह—यदि तत्र प्रमाणान्तरमस्ति तदा प्रमाणान्तरसद्भावे वा का नो बाधा । शास्त्रार्थस्तावदयम् यथैवोपवर्णितोऽस्माभिः । न च सिद्धार्थस्य प्रमाणान्तरापेक्षत्वे साध्यार्थस्यापि तद्भवितुमर्हति । अपेक्षाकारणाभावात् । इतरस्य तु सिद्धार्थतैवापेक्षाहेतुरित्युक्तो विशेषः । चोदयति—ननु वेदान्तार्थविषयेऽद्वैते प्रमाणान्तरसंभवात् तेन प्रमाणान्तरेण शास्त्रार्थो विरुध्यते भेदेनावगम्यमानत्वाच्च शास्त्रार्थस्य । परिहरति—न खलु कश्चिद्विरोधः कार्यसिद्धविषयतया भिन्नविषयत्वेन विरोधाभावात् तेन प्रमाणान्तरेण न शास्त्रार्थो विरुध्यते । सिद्धान्तवाद्येवाह—अथ विरोधं मन्यसे विनियोगसव्यपेक्षत्वात् नियोगस्य विनियोगविषये च प्रमाणान्तराणामवतारात् । दूषयति—न तर्हि प्रमाणान्तरमस्ति । कुतः ? एतस्मादेव शास्त्रेण विरोधात् प्रमाणान्तरस्य कल्पयितुमशक्यत्वात् । कस्मात् पुनः प्रमाणान्तरत्वं नास्तीत्याह—न चानुमानादृते एकता सर्वस्य जगतः शक्यते वक्तुम् । ततः किमित्याह—आगमविरोधे च नानुमानमात्मानं लभत इति नैयायिकाः । न्यायव्यवहारिणः यथा

भवन्तूपनिषद्वाक्यानि स्वतन्त्राणि वा अध्ययनमात्रपर्यवसायीनि। नात्र सङ्कटं किञ्चिदस्ति। यत्पुनः धर्मशास्त्रकारैः पठितं—'कामात्मता न प्रशस्ता' इति पठितमेवैतत्। केन वोक्तं न पठितमिति। भवतु तर्हि स्वर्गादीनां न प्राशस्त्यम्। भवतु यदि साध्यतया प्रतिषेधः। अथ तु आत्मगुणोऽयमुपदिश्यते अहिंसावत् क्रियाप्रतिषेधे नानर्थकत्वं स्वर्गादिसिद्धेः। निर्णयस्त्वनयोः तत एवान्वेष्यः।

यत्पुनरिदं भाष्यकारेण यागप्राधान्येपि फलसिद्धिं दर्शयता इदमुपन्यस्तं—काष्ठान्याहर्तुकामोऽरण्यं गच्छेदिति कथमत्र क्रियाप्राधान्यं मन्यते प्रत्युत तुमुन्प्रत्ययात् गमिरेवान्यार्थे वर्तते। तस्माद्यथा दृष्टान्त-

---

यागीया हिंसा न धर्मः हिंसात्वादिति। प्रकृतमुपसंहरति—तस्माद्वाक्यशेषाणि भवन्तु **उपनिषद्वाक्यानि स्वतन्त्राणि वा अध्ययनमात्रपर्यवसायीनि।** प्रमाणान्तराभावे सिद्धार्थतया विवक्षितार्थानि। **नात्र सङ्कटं किञ्चित्।** पक्षद्वयेऽपि राद्धान्तसिद्धेः। **यत्पुनः धर्मशास्त्रकारैः पठितं "कामात्मता न प्रशस्ता" इति।** अनुभाष्य परिहरति-**पठितमेवैतत्। केनवोक्तं न पठितमिति।** चोदयिता आह—यदि पठितं **भवतु तर्हि स्वर्गादीनां न प्राशस्त्यम्** मृषाभूतत्वात्। राद्धान्त्याह—भवत्वप्राशस्त्यं **यदि साध्यतया** स्वर्गादेः **प्रतिषेधः** स्वर्गो न भवतीत्युक्तम् एवं यदि प्रतिषेधः स्यात्। **अथ तु आत्मगुणोऽयमुपदिश्यते** अकामात्मकेन पुरुषेण भवितव्यमिति कामनाप्रतिषेधः यथा नहिंस्यादिति **हिंसात्मकक्रियाप्रतिषेधः** तदा **नानर्थक्यं** प्रयोजनवत्त्वमेव **स्वर्गादिसिद्धेः। निर्णयस्त्वनयोः तत एव** स्मृतिवाक्यपौर्वापर्यालोचनयैव **अन्वेष्यः** क्रियाप्रतिषेध एव स्मृताविति भावः। अत्र भाष्यं "वाक्यादेवास्मादवगच्छामः" इत्यादि तदाक्षिपति—**यत्पुनरिदं भाष्यकारेण यागप्राधान्येऽपि फलसिद्धिं दर्शयता उपन्यस्तं "काष्ठान्याहर्तुकामोऽरण्यं गच्छेत्" इति। कथमत्र क्रियाप्राधान्यं मन्यते प्रत्युत तुमुन् प्रत्ययात्** गमिरेवान्यार्थे वर्तते। **तस्माद्यथा-**भवत्ययं **दृष्टान्तः तथा वक्तव्यम्।** अस्यार्थः—भाष्यकारेणेदमुक्तं किमर्थमतीव स्वर्गप्राधान्ये प्रयत्यते यावता यागप्राधान्येऽपि काम्यमानस्य फलस्य यागात् सिद्धि-

स्तथा वक्तव्यम् । इदमुच्यते । कामशब्दप्रयोगात् तुमुन्नर्थोऽन्यार्थे वर्तते । तथा चैदमर्थ्यमत्रगगम्यत इत्यभिप्रायः । परिहारस्तु सत्यं न शब्दात् किं तर्हि प्रमाणान्तरतः । तस्मादधिकृतस्य कर्तृत्वमिति स्थितम् ।

---

रवगम्यत एव ' स्वर्गकामो यजेत ' इति । अस्मादेव वाक्यात् यथा काष्ठान्याहर्तुकामोऽरण्यंगच्छेत् इत्यस्मादेव वाक्यात् प्राधान्येऽपि गमनस्य गमनात् काष्ठाहरणसिद्धिरवगम्यते; यागात् सिद्धिरवगम्यते एव स्वर्गकामो यजेतेत्यस्मादेव वाक्यात् । यथा काष्ठान्याहर्तुकामः(नेयते ?) इत्युक्तम् । तस्मात् गमिरेवाहर्तुमिति तुमुन् श्रवणात् गुणभूतो वर्तते । "तुमुन् ण्वुलौ क्रियायां क्रियार्थायां" इति स्मरणात् । तस्माद्विषमो दृष्टान्तः । समाधत्ते—**इदमुच्यते कामशब्दप्रयोगात् तुमुन्नर्थोऽत्रान्यार्थे वर्तते । तथा चैतदमर्थ्यमत्रगम्यत इत्यभिप्रायः ।** अत्यार्थः-आहर्तुकाम इति पुरुषप्रधानत्वात निर्देशस्य तुमुन्नर्थो गमिं प्रति गुणभूतो वर्तते । तेन गमेः प्राधान्यमस्ति । प्राधान्येऽपि च गत्यर्थस्य काष्ठाहरणस्य ततस्सिद्धिरवगम्यत इति दृष्टान्तं ददतो भाष्यकारस्याभिप्रायः । अस्य तु यागप्राधान्येऽपि फलमवगम्यत इति पक्षस्य **परिहारः सत्यं** फलसिद्धिरवगम्यते । सा तु **न शब्दतः । किं तर्हि ? प्रमाणान्तरेण** अरण्यगमनस्य काष्ठाहरणफलत्वदर्शनात् । न च यागस्य स्वर्गं प्रति साधनत्वमवगम्यत इत्यतः कामप्राधान्य एव फलसिद्धेरुपपत्तिः । अधिकरणार्थमुपसंहरति—**तस्मादधिकृतस्य कर्तृत्वमिति सिद्धम् ।** अत्राधिकरणे पूर्वपक्षोत्तरपक्षयोः संक्षेपः—तत्र पूर्वपक्षी न लोके नियोज्यो नाम कश्चिद्वाक्यार्थो[र्थे]न्वयी प्रतीयते । नन्वसति नियोज्ये कथमनुष्ठानं ? यावद्धि कर्म अनुष्ठेयतया नावगम्यते तावन्न प्रेक्षापूर्वकारिणोऽनुतिष्ठन्ति । नियोज्यत्वे तु सति यस्य नियोगस्तस्याधिकारः । अधिकृतस्य चानुष्ठानावगमात् उपपद्यते चानुष्ठा( नात् )नम् । उच्यते । असत्यपि नियोज्यत्वे फलतः एव प्रमाणान्तरमधिगम्य तत्कर्मणि फलार्थिनोऽधिकारावगमात् उपपन्नमनुष्ठानम् । [न]नियोज्यत्वे कश्चिच्छब्दोऽस्तीति ।

राद्धान्ती मन्यते—सत्यमेवं लोके तथापि वेदे कार्यप्रतिपादकत्वात् लिङादीनां, अनुष्ठाने च सति कार्यस्य कार्यत्वोपपत्तेः अनुष्ठानसिद्ध्यर्थमधिकारोऽभ्युपगमनीयः । न च प्रमाणान्तरसमधिगतं फलमत्रास्ति यतोऽधिकारः स्यात् । तस्मादधिकारसिद्ध्यर्थं स्वर्गकामादीनां नियोज्यत्वेन संबन्धो वर्णनीयः । कः पुनर्नियोज्यो नाम ? यः कार्यतोऽवबुध्यते स नियोज्यः । एतेन कार्यं प्रति बोद्धृतया स्वर्ग-

कामादय उपादीयन्ते। न चाकामोपायं कामी कार्यतया प्रतिपत्तुमर्हतीति कार्यकामयोरुपायोपेयभावः। न च कालान्तरभाविनि कामे यागः कार्यतया नियोज्येनान्वयं यातीति यागातिरिक्तकार्याभ्युपगमात् यागस्तं प्रति साधनत्वेन संबध्यते। ततश्च पुरुषस्य यत्कार्यं तत्साधनं याग इति तत्रैश्वर्यं पुरुषस्योपपद्यते। ततश्च तत्र तत्रानुष्ठानावगतेरुपपन्नमनुष्ठानम्। तत्र नित्येषु केवलनियोगकार्यत्वात् तत्साधनत्वेन यागेषु पुरुषस्याधिकारः। कामाधिकारेषु तु फलपर्यन्तं नियोगसाध्यत्वादिति विशेषः। अत्र श्लोका भवन्ति :—

लोके कर्तृत्व(तत्)संबन्धः पुरुषः फलसाधनम्।
मानान्तरेण विज्ञाय कर्माधिकुरुते स्वयम्॥ १॥

ततोऽनुष्ठेयतां ज्ञात्वा स्वार्थं कर्मानुतिष्ठति।
नियोज्यत्वमतस्तत्र तेनांशेनोपयुज्यते॥ २॥

लोके तस्य प्रतीस्तय वेदेप्यवगतिः कुतः।
न हि व्युत्पत्तिरहितः शब्देनार्थोऽभिधीयते॥ ३॥

सत्यमेवं लिङादीनां कार्यार्थत्वं च वर्णितम्।
न चानुष्ठानशून्यस्य कार्यत्वमुपपद्यते॥ ४॥

अनुष्ठानावबोधाच्च कर्मण्यैश्वर्यबन्धनः।
ऐश्वर्यं च न यागादौ फलदर्शनसंभवः॥ ५॥

ततः कार्यमकार्यं स्यात् ऐश्वर्येण विना नृणाम्।
न च कर्तृत्वमात्रेण कर्मण्यैश्वर्यसंभवः॥ ६॥

ऐश्वर्येणैव कर्तृत्वं यावत्कर्मसु दृश्यते।
कार्ये बोद्धृतया तत्र कामी संबध्यते यदि॥ ७॥

तदा कार्यफलप्राप्तिः कार्याधीनाऽवसीयते।
न च क्षणापवृत्तेन कर्मणा शक्यते फलम्॥ ८॥

कालान्तरे जनयितुं तस्मात्कार्यं ततोऽधिकम्।
तेन कार्येण संबन्धः साधनत्वेन कर्मणः॥ ९॥

स्वकार्यसाधने कर्मणीश्वरः पुरुषस्ततः।
तथा च सति कर्मापि समासादितसाधकम्॥ १०॥

॥ २ ॥ [1]फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥

ननु तिर्यगादिषु वेदस्य प्रमाणतैव नोपपद्यते केयमधिकारचिन्ता ? तथा देवतानां ऋषीणां चाधिकारे राद्धान्तो न लभ्यते। यदि तावदधिकार-देवताः परिगृह्यन्ते आर्षेयवरणचोदिताश्च ऋषयः तदाऽनित्यसंयोगो वेदस्य (आदिसंयोगोऽवेदस्य) किं तत्राधिकारचिन्तया। अथ ततोऽन्ये किमि-

---

लब्धानुष्ठानमित्येवं कार्यं कार्यत्वमृच्छति।
प्रवृत्तिबीजजातायाः कार्यव्युत्पत्तिवीरुधः ॥ ११ ॥

नियोज्यत्वं फलासङ्गि कुमुदं विकसत्यदः।
तेन व्युत्पत्तिविरहो न दोषायात्र जायते
सिद्धो वे(दो)दे नियोज्योऽतः कार्ये बोद्धृतयान्वितः ॥ १२ ॥

फलार्थत्वात् कर्मणः

**ननु तिर्यगादिषु वेदस्य प्रमाणतैव नोपपद्यते। केयमधिकार-चिन्ता।** अस्यार्थः-यो नियोगे कार्यात्मनि बोद्धृतया संबध्यते स नियोज्यः, सोऽधिकारी। न च तिर्यञ्चः शब्दार्थे बोधशक्तिविकलाः शब्दैकसमधिगमनीये कार्ये बोद्धृतया संबद्धुं योग्याः। अतश्च तेषां न नियोज्यत्वसंभवः। तथा देवता-नामृषीणां च चैतन्य(लाभात्)ाभावात् बोद्धृत्वानुपपत्तिः। अतस्तिर्यगादिषु वेदस्य बोधकत्वानुपपत्तेः तिर्यगादीनामधिकारो नोपपद्यत इति पूर्वपक्षाक्षेपः। **तथा देवतानामृषीणां चाधिकारे राद्धान्तो नोपलभ्यते।** एतदेव विवृणोति— **यदि तावदधिकारदेवताः परिगृह्यन्ते आर्षेयवरणचोदिताश्चर्षयः तदाऽनित्य संयोगो वेदस्य किं तदाऽधिकारचिन्तया।** अस्यार्थः-यदि याग[गे या]एवाधि-कारे देवता उद्देश्या इन्द्रादयः तासामधिकारश्शङ्क्यते, यद्यार्षेयवरणचोदितानामृषीणां च, तदा तेषामनुष्ठानाभ्युपगमोऽवश्यंभा[वी। नचा](नश्चवि) शरीरिणा-मनुष्ठातो[नमु]पपद्यते। शरीरणश्चेदनित्यार्थसंयोगादनित्या[एव](भावे) वेदाः अनि-त्यानां च प्रमाण्यमेव नास्ति किमधिकारचिन्तया। **अथ ततोऽन्ये देवतात्मा[नः]**

---

1. Page 1355

त्यधिकारो वार्यते ऋषयो ब्राह्मणाः श्रूयन्ते इन्द्रादयश्च क्षत्रियाः। तस्मात् अष्टपूर्वोत्तरपक्षमेवेदमधिकरणं तत्रालोचनया प्रतिभाति। यदपि च विष्णुक्रमे यागमात्राधिकाराशङ्का सापि क्रमपर्यन्ते शास्त्रार्थे नोपपद्यते। स एव परिहृतावपि पुनरुपन्यस्तः। तस्मादप्रतिष्ठैवेयं चिन्ता वियतिपदम्।

अतोच्यते—शास्त्रार्थपरिज्ञानमेवोपन्यस्तम्। कामनामुखेन तच्च प्रकटितम्। न शास्त्रादृते पारलौकिककामना संभवति इति। कथमृषिदेवतयोः? । अत्राभिधीयते। अत्र केचित् वेदार्थज्ञानपण्डितंमन्याः

---

ऋषयश्चाभिमताः किमित्यधिकारो वार्यते यस्मादृषयो ब्राह्मणाः क(त)थासु श्रूयन्ते। इन्द्रादयश्च क्षत्रियाः ते चाधिकारिणो युक्ता एवेति राद्धान्तो न लभ्यते तस्मात् अष्टपूर्वपक्षोत्तरपक्षमेवेदं तत्रालोचनतया प्रतिभाति मीमांसा। तत्रालोचनतया बोधसमर्थोऽधिकारीति तिर्यगादीनामधिकाराशङ्का न युक्ता। तथापि नित्या देवता इत्यधिकारदेवतानामृषीणां चार्षेयवरणचोदितातिरेकिणामधिकारश्चिन्तनीयः। स च तेषां वारयितुमशक्य इति। यदि चात्रापि विष्णुक्रमके यागे यागमात्राधिकाराशङ्का सापि क्रमपर्यन्ते स्थिते शास्त्रार्थे नोपपद्यते। क्रमपर्यन्तं शास्त्रार्थः स्थितः तेन विनियुक्ताङ्गपरित्यागेन यागमात्राधिकाराशङ्का नोपपद्यते। यदि तावत् परिहारान्तरभागाय शङ्का क्रियते तदोपपद्येताधिकाशङ्का इष्टहेतुः परिहृतावपि स एव पुनरुपन्यस्तः। क्रमपर्यन्तः शास्त्रार्थो राद्धान्ते हेतुभूतः तस्मादप्रतिष्ठैवेयं चिन्ता वियतिपदम्। समाधत्ते—शास्त्रार्थज्ञानमेवोपन्यस्तं तिरश्चां कामनामुखेन। अस्यार्थः-येय भाष्यकारेण पारलौकिकफलकामना तिरश्चामुपन्य[1]स्ता तन्मुखेन तेषां शास्त्रार्थज्ञानमेवोपन्यस्तम्। तच्च प्रकटितम्। ये तावत् पारलौकिकं फलं कामयन्ते ते शास्त्रार्थमपि बोद्धुं शक्नुवन्तीत्यभिप्रायः। शास्त्रार्थज्ञानमेव कामनामुखेनोपन्यस्तमिति तच्च प्रकटितम्। न शास्त्रादृते पारलौकिककामना संभवति। तेन संभवच्छास्त्रार्थज्ञानात् तिर्यञ्चोऽप्यधिकारमर्हन्तीति। कथमृषिदेवतयोरिति पूर्वोक्तस्मरणम्। अत्राभिधीयते – अत्र केचित् वेदार्थज्ञानपण्डितंमन्याः यागानुष्ठानकृतमेव ऋषित्वं देवतात्वं च मन्वते अधिकारशब्दा इन्द्रादय इति वदन्तः। अस्यार्थः – केचिदेवं मन्यन्ते इन्द्राग्नीशानादिशब्दा अधिकारिशब्दाः

---

1. मा उपन्यस्तम्

यागाद्यनुष्ठानकृतमेव ऋषित्वं देवतात्वं च मन्वते अधिकारशब्दा इन्द्रादय इति वदन्तः । तथा च शतक्रतुरिन्द्र इत्यैतिहासिकाः शौनकादयश्च सत्रं नैमिशारण्ये आसितवन्तः इति वदन्ति । नचैतावता कर्मजन्यदेवताप्रतिपादकत्वेनानित्यसंयोगो वेदस्य भवतीति मन्यमानाः तद्व्यामोहापनुत्तये इदं लिखितम् । कथं पुनः अनेन व्यामोहोऽपनुद्यते । इत्थमपनुद्यते । यत इन्द्रादीनां तावद्यागादयो न संभवन्ति स्वात्मनि क्रियाविरोधात् । ननु इन्द्राभिमानिनो यजमानाः पूर्वोत्पन्नं इन्द्रं यजन्ते । ऋषीनपि पूर्वोत्पन्नानेव वृण्वते । एवं तर्हि दर्शनाभिमानानुपपत्तिः । तद्भावो भेदश्चेत्यनुपपत्ति-

---

अधिकारिविशेषणशब्दा इत्यर्थः । इन्द्रत्वादिकामो यागादीननुतिष्ठतीति । अनुष्ठितयागादिश्चेन्द्रो भवति स पुनरिन्द्रभूतोऽपरपदलिप्सया यजते कर्मभिः देवताभावो भवतीति । अत्र चेतिहासं दर्शयति **तथाच शतक्रतुरिन्द्रइत्यैतिहासिकाः ।** ऋषयश्च यजन्त इत्यत्रापीतिहासं [ दर्शयति ]– **शौनकादयश्च द्वापरे नैमिशारण्ये सत्रमासितवन्त इति वदन्ति । नचैतावता कर्मजन्यदेवताप्रतिपादकत्वेन अनित्यसंयोगो वेदस्य भवतीति मन्यमानाः ।** अयमर्थः - कर्मभिरेव विशिष्टः पुरुषा इन्द्रत्वादिकं लभन्ते तेषामेव देवताभावः । पुनर्देवताभूताः पदान्तरलिप्सया यजन्ते । नचानित्या (भिमता)र्थता वेदस्य कर्मजन्यानामेवानादितोपपत्तेः परावररूपत्वात् । **तद्व्यामोहापनुत्तये इदं लिखितम् । कथं पुनरनेन व्यामोहोऽपोद्यते ? इत्थमपनुद्यते - यत इन्द्रादीनां तावद्यागादयो न संभवन्ति स्वात्मनि क्रियाविरोधात् ।** नहि स एवोद्देशकःउद्देश्यश्च युज्यते । यजमानतयोद्देशकः देवतात्वेनोद्देश्य इति नोपपद्यते एकस्यां क्रियायां एकस्य कर्मकर्तृत्वयोरनुपपत्तेरिति । अत्र पूर्वपक्षमाविष्करोति – **ननु चेन्द्राभिमानिनो यजमानाः पूर्वोत्पन्नमिन्द्रं यजन्ते । ऋष्यभिमानिनश्च पूर्वोत्पन्नान् ऋषीन् वृण्वते ।** अस्यार्थः - येऽमी अस्माकमिन्द्रत्वेनाभिमताः यजमानाः अपरपदलिप्सया यजन्ते । तत्पूर्वोत्पन्नमिन्द्रं यजन्ते । तेन नास्ति स्वात्मनि क्रियाविरोधः । एवमृषिष्वपि । इन्द्राभिमानिन इति । इन्द्र इत्यभिमानः संमतिः पूर्वपक्षिणो येषां ते । इन्द्रत्वाभिमता इति यावत् । सिद्धान्ती दूषयति— **एवं तर्हि दर्शनाभिमानानुपपत्तिरन्यत्वेनापगता ।** अस्यार्थः - यादृशं दर्शनं भवतामभिमतं तस्यानुपपत्तिः देवतायजन्त इति

रनुष्ठाने। अतो देवता देवतैव ऋषिरपि ऋषिरेव न पुनः प्राप्यः प्रापको वा। यथा न प्रापकः तथा नवमे वक्ष्यामः। प्राप्यता त्विह निषिद्ध्यते। यदप्युक्तं कथमपि अविष्णुक्रमके यागेऽधिकार इति। अधिकारपूर्वकत्वात् प्रकरणादीनाम्। अतो राद्धान्तेप्यधिकाराविरोधात् विनियोगान्यत्वं शक्यते

---

भवतां दर्शनं अभिमानः। न चैवं सति देवता यजते पूर्वोत्पन्नस्य देवतात्वात् इदानीमधुनातनस्य यजमानत्वात्। येऽपि च पुरुषास्तेऽपि न तं यजन्ते तदिज्यमेव पूर्वोत्पन्नमिन्द्रं यजेरन्। एवं च यमेवेष्ट्वा पूर्वोत्पन्नोऽपीन्द्रो हूतः स एवापरैरपीज्यते। ततश्च कर्मभिरुत्पन्नानामनिज्यमानत्वात् न देवतात्वं स्यात्। अतः कर्मभिः देवताभावो भवतीत्यपि पक्षो नोपपद्यते। तस्मात् कर्मजन्यदेवता यजत इत्येतत्तावत् नास्ति। तदाह—**तद्भावो भेदश्चेत्यनुपपत्तिरनुष्ठाने।** अस्यार्थः—अधुनोत्पन्नस्येन्द्रस्य पुरुषेणेज्यमानत्वात् देवताभावः स्वयं चान्यदेवतायाजित्वात् पूर्वदेवतातो भेदः इति नेदमनुष्ठानमुपपद्यते पुरुषाणामपि तद्देवतादीज्ययाजित्वप्रसङ्गात्। **अतो देवता देवतैव ऋषिरपि ऋषिरेव न पुनः प्राप्यः प्रापको वा।** उक्तेन न्यायेन कर्मोत्पन्नस्यानिज्यमानत्वात् अवरणीयत्वाच्च। कर्मभिर्देवताभावः ऋषिभावश्च न भवतीति स्वभावेनैव देवताऽङ्गीकरणीया। ऋषिरपि न पुनःकर्मप्राप्यः नापि कर्मफलप्रापकः **यथा न प्रापकः तथा नवमे वक्ष्यामः** देवताधिकरणे फलदातृत्वनिराकरणात्। **प्राप्यता त्विह निषिध्यते। यदप्युक्तं कथमपि [अ] विष्णुक्रमके यागेऽधिकार इति साधिकारपूर्वकत्वात् प्रकरणादीनाम्।** अस्यार्थः—साधिकारसन्निधिसमाम्नातानां धर्माणां तादर्थ्ये सति श्रुत्यादिभिस्तदीयेषु पदार्थेषु विनियोगः क्रियते। प्रकरणादीनां तु स्वरूपे विनियोगे चाधिका पूर्वकत्वमेव। तेनाधिकारदशायां विनियोगस्यानुपपन्नत्वम्। यद्यप्यनुष्ठानसमर्थस्यैवाधिकारः तथापि पङ्ग्वादीनामधिकारो न शक्यते वारयितुम् अधिकारवशेनैव तु विनियोगः प्रत्यधिकारं व्यवतिष्ठते—यदा यत्समर्थोऽधिकारी तस्य तेषामङ्गानां विनियोग इति। यत एवं क्रमपर्यन्तेऽवस्थिते शास्त्रार्थे यागमात्राधिकारमपेक्षते न पुनर्विशिष्टस्यैवाधिकारं तत्र कामिमात्रस्यैव शङ्कोपपद्यते। **अतो राद्धान्तेप्यधिकारसिद्धेः** नाधिकृतस्य तेषामङ्गानां विनियोग इति अविरोधात **विनियोगान्यत्वं शक्यते कल्पयितुमिति नानुपपत्तिः।** अस्यार्थः—प्रकरणाद्योऽधिकारमात्रमपेक्षन्ते न

कल्पयितुम् इति नानुपपत्तिः । विषयं च दर्शयन् निदर्शितावेव पूर्वपक्षो-त्तरपक्षाविति न पुनःप्रदर्श्यते इति स्थितमधिकरणम् ।

॥ ३ ॥ लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ६ ॥

॥ ४ ॥ स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥

ननु च कर्तृगत एवात्र विभक्त्यर्थः कथमधिकारे स्त्रियं निवर्तयति । अयमभिप्रायः पूर्वपक्षवादिनः—एकत्वमिव सङ्ख्यान्तरं लिङ्गमपि

---

पुनः विशिष्टस्यैवाधिकारः तत्र काममात्रस्याधिकारेण लब्धात्मकैः विनियोगप्रमाणैः विनियुक्तेष्वङ्गेषु तदङ्गयुक्तेऽनुष्ठाने समर्थस्यैवाधिकारः कामिनो निश्चीयते । यदि तावत् विनियोगानुसारेणाधिकारिविशेषे निश्चीयमानेऽधिकारोऽव(वि)रुद्ध्यते [तदा] यथाधिकारं विनियोगाश्रयणेन नानारूपता विनियोगस्य कल्प्येत । नचैवमस्ति । न हि सामान्यश्रुतिः विशेषेऽवस्थाप्यमाना शब्दार्थतां जहातीति । **विषयं च दर्शयन् निदर्शितावेव पूर्वपक्षोत्तरपक्षौ इति न पुनः प्रदर्श्यत इति स्थितमधिकरणम्** अधिकारपूर्वकत्वाद्विनियोगस्य यथाधिकारं व्यवस्थायां सामर्थ्यानुसारेण विनियोग इति पूर्वः पक्षः । अनिर्धारितविशेषेणाप्यधिकारिणा ( साधिकारिणः ) साधिकारित्वोपपत्तौ विनियोगसिद्धेः तदनुसारेण त(स)त्समर्थाधिकारविशेषाश्रयणं न्याय्यमिति राद्धान्तः । स चायं विचारः तिर्यक्षु देवतासु पङ्ग्वादिषु तुल्य इत्यैकाधिकरण्यम् । शास्त्रार्थ-बोधसामर्थ्याभावप्रदर्शनमभ्युच्चयः तिर्यक्षु ।

॥ लिङ्गविशेष । स्ववतोः ॥

एकमत्र–किं पुंसोऽधिकारः उत स्त्रीपुंसयोरपीति विचारे पूर्वपक्षसूत्रम् । अपरं तु–किं सह यष्टव्यं उत भेदेनेति विचारे सिद्धान्तसूत्रं, एकीकृत्यपठन् एवं ज्ञापयति—पूर्वाधिकरणराद्धान्त एवाधिकारं विना न निर्वहतीति । एतच्च वक्ष्यामः । पूर्वपक्षमाक्षिपति – **ननु कर्तृगत एवात्र विभक्त्यर्थः । कथमधिकारे स्त्रियं निवर्तयति** । अस्यार्थः—स्वर्गकामो यजेत इत्यत्र पूर्वाधिकरणे इदमुक्तं कर्त्रवस्थायामयं विभक्त्यर्थ इति । लिङ्गं च विभक्तेरेवार्थः । तेनाधिकार-दशायां लिङ्गस्याप्रतीतत्वात् तद्वशेन पुंस एवाधिकारो न युक्त इति पूर्व-पक्षाक्षेपः । समाधत्ते—**अयमभिप्रायः पूर्वपक्षवादिनः एकत्वमिव**

लिङ्गान्तरं निर्वतयति इति । ननु च सङ्ख्यापि नैवाधिकारे सङ्ख्यान्तरं निर्वतयति । किं तर्हि कर्तृत्वे । सत्यं नाधिकारे निवर्त्यते तथापि तु कर्तृत्वापत्तेरधिकारस्य लिङ्गमपि लिङ्गान्तरस्य न कर्तृत्वमापादयति । आपन्नकर्तृभावश्च न कर्मणि नियुक्तो भवतीति पुंयुक्तमिति पठितम् । भ्रूणहा आत्रेयीपरिक्रयादिभिः अस्वत्वप्रदर्शनमभ्युच्चयः ।

अत्रोच्यते—जातिस्तु बादरायण इति नरजातिमात्रमत्राधिक्रियते

---

सङ्ख्यान्तरं लिङ्गमपि लिङ्गान्तरं निर्वतयतीति । यथा विभक्त्यर्थभूतेनापि एकत्वेन कर्तृदशागामिना एकस्यैवाधिकारमापादयता सङ्ख्यान्तरमधिकारे निवर्त्यते तथा लिङ्गान्तरं निवर्त्यते । अत्र चोदयति—ननु च सङ्ख्यापि नैवाधिकारे संख्यान्तरं निवर्तयति किं तर्हि कर्तृत्वे । परिहरति—सत्यं नाधिकारे निवर्त्यते तथापि तु कर्तृत्वापत्तेरधिकारस्य लिङ्गमपि लिङ्गान्तरस्य न कर्तृत्वमापादयति । अस्यार्थः-अधिकारः स्वामित्वं कर्तृत्वेन विपरिणम्यते अधिकृतः कर्ता भवतीत्यर्थः । तेन कर्तृत्वापत्तौ संख्या या दृश्यते अधिकारेऽपि सैवेति निश्चीयते । नाधिकारिणोऽन्यः कर्ता । एवं लिङ्गमपि कर्तृदशाश्रितं लिङ्गान्तरयुक्तस्य कर्तृतां निवर्तयतीति । यदा च लिङ्गान्तरयुक्तस्य कर्तृता नास्ति तदाऽधिकारोऽपि तस्य नास्ति । यो हि नानुतिष्ठति कथमसावधिकारी भवति अनुष्ठानपर्यन्तत्वादधिकारस्येति । पुंयुक्तमिति पठितम् । तैः परिक्रयादिभिश्चास्वत्वदर्शनमभ्युच्चयः अविज्ञाते गर्भे हते भ्रूणहा भवतीत्यविज्ञातग्रहणं नोपपद्यते यदि स्त्रीपुंसयोरधिकारः । [अ]विज्ञात ग्रहणेन ह्येवमुच्यते अविज्ञाते गर्भे हते कदाचित् पुमानपि हन्येत तत्र यज्ञसाधन-वधकारितया भ्रूणहा भवतीति । [यदि]स्त्रीपुंसयोरप्यधिकारः, तदा किमविज्ञात-ग्रहणेन(द्योत्यते) गर्भमात्रवधेनापि भवत्येव भ्रूणहत्या । तथाऽऽत्रेय्यभ्युच्चयः आत्रेयीं हत्वा भ्रूणहा भवतीति ।

आपन्नगर्भामात्रेयीमाहुः । यदा पुनः स्त्रीमात्रवधेनापि भ्रूणहत्या भव(ती)ति [तदा किमात्रेयीग्रहणेनेति] दर्शयितुमात्रेयीग्रहणमुपपन्नम् । त(दा)था परिक्रयादि-भिरस्वत्वप्रदर्शनं स्त्रिया अभ्युच्चयः । यथा क्रयविक्रययोगिनी स्त्री स्ववती न भवति गवादिवत् । अतः स्वादिक्रियायोगे स्वद्रव्यत्यागात्मकेऽसमर्थेत्यनधिकारिणी ।

अत्रोच्यते—जातिस्तु बादरायण इति । नरजातिमात्रमत्राप्यधि-

न लिङ्गाद्विशेषगतिरधिकारस्येत्यर्थः । ननु चापन्नकर्तृभावो न नियुक्त इति सङ्ख्यावत् लिङ्गमपि लिङ्गान्तरं निवर्तयतीत्युक्तम् । सत्यमुक्तम् । तत्त्वयुक्तम् सङ्ख्या सङ्ख्यातगता कर्मणि सङ्ख्यान्तरं निवर्तयतीति युक्तम् । लिङ्गं पुनरश्रूयमाणत्वादयुक्तं तन्निवर्तयतीति । अतस्सूक्तं बादरायणस्येति । स्मृत्यादयस्तु प्रदर्शिताः । यद्येवं न तर्हि सहप्रयोगः प्राप्नोति सङ्ख्यान्तरनिवृत्तेः । तदिदमुक्तम् स्थितं तावदपर्यवसितमिति सहत्वपर्यन्तत्वात् स्त्र्यधिकारस्य । अतः पृथगधिकारं पूर्वपक्षी दर्शितवान् । राद्धान्तवादी तु नैव क्रमपर्यन्ते विषये सङ्ख्याविरोध इति मन्वानः

---

क्रियते न लिङ्गाद्विशेषगतिरधिकारस्येत्यर्थः । न जातेरधिकारोऽचेतनायाः किन्तु तज्जातिभाजां पुंसां स्त्रीणां चाधिकारः । ननु चापन्नकर्तृभावो न नियुक्त इति सङ्ख्यावत् लिङ्गमपि लिङ्गान्तरं निवर्तयतीत्युक्तम् । सत्यमुक्तं, तत्त्वयुक्तम् सङ्ख्या सङ्ख्यातगता कर्मणि सङ्ख्यान्तरं निवर्तयतीति युक्तम् । लिङ्गं पुनः अश्रूयमाणत्वादयुक्तं तन्निवर्तयतीति । अस्यार्थः—यजेतेत्याख्याते कर्तृसङ्ख्या प्रतीयते तया(थ) विषयो विशेष्यते तेनैककर्तृकविषये एकस्यैवानुष्ठानसामर्थ्यमिति तस्यैव तत्राधिकारः यथा राजजातीयस्य राजसूये राजकर्तृके । लिङ्गं पुनराख्याते न श्रूयते तेन तद्विशिष्टस्तद्विषयो न प्रतीयते तेन लिङ्गविशेषरहिते विषये स्त्रीपुंसयोरधिकारो घटते । यत्त्विदं प्रातिपदिकगतं लिङ्गं तदधिकारपूर्वकमिदमवगम्यते इति नाधिकारं निवर्तयितुमर्हति यथाधिकारमेव तु वर्ण्यते । अतस्सूक्तं बादरायणस्येति । भाष्य एव तावत् सङ्ख्या सङ्ख्यान्तरं निवर्तयति । एवं तर्हि सहप्रयोगो न प्राप्नोति सङ्ख्यान्तरपूर्वकमवगम्यत इति निवृत्तेः । सहप्रयोगे हि स्त्रीपुंसयोः द्वित्वसङ्ख्या स्यात् ततश्चैकसङ्ख्या बाध्येत । सहप्रयोगे चासति न स्त्रिया अधिकार उपपद्यते विद्याविरहात् शूद्रवदिति मन्यते । तदिदमुक्तम्—स्थितं तावदपर्यवसितमिति सहत्वपर्यन्तत्वात् स्त्र्यधिकारस्य यत एव सहत्वपर्यन्तः स्त्र्यधिकारः अतः स्त्र्यधिकारं निवर्तयितुं पृथगधिकारं पूर्वपक्षवादी दर्शितवान् । राद्धान्तवादी तु नैव क्रमपर्यन्ते विषये सङ्ख्याविरोधः इति मन्वानः सहाधिकारमुक्तवान् । अस्यार्थः-क्रमपर्यतोविषयः । तत्र च स्त्रियामनुप्रविशन्त्यामपि सङ्ख्याविरोधो नास्तीति

**सहाधिकारमुक्तवान् । कथं पुनः सङ्ख्याविरोधो नास्ति ? सहितेषु हि द्विवचनबहुवचने भवतः, न पुनः सहार्थेषु । अतः एव च इतरेतरयोगे एवं समाहारे वा द्वन्द्वं मन्वते समासविदः । न पुनश्चार्थमात्रे । कोऽभिप्रायः ? अयमेवाभिप्रायः-नेतरेतरभावमनापन्नयोः पदार्थान्तरसंबन्धः । यत्र पुनः पदार्थान्तरसंबन्धापेक्षः चार्थः न तत्र द्विवचनबहुवचने भवतः**

---

मत्वा सहाधिकारमुक्तवान् । यदि हि क्रमपर्यन्तो विषयो न भवति किन्तु यागपदार्थ एव तदा यागे कर्त्रन्तरानुप्रवेशेन सङ्ख्याविरोधः स्यात् । यदा त्वनेकपदार्थात्मको विषयः शास्त्रार्थीभूतः तदा व्यापारान्तरेणापि कर्त्रन्तरानुप्रवेशः संभवतीति न सङ्ख्या विरुद्ध्यते । **कथं पुनः सङ्ख्याविरोधो नास्ति ?** उत्तरं—**सहितेषु हि द्विवचनबहुवचने भवतः** समासो वा; यथा देवदत्तयज्ञदत्तौ पचत इत्यादिषु । **न पुनस्सहार्थेषु** देवदत्तेन सह यज्ञदत्तो गत इति । इह तु स्त्री सहभावेनानुप्रविशति इति "धर्मे चार्थे च नातिचरितव्या" । "यत्किञ्चित्कर्तव्यं तदनया सह" इति वचनात् । यत एव सहितेषु समासः **अत एव चेतरेतरयोगे** समाहारे च समासं **मन्यन्ते समासविदः । न पुनश्चार्थमात्रे** इतरेतरयोगे समाहारे च द्वन्द्वं मन्यन्ते यत्र सहितभावः । **न पुनश्चार्थमात्रेऽपि** समुच्चयेऽन्वाचये च । यदि यत्रापि साहित्यं नास्ति तत्रापि समासो भवेत् तदा समुच्चयान्वाचययोरपि द्वन्द्वः स्मर्येत[1] । **कःपुनरभिप्रायः** सहितभावे समासं स्मरतामित्यत्राह —**अयमभिप्रायः नेतरेतरभावमनापन्नयोः पदार्थान्तरसंबन्धः** यत्र हि सहितभावः तत्र हीतरेतरभावः । सहयोगित्वमनापन्नयोः अप्राप्तयोर्न पदार्थान्तरसंबन्धः अपि तु परस्परसंबन्धयोरेव पदार्थान्तरेण संबन्धः । समासे च समस्यमानयोरर्थयोः परस्परानुगमनपूर्वकं पदार्थान्तरानुगमनम् । तेन सहितभावे यादृशोऽर्थानां संबन्धः तादृश एव समासेनाप्युच्यते इति । सामर्थ्ये च सति समास इति युक्तम् । तत्र समासो यत्र च परस्परसंबद्धयोरेव पदार्थान्तरेण संबन्धः । तत्र तुल्यद्वारसंबन्धात् द्विबहुत्वोपपत्तेः द्विवचनं बहुवचनं च युक्तम् । तेन समासो द्विवचनबहुवचने । यत्र इतरेतरसव्यपेक्षयोरर्थान्तरसंबन्धः तत्र तद्विषयाण्येव । **यत्र पुनः पदार्थान्तरसंबन्धापेक्षः चार्थः न तत्र द्विवचनबहुवचने भवतः समासो वा** । यत्र ह्येकस्मिन् सम्बन्धे सति पुनरर्थान्तरसंबन्धः क्रियते न तत्रैकद्वारेण सम्बन्धः यथा देवदत्तः पचति यज्ञ-

---

1, स्मर्यते-मा

**समासो वा। तदिदं महाभाष्यकारेण प्रदर्शितम्—सहितयोः क्रिया-संवन्धाभिधाने द्विवचनमेव प्रदर्शनार्थेषु वाक्येषु एवमनुकृतं भवति। अन्यथा हि अनुकारोऽपि नोपपद्यते। तदिदमुक्तं - प्रतिकारकं क्रियाभेद**

---

दत्तश्च इति। न हि तत्र यथा देवदत्तः पाकेन संबद्धः तथा यज्ञदत्तोऽपि पुनः सम्बन्धयितुं शक्यते। अर्थान्तरावरुद्धेऽर्थान्तरसम्बन्धित्वाभावात्। तेन तत्र द्वारान्तरेण सम्बन्धोऽवगम्यते। अतश्चानित्यसम्बन्धित्वात् द्विबहुत्वानुपपत्तेः न द्विवचन बहुवचनोपपत्तिः। समासस्तु सामर्थ्याभावे न संभवति। समासे हि परस्पर-सहितानामर्थान्तरसम्बन्धोऽवगम्यते इति। तथाचार्थान्तरसंबन्धानां समुच्चयावगतेः सामर्थ्याभावः। इह च पत्नी यजमानावरुद्धे प्रयोगे पश्चात्सहशब्देन सम्बध्यते। नासौ यजमानाद्भिन्नेन द्वारेण यजमानावरुद्धे प्रयोगे कर्तृत्वेनानुप्रविशति। तेन तामपेक्ष्य न द्विवचनबहुवचनोपपत्तिः अतुल्यसम्बन्धित्वात्। यत्र सहितयोः क्रिया-सम्बन्धः तत्र द्विवचनबहुवचनोपपत्तिरिति। **तदिदं महाभाष्यकारेण दर्शितम् सहितयोः क्रियासम्बन्धाभिधाने द्विवचनमेव प्रदर्शनार्थेषु वाक्येषु एवमनुकृतं भवति। अन्यथाहि अनुकारोऽपि नोपपद्यत इति।** अस्यार्थः—सहितयोः क्रियासम्बन्धाभिधाने द्वन्द्वसमासे धवखदिरौ च्छिन्द्यात् इत्यादौ प्रदर्शनार्थेषु वाक्येषु विग्रहवाक्येषु द्विवचनमेव प्रयोक्तव्यम्—धवखदिरौ च इति। एवं द्विवचनप्रयोगे सति सहितक्रियासम्बन्धाभिधायि समासपदमनुकृतं भवति। द्विवचनदर्शने हि एवमवगम्यते—द्वित्वमस्तीति। द्वित्वोत्पत्तिश्च परस्परान्वितयोः क्रियासम्बन्धे भवति।

नन्वेवं सति कथमेकस्मिन् द्विवचनमुच्यते। सहितावस्थायां द्वित्वसङ्ख्या-योगात्। द्वित्वं च साधारणगुणः सहितावस्थालक्षणार्थं च पदद्वयम्। अत एवार्थान्तरे कथं वृत्तिरिति चोद्यस्यानवकाशः। यदि पुनर्द्विवचनेन प्रयुज्यते तदा अनुकारोऽपि न स्यात्, सहितावस्थाया अदर्शनादेव। सहभावेन क्रियासम्बन्धेऽवगते यजमानस्य तत्पुरस्सरा पत्नी कर्तृत्वेन कर्मण्यनुप्रविशन्ती यजमानाद्भिन्नद्वारेण कर्तृतामनुभवति। **तदिदमुक्तम्—प्रतिकारकं क्रियाभेद इति।** अन्या क्रिया, अन्यः यजमानस्य द्रव्यत्यागात्मो यागः, मध्यगं च दम्पत्योः धनं, केवलो यजमानस्त्यक्तुं न शक्नोति। अत्यक्ते हि पत्न्याः स्वाम्यात् यजमानस्यापि स्वामित्व-मिति यागानभिनिर्वृत्तिः। तेन पत्नी अनुमतिं कुर्वाणा यागे कर्त्री। यजमानस्तु साक्षाद्देवतामुद्दिश्य त्यागं कुर्वाणो यागे कर्तेति। तदिदमुक्तं—**प्रतिकारकं**

इति । द्वादशे वा शते षट्पञ्चाशदिति किमिदं ? वयमपि ब्रूमः किमिदमिति । किमसदेवेदं ? नेति ब्रूमः । द्वादशे शते यदि विभागः स्यात् स्यादेतदेवम् । इह पुनः अन्य एव पत्नीव्यापार इति सहार्थतां दर्शयति न सहितार्थताम् । एकस्त्वेतदाह अन्यतरानिच्छायां त्याग एव न संवर्तेतेति । तस्मादविरोधात् न सहकर्तव्यमित्यस्य वचनस्यायथार्थता शक्यतेऽवगन्तुम् । एवं च पत्नीशब्दः समर्थितो भवति कर्मविशेषाश्चाज्यावेक्षणादयः । लिङ्गमुक्तम् ।

---

**क्रियाभेद** इति । न हि पत्न्या अनुमतिं विना यजमानस्य कर्तृत्वोपपत्तिः यागे । तेन सापि भवत्येव यागे कर्त्री, व्यापारान्तरेणानुप्रवेशात न द्वित्वबहुत्वोपपत्तिरिति निरवद्यम् । अत्र भाष्यं—"द्वादशे वा शते षट्पञ्चाशत् " इति, तदिदमाक्षिपति—**द्वादशे वा शते षट्पञ्चाशदिति किमिदं ?** इदं किल भष्यं राद्धान्ते युक्त्यन्तरमिव दर्शयति द्वादशे वा शते ऋत्विक्परिक्रयार्थे यजमानेन षट्पञ्चाशदिति दीयते, पत्न्या च षट्पञ्चाशदिति । एतच्च राद्धान्तविरोधि । एवं हि तुल्यव्यापारा यजमानेन पत्नीति द्वित्वापत्तेः एकवचनविरोधः । एकदेश्याह— **वयमपि ब्रूमः किमिदमिति** । आक्षेप्ता आह—**किमसदेवेदं ?** समाधाता आह—**न** असदिति **ब्रूमः** भाष्यानर्थक्यापत्तेः । अर्थमाह—**द्वादशे शते यदि विभागः स्यात् स्यादेतदेवं** एकवचनविरोध इति । **इह पुनः अन्य एव पत्नीव्यापार इति सहार्थतां दर्शयति न सहितार्थताम्** । अस्यार्थः—राद्धन्तवादी एवं ब्रूते यदि द्वादशे शते एकेन षट्पञ्चाशद्दीयते अपरेणापि षट्पञ्चाशद्दीयत इति दानविभागः स्यात् तदा एकवचनविरोधः स्यादित्यध्याहारः । पत्नी व्यापारस्त्वन्य एवानुमतिलक्षणः । तेन सहार्थेन पत्न्या अनुप्रवेशेन[शो न] सहितार्थेनेति । दर्शितं चेदमनुमतिलक्षणः पत्नीव्यापार इति । **अन्यतरानिच्छायां त्याग एव न संवर्तेत इति** । उपसंहरति—**तेन** श्रुत्या सहत्वस्मृतेर**विरोधात् सह कर्तव्यमित्यस्य वचनस्य अयथार्थता न शक्यतेऽवगन्तुम्** । श्रुतिविरोधे हि तथा स्यात । न चासावस्ति । **एवं च पत्नीशब्दस्समर्थितो भवति** । यदि सहप्रयोगः पत्न्या न स्यात् तदा पत्न्यधिकारो भज्येतैव । ततश्च यज्ञस्वामित्वं स्त्रिया नास्तीति यज्ञस्वामिस्त्रीविषये 'पत्युर्नो यज्ञसंयोगे' इति पत्नीशब्दोऽसमञ्जसः स्यात् । **कर्मविशेषाश्चावेक्षणादयः समर्थिता भवन्तीति** । अन्यथा हि 'पत्न्यवेक्षितमाज्यं भवति' इत्यनुपपन्नं स्यात् । **लिङ्गमुक्तम्** ।

यत्पुनरिदमुक्तं भाष्यकारेण —"तत्र श्रुतिसामर्थ्यात् यः कश्चित् यया कयाचित् स्त्रिया सह सम्भूय यजेतेति प्राप्ते इदमुच्यते यस्त्वया कश्चिद्धर्मःकयाचित्सहकर्तव्यः सोऽनया सहेति । तेन न श्रुतिविरोधोऽवगम्यते स्मृतेः" इति । अस्य कोऽर्थः ? ननु चायमेवार्थः ययाकयाचित स्त्रिया सहकर्तव्येति प्राप्ते अनयेत्युद्वाहनियमं दर्शयति ।

यद्येवमसंस्तर्ह्ययमर्थः यस्मात् कर्तृसंस्कारो विवाहो न क्रत्वर्थः । अन्यथा हि क्रतुप्रयुक्तमेव स्यात् अङ्गं च । न चैतदेवम् । कृताधानस्य ह्यधिकारं वर्णयन्ति न क्रत्वर्थमाधानमिति ब्रुवन्तः । यस्मात् [कृताधानस्याधिकारः] कृतोद्वाहस्य चाधानं अत एव संस्कारपङ्क्त्यामुद्वाहं पठति गौतमः ।

सत्यमेवमेतत् । शास्त्रार्थज्ञो भवान् कथमन्यथाऽभिधत्ते । कस्तर्हि भाष्यार्थः ? श्रूयताम् । अयमर्थः-सोऽनयेति तथापि श्रुतेरविरोध इत्यर्थः । संस्कारार्थायाः स्त्रिया न विरुध्यत इत्यर्थः । एवमपि सहत्वमनुपपन्नमिति मन्यते ।

---

यत्पुनरिदमुक्तं भाष्यकारेण—"तत्र श्रुतिसामर्थ्यात् यः कश्चित् यया कयाचित् स्त्रिया सह संभूय यजेतेति प्राप्ते इदमुच्यते यस्त्वया कश्चिद्धर्मः कयाचित्सह कर्तव्यः सोऽनया सह" इति । तेन न श्रुतिविरोधः स्मृतेरिति गम्यते इति । अस्य कोऽर्थः ? उत्तरं—ननु चायमर्थः ययाकयाचित् स्त्रिया सह कर्तव्ये-प्राप्ते उद्वाहनियमं दर्शयति इत्युच्यते । चोदयिता आह यद्येवमसंस्तर्ह्ययमर्थः यस्मात्कर्तृसंस्कारो विवाहः न क्रत्वर्थः । अन्यथाहि यदि पुरुषसंस्कारो न स्यात् क्रतुप्रयुक्तमेव स्यात् अङ्गं च । न चैतदेवम् । कुत इत्यत्राह—कृताधानस्य हि अधिकारं वर्णयन्ति न क्रत्वर्थमाधानमिति ब्रुवन्तः । यस्मात् कृताधानस्याधिकारः न पुनरधिकृतस्याग्नयः कृतोद्वाहस्य चाधानं अतो नाधिकारिणा पुरुषेण कृतत्वात् नासावङ्गं, श्रूयतामयमर्थः । यत एव च कर्तृसंस्कारोऽयं अत एव संस्कारपङ्क्त्यामुद्वाहं पठति गौतमः । परिहरति—सत्यमेवमेतत् । शास्त्रार्थज्ञो भवान् कथमन्यथाऽभिधत्ते । आक्षेप्ता पृच्छति—कस्तर्हि भाष्यार्थः ? सोऽनयेति तथापि श्रुतेरविरोध इत्यर्थः । यद्यपि कर्तृसंस्कारो विवाहः श्रुतेरेकवचनयुक्ताया न विरोधः । संस्कारार्थायाः

स्थितादुत्तरम् । अथ कस्मात् स्वामित्वं न गौणमित्याशङ्क्य अधिकाराविरोधान्न गौणं भवितुमर्हतीति राद्धान्तः । यथा चाविरोधस्तथा दर्शितम् ।

॥ ५ ॥ [1]व्याधानं च द्वियज्ञवत् ॥ २२ ॥

कथं पुनरत्र संशयः । यथैव भाष्ये । न तथोपपद्यते । भाष्ये हि उपपदगतं द्वित्वमुपन्यस्तं वसानौ इति । नचैतत् पूर्वपक्षायालं भवितुमर्हति । कुतः ? वसन्ते ब्राह्मणोऽग्नीनादधीतेत्येवमादिषु एकत्वश्रवणात् । न च लिङ्गं सङ्ख्यां अपबाधितुमर्हति उत्पत्तौ श्रवणात् । अन्यविधानाच्च ।

---

स्त्रिया न विरुध्यत इत्यर्थः । एवमपि सहत्वमुपपन्नं भवतीति मन्यते । यासौ संस्कारायोत्पन्ना पत्नी तस्या एव वचनान्तरेण सहकर्तृत्वनियम इति नानुपपन्नमित्यकिञ्चित् ।

स्थितादुत्तरं

अथ कस्मात्स्वामित्वं न गौणमित्याशङ्क्य अधिकाराविरोधान्न गौणं भवितुमर्हतीति राद्धान्तः । यदि ह्यधिकारश्रुतिर्विरुध्येत तदा तद्विरोधाद्गौणं स्वामित्वस्मरणं स्यात् । न चास्ति विरोधः । यथा चाविरोधस्तथा दर्शितम् ।

व्याधानम् । कथं पुनरत्र संशयः । उत्तरं—यथैव भाष्ये किं द्वौ पुमांसौ आदधीयातां उत एकः पुरुष इति । आक्षेप्ता आह— न तथोपपद्यते संशयः । भाष्ये हि उपपदगतं द्वित्वमुपन्यस्तम्—वसानौ इति । न चैतत् पूर्वपक्षायालं भवितुमर्हति । कुतः ? वसन्ते ब्राह्मणोऽग्नीनादधीत इत्येवमादिषु एकत्वश्रवणात् । तेन कथं द्वयोः पुंसोराधानं शक्यते वक्तुम् । ननु च पुंद्वित्वं श्रूयते वसानाविति । तेन पत्नीसद्वितीये पुंस्यनुपपत्तेः पुमांसावाधानस्येति तत्राह— न च लिङ्गं सङ्ख्यामपबाधितुमर्हति उत्पत्तौ श्रवणात् । उत्पत्तिवाक्ये श्रुतसङ्ख्या न लिङ्गेन शक्यते बाधितुम् । अथानन्यपरत्वात् वाक्यस्य लिङ्गं सङ्ख्यामपबाधत इत्यत्राह—अन्यविधानाच्च । क्षौमविधानं चावगम्यते । अतोऽन्यपरतापि शक्यते वक्तुम् । यतः प्रकृते आधाने एककर्तृविशिष्टे पुंद्वयं विधातुं न

---

1. p 1364

अत आधानान्तरं वा वक्तव्यम् क्षौमविधानार्थं वा वसानावित्यनूद्यते द्वित्वं यथा प्राप्तम् ।

ननु चास्मिन्नपि पक्षे 'आदधीयातां' इति द्विवचनं नोपपद्यते । वसानावित्यपि, वसनक्रियायाः प्रत्येकं परिसमाप्तत्वात् । एवं तर्हि भवतैव संशयोऽभिहितः । सत्यमभिहितः पक्षग्रहणं तु न शक्यते कर्तुम् । बाढ[न]शक्यते । अप्राप्तमेवेदं द्वित्वं त्वयैवोक्तम् आधाने वसने च । अप्राप्तस्य विधानादृते न शक्यते वक्तुमिति विधानमेवाश्रयणीयम् । विधीयमाने च द्वौ पुमांसौ विधातव्यौ । कस्मात्? युगपदधिकरणवचनतायां हि

---

शक्यते । अतः आधानान्तरं वा वक्तव्यम् । अथ प्रकृताधानावगमात् आधानान्तरं विधातु न शक्यते क्षौमविधानार्थं वा वसानावित्यनूद्यते द्वित्वं यथाप्राप्तं यादृशमेव द्वित्वं प्राप्तं स्त्रीपुंसविषयं तादृशमनूद्यते । क्षौमं विधीयत इति नास्ति पूर्वाशङ्का । आक्षेपान्तरं चाह— ननु चास्मिन्नपि पक्षे आदधीयातामिति द्विवचनं नोपपद्यते पूर्वं हि सहभावेन स्त्रिया अनुप्रवेशः कर्मणीत्युक्तम् - सहभावेन द्विवचनं नोपपद्यत इति तत एवोक्तम् । तेन आदधीयातामिति स्त्रियमभिप्रेत्य-द्विवचनानुवादो नोपपद्यते । तथा वसानावित्यपि नोपपद्यते द्विवचनम् वसनक्रियायः प्रत्येकं परिसमाप्तत्वात् । भिन्नयोर्वसनक्रिययोरेकैकस्य कर्तृत्वायोगात् । समाधाता— एवं तर्हि पक्षद्वयेऽपि दोषं वदता भवतैव संशयोऽभिहितः एकस्मिन् पक्षे दुष्टे अपरपक्षं समादत्ते । आक्षेप्ता आह—सत्यमभिहितः संशयः पक्षग्रहणं तु न शक्यते कर्तुम् द्वयोरपि पक्षयोर्दुष्टत्वात् । समाधाता आह—

बाढं न शक्यते कर्तुं; त्वयैवेदमभिहितं अप्राप्तमेव द्वित्वमाधाने वसने च । अप्राप्तस्य चानुवादानुपपत्तेः विधानादृते संबन्धाभावो न शक्यते वक्तुमिति विधानमेवाश्रयणीयम् । ननु च यद्यपि विधानं तथापि कथं पुंसोर्विधानं यावता स्त्रीसद्वितीयस्य किमिति विधानं न भवति इति तत्राह— विधीयमाने च द्वौ पुमांसावेव विधातव्यौ । कस्मात्? उत्तरं—युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः "युगपदधिकरणे द्वन्द्वः" इति वार्तिककारेण युगपदधिकरणवचनतायां द्वन्द्वः स्मर्यते । का पुनरियम्? उच्यते—समस्यमानानां पदानां येऽर्थाः तेषां यद्युगपत् एकेन पदेनाभिधानं[1] सा युगपदधिकरण-

---

1. भिसदनं-मा

द्वन्द्वस्मृतेः। तदपवादत्वाच्च एकशेषस्य। ततः किम्? इदं ततो भवति। द्वयोरिदमभिधानं तन्त्रेण। तत्र च द्वौ पुमांसावेव प्रतीयेते अर्थान्तरस्य वाचकाभावात्।

ननु चादधीयातामिति द्विवचनानुपपत्तिः आख्याते। भवत्वाधानान्तरं का नः पीडा? ननु च 'पुमांस्त्रिया' इत्यपि स्मरति भगवान्

---

वचनता। अधिकरणशब्देन शब्दस्य वृत्तिविषयोऽभिधीयते—यथा धवखदिरौ इति समासान्तर्गतयोः धवखदिरशब्दयोः वा .... .... न तयोरेकैकेन पदेन धवखदिरयोरभिधानम्। ननु नैतदुपपन्नम् संबन्धग्रहणानुसारेण शब्दोऽर्थमभिधत्ते। न च धवशब्दोऽर्थद्वये गृहीतसंबन्धः। यदि चार्थद्वयमभिदध्यात् तदा पदान्तरप्रयोगोऽनर्थकः। न च लक्षणयाऽर्थद्वयावगमकत्वं, अनुपपत्तिसंबन्धयोरभावात्। पदान्तरप्रयोगश्चानर्थक इत्युक्तम्। सेयं युगपदधिकरणता दुःखा च दुरुपपादा चेति। अत्राभिधीयते सहितभावे द्वन्द्वो वर्तते। समस्यमानपदानतिरेकी च समासः। तेन एकैकमेव प्रातिपदिकं सहितावस्थापन्नस्वार्थं लक्षयति। स्वरूपमात्रावस्थिते स्वार्थेऽभिधानशक्तिः शब्दस्य, अवस्थाविशिष्टावस्था लक्ष्यते। सहितभावश्चार्थान्तरेण विना न भवतीति द्वितीयपदार्थोऽपि तेनाक्षिप्यते। अतः सिद्धं युगपदनेकार्थप्रतिपादकत्वम्। अत एव च द्वन्द्वे पदद्वय(मिति)[मपि]लाक्षणिकार्थमिति वदन्ति। यश्चासावर्थो लक्ष्यते तस्य विशिष्टस्यावगतिः पदान्तरायत्तेति न पदान्तरानर्थक्यम्। तदपवादत्वाच्चैकशेषस्येति। द्वन्द्वापवाद एकशेषः वृक्षाः। यद्येवं ततः किम्? उत्तरं—इदं ततो भवति द्वयोरिदमभिधानं तन्त्रेण वसानौ इति तत्र च द्वौ पुमांसावेव प्रतीयेते। अर्थान्तरस्य वाचकाभावात्। वसानाविति तावत् औकारान्तेन शब्देन एकः पुमान् सद्वितीयोऽभिधीयते। तथा अपरोऽपि पुमानेव तन्त्रावृत्त्याऽभिधीयते। तत्र द्वितीयस्यापेक्षायां पुमानेव तन्त्राभिधानेनोपस्थापितो गृह्यते न स्त्री तस्या वाचकाभावात्। ननु चादध्यीयातामिति द्विवचनानुपपत्तिः आख्याते पुंद्वयस्योत्पत्तिशिष्टैककर्तृकविषयेऽनुप्रवेशानुपपत्तेः। परिहरति—भवत्वाधानान्तरं यद्युत्पत्तिशिष्टगुणावरोधः। का नः पीडा। एतच्चाभ्युपगम्यवादेनोक्तम्। किन्तु प्रकृताधानावगतेः अनन्यपरेण वाक्येन पुंद्वित्वमेव विधास्यते। विनियोगशेषस्य बलीयस्त्वात्। आधानोत्पत्तौ व्युत्पादनशेषभूता सङ्ख्येति। ननु च 'पुमान्-स्त्रिया' इति स्मरति भगवान् पाणिनिः।

पाणिनिः। स्मरत्येकशेषे पुंसो वचनस्य साधुतां न पुनः स्त्र्यभिधानमौकारान्तस्य। तद्दर्शितं भाष्यकारेण। ननु कथमप्राप्तावेकशेषनियम उपपद्यते। केनवोक्तमप्राप्तौ नियम इति। यदि प्राप्तौ नियमः भवतु तर्हि स्त्रीसद्वितीयता। भवतु यदि प्राप्तौ प्रमाणमस्ति। तच्च नास्तीति दर्शितम्। अतो युगपदधिकरणवाचकत्वात् द्वयोः पुंसोर्वाचकोऽयं न नियमस्य विषयः। तस्मात् द्वौ पुमांसाविति युक्तम्। कथं तर्हि क्षौमशब्दः? प्रदर्शितोऽन्वयो भाष्यकारेण।

एवं प्राप्तेऽभिधीयते। नायं द्वयोः पुंसोर्वाचक इति शक्यते वक्तुम्। कस्मात्? क्षौमपदवैयर्थ्यात् वसनाधानयोश्च प्राप्तत्वात्। ननु च

---

अस्यार्थः-यत्र स्त्रियीव स्त्रीसद्वितीयेऽपि पुंसि औकारान्तश्शब्दः साधुरिति। उत्तरं—स्मरत्येकशेषे पुंसो वचनस्य साधुतां, न पुनः स्त्र्यभिधानमौकारान्तस्य। तद्दर्शितं भाष्यकारेण अस्यार्थः-यत्र स्त्री च पुमांश्च लक्षणाविशेषशब्देनाभिधातुमिष्यते तत्र पुंवचनशब्दः शिष्यते न स्त्रीवचन इति पाणिनिना स्मृतम्। न पुनरौकारान्तशब्देन स्त्रिया अभिधानम्। तेन स्त्रीवाचकशब्दाभावात् पुमानेव द्वितोयोऽपि गृह्यते तदिदं भाष्यकारेणापि दर्शितम्। ननु च यदि पुमानेव द्वितीयोऽपि गृह्यते तदा सर्वत्र पुंसः स्त्रीसद्वितीयस्याप्राप्तेः कथमेकशेषनियम उपपद्यते? परिहरति—केनवोक्तमप्राप्तौ नियम इति? चोदयति—यदि प्राप्तौ नियमः भवतु तर्हि स्त्री सद्वितीयता। उत्तरं—भवतु यदि प्राप्तौ प्रमाणमस्ति तच्च नास्तीति दर्शितम्। अस्यार्थः-यत्र प्रमाणान्तरेण द्वितीया स्त्री प्रतीयते तत्र सैव द्वितीया। यत्र तु नास्ति तत्र शब्दाभिहितपुमानेव द्वितीय इति। इह च विधेयत्वात् द्वितीयोऽपि पुमानेव प्रतीयते। उपसंहरति—अतो युगपदधिकरणवाचकत्वात् द्वयोः पुंसो(स्तयो)र्वाचकोऽयं न नियमस्य विषय इति। पुमांस्त्रियेति पुंवचनशेषनियमस्यायं विषयो न भवतीत्यर्थः। तस्मात् द्वौ पुमांसाविति युक्तम्। यदि पुंद्वयपरमेतद्वाक्यं कथं तर्हि क्षौमशब्दो विधेयार्थः कथमन्वीयत इत्यर्थः। उत्तरं—प्रदर्शितोऽन्वयः यौगिकोऽयं क्षौमशब्दः टुक्षुशब्दे इत्यस्मान्मप्रत्ययान्तः क्षौमशब्दः क्षौमवती विचेष्टमानयोर्वाससी। गौणो वा क्षौमसदृशत्वात् तयोर्मलीमसयोरित्यन्वयो दर्शितो भाष्यकारेण।

पुंद्वित्वयुक्तमेकत्वमपि न प्राप्तमित्युक्तम् । सत्यं, पुंद्वित्वयुक्तमेकत्वमपि न प्राप्तं पुंयुक्तं तु द्वयमपि प्राप्तम् । ततः किम्? श्रूयतामिदं, तदनुवादेन क्षौमविधानं संभवति । सद्वितीयत्वं तु केवलं मृग्यम् । ननु च तदेव विधानादृते न संभवतीत्युक्तम् । न संभवति यद्याधानवसनगत एवेतरेतरयोगः परिगृह्यते । [तथैव च द्वन्द्वोत्पत्तिः अभिधानाश्रयमपीतरेतरयोगं नानुमन्यन्ते क्रियामात्रापेक्षत्वादितरेतरयोगस्य गर्गा] भोज्यन्तामिति प्रयोगदर्शनात् । देवदत्तयज्ञदत्तविष्णुमित्रा इति च प्रयोगदर्शनात् । इत्थं प्रयोगोपपत्तौ नाधानान्तरकल्पना भवितुमर्हति । नापि विशिष्टविधानं, न च क्षौम-

---

राद्धान्तमाह—एवं प्राप्तेऽभिधीयते । नायं द्वयोः पुंसोर्वाचक इति शक्यते वक्तुम् । कस्मात्? उत्तरं—क्षौमपदवैयर्थ्यात् अप्रवृत्तिविशेषकरतया क्षौमपदवैयर्थ्यात् । ननु क्षौमविशिष्टवसनं आधानं वा विधास्यते तेन नानर्थक्यं भविष्यति इति तत्राह—वसनाधानयोश्च प्राप्तत्वात् । ननु च पुंद्वित्वयुक्तमेकत्वमपि न प्राप्तमित्युक्तम् । तेन गुणद्वयश्रवणात् आधानान्तरविधिर्भविष्यति-उत्तरं—सत्यं पुंद्वित्वयुक्तमेकत्वमपि न प्राप्तम् । पुंयुक्तं तु द्वयमपि प्राप्तम् । ततः किं? श्रूयतामिदम् । ततस्तदनुवादेन क्षौमविधानं संभवति सद्वितीयत्वं तु केवलं मृग्यम् । सद्वितीयपुंविशिष्टाधानानुवादेन क्षौमविधाने संभवति सद्वितीयत्वं केवलं मृग्यम् । योऽसौ पुमान् सद्वितीयः तस्य केन सद्वितीयत्वमिति यदि परन्वेषणीयं तत्र स्त्री द्वितीया प्राप्तेति तयैव सद्वितीयत्वम् । ननु तदेव सद्वितीयत्वमेव विधानादृते न संभवति इत्युक्तम् । सहभावानुप्रविष्टा पत्नी अतुल्ययोगिनी न द्वितीया भवतीत्युक्तम् । परिहरति—न संभवति यद्याधानवसनगत एवेतरेतरयोगः परिगृह्यते । तथैव च द्वन्द्वोत्पत्तिः अभिधाश्रयमपीतरेतरयोगं नानुमन्यन्ते क्रियामात्रापेक्षत्वात् इतरेतरयोगस्य गर्गा भोज्यन्तामिति प्रयोगदर्शनात् । देवदत्तयज्ञदत्तविष्णुमित्रा इति च प्रयोगदर्शनात् । अस्यार्थः—न संभवति इतरेतरयोगः । पत्न्या सह यद्याधानवसनगत एवेतरेतरयोगः परिगृह्यते यावता अभिधानाश्रयमपि इतरेतरयोगमनुमन्यन्ते एव । येषामेकाभिधानक्रियानुप्रवेशस्तेषामपि तदपेक्षो भवत्येवेतरेतरयोगः यथा गर्गा भोज्यन्तामिति । द्विवचनप्रयोगोपपत्तौ सत्यां न प्रकृतप्रत्ययबाधनेन आधानान्तरं भवितुमर्हति । नापि विशिष्टविधानं भुजेः प्रत्येकपरिसमाप्तत्वात् । अभिधानाश्रय

शब्दस्य गौणोऽन्वयः यौगिको वाऽभ्युपगन्तुं युक्तः । तस्मात् सद्वितीय नियमप्रयोग एवायम् ।

॥ ६ ॥ [1]तस्य यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

स्थितं स्त्रीपुंसयोः सहाधिकार इति । इदमिदानीं सन्दिह्यते - किं सर्वं याजमानं सहैव कर्तव्यं यागवत् उत यजमानेनैव कृतं कृतं भवतीति ।

---

इतरेतरयोगः । तेनेहाप्यभिधानाश्रयमितरेतरयोगमाश्रित्य स्त्रीसद्वितीयत्वं ग्रहीष्यते । इत्थं प्रयोगोपपत्तौ वसानावदधीयातामिति प्रकृते चाधाने क्षौमशब्दस्य मुख्यार्थ-त्यागेन गौणान्वयो रूढिबाधेन यौगिको वा नाभ्युगन्तुं युक्तः । तस्मात् प्रमाणान्तरस्य विद्यमानत्वात् सद्वितीयनियमप्रयोग एवायम् ।

तस्या यावदुक्तम् ॥

ननु प्रयोगचिन्तेयं कथमत्र सङ्गतेत्याशङ्क्याह — स्थितं स्त्रीपुंसयोस्सहा-धिकारः इति । इदमिदानीं सन्दिह्यते । किं सर्वं याजमानं पत्न्या सहैव कर्तव्यम् यागवत् उत यजमानेनैव कृतं कृतं भवतीति । अस्यार्थः—यः पूर्वमधिकार उक्तः तस्य सहप्रयोगेन निर्वाह इति सहप्रयोग उक्तः । तस्यैवेदानीं विशेषश्चिन्त्यते । किं सर्वमेव याजमानं स्त्रिया सहकर्तव्यं यथा यागे द्रव्यत्यागात्मकः स्त्रिया सह क्रियते तथा । न च सर्वं स्त्रिया सह शक्यते कर्तुम्, सम्मानादिषु केवलस्यैव यजमानस्य कर्तृत्वम् । न हि स्त्रीव्यापारं विना पुरुषस्य सम्माने कर्तृता नोपपद्यते । ननु चानुमतिद्वारा तत्रापि स्त्रिया व्यापारो भविष्यति । मन्द ! मैवं, तत्र ह्यनुमत्या स्त्री व्याप्रियते यत्र तदनुमतिं विना पुंस एव कर्तृता नोपपद्यते यथा यागे । यत्र पुनस्तदनुमतिव्यतिरेकेणापि कर्तृता तत्र कथमनुमतिद्वारेण पत्न्याः कर्तृत्वम् । अनुमत्यापि[ति? वि]स्वव्यापारेण प्रवर्तमाने पुरुषे कीदृशीति न ज्ञायते । तस्मात् केवलयजमानकर्तृकेषु सहभावो न शक्यः संपादयितुमिति सहाधिकाराक्षेप एवायं समाधीयते । नन्वेवमपि क्षौमाधिकरणे ह्येवमाङ्क्यते सहयोगेपि द्विवचनं प्राप्नोति-यथा 'आदधीयातां' इति । अथ सहभावे द्विवचनं न मृष्यते पुंसोर्विधिस्तर्हि प्राप्नोति । तेन क्षौमाधिकरणपर्यन्तेन सहभावे द्विवचनं नास्तीति स्थापितत्वात् श्रुत्यविरोधेन सहाधिकार एव निर्वाह्यते । स इदानीमाक्षेपान्तरेणाक्षिप्य समाधीयते

---

1. 1369

**तत्र पूर्वपक्षवादी सहवचनं साङ्गकृतौ मन्वानः सह कर्तव्यतां याजमानेषु मन्यते । राद्धान्तवादी तु यत्र तावत् वचनेनैव पुंसोऽङ्गत्वं ऋत्विजामिव तत्र नैव स्त्रियाः कर्तृत्वं, यत्रापि समाख्यया प्राप्तिः तत्रान्यतरेणैव सिद्ध-मनुष्ठानमिति विदुषि संभवति न विद्वत्ता शक्यते कल्पयितुम् अन्यथाप्युप-पन्नत्वादनुष्ठानस्य । तस्मात् पुरुषार्थेषु विद्वत्ता कर्तृत्वं चेति यत्र वा प्रतिपदं विधानम् ।**

---

**किं सर्वं याजमानं पत्न्या सहैव कर्तव्यं उत यजमानेनैव कृतं कृतं भवति । इति ।** न सर्वत्र सहभावः किन्तु केषुचिदेव । इतराणि तु यजमानेनैव कृतानि [कृतानि] । तत्र पूर्वपक्षवादी सहवचनं साङ्गकृतौ मन्वानः सहकर्तव्यतां याजमानेषु मन्यते यत्कर्तव्यं तदनया सहेति स्मृत्या उच्यते । साङ्गं च कर्तव्यम्, नैकदेशः, तस्याफलत्वात् । तस्मान् सकलमेय सह कर्तव्यम् । न चैतच्छक्यते । तस्मात् सहप्रयोगाभावात् तद्बलभाविनः पत्न्यधिकारस्य दुर्घटतेति मन्यते ।

**राद्धान्तवादी तु यत्र तावत् वचनेनैव पुंसोऽङ्गत्वं ऋत्विजामिव तत्र नैव स्त्रियाः कर्तृत्वम् । यत्रापि समाख्यया प्राप्तिः तत्रान्यतरेणैव सिद्ध-मनुष्ठानमिति विदुषि संभवति न विद्वत्ता शक्यते कल्पयितुम्, अन्यथा-प्युपपन्नत्वादनुष्ठानस्य ।** अयमभिप्रायः—न प्रतिपदार्थं[1] सहभावः सहवचनेन प्रति-पद्यते, किन्तु प्रयोगः, तस्यैव कर्तव्यत्वात् । यत्कर्तव्यं तत् सह कर्तव्यमिति कर्तव्ये सहकर्तृता उच्यते । कर्ता च प्रयोगेण संबध्यते, न प्रयोज्येन, प्रयोगश्चैकस्मिन् पदार्थे सह कृते कृतो भवति पदार्थसंपत्त्यैव प्रयोगे कर्तृतोपपत्तेः । तत्र यागे ऋत्विक्परिक्रये च द्रव्यसाध्ये सहकर्तृत्वेन प्रयोगे सहकर्तृतोपपत्तेः न प्रतिपदार्थं सहभावेन प्रयोजनम् । किन्त्वेकेनापि कृते पदार्थे कृतः पदार्थ इति न पुनः कर्तव्यः । तत्रापि यत्र वचनेनैव पुंसो[ऽव]गता 'यजमानेन संमिता औदुंबरी भवति' इत्येव-मादिषु, यथा ऋत्विजां, तत्र स्त्रिया नैव कर्तृत्वम् । यत्रापि यजमानसमाख्यया प्राप्तिः समाख्यया लिङ्गविशेषानवधारणेऽपि तत्रापि विद्वत्साध्ये विदुषि पुरुषे संभवति अविद्यायाः स्त्रिया नैव कर्तृत्वम् । ननु यद्यसौ तत्र कर्त्री न भवति कथं तत्राधिकार-सिद्धिरिति अत्राह—**अन्यथाप्युपपन्नत्वादनुष्ठानस्य ।** यथावबो[2]धितानुष्ठानसिद्धौ

---

1. प्रातिपादिकार्थ-मा 2. बोधिकानु-मा

॥ ७ ॥ [1]चातुर्वर्ण्यमविशेषात् ॥ २५ ॥

ननु चात्र भेदं चिन्तयता त्रमाणामेवाधानमित्युक्तं द्वितीयाध्याये ।

नचानाहिताग्नेरधिकारः संभवति । कृताधानस्य विद्यमानत्वात् । अतः किमनेनाधिकरणेन । अत्रोच्यते । [अभ्युपगम्याप्यनधिकारं वक्तुं निमित्तार्थतया आधानश्रुतीनां अत्रैवर्णिकानामाहिताग्नित्वमभ्युपगम्याप्य-विद्वत्तयाऽनधिकारं वक्तुं] शूद्रस्येदमधिकरणमारभ्यते । तथा च दर्शयति यद्यपि निमित्तार्थान्याधानश्रवणानि तथाप्यनधिकारः शूद्रस्येति । किं पुनरन्वारुह्यवादस्य प्रयोजनम् ? उच्यते । इदमस्ति प्रयोजनं उपनयनेप्य-

---

हि अधिकारस्सिध्यति । सहवचनेनैव सहप्रयोग:[गं]प्रतिपादयता एकमेव पत्नी.... यजमान बोधिका । तत्र यजमानेनाधि[पि]कृतं कृतमिति सिद्धत्येव पत्न्यधिकारः । तस्मात् पुरुषार्थेषु विद्वत्ता कर्तृत्वं चेति । यत्र वा प्रतिपदविधानं अन्येन कृतेऽन्यस्य संस्काराभावात् अधिकारसंस्कारेषु [2]स्त्रियाः कर्तृत्वम् । यत्र पुनः साक्षात्कर्तृत्वं विहितं तत्रापि विद्वत्ता कर्तृत्वं चेति । ननु चैवं तत्र विद्याप्रयुक्तिप्रसङ्गात् अधिकार एव स्त्रिया न युक्तः । उच्यते । सहवचनेन स्त्रियास्तावदधिकारः शृङ्गग्राहित्वेन प्रतीयत एव । तं प्रति प्रयुक्तिकल्पना न दोषः ।

॥ चातुर्वर्ण्यम् ॥

ननु चात्र भेदं चिन्तया त्रयाणामेवाधानमित्युक्तं द्वितीयाध्याये । आधानभेदगतं चिन्तयता सूत्रकारेण त्रयाणामेव वर्णानामाधानमित्युक्तम् । न चानाहिताग्नेरधिकारः संभवति कृताधानस्य त्रैवर्णिकस्य कृत्स्नानुष्ठानसमर्थस्य विद्यमानत्वात् । अतः किमनेनाधिकरणेन ? अत्रोच्यते । अभ्युपगम्या-प्यनधिकारं वक्तुं निमित्तार्थतया आधानश्रुतीनां अत्रैवर्णिकानां आहिताग्नि-त्वमभ्युपगम्यापि अविद्वत्तयाऽनधिकारं वक्तुं शूद्रस्येदमधिकरणमारभ्यते । तथा हि दर्शयति—यद्यपि निमित्तार्थान्याधानश्रवणानि तथाप्यनधिकार-श्शूद्रस्येति । भाष्यकारो नैमित्तिकेष्वपि तेषु शक्यत एव शूद्रपर्युदासो वक्तुमि-

---

2. 1376

1. क्रियाकर्तृत्वं-मा

b 10

नधिकारप्रदर्शनम् । यद्येवमुपनयनमेवोदाहरणीयम् । न तदुदाहर्तुं शक्यते । किमिति ? ब्राह्मणस्य हि श्रूयते 'अष्टवर्षं ब्राह्मणमुपनयीत' इति । उपनीयाध्येतृत्वं आचार्यकरणविधिप्रयुक्तम् न स्वातन्त्र्येणोदाहर्तुं शक्यते । अप्रयोजकत्वात् स्वतः । न चार्थज्ञानकामस्य तदित्युक्तम् । कस्मात् ? उपनयनाध्ययनयोः [स्वतो निरधिकारत्वात्] अधिकरणान्तरमुखेनैवात्र विचारः शक्यते कर्तुमिति सूक्तम् । अत एव भाष्यकारेण एतत्प्रधानमेतदधिकरणमिति दर्शयता ज्योतिष्टोमादिषु अनाहिताग्नितयैवानधिकार इत्युपसंहृतम् ।

---

त्यनेनैव ग्रन्थेन । किं पुनरन्वारुह्यवादस्य प्रयोजनम् ? अयमभिप्रायः-शूद्रस्यानधिकारः प्रयोजनम् । तत्तु अनाहिताग्नितया सिद्धमेवेति किमपरेण कारणान्तरेण उक्तेन । उच्यते । इदमस्ति प्रयोजनम् उपनयनेप्यनधिकारप्रदर्शनम् उपनयनेप्यनधिकारं प्रदर्शयितुमभ्युपगमः । उपनयनेऽनधिकारस्य च प्रयोजनं अनग्निसाध्येषु मन्त्रवत्कर्मसु शूद्रस्यानधिकारप्रदर्शनम् । यद्यु(प्यु)पनयनेऽनधिकारप्रदर्शनार्थमेतत् तदा उपनयनमेवोदाहरणीयम् । (श्रूयते)तत्किं शूद्रस्यापि भवति नेति न शक्यते चिन्तयितुम् - उपनयने शूद्रस्याधिकारो विद्यते नेति । परिहरति—न तत् उदाहर्तुं उपनयनं न शक्यते । किमिति ? ब्राह्मणस्य हि श्रूयते—अष्टवर्षं ब्राह्मणमुपनयीत इति ब्राह्मणस्योपनयनं श्रूयते । तत्किं शूद्रस्यापि भवति नेति [न]शक्यते चिन्तयितुम् साक्षात् ब्राह्मणाभिसंबन्धित्वेन श्रवणात् । किञ्च सिद्धान्तेऽपि उपनीयाध्यापनं चाचार्यकरणविधिप्रयुक्तं न स्वातन्त्र्येणोदाहर्तुं शक्यते अप्रयोजकत्वात् स्वतः। अत्रोच्यते । यदि उपनयनेऽध्ययने वा किं शूद्रस्याप्यधिकारो विद्यते अथवा त्रैवर्णिकानामेवाधिकार इति चिन्त्यते, तदा राद्धान्ते त्रैवर्णिकानामेवाधिकार इति वर्णयितव्यम् । न च ...युक्तम् । स्वातन्त्र्येणाधिकाराभावादुभयोः यस्मात् द्वयमप्येतत् आचार्यकरणविधिप्रयुक्त(ता)तया परप्रयुक्तानुष्ठानस्य लब्धत्वात् निरधिकारत्वमुभयोः । कस्मात् पुनः अर्थज्ञानकाम एवाधिकारी न भवतीति अत्राह–नचार्थज्ञानकामस्य तदित्युक्तम् अर्थवादाधिकरणे अध्ययनविरोधेन च । कस्मात् ? उपनयनाध्ययनयोः स्वतो निरधिकारत्वात् अधिकरणान्तरमुखेनैवात्र विचारश्शक्यते कर्तुमिति सूक्तम् । यत एव

शूद्रस्योपनयनेऽनधिकारप्रदर्शनार्थमिदमधिकरणं **अत एव भाष्यकारेण एतत्प्रधान-मेतदधिकरणं दर्शयित्वा ज्योतिष्टोमादिषु अनाहिताग्नितयैवानधिकार इत्युपसंहृतम्।** अस्यार्थः-अस्मिन्नधिकरणे उपनयने शूद्रस्यानधिकार इति प्रतिपाद्यते। ज्योतिष्टोमादिषु अग्निसाध्येषु अनाहिताग्नितयाप्यनधिकारस्सिद्ध्यत्येव। तदर्थमिदमधिकरणं न भवतीति दर्शयता भाष्यकारेण ज्योतिष्टोमादिषु अनाहिताग्नितयाप्यनधिकार इत्युक्तमन्ते।

इदमत्राधिकरणे विचार्यते - किमुपनयनमध्ययनाङ्गं उत आचार्यकरणविध्यङ्गमिति। यद्यध्ययनाङ्गं तदा कामश्रुतिप्रयुक्तमध्ययनं शूद्रस्यापि कामश्रुतिष्वधिकारः। अथाचार्यकरणविध्यङ्गमुपनयनं तदा आचार्यविधिप्रयुक्तमध्ययनं त्रैवर्णिकानामेव कामश्रुतिष्वधिकार इति। तत्र पूर्वपक्षवादी मन्यते - स्वाध्यायोऽध्येतव्य इत्यस्य सन्निधौ श्रुतं अष्टवर्षं ब्राह्मणमुपनयीतेति उपनयनं चोपनीयमानसन्निधानकारकतया तदर्थं प्रतिभाति। तस्य च कार्याकाङ्क्षाऽस्ति। किमनेनोपनयनसहकृतेन कर्तव्यमिति। तथा स्वाध्यायोऽध्येतव्य इति कर्त्रपेक्षास्ति। तेनोपनीत एवाध्ययने कर्ता। अध्ययनं च विद्याप्राप्त्यर्थम्। प्राप्तया च विद्यया कामश्रुतिषु विद्यासाध्यासु प्रयोजनम्। अतः कामश्रुतय एव विद्यां प्रयुञ्जाना अध्ययनं उपनयनं च तदङ्गभूतं प्रयुञ्जते। अनुपात्तविद्यानां च कामश्रुतिषु विद्याप्रयोजिकासु अधिकार इति कामित्वाविशेषात् शूद्रस्याप्यधिकारः स्यात्। स चाधिकार उपनयनपर्यन्त इति। उपनयने चाप्यधिकार इति स्वामित्वं शूद्रस्य। ननु चात्मनेपदप्रयोगात् उपनयीतेति तस्याचार्यकरणे वर्तमानादुपनयतेर्विधानात् आचार्यकरणविध्यङ्गमेवोपनयनं प्रयुञ्जान आचार्यकरणविधिः अध्ययनमपि प्रयोक्ष्यते। उपनयनस्य हि उपनीयमानासत्तिद्वारेणाचार्यकरणविध्युपकारकता स्यात् अध्यापनेन चाचार्यो भवति। न चाध्यापनमध्ययनं विना भवति। प्रतीयते चोपनीतकर्तृकमध्ययनं तेनाध्ययनं कुर्वाणमेव माणवकमुपसादयत् उपनयनमङ्गमिति भवति अध्ययनं प्रति आचार्यकरणविधेः प्रयुक्तिः। ततश्च येषामेवोपनयनं तेषामेवाध्ययनं तेषां विद्यावतामधिकार इति शूद्रस्यानधिकार इति।

उच्यते। स्यादेतदेवं यदि आत्मनेपदादाचार्यविध्यर्थता उपनयनस्यावगम्यते। किन्त्वाचार्यकरणसंपत्तिः। सा पारार्थ्येनाप्युपपद्यत एव। कथं पुनरुपनीयमानमाणवकार्थता उपनयनस्यावगम्यते? तदासत्तिफलत्वात्। योऽपि हि आचार्यकरणविध्यर्थतामुपनयनस्याह[तस्यापि] गम्यते किन्त्वाचार्यकरणसम्पत्तिस्सा परार्थेन सोऽपि माणवकासत्तिफलकमेव तदिच्छति। गतमेव तत्फलं तस्यैव। यस्यैव च

॥ ८ ॥ [1]त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धत्वात् ॥ ३९ ॥

ननु च द्रव्यं न प्रयुङ्क्ते कर्मविधिरित्युक्तम् तस्मादधिकारे न घटत एवेयं चिन्ता यथास्थिते कर्मभेदेऽनाहिताग्नेः। न चान्यत् प्रयोजनमस्ति उपनयनवत्। अतः न शक्यमेवेदमधिकरणमधिकारचिन्तायाम्।

---

यत्कर्म तत्तदर्थमेव तद्युक्तं प्रत्यासत्तेः न पुनराचार्यार्थम्। एवं चोपनयनं तदङ्गमेव। तेन च माणवकस्य संस्कारोऽनर्थः अध्ययनविध्यविद्यमानत्वात्। न चाध्ययनमनर्थकं कामश्रुतिप्रयुक्तत्वात्। अतोऽध्ययनाङ्गत्वादुपनयनस्य कामश्रुतिप्रयुक्तमध्ययनस्य शूद्रस्याधिकारो मन्त्रवत्स्वपि कर्मस्विति।

राद्धान्ती त्वाह—अष्टवर्षं ब्राह्मणमुपनयीतेति आत्मनेपदश्रवणात् आचार्यकरणसंपादकमुपनयनं उपनीयमानासत्तिलक्षणकारकफलमवगम्यते। ततश्चोपनयने आचार्यकरणस्य युज्यत एव कर्तृत्वं, एककर्तृक[त]या आचार्यकरणोपनयनयोरङ्गाङ्गिभावोऽवगम्यत इति आचार्यकरणविध्यर्थमेवोपनयनम्। यच्च यस्याङ्गं स एव तत् प्रयोजयति इति आचार्यकरणविधिप्रयुक्तमुपनयनं तन्मुखेनाध्ययनं च। ततश्चान्यविधिप्रयुक्तविद्यालाभात् काम्यश्रुतयो न विद्याङ्गं प्रयुञ्जते इत्याचार्यकरणविध्यङ्गत्वात उपनयनस्य च तत्प्रयुक्तत्वात। अध्ययनविधिभ्यः शूद्रस्य मन्त्रवत्स्वनधिकारो विद्याविरहादिति स्थितम्।

॥ त्रयाणाम् ॥

ननु च द्रव्यं न प्रयुङ्क्ते कर्मविधिरित्युक्तम्। तस्मादधिकारो[रे] न घटत एवेयं चिन्ता। यथास्थिते कर्मभेदेऽनाहिताग्नेः। अस्यार्थः—चतुर्थाध्याये इदमुक्तम् कामश्रुतयो द्रव्यं न प्रयुञ्जत इति। तेन अद्रव्यः किं अधिक्रियते नेति चिन्तैवेयं नोपपद्यते राद्धान्तस्यासंभवात्। यदि हि अद्रव्योऽप्यधिक्रियते तदा अधिकारे सति विधयोऽपि द्रव्यार्जनं प्रयुञ्जीरन्। न च प्रयुञ्जत इति स्थितम्। अतोऽद्रव्यस्याधिकारो नास्तीति फलतः चतुर्थे प्रतिपादितम् जीवनार्थोपायार्जितद्रव्य एवाधिक्रियत इति अर्थादुपपद्यते यतः। यथा द्वितीये कर्मभेदे स्थिते प्रापकेषु आधानविधिषु सत्सु अनाहिताग्नेरधिकारे निरस्ते शूद्रस्याधिकारचिन्ता घटते तथेयं

---

1. p 1381

उच्यते। यत एव द्रव्यं न प्रयुञ्जते कर्मविधयः अत एवेयमधिकारे चिन्ता उपपद्यते। कथं–किमनाहिताग्निमिव कर्मश्रुतयः शक्नुवन्ति अद्रव्यं निरसितुं उत नेति। अत्र पूर्वपक्षवादिनोऽभिप्रायः अनाहिताग्निमिव अद्रव्यं द्रव्योपादानमनाक्षिपन्त्यः कर्मश्रुतयः न शक्नुवन्त्यधिकर्तुमिति। तस्माद-नधिकारोऽद्रव्यस्येति।

अत्राभिधीयते। न शक्यत एतदनाहिताग्निमिवाद्रव्यं निरूपयितुम्। तत्र हि शूद्रादिजातिरवच्छेदिका विद्यते। इह पुनः आदान[म]नियतं कदा-चिदुपादत्ते कदाचिन्नोपादत्ते स एव। तस्मान्नैकान्ततो निरासस्संभवति।

---

चिन्ता न घटत इति वैधर्म्यदृष्टान्तोऽयम्। कथं तथा न घटत इत्यत्रोच्यते— न चान्यत् प्रयोजनमस्ति उपनयनवत् चशब्दो हेतौ। यथा पूर्वाधिकरणे उपनयनं प्रयोजनमस्ति तथेह प्रयोजनं नास्ति येन क्रत्वाचिन्तान्यायेन चिन्ता स्यात्। अतः न शक्यमेवेदमधिकरणं अधिकारचिन्तायाम्। समाधत्ते—उच्यते यत एव द्रव्यं न प्रयुञ्जते कर्मविधयः अत एवेयमधिकारे चिन्तोपपद्यते। यदि कर्मविधयो द्रव्यं प्रयुञ्जत इति स्यात् तदाऽद्रव्यस्याधिकारोपपत्तेः पूर्वपक्षाभा-वात् नेयमधिकारचिन्तोपपद्यते। यतस्तु द्रव्यार्जनं कर्मविधयो न प्रयुञ्जते अत एवेयं पूर्वपक्षसंभवेन चिन्तोपपद्यते। कथं? किमनाहिताग्निमिव कर्म-श्रुतयः शक्नुवन्ति अद्रव्यं निरसितुं उत नेति यथा अनाहिताग्निं कर्मश्रुतयः निरस्यन्ति तथा किमद्रव्यं निरस्यन्ति उत नेति। किं पुनर्निरासे बीजमिति अत्राह द्रव्योपादानमनाक्षिपन्त्य इति। यदि द्रव्योपादानं(मा)नाक्षिपन्ति ततः पूर्वोपात्त-द्रव्यमधिकुर्वते अन्यथा द्रव्योपादानाक्षेपप्रसङ्गात्। तत्र पूर्ववादिनोऽभिप्रायः- अनाहिताग्निमिवाद्रव्यं द्रव्योपादानमनाक्षिपन्त्य कर्मश्रुतयः अधिकर्तुं न शक्नुवन्ति इति। तस्मादनधिकारोऽद्रव्यस्येति।

अत्राभिधीयते—न शक्यत एतदनाहिताग्निमिव अद्रव्यं निरूप-यितुम्। अस्यार्थः- स्वाभाविकी शक्तिरधिकारिविशेषणं; अद्रव्यस्यापि च द्रव्यसाध्यकर्मानुष्ठानशक्तिरस्ति अद्रव्यस्यापि द्रव्यं भवत्येव। यदि पुनरेवं निरूपयेत् अस्य द्रव्यं न भवत्येवेति तदाऽत्यन्तमशक्यत्वादद्रव्यस्यानधिकारः स्यात्। यथा

अधिकृतस्य जीवनायेव कर्मणोऽप्युपादानं प्राप्तम् । ननु चोपादानशेषनिरासः एवं सत्युद्धृतो भवति । नोद्ध्रियते । निमित्तत्वेन हि अस्माभिरिदमुच्यते न शेषितया । अत एव तत्राप्युक्तं – कर्मा[र्थमपि]र्जितमपि आर्जितो व्रीहिरेव । इहापि चोक्तं जीविष्यति विनाधनेनेत्यनुपपन्नमिति । किमनेनोक्तम् ? इदमनेनोक्तं अनियतमिदमुपादानं न निरासायालमिति । तस्माज्जीवनायेव कर्मणोऽप्युपादाने यत्नः कार्यः ।

---

शूद्रस्याग्निविरहिणोऽत्यन्ताशक्तेरनधिकारः । तत्र हि शूद्रादिजातिरवच्छेदिका विद्यते एवं जातेरग्नयो न सन्तीति इह पुनः आदानमनियतं कदाचिदुपादत्ते । कदाचिन्नोपादत्ते स एव । तेन स्वाभाविकी पुरुषाणां द्रव्यताशक्तिरस्ति । तस्मान्नैकान्ततो द्रव्यनिरासस्संभवति । तेन स्वाभाविकी शक्तिः[अ]द्रव्यस्यापि तावदधिकारोऽस्ति । अधिकृतस्य जीवनायेव कर्मणोप्युपादानं प्राप्तं युक्तमित्यर्थः । ननु चोपादानशेषनिरासः चतुर्थाध्यायोक्तः एवं समुद्धृतो भवति । परिहरति-नोद्ध्रियते । निमित्तत्वेन हि अस्माभिरिदमुच्यते । न शेषितया प्रयोजनभूततया पुरुषस्य जीवनमिव द्रव्योपादाने कर्मापि निमित्तं न पुनरेतदेव शेषीत्यर्थः । यत एव शेषता द्रव्यार्जननियमस्य नेष्यते अत एव तत्राप्युक्तम् कर्मार्जितमपि आर्जितो व्रीहिरेव । इहाप्युक्तम् जीविष्यति विना धनेनेत्यनुपपन्नम् इति । चतुर्थे ह्येवमुक्तम् व्रीहिभिर्यजेतेति व्रीहिमात्रमङ्गतया विधीयते, न पुनः प्रतिग्रहाद्यपि । तेन कर्मार्थमपि लौकिकभोजनकर्मार्थमपि यदि व्रीहिरुपार्ज्यते तदा व्रीहिभिर्यागो भवत्येव तेन वैगुण्यं नास्ति । तथा अत्रैवाधिकरणे उक्तं 'जीविष्यति विना धनेनेत्यनुपपन्नं' इति । तेन जीवनोपार्जितेन यक्ष्यत इत्युक्तम् । ननु चेदमयुक्तं—जीविष्यति विना धनेनेत्यनुपपन्नमिति । एतत्किलानेनोक्तम् । यो जीवेत्तस्य जीवनानुपपत्त्या द्रव्यमस्ति तेन यागः करिष्यत इति । तच्चानुपपन्नम् – द्रव्येणापि विना प्रतिनियतकर्मकाले जीवनसंभवात् । तथा कत्वनङ्गेनापि द्रव्येण कोद्रवादिना जीवनोपपत्तेः । तथापि केनापि जीवतो नावश्यं द्रव्यमस्ति तेन निर्विषयमेवेदमधिकरणमिति पृच्छति—किमनेनोक्तम्—इति । उत्तरं-इदमनेनोक्तम् अनियतमिदमुपादानं न निरासायालमिति । एतदुक्तं भवति-जीवतो धनाभाव इत्यनुपपन्नम् । व्यभिचारात् तेनानियतमुपादानम् । अतोऽद्रव्यस्यापि शक्तिरस्तीति नाधिकारनिरासः । अधिकर-

॥ ९ ॥ [1]अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥

किंधर्मा ? अद्रव्यधर्मेत्यर्थः। स एव हि कदाचिदङ्गहीनो भवति कदाचित् कल्याणाङ्गः। तस्मादधिकृतेन सता चिकित्सादिषु यत्नः कार्यः द्रव्योपादानवत्।

---

णार्थमुपसंहरति—तस्माज्जीवनायेव कर्मणोप्युपादाने यत्नः कर्तव्यः। अद्रव्यस्याधिकारो[रे]द्रव्यार्जनप्रयोक्तृत्वं कर्मणां प्रसज्यते। तच्चतुर्थे निराकृतमिति पूर्वःपक्षः। अद्रव्यस्याधिकारे चतुर्थोक्तविरोधो नास्ति। शेषता हि तत्र प्रतिषिद्धा न पुनः प्रयोजनतापि भोजनादिवत् प्रयुक्तिरिति राद्धान्तः अद्रव्यस्य स्वाभाविकी शक्तिरस्तीत्यधिकारो युक्त(मे)एवेति सिद्धमेतत्। स्वाभाविकशक्तिप्रतिपत्त्यर्थमेव चात्र नियतता द्रव्यवत्ताया उक्ता।

॥ अङ्गहीनश्च ॥

पूर्वपक्षमाह—किंधर्मा ? - अस्यार्थः - न तावत् अद्रव्यधर्मा शक्यते वक्तुं अकल्याणाङ्गः। यस्मात् अद्रव्यस्यापि द्रव्यसंभवयोग्यता द्रव्यवत्ताकालवदविशिष्टा, अकल्याणाङ्गस्य तु रोगवत्तयाशक्तिरपगतैव।

औषधादिप्रयोगे पुनः शक्तिरुत्पाद्य इति तस्यामवस्थायां शक्तिरुपगतेति नाद्रव्यतुल्यता। तस्मान्न ज्ञायते किंधर्मा अङ्गहीन इति। राद्धान्तमाह—अद्रव्यधर्मेत्यर्थः। स एव हि कदाचिदङ्गहीनो भवति कदाचित् कल्याणाङ्गः। अस्यार्थः—यो न रोगेण कार्यं प्रति व्यापृतः स एव तस्य चिकित्सायां सत्यां पुनः कार्यं कुर्वन्नुपलभ्यते। तथा च रोगेण नैव शक्तिः नाशितेत्यवगम्यते। चिकित्सायां सत्यां कार्यदर्शनात्। तेन शक्तेः सत्या एव प्रतिबन्धभूतो रोगः चिकित्सयाऽपनीयत इति कल्प्यते। कःपुनर्निश्चयः नाशोत्पादौ न स्तः प्रतिबन्धापगमावेव केवलौ इति ? उच्यते। विनाशो नाम आत्यन्तिकोपलब्धिविच्छेदः। स च शक्तेर्नास्ति पुनः कार्येणोपलम्भात्। उत्पादोप्यत्यन्तानुपलब्धस्य पुनरुपलंभनशक्तिः। प्रागत्यन्तानुपलब्धरोगस्य पुरतः कार्येणैवोपलम्भात् इति। ततश्च तिरोहितशक्तेरपि

---

1. p 1382

॥ १० ॥ अत्र्यार्षेयस्य हानं स्यात् ॥ ४२ ॥

ननु किमिदं भिन्नं वाक्यमुत एकमिति चिन्तनीयम् । तच्च शास्त्रभेदाभेदोपयोगि नाधिकारोपयोगि । सत्यमेवम् । स तु भेदाभेदोऽप्यधिकार एव विशेषमादधाति इत्यधिकार एव चिन्त्यते । तत्र पूर्वः पक्षः कल्प्यत्वाद्विधेः अगृह्यमाणविशेषत्वाच्च यावत्सङ्ख्या कल्पनेति । एवं प्राप्तेऽभिधीयते । न यावत्सङ्ख्यं कल्पना भवितुमर्हति । कुतः ? परस्परसंबन्धावगतेः संख्याशब्दानाम् । तत्र यस्याः संख्याया विधौ कल्प्यमाने न एकवाक्यता अपैति तद्विधीयत इति न्यायकल्पना ।

---

शक्तिरस्तीति युक्त एवाधिकारः इत्यद्रव्यधर्मैव चिकित्स्यरोगः : तस्मादधिकृतेन सता चिकित्सादिषु यत्नः कर्तव्यः द्रव्योपादानवत् । यस्य पुनरप्रतिसमाधेयैवाकल्याणाङ्गता [स]शक्यते नाधिकृत इति वक्तुं शूद्रवत् । शक्तिनाशश्च आत्यन्तिकोपलम्भविच्छेदः । यथाहि तत्र शूद्रत्वं निरासहेतुः नित्यावगम्यत्वात् तद्वदप्रतिसमाधेयत्वमपीति तुल्यम् । यथा शूद्रस्याशक्तिः अत्यन्तमनपायात् जातेः तथानष्टशक्तिकाङ्गयोगित्वमपीति । यदा पुनः प्रवृत्तयाग एवाङ्गैर्हीयते तदा कथं ? यागं कुर्वाणस्य(कस्य) अकल्याङ्गता वर्तते यदा तदा चिकित्साया अभावात् कथमधिकार इति । य एव द्रव्येऽप्युपायः स एवात्रापि भविष्यति यथा प्रवृत्तप्रयोगमध्य एव यो द्रव्यरहितः तस्य यथाऽधिकारोऽनपगतः तथाऽकल्याणाङ्गस्यापीति भावः । स चाभ्युपायः प्रतिनिधावुपदिश्यते ।

॥ अत्र्यार्षेयस्य ॥

ननु किमिदं भिन्नं वाक्यं उत एकमिति चिन्तनीयम् । अत्र किल भाष्यकारः प्रथमं तावदिदं चिन्तयति 'आर्षेयं वृणीते' इति सामान्येत विधिः तेन प्राप्तान्येकस्य द्वयोस्त्रयाणां च वरणानि एकं वृणीते इत्यादिभिः प्रदर्श्यन्ते । तथा 'न चतुरो वृणीते' 'न पञ्चातिप्रवृणीते' इत्याभ्यां चतुर्णां अतीतपञ्चानां च वरणं प्रतिषिध्यत इति पूर्वः पक्षः राद्धान्तस्तु आर्षेयं वृणीते इत्यार्षेयवरणचोदना । त्रीन् वृणीते इति तत्रैव सङ्ख्याविधानम् । 'एकं वृणीते' इति चावयुत्यानुवादः । 'न चतुरो वृणीते' न पञ्चातिप्रवृणीते' इति नित्यानुवाद इत्येतत्तावदत्र न चिन्तनीयम् । कुतः ? अर्षेयं वृणीते इत्युक्ते द्वयोस्त्रयाणां च वरणं प्राप्तमेव । उपा-

दानशेषत्वादेकसङ्ख्यायाः। तेन द्वित्वस्य त्रित्वस्य चावश्यं विधेयत्वमेव युक्तम्। तयोश्च विहितयोरेकत्वस्य प्राप्तिर्नास्तीति तदपि विधेयम्। तथा एकत्वद्वित्वबहुत्वानां विधानतो विनियोगशेषत्वात् चतुरादीनां प्रसक्तिरेव नास्तीति कथं प्रतिषेध इति। तस्मादिदमत्र चिन्तनीयम्—आर्षेयवरणे चोदिते किमेकत्वादीनि त्रीण्यपि विदधति भिन्नान्येतानि। [नि] योगशेषत्वात् चतुरादीनां प्रसक्तिरेव नास्तीति कथं प्रतिषेध इति। तस्मादिदं शास्त्राणि उत त्रित्वविधायकमेकमिदं शास्त्रमिति। तत्रावयुत्यानुवादे 'एकं वृणीते' 'द्वौ वृणीत इति तस्यैव स्तुत्यर्थौ। तथा च न चतुरो वृणीत इति लाघवेन स्तुत्यर्थो नित्यानुवाद इति। तथा चैतदेव दर्शयन् भाष्यकारश्चोदयति—"ननु चैकं वृणीत इत्यपि विशेषवचनमस्ति" इति प्रथमं यद्भाष्यकारेणोपन्यस्तं तत् मन्दाप्याशङ्का निराकरणीयेत्यनेनाभिप्रायेण। तस्मात् किमिदमेकं उत भिन्नमिति चिन्तनीयम्। **तच्च शास्त्रभेदाभेदोपयोगि, नाधिकारोपयोगि**। तेन लक्षणसङ्गतिर्नास्तीत्यर्थः। समाधत्ते—**सत्यमेवं स तु भेदाभेदोऽप्यधिकार एव विशेषमादधाति इत्यधिकार एव चिन्त्यते**। अस्यार्थः—यद्यपि शास्त्रभेदाभेदावपि भवतः तथाप्यधिकारलक्षण एवेयं चिन्तोचिता। यस्मात् भेदे सति एकार्षेयस्य चाधिकारो भवति अभेदे तु त्र्यार्षेयस्यैवेति। एवं सति भवति मनुवत् भरतवत् अमुकवत् इति यजमानस्यार्षेयं वृणीतेति। तेनैवं प्रयोगकाले यजमानस्यार्षेयाणि वरणीयानि-मनुवत् भरतवत् शाण्डिल्यवत् असितवत् देवलवत् अयं देवदत्तशर्मा यजत इति। तत्र यस्य यावन्त आर्षेयाः तावन्तस्तस्य वरीतव्याः। तत्र एकत्वद्वित्वयोरपि विधिः स्यात्, तदैकार्षेयद्व्यार्षेयाणामपि अधिकारो भवति आर्षेयवरणाङ्गोपसंहारे समर्थत्वात्। आर्षेयवरणं हि कथंभावावस्थया विहितं स्यात् न समुच्चयेन, असंभवात्। यो हि एकार्षेयो यजमानः तस्यैकार्षेयवरणं विहितम्। द्व्यार्षेयत्र्यार्षेययोस्तु यथायथं द्व्यार्षेयत्र्यार्षेयवरणं न पुनः सर्वेषामेव सर्वाणि वरणानि विहितानि, तथाविधस्य यजमानस्यासंभवात्। यदा पुनः त्रित्वमेव केवलं विधीयते तदा त्र्यार्षेयाङ्गयुक्ते कर्मणि त्र्यार्षेय एव यजमानोऽधिकारी स्यात् इत्यधिकारविशेषापादकत्वात् **यावत्सङ्ख्याकल्पनेति**। अस्यार्थः—एकं वृणीते इत्येवमादीनां लडन्तत्वात् साक्षाद्विधिर्न श्रूयते। न च विधिमन्तरेण त्रित्वादीनामनुवादत्वेनोपपत्तिरिति वचनानि स्वपूर्वत्वादिति **विधिः कल्पयितव्यः**। न च कश्चिद्विशेषोऽस्तीति **यावत्सु सङ्ख्या** तावत्सु **विधिरेव कल्पयितव्यः**। **इत्येवं प्राप्तेऽभिधीयते। न यावत्सङ्ख्यं विधेयकल्पना**

ननु च युक्तं न चतुरो वृणीते न पञ्चातिप्रवृणीते इति त्रिषु विधीयमानेषु अनुवादोपपत्तेः एकवाक्यत्वं; विधानाभावादेव वरणाभावस्य प्राप्तस्यानुवादः एकं द्वौ इति तु नानुवादो घटते इति अप्राप्तत्वात् भिन्नान्येवैतानि वाक्यानीत्युक्तम् । अत एव पञ्चानां वरणं न्याय्यमेवेति मन्यामहे । इत्थं न नञोऽनुवाद उपपन्नतरो भवति । अत्रोच्यते—उक्तमस्माभिः सकलपदैकवाक्यता । ननु च एकं द्वौ इत्यनुवादासंभवात् अनुपपन्नैवेत्युक्तम् । उत्तरं—न नाम त्रिष्वनुवादः[1] न च सङ्ख्या सङ्ख्यान्तरे

---

भवितुमर्हति । कुतः ? परस्परसंबन्धावगतेः । यदि परस्परसंबन्धः सङ्ख्याशब्दानां न स्यात् तदा बहवो विधयः कल्प्येरन् । अवगम्यते तु परस्परसंबन्धः । तत्र यस्याः सङ्ख्याया विधावाश्रीयमाणे नैकवाक्यताऽपैपि तद्विधीयत इति न्यायात् त्रिषु च विधीयमानेषु अनुवादोपपत्तेरेकवाक्योपपत्तेरिति । अत्र चोदयति—ननु च युक्तं 'न चतुरो वृणीते' 'न पञ्चातिप्रवृणीते' इति त्रिषु विधीयमानेषु अनुवादोपपत्तेः एकवाक्यत्वं विधानाभावादेव वरणाभावस्य प्राप्तस्यानुवादः 'एकं' 'द्वौ' इति तु नानुवादो घटते । अप्राप्तत्वाद्भिन्नान्येतानि वाक्यानीत्युक्तम् ॥ अत एव पञ्चानां वरणं न्याय्यमेवेति मन्यामहे । यदि ह्येकवाक्यत्वं भवेत् तदा 'न चतुरो वृणीते' 'न पञ्चातिप्रवृणीते' इति अनावृत्तवाक्यश्रवणात् पञ्चानां न वरणं कल्प्येत । यदि कल्प्येत तदा तदर्थमपि वाक्यशेषस्यावृत्त्या सकृच्छ्रवणं बाध्येत । यदा तु भिन्नानि वाक्यानि तदा वाक्यशेषस्य सकृच्छ्रवणबाधे सिद्धे पञ्चविधिसंबन्धितयापि आवृत्तिः कल्प्यमाना नानुपपन्नेति पञ्चानामपि वरणं न्याय्यमेवेत्युक्तम् । कथं पुनः पञ्चानामपि वरणप्राप्तिराशङ्क्यते ? इत्थं, नञोऽनुवाद उपपन्नतरो भवति न चतुरो वृणीते न पञ्चातिप्रवृणीते इति । यदि पञ्चानामपि वरणं न स्यात् तदा इत्थं नञर्थस्य वरणाभावस्यानुवाद उपपन्नो भवति पञ्चानां तु वरणाभावे सति पञ्चातिक्रमेण वरणाभावानुवादो निस्तात्पर्यक एव स्यात् । अतः पञ्चानामपि वरणं न्याय्यमेवेति । अत्रोच्यते—उक्तमस्माभिः सकलपदैकवाक्यता । ननु च एकं द्वौ इति अनुवादासंभवात् अनुपपन्नैवेत्युक्तम् । उत्तरं—न नाम त्रिष्वनु-

---

1. ms. न कथञ्चित्त्वनुवादः

ऽनुवर्तत इति न्यायात् । यत्पुनरिदं नञ्वाक्यं तत् केन संबध्यते ? सर्वैः सङ्ख्यावाक्यैरविशेषादिति चेत् । सिद्धा तर्ह्येकवाक्यता । यस्मात् न नञ्वाक्येऽस्य प्रत्येकपरिसमाप्तौ प्रमाणमस्ति । कथं नास्ति ? यदि हि स्यात् एकत्वादीनामपि 'न चतुरो वृणीते ' न पञ्चातिप्रवृणीते' इति प्रत्येकमेव स्यात् नञोऽभ्यासः । निष्प्रयोजनश्च सः । नञर्थपरत्वादेकादीनां चतुर्णां अतीतपञ्चानां च विकल्पः प्राप्नोति । भवत्विति चेत् न पक्षान्तरालम्बनेनापि-परिहारो भवति इति नञोऽभ्यासकल्पना न्याय्या । यावांश्च श्रुतस्योत्सर्गे दोषस्तावानश्रुतवाक्यस्यावृत्तिकल्पनायाम् । तस्मादावृत्तिः कल्पयितुं न

---

वादः न च सङ्ख्या सङ्ख्यान्तरेऽनुवर्तत इति न्यायात् । नामशब्दोऽङ्गीकारे । एतदुक्तं भवति—न सङ्ख्या सङ्ख्यान्तरे वर्तत इति न्यायेन त्रित्वे एकत्वद्वित्वयोरभावादनुवाद आञ्जस्येन न घटते इत्यङ्गीकुर्मः । यत्पुनरिदं नञ्वाक्यं तत्केन संबध्यते सर्वैस्सङ्ख्यावाक्यैरविशेषादिति चेत् । सिद्धा तर्ह्येकवाक्यता । यदि सर्वैः सङ्ख्यावाक्यैः नञ्वाक्यस्य संबन्धः तदा सिद्धा एकवाक्यता स्यात् । यस्मात् न नञ्वाक्येऽस्य प्रत्येकपरिसमाप्तौ प्रमाणमस्ति । कथं नास्ति ? उत्तरं— सकृच्छ्रवणात् प्रत्येकपरिसमाप्तौ प्रमाणं नास्ति । यदि हि सकृच्छ्रवणेपि प्रत्येकपरिसमाप्तिः स्यात् तदा एकत्वादीनामपि 'न चतुरो वृणीते' 'न पञ्चातिप्रवृणीते' इति प्रत्येकमेव स्यान्नञोऽभ्यासः । अस्यार्थः—एकत्वादीनामपि कृते नञोऽभ्यासः स्यात् । ततश्चैवं स्यात् एकं न वृणीते न त्रीन् वृणीते इति । भवत्वेवं, का नः पीडेति । अत्राह—निष्प्रयोजनश्च सः । प्रयोजनशून्योऽभ्यासः स्यादित्यर्थः । किञ्च नञर्थपरत्वादेकादीनां चतुर्णां अतीतपञ्चानां च सर्वेषां विहितप्रतिषिद्धतया विकल्पः प्राप्नोति । ननु प्रमाणबलेन विकल्पः प्राप्नुवन्न दोष इति मन्यमानस्य मतमाशङ्कते—भवत्विति चेत् । न पक्षान्तरावलम्बनेनापि परिहारो भवति इति नञोऽभ्यासकल्पनान्याय्या । अभ्यासकल्पनायां विकल्पः प्राप्नोति । सोऽनावृत्त्याश्रयणेन परिह्रियते । तेन प्रामाणिकत्वं विकल्पस्य वदितुं न शक्यते । यावांश्च श्रुतस्योत्सर्गे दोषः तावानश्रुतवाक्यस्यावृत्तिकल्पनायाम् । तस्मादावृत्तिः कल्पयितुं [न]न्याय्येति न्यायविदो वदन्ति । तस्माद्वरमव-

न्याय्येति न्यायविदो वदन्ति । तस्माद्वरमवयुत्यानुवाद एवाश्रयणीयः सामञ्जस्यात् । त्रयाणां च न संभवति अतस्त्रयाणामेव विधानम् । अतस्त्रयाणामेव वरणं त्र्यार्षेयस्य चाधिकार इति सिद्धम् ।

॥ १२ ॥ वचनाद्रथकारस्याधानेऽस्य सर्वशेषत्वात् ॥ ४४ ॥

अत्र पूर्वपक्षवादी विद्वत्साध्यत्वादाधानस्य उपनयनसाध्यत्वाद्विद्वद्भावस्य येषामेवोपनयनं तेषामेवाधानविधिरुपपन्नो भवति इति मन्वानः त्रैवर्णिकानामेवानेन निमित्तेनाधानमिति वर्णितवान् । ये पुनः रथकारा ब्राह्मणादयस्तेषामेव वसन्तादिकालक्रमाधानविधानं भविष्यति पारिशेष्यादिति सर्वमुपपन्नम् । यत्पुनरत्र भाष्यं त्रैवर्णिकानां शिल्पोपजीवित्वं निषिद्धमिति तदयुक्तमिव प्रतिभाति निषेधातिक्रमणादप्याधानविधानं[न]नैवोपपद्यते पुरु-

---

युत्यानुवाद एवाश्रयणीयः सामञ्जस्यात् । सकृच्छ्रवणादित्यर्थः । अन्यथा हि सकृच्छ्रवणाद्बाधितं स्यात् । नन्वेवमपि भवत्वेको विधिः वाक्यशेषस्य सकृदनुमानानुगुण्यात् स तु त्रयाणामेवेति कुतः इत्यत्राह—त्रयाणां च न संभवति एकस्य द्वयोर्वा विधावाश्रीयमाणे त्रयाणामनुवादो न संभवति । त्रयाणां तु विधानेऽवयुत्य एकस्य द्वयोश्चानुवादो घटत इति । अतस्त्रयाणामेव (वा)विधानम् । अधिकरणार्थमुपसंहरति - अतस्त्रयाणामेव वरणं त्र्यार्षेयस्य चाधिकार इति स्थितम् । एतावति वचने तावदयं शास्त्रार्थः । यदि पुनरपराणि वचनानि तदा भवतु अत्र्यार्षेयाणामप्यधिकार इति निरवद्यम् ।

॥ वचनात् ॥

अत्र पूर्वपक्षवादी विद्वत्साध्यत्वादाधानस्य उपनयनसाध्यत्वात् विद्वद्भावस्य येषामेवोपनयनं तेषामेवाधानविधिरुपपन्नो भवतीति मन्वानः नैसर्गिकानामेवानेन निमित्तेन आधानमिति वर्णितवान् । अस्यार्थः—त्रैवर्णिकानामेवोपनयनं येषां चोपनयनं तेषामेव विद्या आचार्यकरणविधिप्रयुक्तत्वात् अध्ययनस्य । येषामेव विद्या तेषामेवाधानं युक्तम् विद्वत्साध्यत्वादाधानस्य । ततश्च त्रैवर्णिकानामेव रथकरणेन निमित्तेन आधानान्तरमेतद्विधीयत इति पूर्वः पक्षः । ये पुनः रथकारा ब्राह्मणादयः तेषां वसन्तादिकालक्रमाधानविधानं भविष्यति पारिशेष्यादिति सर्वमुपपन्नम् । यत्पुनरत्र भाष्यं त्रैवर्णिकानां

षार्थत्वात्, प्रतिषेधस्य अग्न्यर्थत्वाच्च। न च पुरुषार्थातिक्रमेणाधानस्य वैगुण्यं शक्यते वक्तुम्। सत्यमेवम्। औचित्यमङ्गीकृत्यैतदुक्तम्। अत एव ब्राह्मणादीनां नियतकालत्वैवाधानस्य आधानान्तरासंबन्धे हेतुरुक्तः। जात्यन्तरोपन्यासश्च परमार्थतः त्रैवर्णिकनिमित्तो हेतुरुक्तः। यत्पुनरविदुषो नाधानमित्युक्तं असति वचने तदुपपद्यते। वचने पुनः का नामेयमनुपपत्तिः। किमनुपनयनेनापि तेषां [ विद्या ]भवतु भवतु तेषां यदि वचनमस्ति।

---

शिल्पोपजीवित्वं निषिद्धमिति तदयुक्तमिव प्रतिभाति निषेधातिक्रमणादप्याधानविधानं [न] नैवोपपद्यते ये प्रतिषेधातिक्रमेण शिल्पमुपजीवन्ति तेषामप्याधानविधानमुपपद्यत एव पुरुषार्थत्वात् प्रतिषेधस्याग्न्यर्थत्वाच्च आधानस्य साध्यभेदेन आधान-शिल्पोपजीवित्वप्रतिषेधयोरङ्गाङ्गि[भावा]भावात् न प्रतिषेध आधानाङ्गं, किं तर्हि? पुरुषार्थः। न च पुरुषार्थातिक्रमेणाधानस्य वैगुण्यं शक्यते वक्तुम्। यदि वैगुण्यं स्यात् तदा अतिक्रान्तनिषेधानामाधानं न स्यात्। नचास्ति वैगुण्यमिति समर्थयन्ते। सत्यमेवं, औचित्यमङ्गीकृत्यैतदुक्तम् ये उचिताचारास्त्रैवर्णिकाः ते तावत् शिल्पोपजीविनो न संभवन्तीत्यनेनाभिप्रायेणैतदुक्तम्। यत एवौचित्याश्रयणेनैतदुक्तं न पुनस्सर्वथा शिल्पोपजीवित्वासंभवेन अत एव ब्राह्मणादीनां नियतकालत्वैवाधानस्य आधानान्तरासंबन्धे हेतुरुक्तः। वसन्तादिकालत्वैवाधानस्य आधानान्तरासंबन्धे हेतुरुक्तः। सर्वेषामेव त्रैवर्णिकानामविशेषेण वसन्तादिकालकाधानश्रवणान्नाधानान्तरसंबन्धो युक्त इत्यर्थः। इयमपि चाभ्युपगम्ययुक्तिरेव। रथकरणेन निमित्तेनाधानान्तरसंभवात्। परमयुक्तिमाह—जात्यन्तरोपन्यासश्च त्रैवर्णिकनिमित्तः परमार्थतो हेतुरुक्तः। रूढ्यैव रथकारशब्देन जात्यन्तरस्याभिधानं योगबलेनैव त्रैवर्णिकानाम्। रूढिश्च योगाद्बलीयसीति। एवं हि स्मृतिः—"माहिष्येण करण्यां तु रथकारः प्रजायते" इति वैश्याङ्गनायां क्षत्रियजो माहिष्य इत्युच्यते। तदाहुः—

"माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्"। करणश्च शूद्रायां वैश्येन जातः। तदुक्तं 'शूद्रायां करणो वैश्यात' इति। तेन माहिष्येन करण्यां जातस्य रूढ्या रथकारशब्दो वाचक इति तस्यैवेदमाधानम्। यत् पुनः अविदुषो नाधानमित्युक्तम् असति वचने तदुपपद्यते वचने पुनः का नामेयमनुपपत्तिः—यदा

असति विधाने स्त्रीणामिवाधानविधानादेवेदमत्राध्ययनं भविष्यति ।

कस्य पुनरधिकारः ? रथकारस्येति ब्रूमः [ राज्ञ इव राजसूये ] ननु चायं कर्तृनिर्देशो नाधिकारनिर्देशः । यथैव ब्राह्मणादयो वसन्तादिकालकेषु आधानेषु कर्तृत्वेन(न)निर्दिश्यन्ते नाधिकृततया एवमत्रापि । एवं तर्हि तत्कर्तृकेष्वाधानेषु कस्याधिकारः । न कस्यचिदिति ब्रूमः । किं तर्हि इदमुक्तं त्रैवर्णिकानामधिकार इति । स्वर्गकामस्य त्रैवर्णिकस्य ज्योतिष्टोमादिष्वधिकार इत्युक्तम् । एवं तर्ह्यङ्गमाधानं; नाङ्गं अग्न्यर्थत्वात् । अग्नयो हि

---

शृङ्गग्राहिकया रथकारस्याधानं विहितं तदा काचिदनुपपत्तिर्नास्तीत्यर्थः । विद्यापि तद्बलेन भविष्यतीति भावः । यदा विद्याप्यस्ति तदा विद्यालाभाय **किमनुपनयनेनापि तेषां सौधन्वनां भवतु?** उत्तरं — **यदि वचनमस्ति भवतु उपनयनादिकं असति विधाने स्त्रीणामिवाधानविधानादेवायं भविष्यति** । तावन्मात्रेणैवाधानविधानोपपत्तेः नोपनयनाक्षेपे सामर्थ्यमस्तीति । अधिकारलक्षणमधिकरणमिति लक्षणसङ्गतिसिद्धये अधिकारविशेषाधायकेनानेन भवितव्यमिति पृच्छति — **कस्य पुनरत्र रथकाराधानेऽधिकारः ? रथकारस्येति ब्रूमः । राज्ञ इव राजसूये** । अत्र चोदयति — **ननु चायं कर्तृनिर्देशो नाधिकारनिर्देशः** वर्षासु रथकार आदधीत इति रथकारशब्दः कर्तृनिर्देशः रथकारजातेरुपादेयकर्तृनिर्देशः रथकारजातेरुपादेयत्वान्नाधिकारनिर्देशः । एकग्रन्थेनाह — **यथैव ब्राह्मणादयो वसन्तादिकालकेषु कर्तृत्वेन निर्दिश्यन्ते नाधिकृततया एवमत्रापि** । रथकाराधिकारबाधाह — यदि ब्राह्मणादयः कर्तृत्वेन निर्दिश्यन्ते नाधिकृततया **एवं तर्हि तत्कर्तृकेष्वाधानेषु कस्याधिकारः ?** अयमाशयः — यथा ब्राह्मणादीनामधिकारः तथा रथकारस्यापि भविष्यति । अधिकारापवाधाह — **न कस्यचिदिति ब्रूमः** । अधिकारिणोऽश्रवणादिति । रथकाराधिकारबाधाह — **किं तर्हीदमुक्तं त्रैवर्णिकानामधिकार इति** । अपशूद्राधिकरणे त्रैवर्णिकानामधिकार इत्युक्तम् । तेनोपादेयापि ब्राह्मणादिजातिः अधिकारिविशेषणमेवेति मन्यते । उत्तरं — **स्वर्गकामस्य त्रैवर्णिकस्य ज्योतिष्टोमादिष्वधिकार इत्युक्तम्** । ज्योतिष्टोमादिषु स्वर्गकामोऽधिकारीति स्थितम् । स तु स्वर्गकामो ब्राह्मणादिर्नान्य इत्युक्तम् । न पुनर्जातिरेवाधिकारिविशेषणम् । अधिकारबाधाह — यदि निरधिकारं **एवं तर्हि अङ्गमाधानं** क्रतूनां स्यात । इतर आह — **नाङ्गं अग्न्य-**

कर्मार्थाः। कथं तर्हि त्रैवर्णिकः स्वर्गकामः ज्योतिष्टोमादिष्वधिक्रियत इति शक्यते वक्तुम्, अनङ्गत्वादाधानस्य। अनग्नित्वादत्रैवर्णिकानाम[न]धिकार इत्युक्तम्। न पुनस्त्रैवर्णिका एवाधिक्रियन्त इति। सिद्ध्यत्येवं ज्योतिष्टोमादिष्वधिकारः। आधाने पुनःकस्याधिकारः? सर्वस्यैवेति प्राप्ते जात्यङ्गासंपत्तेः त्रैवर्णिकानामेव भवति। यथा स्वाराज्यकामस्य क्षत्रियस्यैवाधिकारो राजसूये श्रूयते। एवं तद्वत्राप्येवमेवेति सिद्धम्। आहिताग्नि-

---

र्थत्वात्। अस्यार्थः—निरधिकारत्वेऽप्याधानस्य न कर्मार्थित्वम् अग्न्यर्थत्वेनावगमात। ननु कर्मार्थाभिमुखेन अवघातादिवत् कर्मार्थिता न स्यात इत्यत्राह अग्नयो हि कर्मार्थाः। अस्यार्थः—अग्नयः सिद्धाः सन्तः कर्मणि विनियुज्यन्ते न पुनर्विनियुक्तानामेवोत्पत्तिरिति तृतीये प्रदर्शितम्। तेन कर्मासंबन्धाग्न्युत्पादकत्वान्न कर्मार्थिता आधानस्य। यद्यनङ्गमाधानं कथं तर्हि त्रैवर्णिकस्वर्गकामो ज्योतिष्टोमादिष्वधिक्रियत इति शक्यते वक्तुम् अनङ्गत्वादाधानस्य। यदि हि अङ्गमाधानं स्यात् तदाऽत्रैवर्णिकस्याशक्यत्वात् त्रैवर्णिकस्याधिकारः स्यात्। उत्तरमाह—अनग्नित्वादत्रैवर्णिकानामनधिकार इत्युक्तम्। न पुनः त्रैवर्णिका एवाधिक्रियन्त इति। अस्यार्थः—यद्यप्यनङ्गमाधानं तथाप्यत्रैवर्णिकस्यानधिकारः। अस्यार्थः—जातिरधिकारिविशेषणं न भवति इत्येवंविधेऽभ्युपगमे सिध्यत्येव ज्योतिष्टोमादिषु अधिकारः स्वर्गकामादीनाम्। अनुपादेयविशेषणविशिष्टानामधिकारिणां विद्यमानत्वात। आधाने पुनः तद्विधानस्यापरस्याश्रवणात् जातेश्चाधिकारिविशेषणत्वाभावाभ्युपगमात् कस्याधिकारः। न च निरधिकारं भविष्यतीति वाच्यम्, निरधिकारस्य कर्मणोऽनुष्ठानापत्तेः। एकग्रन्थेनाह—सर्वस्येति प्राप्ते जात्यङ्गासंपत्तेः त्रैवर्णिकानामेव भवति। यथा स्वाराज्यकामस्य क्षत्रियस्यैवाधिकारो राजसूये श्रूयते। 'राजसूयेन स्वाराज्यकामो यजेत' इति राजव्यतिरिक्ते कर्तरि राजजात्यसंप्रतिपत्तेः राज्ञ एवाधिकारः तथेहापि ब्राह्मणजातिसंपत्तये ब्राह्मणादीनामाधानेऽधिकारः। यदि ब्राह्मणजातिसंपत्तये ब्राह्मणादीनामधिकार आधाने एवं तर्हि अत्रापि रथकाराधानेऽपि एवं जात्यसंपत्तेः रथकारस्यैवाधिकार इति सिद्धम्। तेन साधूक्तं रथकारस्येति ब्रूम इति। आहिताग्नितया च ज्योतिष्टोमादिष्वधिकारो द्रष्टव्यः। यदा रथकार

**तया च ज्योतिष्टोमादिष्वधिकारो द्रष्टव्यः। यानि पुनर्विशेषवचनानि रायोवाजीयं इत्येवमादीनि तानि अस्य न संभवन्ति। न पुनरधिकारं निर्वर्तयितुमुत्सहन्ते। किं पुनराधानविधेः विश्वजित इव कल्प्य एवाधिकारो न भवति। भवतु एवमपि न कश्चिद्दोषः। किन्त्ववत्तावघातादीनामिव निरधिकारमेवेदं सप्रयोजनत्वादनुष्ठानमिच्छन्ति। शेषमुक्तम्।**

---

आधानेऽधिकारी तदा अग्निमान् जातः अग्निमत्ता च ज्योतिष्टोमादिष्वपि तस्याधिकारमाक्षिपति। आक्षिप्ताधिकारनिर्वाहाय विद्या प्रयुज्यत इति लब्धविद्यो रथकारो ज्योतिष्टोमादि करिष्यति। कथं पुनः कर्माधिकारं विना आधानाधिकारो न पर्यवस्यति। स्वरूपमात्रेणापुरुषार्थत्वादिति। ननु च ब्रह्मसामादीनामभावात् कथं रथकारस्य ज्योतिष्टोमादिष्वधिकार इत्यत्राह—**यानि पुनर्विशेषवचनानि रायोवाजीयं इत्येवमादीति तान्यस्य न संभवन्ति न पुनरधिकारं निर्वर्तयितुमुत्सहन्ते।** येषां ब्राह्मणादीनां विशेषवचनमस्ति तेषां विशेषेण ब्रह्मसामादीनि। येषां तु नास्ति तेषामनियमः न पुनरधिकार एव तावन्निराकृतः। निरधिकारवादी अधिकारवादिनं पृच्छति—यदि तावत् आधानेऽधिकारः पर्येषणीयः तदा **किं पुनराधानविधेः विश्वजित इव कल्प्य एवाधिकारो न भवति।** अस्यार्थः—यथा विश्वजिति अग्निविद्यासाध्ये तद्वत्तया त्रैवर्णिकानामेवाधिकारो नाङ्गीक्रियते जातेरधिकारिविशेषणत्वानुपपत्तेः, तथा आधानेऽपि न जातिरधिकारिविशेषणीभवितुमर्हति इति कल्प्य एवाधिकारो युक्तः तत्र द्रव्यार्जनवत् अग्न्युत्पादकाधाने अग्न्यर्थिन एव ऐश्वर्यलक्षणाधिकारः किमिति न भवति नियोज्यता त्वत्र नास्त्येव नियोगाभावादिति। उत्तरमाह—**भवतु न कश्चिद्दोषः** तथाप्यधिकरणस्य लक्षणसङ्गतिरस्ति। रथकारस्यैवाग्न्यर्थिनोऽधिकारात्। एवं तावत् अधिकार(न)मङ्गीकृत्य परमतमुक्तं संप्रति स्वमतमाह—**किन्त्ववत्तावघातादीनामिव निरधिकारमेवेदं सप्रयोजनत्वादनुष्ठानमिच्छन्ति।** अस्यार्थः—नात्राधिकारकल्पनया प्रयोजनं निरधिकारत्वेऽप्यनुष्ठानसिद्धेः अग्निभिः प्रयोजनभूतैः प्रयोजनवत्त्वात्। अग्नीनां च कर्मार्थत्वात् कर्मविधयै [विधिनैव]वानुष्ठानं प्रयुज्यते इति किमधिकारकल्पनया प्रयोजनम्? निरधिकारमेवाधानम्। न च लक्षणसङ्गतिर्नास्ति; आधाने कर्तृतया रथकारस्याग्निवत्तया ज्योतिष्टोमादिष्वधिकारप्रतिपादनात् कर्तृतैवाधाने रथकारस्यान्यथा नोपपद्यते स्वरूपमात्रस्याग्नीनामपुरुषार्थत्वादिति। **शेषमुक्तम्।**

॥ १३ ॥ स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥

अत्रापि विद्वत्तापेक्षया आधानापेक्षया च पूर्वपक्षवादी षष्ठीसमासमेव न्याय्यं मन्यते। भवति हि कश्चित् त्रैवर्णिक एव निषादानां स्वामी अतोऽविरोधात् तस्यैवाधिकारः। अत्राभिधीयते। नायं षष्ठीसमासः। कस्मात्? षष्ठीसमासे हि निषादशब्दो लक्षणया स्थपतौ वर्तते। कर्मधारये पुनः स्वार्थ एव पदद्वयम्। ननु चेदमन्याय्यमुच्यते वावचनं हि समर्थयता भाष्यकारेण वाक्यवृत्त्योरेकार्थत्वमभ्युपगतं भगवता पाणिनिना।

---

॥ स्थपतिः ॥

अत्रापि विद्वत्तापेक्षया आधानापेक्षया च पूर्वपक्षवादी षष्ठीसमासमेव न्याय्यं मन्यते। अस्यार्थः-यदा स्थपतिश्चासौ निषादश्चेति कर्मधारयो गृह्यते तदा निषादस्यैवाधिकार इत्यापद्यते। यदि षष्ठीसमासस्तदा निषादव्यतिरिक्तस्य। तत्र च निषादस्यैवाधिकारो न घटते, विद्याविरहादग्न्यभावाच्च। अतो विद्यापेक्षया अग्न्यपेक्षया च षष्ठीसमास एव युक्तः। भवति हि कश्चित् त्रैवर्णिक एव निषादानां स्वामी। स्थपतिशब्दः स्वामिवचनः अतो विद्याग्न्यनुरोधात् तस्यैव त्रैवर्णिकस्याधिकारः। अत्राभिधीयते। नायं षष्ठीसमासः। कस्मात्? उत्तरं-षष्ठीसमासे हि निषादशब्दो लक्षणया स्थपतौ वर्तते। कर्मधारये पुनः स्वार्थ एव पदद्वयं वर्तते। अस्यार्थः-यः शब्दः श्रूयते स एवार्थप्रतिपत्तौ निमित्तं भवति। न च समासे निषादस्थपतौ षष्ठी श्रूयते। किन्तु निषादशब्द एव केवलं, स च श्रुत्या जातिविशेषं प्रतिपादयति। न तु जातिविशेषसंबन्धिनम्। षष्ठीसमासपक्षे च निषादसंबन्धिनः कार्येऽन्वयो न निषादस्य। तत्र निषादशब्देनैव निषादसंबन्धी स्थपतिः लक्षणयोपस्थापनीयः। कर्मधारये पुनः निषादस्यैवान्वयः। निषादशब्दश्च श्रुत्यैव निषादं शक्नोति वदितुम्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्येति कर्मधारय एवायं न षष्ठीसमासः। इदानीं पूर्वपक्षमाविष्करोति—ननु चेदमन्याय्यमुच्यते लक्षणया वर्तत इति यावता श्रुत्यैव ज्ञायत इति भावः। कथमन्याय्यम्? तद्दर्शयति—वावचनं हि समर्थयता भाष्यकारेण वाक्यवृत्त्योरेकार्थत्वमभ्युपगतं भगवता पाणिनिना। समासाधिकारे 'वे'ति स्मृतम्। समास एव नित्यं

**केन वाऽनेकार्थत्वमुक्तम् ? नन्विदमुक्तं निषादशब्दो लक्षणया वर्तत इति। प्रयोजनमङ्गीकृत्यैतदुच्यते । अत्र स्थपतौ निषादशब्दः प्रयुज्यते तस्य च (तत्र हि) लक्षणया प्रयोगसिद्धिः । किं लक्षयति ? षष्ठ्यर्थम् । ननु चैवं सति व्यधिकरणसमासानां साधुत्वान्वाख्यानमनुपपन्नं वाचकनियमार्थं हि भगवतोऽनुशासनं पाणिनेः प्रवृत्तं अपभ्रंशापनुत्तये । लक्षणापक्षे च नायं वाचकः । अत एव च कात्यायनोऽपि वावचनानर्थक्यमुक्तवान् ।**

---

माभूत् वाक्यमपि यथा स्यादित्येवमर्थः । तत्र यदि समासस्य वाक्यस्य चार्थभेदो भवेत् तदा अर्थभेदादेव समासेन वाक्यस्य निवृत्तिर्नास्तीति किं वाशब्देन इति मत्वा भाष्यकारेण वावचनं समर्थयितुकामेन वाक्यसमासयोरेकार्थत्वमुक्तम् । तत्र यदि षष्ठीसमासे षष्ठ्यर्थवाचकशब्दो नास्ति तदा वाक्यसमासयोरेकार्थत्वमेव न स्यात् । अस्ति चैकार्थता । अतोऽन्याय्यमेवेदं लक्षणया वर्तत इति। राद्धान्ती तु वदति—**केन वाऽनेकार्थत्वमुक्तम्** लक्षणाभ्युपगमेपि अनेकार्थता नास्तीति भावः । भावमबुद्ध्वा पृच्छति—**नन्विदमुक्तं निषादशब्दो लक्षणया वर्तत इति ।** परिहरति—**प्रयोजनमङ्गीकृत्यैतदुच्यते**-' केन वाऽनेकार्थत्वमुक्त'मिति यदिदमस्माभिरुच्यते तत्प्रयोगमङ्गीकृत्य । एतदुक्तं भवति ।' वाक्ये सविभक्तिकस्य शब्दस्य, समासे विभक्तिरहितस्य एकस्मिन्नेवार्थे प्रयोगः । तेन वाक्यसमासयोरेकार्थत्वमुच्यत इति । एतदेवाह—**अत्र** षष्ठीसमासे **स्थपतौ** निषादसंबन्धिनि **निषादशब्दः प्रयुज्यते । तस्य च लक्षणया प्रयोगसिद्धिः ।** इदमाकूतं—वाक्यसमासयोरेकार्थत्वमेव प्रकाशमानं भिद्यते । वाक्ये वाचकवृत्त्याऽर्थप्रतिपादकत्वं, समासे लक्षणावृत्त्येति । चोदयति—**किं लक्षयति ?** निषादशब्दः । उत्तरं - **षष्ठ्यर्थं** लक्षयति । ननु च यदि षष्ठ्यर्थं लक्षयति **एवं सति व्यधिकरणसमासानां साधुत्वान्वाख्यानमनुपपन्नम् । वाचकनियमार्थं हि भगवतोऽनुशासनं पाणिनेः प्रवृत्तम् ।** अपभ्रंशानु[1]वाचकशब्दयोः प्रवृत्तयोः वाचकानेव नियमयितुं भगवतः पाणिनेः शब्दानुशासनं प्रवृत्तम् । **लक्षणापक्षे च नायं वाचकः** ततश्चावाचकत्वादनुशासनं न युज्यते । अनुशास्ति चाचार्यः । तेनावगच्छामो वाचक एव समासोऽपीति । लक्षणावृत्तिपक्षे च वावचनानर्थक्यं प्रकार-

---

1. अनुवाचकापभ्रंशयोः—मा

**तस्माद्वक्तव्योऽत्र विशेषः । ननु चायमेव विशेषः लक्षणयापि व्यवहारो लोके दृश्यते गङ्गायां घोषः प्रतिवसति कूपेन गर्गकुलमिति । नायं प्रयोगो ऽनुशासनविरोधी । पदावधिकं हि भगवतोऽनुशासनम् । भवति चेह निमित्तावस्थायां वाचकमेवेदं(पदम्) । न च वाचकसंबन्धिन्य एव विभक्तय इति स्मरति । प्रातिपदिकादिति वचनात् । असदिदमुक्तं समर्थः पद-**

---

भेदेनैव वाक्यसमासयोः प्रयोगोपपत्तेः । तेन वावचनस्यार्थवत्त्वात् वाचकत्वमेवा-श्रयणीयमिति । तदाह—**अत एव च कात्यायनोऽपि वावचनानर्थक्यमुक्त-वानिति । तस्माद्वक्तव्यो विशेषः** समासस्यापभ्रंशात् गाव्यादेः येन [अ]वाच-कत्वेपि समासेऽनुशिष्यते न गाव्यादयः शब्दा इति । न चास्ति विशेषः अन्यो वाचकत्वादृते इति । राद्धान्ती वदति—**ननु चायमेव विशेषः लक्षणयापि व्यवहारो लोके दृश्यते गङ्गायां घोषः प्रतिवसति कूपेन गर्गकुलमिति ।** अस्यार्थः-येषां लोके प्रयोगः तदनुशासनं व्याकरणम् । लक्षणयापि च लोके व्यवहारोऽस्ति । तेन लक्षणया वृत्तस्यापि अनुशासनं [न]विरुध्यते । गाव्यादयस्तु लोके न प्रयुज्यन्त इति प्रयोगाप्रयोगावेव विशेषः । तेनानुशासनम[न]नुशासनं चेति । अत्र पूर्वपक्षी—**नायं प्रयोगोऽनुशासनविरोधी ।** अस्यार्थः-वाचनिका-नामेवान्वाख्यानाय यत् प्रवृत्तमनुशासनं तदयं गङ्गायां घोष इत्यादिप्रयोगो न रुणद्धि । यदि ह्ययं प्रयोगो लक्षणया वृत्तस्याप्यनुशासनमापादयेत् ततो वाचनिकाना-मेवानुशासनमिति विरुद्ध्येत । अस्मिन् प्रयोगे लक्षणावृत्तस्यानुशासनापत्तिः । कुतः ? **पदावधिकं हि भगवतोऽनुशासनम् ।** तथापि किमित्याह—**भवति चेह निमित्तावस्थायां वाचकमेवेदम् ।** अस्यार्थः-यस्या निमित्तावस्था तस्यां निमित्तार्थस्य वाचकपदं भवति गङ्गायामित्यादिपदम् । एतदुक्तं भवति - गङ्गायां स्नातीत्यादौ यत्तदमेव वदन्ति तत्र निमित्तं भवत्येव वाचकमिदमिति वाचकस्यैवानुशासनमिति नानुशासनविरोधः । ननु च लक्षणापेक्षमेवानुशासनमयं प्रयोग आपादयति । लक्षणा-वृत्तादेव गङ्गाशब्दाद्विभक्त्यनुशासनात् इति अत्राह—**न च वाचकसंबन्धिन्य एव विभक्तयः इति स्मरति, प्रातिपदिकादिति वचनात् ।** विभक्तिः वाचिकैवानुशिष्टा प्रातिपदिकं तु वाचकवृत्त्या वर्ततां लक्षणया वा वर्ततामिति नात्रापेक्षास्ति । राद्धान्ती वदति—**असदिदमुक्तं** न वाचकसंबन्धिन्य एवेति यस्मात् **समर्थः पदविधिरिति**

विधिरिति स्मरन् समर्थात् प्रातिपदिकाद्विभक्तयो भवन्तीत्यपि स्मरति । किञ्चान्यत् सामर्थ्य[र्थ्यं मुक्त्वा]मुक्त्वा स्वार्थसंबन्धम् । तस्मान्नानुशासनप्रसिद्धिः । न चायमाचार्यस्य नियमः पदावधिकमेवानुशासनमिति । वाक्यावधिकमपि दृश्यते । "[1]देवसुम्नयोर्यजुषि काठके" "जनिता मन्त्रे[2]" इति च दर्शनात् । अतोऽत्र वक्तव्यो वावचनसमर्थने हेतुः ।

अयमभिधीयते । अभिधानव्यापारमङ्गीकृत्य एतद्वावचनं समर्थितम् नार्थव्यापारम् । अर्थश्चार्थान्तरं लक्षयति नाभिधाम् । ननु च षष्ठ्यर्थो लक्ष्यत इत्युक्तम् । अत एव सूक्तम् । यदि हि षष्ठ्या अभिधानं लक्ष्यत

---

स्मरन् समर्थात् प्रातिपदिकात् विभक्तयो भवन्तीत्यपि स्मरति । किञ्चान्यत् सामर्थ्यमुक्त्वा[र्थ्यं मुक्त्वा]स्वार्थसंबन्धं न च लक्षणामन्तरेण गङ्गापदार्थस्य सप्तम्यर्थस्य च घोषप्रतिवासविषयिणः संबन्धोऽस्ति । तस्मात् लक्षणावृत्त्यपेक्षत्वेन विना नानुशासनप्रसिद्धिः । अतो लक्षणावृत्तस्याप्यनुशासनमिति । न चायमाचार्यस्य नियमः पदावधिकमेवानुशासनमिति । वाक्यावधिकमपि दृश्यते । "देवसुम्नयोर्यजुषि काठके" "जनिता मन्त्र" इति च दर्शनात् । वाचकावधिके चानुशासने गङ्गायां घोष इति लाक्षणिकस्यानुशासनं न स्यात् । न च वाचकमेवानुशिष्यते । तस्मात् प्रयोगमात्रानुशासनं व्याकरणमिति मन्तव्यम् । तेनानुशासनबलेन तावद्वाचकता न शक्यते वक्तुम् । अतोऽत्र लक्षणावृत्तिपक्षे वक्तव्यो वावचनसमर्थने हेतुः । अयमभिधीयते । अभिधानव्यापारमङ्गीकृत्य एतद्वावचनं समर्थितम् नार्थव्यापारं अस्यार्थः - लक्षणायामपि शब्दो व्याप्रियेत स्वार्थमवान्तरव्यापा[रं कृत्वा]। [अभिधानव्यापारमङ्गीकृत्यैतद्वावचनं समर्थितम्]। एतेन वाचकवृत्तौ चशब्द एव व्याप्रियत इत्याश्रित्य वावचनं समर्थितम् । नार्थव्यापारमेव । लक्षणाम् साधुत्वानुशासनेन वा कस्य असाधुत्वशङ्कानिवृत्तिरिति । ननु यथा गाव्यादयः अपभ्रंशाः तथा लक्षणावृत्तिरपि गाव्यादिष्वपि गोशब्दोपलक्षितादर्थः प्रतीयते । अत्रापि लक्षिताया एव षष्ठ्या इति । तत्राह—अर्थश्चार्थान्तरं लक्षयति नाभिधां यदि लक्ष्येत तदा अपभ्रंशः स्यात् । इह त्वर्थ एवार्थान्तरं लक्षयति न शब्दः शब्दान्तरम् । ननु षष्ठ्यर्थो लक्ष्यत इत्युक्तम् । अतः षष्ठ्यापि

---

1. पा-सू 7-4-38 2. पा-सू 6-4-53

इत्युक्तं स्यात् स्याद्दोषः। क्वचिच्चाभिधानं निमित्तं क्वचिच्चाभिहितोऽर्थः इति तद्भूतानामित्यभ्युपगमो न विरुध्यते। न हि भगवतोऽनुशासनविरोधः। प्रयोगानुशासनं हि व्याकरणम्। क्वचिदभिधानेन निरूप्यते क्वचिदेकार्थतयेति न कश्चिद्दोषः। अत एव च भाष्यकारः "अस्मादायत्ते प्रयोगे किमित्यत्राचकं प्रयोक्ष्यामहे" इति। कोऽभिप्रायः? अयमभिप्रायः। नानभिधाननिमित्तता युक्ता प्रयोक्तुमिति।

---

लक्ष्यत इत्युक्तमेव। न हि षष्ठयाऽनभिधीयमानस्य षष्ठयर्थता भवति। तेन....लक्षितं षष्ठयभिधातुं न शक्नोतीत्यर्थः। परिहरति—यत एव षष्ठयर्थो लक्ष्यत इत्युक्तं अत एव सूक्तं यदि षष्ठयाऽभिधानं लक्ष्यत इत्युक्तं स्यात् स्याद्दोषः। अलक्षितायामपि षष्ठयां .... .... .... .... .... षष्ठयर्थ इत्युच्यते। अतोऽन्यत षष्ठयर्थत्वेन दर्शनादिति भावः। ननु च लक्षणापक्षे "तद्भूतानां क्रियार्थत्वेन समाम्नायः" इति विरुध्यते यथा यानि हि पदानि यदर्थप्रतिपादकतया लोकप्रसिद्धानि तथाभूतान्येव वाक्यार्थं प्रतिपादयन्तीत्युक्तम्। तत् त्यक्तं स्यात् गङ्गादिपदानां कूलार्थे प्रयोगाभावात् इत्यत्राह—क्वचिच्चाभिधानं निमित्तं क्वचिच्चाभिहितोऽर्थ इति तद्भूतानामित्यभ्युपगमो न विरुद्धयते।

लक्षणायामपि प्रसिद्धमेवार्थमभिदधदेव पदं वाक्यार्थमवगमयति। अयं तु विशेषः—क्वचित्स्वेन रूपेणाभिधानं क्वचित्तेनैवाभिहितोऽर्थ इति नाभ्युपगमविरोधः। ननु यदि लोके षष्ठयर्थो लाक्षणिकः कथं तर्हि भगवान् षष्ठीप्रसङ्गे हि लोपानुशासनात् लोपस्य षष्ठयाश्च समानार्थता स्यादेवेति अत्राह—न हि भगवतोऽनुशासनविरोधः प्रयोगानुशासनं हि व्याकरणम्। क्वचिदभिधानेन निरूप्यते क्वचिदेकार्थतयेति न कश्चिद्दोषः। क्वचिदभिधानवृत्त्या प्रयोगः क्वचिल्लक्षणावृत्त्या प्रयोगः व्याकरणेऽनुशिष्टः। तेनायमर्थः—वाक्यस्थानेऽपि समासः प्रयोक्तव्यः। एकार्था च लक्षणावृत्तिरभिप्रेता अभिधानेन सहैकप्रयोजनत्वात्। यत एवोभयथापि प्रयोगः अत एव भाष्यकारः अस्मदायत्ते प्रयोगे किमित्यत्राचकं प्रयोक्ष्यामहे इति। न हि अप्रसक्तौ अवाचकप्रयोगस्य एतदुपपद्यते तस्मादवाचकस्याप्यस्ति प्रयोगसिद्धिः। यद्युभयोरपि प्रयोगप्रसक्तिः तर्हि को विशेषो वाचकावाचकप्रयोगयोः? अनेनाभिप्रायेण पृच्छति—कोऽभिप्रायः? उत्तरं—अयमभिप्रायः—नानभि-

कः खल्वत्र विशेषं पश्यति इमं पश्यति । एकार्थनिमित्ते हि कार्ये कार्यस्यानादिता । अस्मादायत्ते पुनः कार्ये किमन्यदभिधानादृते भवितुमर्हति । अतः सूक्तं निषाद एव स्थपतिरिति । एवमभिधाननिमित्ततैव भवतीति ।

॥ इति बृहत्यां षष्ठाध्यायस्य
प्रथमः पादः ॥

---

धाननिमित्तता युक्ता प्रयोक्तुमिति । अवाचकप्रयोगे हि अभिहितोऽर्थो निमित्तमिति अनभिधाननिमित्तता न युक्ता आश्रयितुम् साक्षात्संभवे परम्पराश्रयणानुपपत्तेः । नन्वेवं वेदेऽपि प्राप्नोति इत्याह—कः खल्वत्र विशेषं पश्यति ? उत्तरं—इमं पश्यति । एकार्थनिमित्ते हि कार्ये कार्यस्यानादिता । कार्यशब्देन प्रयोग उच्यते । तेनायमर्थः—वेदे प्रयोगनिमित्त एव प्रयोगः तत्र प्रयोगस्यानादिता । तेनात्र वाचकोऽवाचको वा प्रयोक्तुं किं क्रियताम् । तथैव प्रयोक्तव्यम् । अस्मदायत्ते पुनःकार्ये शब्दयोगे किमन्यदभिधानादृते भवितुर्हति । अधिकरणार्थमुपसंहरति—अतस्सूक्तं निषाद एव स्थपतिरिति एवमभिधाननिमित्ततैव भवतीत्यभिप्रायः । षष्ठीसमासाश्रयणे तु अभिहितार्थनिमित्तता । सा च न युक्ता प्रथमोपनिपात्यभिधाननिमित्ततापरित्यागेन जघन्यार्थनिमित्ततानुपपत्तेरिति ।

इति ऋजुविमलायां
॥ षष्ठाध्याये प्रथमः पादः ॥

—:*:—

# षष्ठाध्यायस्य द्वितीयः पादः

॥ १ ॥ [1]पुरुषार्थैकसिद्धत्वात् तस्य तस्याधिकारः स्यात् ॥ १ ॥

ननु च स्वर्गकामाधिकरण इदमुक्तं—नैवेयमाधिकारिकी सङ्ख्या, किन्तर्हि, कर्तृसङ्ख्यैवेयं, भावान्तरानुपादानादिति । एवं च कथं परिषदोऽर्थिन्या अधिकार इति संशयः । उच्यते । उपरितनेऽधिकरणे आख्यात गतसङ्ख्या विवक्षिता स्थास्यति । स्थितायां च कर्तृसङ्ख्याविवक्षायां किं यथाकर्तृत्वमधिकारो भवति उतान्यथैव कर्तृत्वं अन्यथा चाऽधिकार

---

ऋजुविमलायां

## षष्ठाध्यायस्य द्वितीयः पादः

पुरुषार्थैक । पूर्वरक्षव्यवस्यसंभवेन संशयमाक्षिपति—ननु च स्वर्गकामाधिकरण इदमुक्तम्—नैवेयमाधिकारिकी सङ्ख्या, किं तर्हि ? कर्तृसङ्ख्यैवेयम् भावान्तरानुपादानात् इति । एवं च कथं परिषदोऽर्थिन्या अधिकार इति संशयः । अस्यार्थः - यद्य धिकारिकी सङ्ख्या स्यात् तदा अधिकार एव बहुत्वे सति परिषदोऽर्थिन्या अधिकारः स्यात् नैवेयमाधिकारिका सङ्ख्या । किं तर्हि ? कर्तृसङ्ख्यैवेयमिति स्वर्गकामाधिकरणे दर्शितम् । कुतः पुनरियमाधिकारिकी सङ्ख्या न भवति भावान्तरानुपादानात् । याग एव केवलो भावान्त उपात्तः । तदपेक्षेयमाख्यातगता सङ्ख्या । न च यागे पुरुषस्य नियोज्यत्वं, किं तर्हि ? कर्तृत्वम् । तेन कर्तृत्वे सङ्ख्यैवेयं न नियोज्यसङ्ख्या । यश्च नियोज्यस्स एवाधिकारी इति । अधिकारिणोऽपि नेयं सङ्ख्या तेन संशय एवायमनुपपन्नः । उच्यते । उपरितनेऽधिकरणे आख्यातगतसङ्ख्या विवक्षिता स्थास्यति । स्थितायां च कर्तृसङ्ख्याविवक्षायां किं यथाकर्तृत्वमधिकारो भवति । उतान्यथैव कर्तृत्वमन्यथाचाधिकार इति । एतदेव विवृणोति—न कर्तृगता सङ्ख्या अधिकारेपि इतरेतरयोगमापादयितुं क्षमेत्यर्थः । तत्र पूर्वपक्षवादिनोऽभिप्रायः । अधिकारस्य कामनायोगात् कर्तृत्वमुखेन चाधि-

---

1. 1387

इति। न कर्तृगता सङ्ख्या अधिकारेऽपि इतरेतरयोगमापादयितुं क्षमेत्यर्थः। तत्र पूर्वपक्षवादिनोऽभिप्रायः—अधिकारस्य कामनाऽयोगात् कर्तृत्वमुखेन चाधिकारावाप्तेः अधिकारश्च भागे इतरव्याप्त्या च नियम्यते कामितया चाधिकार इति परिषदोऽर्थिन्या अधिकार इत्युक्तम्। अत्राभिधीयते। न कर्तृत्वं कर्मप्राप्तिं नियन्तुं शक्नोति। यथाभिधानमाप्तिमवगच्छामो न पुनर्यथापदार्थान्तरसंबन्धं ऋद्धिकामप्रातिपदिकावगम्यत्वात्। तस्या अवगतावाप्तेश्च कर्तृसंबन्धात्। किञ्च न कर्तृत्वमप्यत्र निरपेक्षतां विहन्ति, कर्तृणां ह्यत्र बहुत्वमवगम्यते न बहूनां कर्तृत्वम्। किमतो यद्येवं? एतदतो भवति - कर्तारो बहवः न बहवः कर्ता अतश्च

---

कारावाप्तेः [1]अधिकार[श्च भागेन] इतरव्याप्त्या च नियम्यते। कामितया चाधिकार इति परिषदोऽर्थिन्या अधिकार इत्युक्तम्। अस्यार्थः - योऽयमृद्धिकामाधिकारस्तस्य कामनायोगात् कामनासबन्धात् कामनाहेतुत्वादिति यावत्। यश्च कामनाहेतुः सोऽधिकारः। तत्र कामस्य सिद्धिः अधिकारार्था। तस्य प्राप्तिः कर्तुर्मुखेन कर्तुः फलप्राप्तिरित्यर्थः। कर्तृत्वे वा इतरेतरयोगे फलमपि इतरेतरयुक्तानाम् यथाभूता फलावाप्तिः तथाभूतैव कामनाप्याश्रयणीया। तेन भागशः कामनया परिषदः ऋद्धिकामना अधिकारिविशेषणम्। यथाभूता कामना तथाभूत एवाधिकार इति परिषदोऽर्थिन्या अधिकार इति। अत्राभिधीयते। न कर्तृत्वं कर्मप्राप्तिं नियन्तुं शक्नोति। यथाभिधानमाप्तिमवगच्छामो न पुनर्यथापदार्थान्तरसंबन्धम्। यादृशमभिधानं स्वर्गकामादिकं तादृशं,[न]पुनः स्वर्गकामादिपदात् स्वर्गैकदेशकामना गम्यते। किन्तु कृत्स्नकामना। तेन कृत्स्न एव स्वर्गः सर्वेषां भवति। न पुनः पदार्थान्तरभूतकर्त्रनुसारेण फलावाप्तिर्वर्णनीया। कुतः? स्वर्गकामपदावगम्यत्वात्। तस्या अवगतावा(अ)प्तेश्च कर्तृसंबन्धात् स्वर्गकामपदार्थफलावाप्तिरवगम्यते अवगतावाप्तिश्चाधिकारी कर्ता भवति। तेनोत्तरकालभावि कर्तृत्वं, न कर्तृणामितरेतरयोग इत्यर्थः। एवं तावत् इतरेतरयुक्तानामेव कर्तृत्वं न कर्तृणामितरेतरयोग इति कृत्वाऽधिकरणं वर्णितम्। संप्रति कृत्वाचिन्तामुद्घाटयति—किञ्च न कर्तृत्वमपि अत्र निरपेक्षतां विहन्ति कर्तृणां ह्यत्र बहुत्वमवगम्यते न बहूनां कर्तृत्वम्। किमतो यद्येवं? एतदतो भवति। कर्तारो बहवः न

शाब्दं साहित्यं न तु आर्थं सहत्वम्। ननु च सह कर्तृत्वमत्रेति। सहशब्दोऽत्र अर्थसहत्वं लक्षयति। कुत एतत्? भाष्यादेव। एकैकस्य स्वातन्त्र्यविवक्षायां आख्याते सङ्ख्यायोगात्। शक्नोत्येकैकस्य स्वातन्त्र्यविवक्षायां इति। न्याय्या चेयमवगतिः यस्माद्विभक्तयो भवन्ति तदर्थस्य सङ्ख्या(योगादिति) मवगमयन्ति। न चाख्यातार्थः सङ्ख्यां भजते। असत्त्वभूतत्वात्। अतः तदाक्षिप्तानि व्यावृत्तान्येव कारकाणि सङ्ख्यां भजन्ते। तदवस्थानामेवाख्यातार्थेनाक्षेपात् न कारकशब्दाभिधेयानि। नामविभक्तयः पुनः सङ्ख्याभाजः प्रातिपदिकार्था एवेति तद्गतामेव

---

बहवः कर्ता। अधिष्ठानमात्रभेद एव कर्तृत्वं तु न भिद्यत इत्येवं न भवति किं तर्हि सहाधिष्ठानेन कर्तृत्वमेव भिद्यत इत्यर्थः। तेन कात्स्न्र्येनैकैकस्य कर्तृत्वात् एकैकस्य कृत्स्नं फलमिति। यथा कर्त्रधिकारेऽपि फलावाप्तौ न परिषदोऽधिकारः किं तर्हि एकैकस्यैवेति। अत्र भाष्येण सहक्रियमाणे सत्र इति वदता सहकर्तृत्वमुक्तम् सहकर्तृत्वे नैकैकस्य कर्तृत्वमित्यनेनाभिप्रायेण चोदयति—ननु सहकर्तृत्वमत्रेति। परिहरति—सहशब्दोऽत्रार्थसहत्वं लक्षयति। अस्यार्थः - यद्यप्यत्रशब्द[तः] कर्तॄणां सहत्वं न प्रतीयते तथापि अर्थसहत्वमत्राप्यस्तीत्येतदभिप्रायेण सहत्वमिति। कुतः एतत्? भाष्यादेव। यत एव महाभाष्यकारः[आह]—एकैकश्चात्र कर्तेति। युक्तिं चाह—एकैकस्य स्वातन्त्र्यविवक्षायां कर्तृत्वविवक्षायां आख्याते सङ्ख्यायोगात् सङ्ख्यावाचित्वात्। किञ्च यद्यत्रैक एव कर्ता स्यात् तदा एकवचनमेव स्यात् न बहुवचनम् तेन बहवः कर्तारः। तथाऽपरमपि भाष्यकारेणोक्तम्-शक्नोत्येकैकस्य स्वातन्त्र्यविवक्षायां—इति। ततोऽपि गम्यते एकैकः कर्तेति। एकैकस्य स्वातन्त्र्यविवक्षायां आख्याते सङ्ख्यायोगादिति यदुक्तं तदुपपादयितुमाह—. न्याय्या चेयमवगतिः कर्तारो बहव इति। यस्माच्छब्दात् विभक्तयो भवन्ति तदर्थस्य सङ्ख्यायोगादिति यदुक्तं तदुपपादयितुं अवगमयन्तीति॥ उत्सर्गस्तावदयम्। नचाख्यातार्थः सङ्ख्यां भजते। असत्त्वभूतत्वात् अतस्तदाक्षिप्तानि व्यावृत्तान्येव कारकाणि सङ्ख्यां भजन्ते तदवस्थानामेवाख्यातार्थेनाक्षेपात् न कारकशब्दाभिधेयानि कारकाणां द्रव्याणां ये शब्दाः तदभिधेयानि द्रव्यमात्राणि न सङ्ख्यां भजन्ते इत्यर्थः। नामविभक्तयःपुनः सङ्ख्याभाजः प्रातिपदिकार्था

सङ्ख्यामभिनिर्वर्तयन्ति । अत एव अग्नीषौमौ [देवता, देवतात्वं हि कारकावस्था तस्यामवस्थायां अग्नीषोमप्रातिपदिकादुत्पन्ना द्विवचनविभक्तिः न सङ्ख्यामाह । किन्तु प्रातिपदिकावस्थामात्रायां इति । अत एवाधिष्ठानस्य द्वित्वं देवतात्वे पुनरेकत्वमिति] दर्शितम् । उत्पत्तौ चेयं सङ्ख्या अतः कारकगतैव मन्तव्या । किमिदमुत्पत्ताविति ? आख्यातगतेयं सङ्ख्या नोपपदगतेत्यर्थः । उपपदगता हि कर्मगतापि प्रतीयते सत्त्ववदभिधानात् तिस्र आहुतीर्जुहोतीतिवत् । तस्मादेकैकस्यात्र स्वातन्त्र्यमवगम्यते 'स्वतन्त्रः कर्ता' इति च स्मरणात् । बहुत्वं पुनः कर्तुः सापेक्षतामापादयति न सापेक्षस्य कर्तृत्वम् । अतः कर्त्रन्तरं साहित्यसंपत्त्यर्थमुपादीयते । न कर्तृत्वसंपत्त्यर्थमन्योपादानम् । कथं तर्हात्र युगपदभिधानं ? कथं

---

एवेति तद्गतामेव प्रातिपदिकार्थगतामेव सङ्ख्यामभिनिर्वर्तयन्ति । अत एवाग्नीषोमौ देवता, देवतात्वं हि कारकावस्था, तस्यामवस्थायामग्नीषोमप्रातिपदिकादुत्पन्ना द्विवचनविभक्तिः न सङ्ख्यामाह किन्तु प्रातिपदिकावस्थामात्रायामिति । अत एवाधिष्ठानमात्रस्य द्वित्वं, देवतात्वे पुनरेकत्वमिति एतद्दर्शितम्—सत्यं हि वै देवतेति वदता । ननु कर्मशब्दादपि विभक्तिर्भवन्ती कर्मसङ्ख्यामाह न कारकसङ्ख्यामित्याशङ्कामपाकरोति-उत्पत्तौ चेयं सङ्ख्या । अतः कारकगतैव मन्तव्या । किमिदमुत्पत्ताविति ? आख्यातगतेयं सङ्ख्या नोपपदगतेत्यर्थः । तथापि किमित्याह—उपपदगता हि कर्मगतापि प्रतीयते सत्त्ववदभिधानात् तिस्र आहुतीर्जुहोतीतिवत् । आख्यातगता तु असत्त्वभूतत्वात् आख्यातार्थस्य तद्गता संभवन्ती तदाक्षिप्तकारकगता भवति । एवमपि समभिव्याहारो न दूरान्तरितः स्यादिति भावः । तस्मादेकैकस्य स्वातन्त्र्यमवगम्यते स्वतन्त्रः कर्तेति च स्मरणात् । तस्मादेकैकस्य कर्तृत्वमिति । ननु बहुत्वश्रवणात् सापेक्षाणां कर्तृत्वमवगम्यत इत्यत्राह—बहुत्वं पुनः [1]कर्तुः सापेक्षतामापादयति न सापेक्षस्य कर्तृत्वम् । अतः कर्त्रन्तरं साहित्यसंपत्त्यर्थमुपादीयते । न कर्तृत्वसंपत्त्यर्थमन्योपादानम् । यद्याख्यातेन सहसङ्ख्या न संबध्यते

---

1. कर्तृसापेक्षतां

चैकशेषः? माभूद्युपदभिधानं युगपदाक्षेपो भविष्यति। एकशेषस्तु यद्यभिधानादृते न संभवति न नाम तथापि अयमेव शास्त्रार्थः। अतः यथाकर्तृत्वेऽपि न परिषदोऽर्थिन्या अधिकार इति सिद्धम्॥

॥ २ ॥ प्रयोगे पुरुषश्रुतेः यथाकामी प्रयोगे स्यात्॥ ३ ॥

किमिदं शास्त्रफलं प्रयोक्तरीति? कस्तेनास्य विरोधः? कथं वा तेनेदं लभ्यते। यदा प्रयोक्तृत्वं कर्मणि शब्दार्थः तदा वचनस्य विवक्षा प्राप्नोति। विवक्षिते वचने अविवक्षिताभिधानं विरुद्धम्। अतः इदमुक्तं तदेवाक्षिप्यत इति। कथं पुनराक्षेपः नियोज्यस्य हि कर्मणि इदमस्येत्येवं

---

किन्तु तदाक्षिप्तेन कर्त्रा कथं तर्हि युगपदभिधानं? कथं च एकशेषः? ये हि एकशेषेण युगपदभिधीयन्ते तेषामेव विभक्तिभिः सङ्ख्योच्यत इति भावः। परिहरति—माभूत् युगपदभिधानं युगपदाक्षेपो भविष्यति तथापि युगपदवगमसिद्धेः। एकशेषस्तु यद्यभिधानादृते न संभवति शब्दविषयत्वं तन्न नाम भवतु तथाप्ययमेव शास्त्रार्थः नेदं तन्त्रं एकदेशाभिहितस्यैव सङ्ख्यायोग इति प्रमाणाभावादिति मन्यते अतः यथा कर्तृत्वेप्येकैकस्य कृत्स्नफलप्राप्तेः न परिषदोऽर्थिन्या अधिकार इति सिद्धम्।

॥ प्रयोगे ॥

अत्र भाष्यं—"ननु तृतीये उक्तं शास्त्रफलं प्रयोक्तरि" इत्यादि। तदाक्षिपति—किमिदं शास्त्रफलं प्रयोक्तरीति कस्तेनास्य विरोधः? कथं वा तेनेदं लभ्यते यदि हि तेनास्य विरोधो भवेत् पुनरुक्तता वा तदा युज्येत 'ननु च तृतीये उक्तमिति'। न चैतद्द्वयमप्यस्ति इति। समाधत्ते—यदा प्रयोक्तृत्वं कर्मणि शब्दार्थः तदा वचनस्य विवक्षा प्राप्नोति। विवक्षिते वचने अविवक्षिताभिधानं विरुद्धम्। अस्यार्थः - शास्त्रफलं प्रयोक्तरीति प्रयोक्तृत्वं कर्मणि शब्देनोच्यत इत्युक्तम्। प्रयोक्तृत्वे सति तस्योपादेयत्वात् सङ्ख्याया अपेक्षितत्वेन विवक्षा प्राप्नोति। ततश्चानियतसङ्ख्यानां यागाशङ्का विरुध्यत इति विरोधाभिप्रायेणाक्षेपः। यत एव विरोधाभिप्रायेणाक्षेपः अतस्समाधानकाले इदमुक्तं "तदेवाक्षिप्यत" इति। कथं पुनराक्षेपः? नियोज्यस्य हि कर्मणि 'इदमस्य'

संबन्धोऽवगम्यते अत्रास्येति वा । अतो यथानियुक्तस्यैव सङ्ख्यासंबन्ध इति पूर्वः पक्षः । कामितामात्रतया च नियोगः न सङ्ख्यापेक्ष इत्युक्तम् । स्वर्गकामे च विभक्तिवचनं भावार्थानपेक्षमित्युक्तम् । नियोज्यस्य भावार्थसंबन्धः कर्तृत्वमित्येतदुक्तं न भावसंबन्धस्य नियोग इत्यर्थः । तस्मान्न भावगता सङ्ख्या विवक्षामर्हति अधिकारपदगतेव । किञ्च फलस्य पुरुषार्थतापर्यन्तं चैतद्वाक्यमित्युक्तम् । तत्परत्वे च वाक्यस्य क्रियाकारकसंबन्धो नतरां विवक्ष्येत । ननु च क्रियाकारकसंबन्धोऽप्यत्रावगम्यते । स कथं त्यज्यते ? अन्यपरत्वाद्वाक्यस्य । एकार्थं चैकं वाक्यमित्युक्तम् । [अतो विषं भक्षयेदिति न विवक्ष्यते] [एवं चेष्वसनदृष्टान्त उपपन्नो भवति । लिङ्गमुक्तम् ।

---

इत्येवं संबन्धोऽवगम्यते अस्यात्रेति वा । नियोज्यस्य कर्मण्यैश्वर्यमित्यधिकार-लक्षणसम्बन्धोऽपि नियोज्यस्यैव नान्यस्य । यश्च नियोज्यस्स एवाधिकारी स एव कर्तेति । अतो यथानियुक्तस्यैव सङ्ख्यासंबन्ध इति पूर्वः पक्षः ।[1] नियोज्यत्वे सङ्ख्या विवक्षितेत्याह—कामिमात्रतया च नियोगः न सङ्ख्यापेक्ष इत्युक्तम् । ननु स्वर्गकाम इत्येकवचनश्रवणात् सङ्ख्यायुक्तस्यैवाधिकार इति अत्राह—स्वर्गकामे च विभक्तिवचनं भावार्थानपेक्षमित्युक्तम् तदनुकारित्वात् स्वर्गकामो यजेत ऋद्धिकामा यजेरन्निति श्रवणात् । ननु भवतु सङ्ख्याशून्यो नियोग इति तथापि कर्ता किमिति एको न भवतीत्यत्राह—नियोज्यस्य भावार्थसंबन्धः कर्तृत्वमित्येतदुक्तं न भावसंबन्धस्य नियोग इत्यर्थः । तस्मान्न भावगता सङ्ख्या विवक्षामर्हति अधिकारपदगतेव । यदि हि अधिकारपदगता विवक्ष्येत तदा लिङ्गमपि विवक्षितं स्यात् इति स्त्रिया अधिकारो न स्यात । किञ्च फलस्य पुरुषार्थतापर्यन्तं चैतद्वाक्यमित्युक्तं तृतीये । तत्परत्वे च वाक्यस्य क्रियाकारकसंबन्धो नतरां विवक्ष्येत । ननु क्रियाकारकसंबन्धोऽप्यत्रावगम्यते । स कथं त्यज्यते । यथा फलपुरुषार्थसंबन्धोऽवगम्यते तथा क्रियाकारकसंबन्धोऽपि अवगम्यमानोऽसौ कथमिव त्यज्यत इति । उत्तरं—अन्य-

---

1. मातृकायां भवन्नित्यधिकम् ।

अत्राभिधीयते—न कर्म वा सङ्ख्यापि अविवक्षिता शक्यते वक्तुम् । कुतः ? विशिष्ट एव हि कर्मण्यधिकारो भवति । यथा द्रव्यविशिष्टकर्मण्यधिकारावगमात् न द्रव्यान्तरेण क्रियते तथा कर्तृसङ्ख्याविशिष्टे कर्मण्यपि अधिकारावगमे[1] न सङ्ख्यान्तरमाश्रीयते । न च स्वर्गः पुरुषस्येत्येवंपरं तद्वाक्यं] किं तर्हि अस्मिन् कर्मण्यस्याधिकार इति । अधिकारश्चायं विशिष्टक्रियाकारकस्वार्थफलप्रयुक्तः प्रतीयत इति सर्वमनवद्यम् । एवं च सति प्रयोक्तुः फलमित्येतदपि सिद्धम् । अधिकार्येव हि प्रयोक्ता । कर्मा-

---

परत्वाद्वाक्यस्य । भवत्वन्यपरं वाक्यं तथापि किमित्याह—एकार्थं चैकं वाक्यमित्युक्तम् । अतो विषं भक्षयेदिति च न विवक्ष्यते । अस्यार्थः-व्युत्पत्त्यभिप्रायेण शब्दार्थप्रतीतिः । वृद्धव्यवहारेऽपि व्युत्पत्तिः । तत्रैकं वाक्यमेकमेवार्थमवगमयतीति व्युत्पत्तिः । तेन अर्थान्तरपरत्वे अर्थान्तरं न प्रतीयते व्युत्पत्तिविरहात् इति । अतो न विवक्षितेत्युच्यते । प्रतिपत्तिभ्रमस्तु सामान्यतो दृष्टनिबन्धनः स्यात् । यथाकामी प्रयोगे स्यादिति । यदा चैकं वाक्यमेतदर्थद्वयं प्रतिपादयितुं न शक्नोति । एवं च इष्वसनदृष्टान्त उपपन्नो भवति । लिङ्गमुक्तम् । अत्राभिधीयते । न कर्म वा सङ्ख्याप्यविवक्षिता शक्यते वक्तुम् । यथा कर्म अविवक्षितमिति न शक्यते वक्तुं न तथा सङ्ख्यापीत्यर्थः । कुतः ? विशिष्ट एव हि कर्मण्यधिकारो भवति यथा द्रव्यविशिष्टकर्मण्यधिकारावगमात् न द्रव्यान्तरेण क्रियते तथा कर्तृसङ्ख्याविशिष्टे कर्मण्यप्यधिकारावगमे न सङ्ख्यान्तरमाश्रीयते विशिष्टं यत्कारकं कर्त्राख्यं तस्य या सङ्ख्या तया विशिष्टं चैतत्कर्म तेन तद्विशिष्टतासंपत्तये सङ्ख्या आदरणीयेत्यर्थः । ननु च भवतु विशिष्टं कर्म तथापि वाक्यं तत्परं न भवति इत्यत्राह—न च स्वर्गःपुरुषस्येत्येवंपरं तद्वाक्यं किं तर्हि अस्मिन् कर्मणि अस्याधिकार इति । भवत्वेवं तथापि किमित्यत्राह—अधिकारश्चायं विध्यर्थश्चायं विशिष्टक्रियाकारकस्वार्थफलप्रयुक्तः प्रतीयते इति सर्वमनवद्यम् । एककर्तृकक्रियार्थो युक्तः स्वार्थः फलसाधको विध्यर्थः प्रतीयत इत्यर्थः । नन्वेवमपि अधिकारिणः फलं न प्रयोक्तुः इत्यत्राह—एवं च सति प्रयोक्तुः फलमित्येतदपि सिद्धम् । अधिकार्येव हि प्रयोक्ता । तेनाधि-

---

1. वगमोत्मा - मा

**दीनां तार्तीयो विनियोग एतस्मादेव। यत्पुनरिदमुक्तं भाष्यकारेण— आत्मनः परस्य वा स्वर्गं कामयतः स्वर्गकामपदाभिधानमविशिष्टं आत्मनेपदाच्च लिङ्गाच्च, आधाने आत्मनेपदकर्तृकोपन्यासाच्चाङ्गफलानामपि प्रधानकर्तृसंयोग उक्तः। किमनेनोक्तम्? सर्वविशेषणविशिष्टनियोगात् सर्वमिदं लभ्यते। यदात्मनेपदं कर्तृगामितामवगमयति फलस्य, यच्च स्वर्गकामपदं आत्मसंबन्धिनि कामे कामितामभिधत्ते। पाणिनेरपि अयमेव प्रयोगो लिङ्गाभिधाने निमित्तम्। [यदेवं स्मरति] यजते यजमानः। यजन्ति याजकाः इति। अतो यथानिमित्तमेवावगतिर्भवतीति निमित्तोपन्यासो भाष्यकारस्य। अतो विवक्षिता सङ्ख्येति सूक्तम्। प्रतिपद्विधानं तु प्रकृतावसंभवादुत्कृष्यते।**

---

कारिणः फलमुच्यमानं प्रयोक्तुर्भवति। अन्यस्याप्रयोक्तृत्वात्। यदि नियोगपरमिदं वाक्यं कथं तर्हि कर्मादीनां तार्तीयो विनियोगः इत्यत्राह— **कर्मादीनां तार्तीयो विनियोग एतस्मादेव** नियोगादेव। यदि नियोगादेव फलस्य पुरुषार्थता ऽवगम्यते तदा **यत्पुनरिदमुक्तं भाष्यकारेण आत्मनःपरस्य वा स्वर्गं कामयतः स्वर्गकामपदाभिधानमविशिष्टम्। आत्मनेपदाच्च लिङ्गाच्च।** शब्दै(द)स्तु शब्दार्थे नियोज्यस्यैव फलावाप्तिरुक्ता। **आधाने आत्मनेपदकर्तृकोपन्यासाच्च अङ्गफलानामपि प्रधानकर्तृसंयोग उक्तः। किमनेनोक्तम्?** उत्तरमाह— **सर्वविशेषणविशिष्टनियोगात् सर्वमिदं लभ्यते यदात्मनेपदं कर्तृगामितामवगमयति फलस्य यच्च स्वर्गकामपदमात्मसंबन्धिनि कामे कामितामभिधत्त** इति लिङ्गस्थानीयमिदमुक्तमिति भावः। **पाणिनिरप्ययमेव प्रयोगो लिङ्गाभिधाने** आत्मनेपदलिङ्गाभिधाने **निमित्तं यदेवं स्मरति यजते यजमान इति भवति यजन्ति याजकाः** अस्मिन्नेव प्रयोगे नियोगसामर्थ्येन स्वार्थतां फलस्य ज्ञात्वा स्वार्थे फलमात्मनेपदं भवतीति स्मरणं अन्यथा निर्मूलं स्यात्। उपसंहरति— **अतो यथानिमित्तमेवा**त्मनेपदादि निमित्तानतिक्रमेणैव **नियोगादप्यवगतिर्भवतीति** लिङ्गत्वेन **निमित्तोपन्यासो भाष्यकारस्य।** अधिकरणार्थमुपसंहरति— **अतो विवक्षिता सङ्ख्येति सूक्तम् प्रतिपद्विधानं तु प्रकृतावसंभवात् उत्कृष्यते** वाक्यादिति तृतीये उक्तम्।

॥ ३ ॥ प्रक्रमात्तु नियम्येतारम्भस्य क्रियानियम्यत्वात् ॥ १२ ॥

कथं पुनरत्र संशयः ? कथम् वा न संशयः ? फलपर्यन्तः कामाधिकार इत्युक्तम् । तत्र यदि कारणान्तरेण फलप्राप्तौ सत्यां निवृत्तः कामः यद्वा अन्यतः तदधिकार एव निवृत्तो भवति निरधिकारस्य चानुष्ठानं न शब्दात् नापि अन्यतोऽवगच्छामः । तस्मादप्रतिष्ठितमेवेमं संशयं पश्यामः । उच्यते । इदमत्र संशयद्वारं, कर्तव्यतापूर्वकं हि कर्मादीनां फलपुरुषसंबन्धमुक्तवन्तोऽधिकारज्ञाः प्रवृत्तश्चेत् कर्तव्यतायां कारितः शास्त्रेणेत्यवगच्छामः । शास्त्रं चोपक्रमादेरपवर्गपर्यन्तस्य स्वार्थस्याभि-

---

॥ प्रक्रमात्तु ॥

कथं पुनरत्र संशयः ? कथ वा न संशयः ? फलपर्यन्तः कामाधिकार इत्युक्तम् । तत्र यदि कारणान्तरेण फलप्राप्तौ सत्यां निवृत्तः कामः कथञ्चिद्वा अन्यतो दोषदर्शनादेः तदधिकार एव निवृत्तो भवति । निरधिकारस्य चानुष्ठानं न शब्दात् नाप्यन्यतोऽवगच्छामः । तस्मादप्रतिष्ठितमेवेमं संशयं पश्यामः । अस्यार्थः-न निमित्तपर्यन्तः कामाधिकारः किन्तु फलपर्यन्त इत्युक्तम् । यदि निमित्तपर्यन्तः स्यात् तदा कामना उत्पन्ना सती निमित्तमिति निवृत्तायामपि कामनायां प्रयोगः परिसमा[प्यः](प्त) स्यात् । फलपर्यन्ते तु कामनानिवृत्तौ पुरुषस्य कर्मण्यैश्वर्यनिवृत्तिरिति किन्निबन्धनमनुष्ठानम् । अतो वीतायामपि फलेच्छायां प्रयोगपरिसमाप्तिसंभावनाऽनुपपन्नेति । उच्यते । इदमत्र संशयद्वारम् । कर्तव्यतापूर्वकं हि कर्मादीनां फलपुरुषसंबन्धमुक्तवन्तोऽधिकारज्ञाः । अस्यार्थः-योऽयं फलपुरुषयोः सम्बन्धः स कर्तव्यताज्ञानपूर्वकः न पुनः फलपुरुषसंबन्धज्ञानपूर्विका कर्तव्यतावगतिः । फलकामस्य हि पुरुषस्य विध्यर्थः कर्तव्यतयाऽवगम्यमानः कर्तव्य एव न भवति यदि फलसिद्धिर्नाक्षिपतीति । एवं फलपुरुषयोः सम्बन्धोऽवगम्यते न पुनरन्यथा । तेन फलपुरुषसंबन्धावगमात् प्रागेव तावत् कर्तव्यताऽवगम्यते । तथापि किमित्याह—प्रवृत्तश्चेत् कर्तव्यतायां कारितः शास्त्रेणेत्यवगच्छामः । कर्तव्यताज्ञानेन कर्मकर्तव्यतावगमनिबन्धनेऽनुष्ठाने प्रवृत्तिः कर्तव्यतावगमे जाते तन्मात्रनिबन्धनत्वात्तदनुष्ठानस्य प्रवृत्तः पुरुषः शास्त्रेणैव

धानम् । अतो नापरिसमाप्यावतिष्ठते अवयवशोऽनवगमान्नियोगार्थस्य । नन्वेवं तर्हि फलार्थता कर्मणो नोपपद्यत इत्युक्तम् । प्रवृत्तौ तावन्निमित्ततया नानुपपन्नम् । प्रवृत्तौ चापरिसमाप्तेरेव शास्त्रं करणमित्युक्तम् । अतः परमधिकारानुवृत्तिः क्वोपयुज्यते ? तस्माद्वीतायामपि फलेच्छायां समापनीयं कर्मेति मन्यते ।

एवं प्राप्तेऽभिधीयते—सत्यमारम्भोऽपवर्गपर्यन्तः शास्त्रार्थः सत्यं चावयवशो नावगम्यते । न पुनरधिकारादृते शास्त्रं कारणमित्यवगन्तुं शक्यते । ननु च प्रवृत्तौ निमित्ततयोपपन्नमनुष्ठानमित्युक्तम् । नासाध्यं निमित्तं भवितुमर्हति । यथाऽप्रतिपन्नमेव हि निमित्तं नाप्रतिपन्नं साध्य

---

प्रवृत्तियोग्यमर्थं ज्ञापयता पुरुषोऽनुष्ठानं कार्यते । नान्यथा । तेन कर्तव्यतया विध्यर्थं बोधितवता शास्त्रेण कारितमेवानुष्ठानमिति । ननु चोपक्रममात्रे भवतु शास्त्रस्य व्यापारः इत्यत्राह—**शास्त्रं चोपक्रमादेरपवर्गपर्यन्तस्य स्वार्थस्याभिधानम् । अतो नापरिसमाप्यावतिष्ठते अवयवशोऽनवगमान्नियोगार्थस्य । नन्वेवं तर्हि फलार्थता कर्मणो नोपपद्यत इत्युक्तम् ।** इष्टलक्षणं हि फलम् । यदा तदिष्टं न भवति तदा तत्फलमेव न भवतीति परिहरति—**प्रवृत्तौ तावन्निमित्ततया नानुपपन्नम्** प्रवृत्तिकाले कर्तव्यतावगमेन प्रयोजनम् । तस्यां चावस्थायां सत्यां कामनायामधिकार-निमित्तत्वात् उपपन्नमनुष्ठानम् **प्रवृत्तौ चापरिसमाप्तेरेव शास्त्रं करणमित्युक्तम् । अतः परमधिकारानुवृत्तिः क्वोपयुज्यते ।** निवृत्तेऽप्यधिकारे नानुष्ठानं निवर्तत इत्यर्थः । **तस्मात् वीतायामपि फलेच्छायां समापनीयं कर्मेति मन्यते । एवं प्राप्तेऽभिधीयते - सत्यमारम्भः अपवर्गपर्यन्तः शास्त्रार्थः । सत्यं चावयवशो नावगम्यत** इति । **न पुनरधिकारादृते शास्त्रं कारणमित्यवगन्तुं शक्यते ।** अयमभिप्रायः-यस्य विध्यर्थः कर्तव्यः तस्यः तत्साधके साङ्गप्रधानेऽधिकारः । काम-नायां च निवृत्तायां न कार्यो विध्यर्थः । पुरुषस्य कार्यतयाऽवभासिप्रमाणाभावात् । अकार्यभूते च विध्यर्थे तत्साधकेऽप्यधिकारो निवृत्तः । निवृत्ते चाधिकारे किन्निबन्धन-मनुष्ठानम् । **ननु प्रवृत्तौ निमित्ततयोपपन्नमनुष्ठानमित्युक्तम् ।** उत्तरं—**नासाध्यं निमित्तं भवितुमर्हति ।** अस्यार्थः - यदैव पुरुषस्य कामना विद्यते तदैव पुत्रादिकं साध्यम् । साध्यं च सत् तदधिकारनिमित्तम् नान्यथा । तेन यद्यपि प्रवृत्तिदशायां

**निमित्ततया प्रतीयत इत्युक्तम् । अतः प्रवृत्तावपि यावन्निमित्तमेव प्रवृत्तिः निमित्ताभावे वा उपरमो न्याय्य इति न्यायविदो मन्यन्ते ।**

**यत्पुनरिदं भाष्यकारेणोक्तं वेदैवासौ मया एतत्कर्तव्यमिति उपायं तु न वेद इति; अयमर्थः फलेच्छोपरमे तावत् शास्त्रं न प्रत्यक्षीभूतमस्ति । अतो वीतायां फलेच्छायां अवधूतशास्त्रार्थायां न कारणता धात्वर्थस्योपपद्यते । तच्च कारणभूतेऽधिकार इति स एव शास्त्रार्थाभावो दर्शितः ।**

---

कामनाया विद्यमानत्वात् साध्यतायां सत्यामधिकारनिमित्तता पुत्रादेः तथापि वीतायां फलेच्छायां असाध्यभूतं नाधिकारनिमित्तमिति निमित्ताभावेन अधिकारनिवृत्तौ नास्त्यनुष्ठानमिति । तस्मादसाध्यस्य निमित्तता नास्तीत्याह—**यन्नाप्रतिपन्नमेव हि निमित्तं नाप्रतिपन्नं साध्यनिमित्ततया प्रतीयते ।** कामनाविषयस्याधिकारविशेषणत्वात् स्यादित्युक्तम् । **अतः प्रवृत्तावपि यावन्निमित्तमेव प्रवृत्तिः निमित्ताभावे वा उपरमः ।** यावदेवाधिकारनिमित्तमस्ति तावदेव सत्यधिकारेऽनुष्ठानं कर्तव्यम् । तदभावे च नानुष्ठानमस्तीति **न्यायविदो मन्यन्ते ।** अयमत्र सङ्क्षेपः—प्रारम्भसमये सत्यां कामनायां साध्यतया पुत्रादिकं अवगम्यमानंनियोज्यविशेषणमस्तीति नियोगं तावत्पुरुषः कर्तव्यतयाऽवबुध्यते । तत्साधकतयाऽवसानेऽपि प्रधाने विकारावगमो जातः तदेव चानुष्ठानहेतुरिति पूर्वः पक्षः ।

नोत्पन्नमात्रमधिकारज्ञानमनुष्ठाने हेतुः । किं तर्हि ? अनुवर्तमानम् । न वीतकामस्याधिकारज्ञानानुवृत्तिरस्तीति राद्धान्तः । **यत्पुनरिदं भाष्यकारेणोक्तम्—वेदैवासौ मयैतत्कर्तव्यमिति उपायं तु न वेदेति**—अस्यार्थः-पृच्छतश्चायमाशयः-अनेन किल भाष्येणैवमाह-स्वत एव पुरुषः फलेच्छयाऽङ्गे प्रवृत्तः इति । स चायमर्थः इहानुपयोगीति । उत्तरं—**अयमर्थः फलेच्छोपरमे तावत् शास्त्रं न प्रत्यक्षीभूतमस्ति ।** अस्यार्थः - फलेच्छा कर्तव्येति वचनं नास्ति । यदि वचनं स्यात् साध्ये करणभावो धात्वर्थस्य । अस्ति चेत् अकारणभूते चेत् तदा फलेच्छोपरमे शास्त्रस्य प्रत्यक्षीभूतत्वात् फलेच्छोपरम एव नोपपद्यते । न चैवं वचनमस्ति । **अतो वीतायां फलेच्छायां अवधूतशास्त्रार्थायां न करणता धात्वर्थस्योपपद्यते ।** इच्छाभावे फलस्यानिष्टत्वात् न साध्यार्थः न चाधिकार इति **स एव शास्त्रार्थाभावो** भाष्य-

ननु चैतद्भावार्थाधिकरणविरुद्धम्। यथा न विरुध्यते तथा स्वर्गकामाधिकरणे दर्शितम्। यत्पुनरिदं पक्षान्तरोपन्यसनं शिष्टविगर्हणात् परिसमापनीयमिति। तथा किमिति विगर्हन्ते इति परिचोद्य किमत्र कारणान्तरेणेत्यस्यैव शिष्टविगर्हणस्य समाप्तौ कारणतोक्ता मिथ्यासङ्कल्पदोषश्च दर्शितः। तदिदमसमञ्जसमिव प्रतिभाति। कथमसमञ्जसं? यदि तावत् मिथ्यासङ्कल्पदोषपरिहारायैव प्रक्रान्तपरिसमापनं तर्हि न शक्यः शिष्टविगर्हणोपन्यासः। अत्रोच्यते। मिथ्यासङ्कल्पतैवात्र नास्ति। शास्त्रार्थे हि सङ्कल्पः कृतः। न च वीतेच्छस्य समापनं शास्त्रार्थः। विगर्हयितारः शिष्टा एवं मन्यन्ते। मिथ्यासङ्कल्पदोषोऽस्यास्ति योऽयं प्रक्रान्तं न परिसमापयति इति मत्वा विगर्हन्ते। अतस्तद्विगर्हणात् समापनं कर्तव्यम्। किमिति निर्मूलमेव विगर्हणमाश्रयन्ते। किमत्र मूलान्वेषणेन। इदमेव हि दुःखहेतुः। दुःखहेतुपरिहारे च कृतिनो यत्नवन्त इति सुष्ठूक्त

---

कारणानेन दर्शितः। ननु चैतत् भावार्थाधिकरणविरुद्धम् यदिदमुच्यते न यागः कर्तव्यता चोद्यत इति। उत्तरं—यथा न विरुध्यते तथा स्वर्गकामाधिकरणे दर्शितम्। यत्पुनरिदं पक्षान्तरोपन्यसनं शिष्टविगर्हणात् परिसमापनीयमिति तथा किमिति विगर्हन्त इति परिचोद्य किमत्र कारणान्तरेणेत्यस्यैव शिष्टविगर्हणस्य समाप्तौ कारणतोक्ता। तथा मिथ्यासङ्कल्पदोषश्च दर्शितः। तदिदमसमञ्जसमिव प्रतिभाति। कथमसमञ्जसम्? यदि तावत् मिथ्यासङ्कल्पदोषपरिहारायैव प्रक्रान्तपरिसमापनं तर्हि न शक्यः शिष्टविगर्हणोपन्यासः। विनापि शिष्टविगर्हणया मिथ्यासङ्कल्पदोषपरिहारार्थत्वेनैव सिद्धेः। अत्रोच्यते। मिथ्यासङ्कल्पतैवात्र नास्ति। कुतः? शास्त्रार्थे हि सङ्कल्पः कृतः न च वीतेच्छस्य समापनं शास्त्रार्थः। यथा शास्त्रार्थो नोपपद्यते तथा दर्शितम्। ते त्वेवं मन्यते। विगर्हयितारः शिष्टा एवं मन्यन्ते। मिथ्यासङ्कल्पदोषोऽस्यास्ति योऽयं प्रक्रान्तं न परिसमापयति इति मत्वा च विगर्हन्ते अतस्तद्विगर्हणात् समापनं कर्तव्यम्। यदि मिथ्यासङ्कल्पदोषबुध्या विगर्हन्ते निर्मूलमिदं विगर्हणं परमार्थतो मिथ्यासङ्कल्पदोषाभावात्। तेनोच्यते किमिति निर्मूलमिदं विगर्हणमाश्रयन्ते। इति। किमत्र मूलान्वेषणेन। इदमेव शिष्टविगर्हणं महद्दुःखम्। निर्मूलमपि तावद्भवति शिष्टविगर्हणम्। तच्च

विगर्हन्ते तावच्छिष्टा इति ।

॥ ४ ॥ [1]लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥

यदिदं सूत्रधारैः कर्म क्रियते गृहादि तत्र किं प्रारब्धं समापनीयं उत वीतायां फलेच्छायां तत एवोपरमः इति । ननु शिष्टविगर्हणाभयात् समापनीयं कर्म न शास्त्रीयमिति । अतस्तदेवात्र अनुमरणीयं किं विगर्हन्ते नेति । किं शास्त्रीयाशास्त्रीयत्वानुसरणेन । उच्यते । सत्यमेवं यदि निरुपाधिकमेव तद्विगर्हणम् । तत्तु शास्त्रीयमिति कृत्वा विगर्हन्ते नाशास्त्रीयम् । अतः तत्तद्भ्रमापनुत्तये विचारणीयम् । तत्र देवतासंबन्धात् प्रायश्चित्तविधानाच्च शास्त्रीयमिति पूर्वः पक्षः । न ह्यशास्त्रीयस्य शास्त्रीयभङ्गं भवति वैगुण्यसमाधिर्वा ।

---

तथाभूतमपि । दुःखपरिहारार्थं च कृतिनो यतन्त इति सुष्ठूक्तं - विगर्हन्ते तावच्छिष्टा इति ।

॥ लोके ॥

संशयभाष्यमर्थतो व्याचष्टे - यदिदं [2]सूत्रधारैः कर्म क्रियते तत्किं प्रारब्धं समापनीयं उत वीतायां फलेच्छायां तत एवोपरम इति । अत्र भाष्यकारः शास्त्रीयत्वं विचारयति । तदाक्षिपति—ननु शिष्टविगर्हणाभयात् समापनीयं कर्म, न शास्त्रीयमिति । अतस्तदेवानुमरणीयं किं विगर्हन्ते नेति । किं शास्त्रीयाशास्त्रीयत्वानुमरणेनेति अस्यार्थः — प्रक्रान्तपरिसमाप्तौ शिष्टविगर्हणमेव कारणं न शास्त्रीयत्वम् अतस्तदेवानुमरणीयम् - किं विगर्हन्ते कष्टसाध्यपरिसमापनं उत नेति किं शास्त्रीयानुसारेण । समाधत्ते—उच्यते - सत्यमेवं यदि निरुपाधिकमेव तद्विगर्हणं भवेत् तदा न शास्त्रीयानुसारेण क्रियेत । तेन इदं शास्त्रीयं इदं प्रारभ्य न परिसमापयति तस्मात् मिथ्यासङ्कल्पदोषोऽस्ति इति । एवं मन्वानाः शास्त्रीयमिति कृत्वा विगर्हन्ते नाशास्त्रीयं अतस्तद्भ्रमापनुत्तये शास्त्रीयत्वभ्रमापनुत्तये विचारणीयं शास्त्रीयत्वम् । [अ](य तो विचारणीयमेतद्भवति । तत्र देवतासंबन्धात् प्रायश्चित्तविधानेन शास्त्रीयमिति पूर्वः पक्षः । न ह्यशास्त्रीयस्य शास्त्रीयभङ्गं भवति वैगुण्यसमाधिर्वा । यत्खलु

---

1. p. 1398 2. सूत्रकारैः–मा

अत्रोच्यते। न शास्त्रीयमिति प्रमाणमस्ति रमणीयार्थत्वात् प्रयत्नस्य। यदपि चेदं स्मरन्ति सूत्रकाराः ब्राह्मणस्येदं गृहादि राज्ञ इदमिति। यथा-चोदितस्य अन्यथाकरणे मरणादिप्रत्यवायं स्मरन्ति। तदपि वैद्यकादि-वत् अन्वयव्यतिरेकादवगम्यते। यत्पुनः प्रायश्चित्तं देवताविधानं च तत्र पुरुषार्थत्वात् न गृहादिकर्मार्थमिति[1] परिहृतम्।

॥ ५ ॥ [2]प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १७ ॥

किमिदं नियोगव्यापारचिन्तनं किं नञर्थो विधीयते उत धात्वर्थः तद्विशिष्ट इति। द्वैतीयनियोगचिन्तनमिदम्। को दोषः? न खलु

---

(अ)शास्त्रीयं तत्र देवता अङ्गं सम्भवति शास्त्रैकसमधिगम्यत्वात् देवताभावस्य। अशास्त्रीयस्य यदङ्गं तत् अन्वयव्यतिरेकसमधिगम्यम्। अशास्त्रीयस्य वैगुण्यसमाधिः अशास्त्रीय एव भवति प्रमाणान्तरसमधिगम्यत्वात्। तेन शास्त्रीयत्वमवगम्यते। शास्त्रीयं चेत् तदा प्रक्रान्तापरिसमापने सम्भाव्यत एव शिष्टविगर्हणेति तन्निवृत्तये समापनीयमेव गृहादि आरब्धमिति।

अत्रोच्यते। न शास्त्रीयमिति प्रमाणमस्ति रमणीयार्थत्वात् प्रयत्नस्य। अतोऽन्वयव्यतिरेकमूलान्येव कृत्स्नानि ससूत्राणि न वेदमूलानि। यदपि चेदं स्मरन्ति सूत्रकाराः ब्राह्मणस्येदं गृहादि राज्ञ इदमिति, यथाचोदि-तस्यान्यथाकरणे मरणादिप्रत्यवायं स्मरन्ति तदप्यन्वयव्यतिरेकमूलं वैद्य-कादिवत्। यत्पुनः प्रायश्चित्तं देवताविधानं च पुरुषार्थत्वात् न गृहादि-कर्मार्थमिति परिहृतम्। अस्यार्थः—शास्त्रमूलमेवेदं प्रायश्चित्तादि तथापि न शास्त्रीयं गृहाद्यङ्गत्वेनाश्रवणात् प्रायश्चित्तादेः। किमर्थं तर्हि स्मरणं? पुरुषार्थो[ऽतो] न दोष इति॥

॥ प्रतिषेधे ॥

किमिदं नियोगव्यापारचिन्तनम् किं नञर्थो विधीयते उत धात्वर्थः तद्विशिष्ट इति। द्वैतीयनियोगचिन्तनमिदम्। किं नञर्थो विषयः अथ

---

1. कर्मारम्भणार्थं 2. 1399

कश्चिद्दोषः । किन्तु असंबन्धोऽधिकारलक्षणे । एवं तर्हि अधिकारचिन्तैवेयम् । कथमधिकारचिन्ता ? इत्थं, यद्यत्र नञर्थो विधीयते ततो भक्षयतिः अधिकारिविशेषणम् । अतो नञर्थविशिष्टकर्मविधिः । ततः कल्प्यमधिकारिविशेषणं विश्वजित इव । तत्सिद्ध्यर्थं चेदं बलाबलचिन्तनमुपन्यस्तम् । पूर्वपक्षवादी भावार्थाः कर्मशब्दाः इत्युत्सर्गं मन्वानः तदाश्रितत्वाच्चोपपदविधेः विशिष्टविधिं मन्यते । किञ्च नञर्थविधाने अनुष्ठानमापद्यते । कथं ? प्रतिषिद्धमपि हि यन्न पुरुषस्योपकरोति अभ्युदयेन दुःखपरिहारेणापि न तत्र बुद्धिपूर्वकारिणः प्रवर्तन्त इति लौकिकाः

---

नञर्थविशिष्टो धात्वर्थ इति । भवतु विनियोगचिन्तनं को दोषः ? आक्षेप्ता आह—न खलु कश्चिद्दोषः पूर्वोत्तरपक्षयोः किन्त्वसंबन्धोऽधिकारलक्षणे । द्वितीयचिन्तारूपत्वात् । समाधत्ते - एवं तर्हि अधिकारचिन्तैवेयम् । कथमधिकारचिन्ता ? इत्थम् । यद्यत्र नञर्थो विधीयते ततो भक्षयतिः अधिकारिविशेषणम् अतो नञर्थविशिष्टकर्मविधिः । ततः कल्प्यमधिकारिविशेषणं विश्वजित इव । तत्सिद्ध्यर्थं चेदं बलाबलचिन्तनमुपन्यस्तम् । नञर्थे वा औदासीन्यात्मके विधिविषये प्रकारान्तरेण सम्बन्धमलभमानो बलात् भक्षयतिः अधिकारिविशेषणम् । यदा तु कर्मान्तरविधिः तदा विश्वजिन्न्यायेन कल्प्यमधिकारिविशेषणम् अधिकारिविशेषाभिधायकत्वात् अस्ति लक्षणे सङ्गतिः । पूर्वपक्षवादी भावार्थाः कर्मशब्दाः इत्युत्सर्गं मन्वानः विशिष्टविधिं मन्यत इति । 'भावार्थाः कर्म शब्दा' इत्यत्राधिकरणे भावार्थानां विधिविषयत्वमुक्तम् । न च नञर्थः औदासीन्यात्मको भावार्थः तेन विधिविषयता तस्य न युक्ता । ननु अभावार्थो दध्यादि 'दध्ना जुहोति' इति विधिविषयः इत्याशङ्क्याह—तदाश्रितत्वाच्चोपपदविधेरिति । भावार्थाश्रित एवोपपदपदार्थो विधीयते । एतदुक्तं भवति । भावार्थ एव तदनुरक्तो विधीयते प्राप्ताप्राप्तविवेकेन तु उपपदविधिः इति । तस्मात् भावार्थात्मकोऽभक्षणसङ्कल्प एव लक्षणया विधीयत इति युक्तम् ।

किञ्च नञर्थविधानेऽनुष्ठानमापद्यते । यदि हि नञर्थो विधीयते तदा प्रसज्यमानं भक्षणमेवाधिकारिविशेषणमिति अनुष्ठानमापद्यते । कथं ? प्रतिषिद्धमपि हि यन्न पुरुषस्योपकरोति अभ्युदयेन दुःखपरिहारेण च न तत्र

तस्मादयमेव वाक्यार्थः श्रेयान् । ननु नञर्थविधानेऽपि प्रत्यवायकल्पना भवतु । कथं नञर्थविधौ प्रत्यवायः शक्यते कल्पयितुम् । नतरामनुष्ठानं प्राप्नोति । अथ विषयानुष्ठानेन प्रत्यवायः कल्प्यते प्रतिषेधानुष्ठानेनासौ परिहृतो भवति लोकवदिति । तदयुक्तम् । यस्मान्नञर्थविधिस्तावत् [1]नार्थ एव पर्यवसितो भवति । विषयानुष्ठानं तु लौकिकम् । लौकिके चानुष्ठाने यदि न लौकिकात् प्रत्यवायो गम्यते कुतोऽन्यतः शक्यतेऽवगन्तुम् । तस्मान्नैवान्यथा पुरुषार्थता उपपद्यते इत्यभक्षविधिः स्यात् ।

अत्राभिधीयते । सत्यं यदाह देवानां प्रियः किन्तु नासावभक्षविधिः प्रतीयते । यतो भक्षयतिस्तावत् भक्षणमाचष्टे । नञपि निवारणं

---

बुद्धिपूर्वकारिणः प्रवर्तन्त इति लौकिकाः । तस्मादयमेव शास्त्रार्थः श्रेयान् । प्रवृत्त्यानु[रूप्यात् ] यदि फलमन्तरेण प्रवृत्तिर्नास्ति तदा नञर्थविधिपक्षेऽपि तर्हि फलं कल्प्यमित्याह — ननु च नञर्थविधानेऽपि प्रत्यवायकल्पना भवतु किं नञर्थादेव प्रत्यवायः उत निषिध्यमानायां क्रियायाम् इति विकल्प्य दूषयति — कथं नञर्थविधौ प्रत्यवायः शक्यते कल्पयितुं नञर्थादेव प्रत्यवायकल्पनेन नतरामनुष्ठानं प्राप्नोति प्रत्यवायहेतोरननुष्ठापकत्वात् । अथ विषयानुष्ठानेन भक्षणानुष्ठानेन प्रत्यवायः कल्प्यते प्रतिषेधानुष्ठानेनासौ परिहृतो भवति लोकवत् इति । तदयुक्तम् यस्मान्नञर्थविधिस्तावत् नञर्थे एव पर्यवसितो भवति न विषयानुष्ठानं बोधयतीति । विषयानुष्ठानं तु लौकिकम् । लौकिके चानुष्ठाने यदि न लौकिकात् प्रमाणात् प्रत्यवायोऽवगम्यते कुतः अन्यतः शक्यतेऽवगन्तुम् । विषयनिबन्धनप्रत्यवायकल्पनां विनापि विधेरनुबन्धद्वयावगमात् न शक्यते कल्पयितुं प्रत्यवायः कामप्रवृत्तिः स्यादिति तस्मान्नैवान्यथा पुरुषार्थता उपपद्यते इत्यभक्षविधिः स्यात् । तस्मिन् पक्षे विश्वजित इति स्वर्गफलत्वेन कर्मणः पुरुषार्थतोपपत्तिः ।

अत्राभिधीयते - सत्यं यदाह देवानां प्रियः अभक्षणविधिपक्षे पुरुषार्थतेति । किन्तु नासावभक्षविधिः प्रतीयते यतो भक्षयतिस्तावत् भक्षणमाचष्टे

---

1. न अर्थे इत्यर्थः

निवृत्तिमाह । पदद्वयेनाप्यभक्षणमेवासद्भूतं गम्यते । न च तद्विधातुं शक्यते अक्रियारूपत्वात् । मानसस्तु व्यापारः न पदात् न वा वाक्यात् प्रतीयते । अनीक्षणादिषु व्रतशब्दः साक्षाच्छ्रूयते । अतो भक्षयतिः गले पादुकया अधिकृतविशेषणं न अर्थस्य वा अभावार्थस्य औदासीन्यमयुक्तमेव विधेयत्वम् । ननु चानुष्ठानं नोपपद्यते इत्युक्तम् । किमिति नोपपद्यते किं कर्तव्यतावगमो नास्ति । कर्तव्यतावगमे हि कामादयः संबध्यन्त इति दर्शितं भावार्थाधिकरणे । यत्र ते स्वर्गकामादयः तत्रैवाभ्युदयपर्यन्तः कर्तव्यतावगमः यत्र पुनर्न विद्यते कस्तत्र कर्तव्यतावगमं (नाम)अपह्नुते । कर्तव्यतावगमात्त्वनुष्ठानं न फलाव-

---

नञपि निवारणं निवृत्तिमाह । औदासीन्यमिति यावत् पदद्वयेनाप्यभक्षणमेवासद्भूतं गम्यते । न च तद्विधातुं शक्यते अक्रियारूपत्वात् । मानसस्तु व्यापारो न पदात् प्रतीयते न वाक्यात् प्रतीयते । अप्रतीतस्य च विधेयता नोपपद्यते । ननु अभक्षणवल्लक्षणया सङ्कल्पोऽवगम्यते इत्यत्राह— अनीक्षणादिषु व्रतशब्दः साक्षाच्छ्रूयते । अतो युक्ता तत्र व्रतलक्षणा । व्रतशब्दस्य सङ्कल्पवचनत्वात् तत्सामानाधिकरण्यात् । अत्र तु तथा विधं न किञ्चिदस्ति । अत्र तु भक्षयतिरन्येन सम्बन्धमनुभवितुमशक्नुवन् गलेपादुकया अधिकृतविशेषणं नञर्थस्य वाऽभावार्थस्यौदासीन्यमयुक्तमेव विधेयत्वम् । कस्यचिच्छब्दस्याविरोधात् । शब्दाविरोधेन हि भावार्थः नानियोगविषयत्वमुक्तम् न धात्वर्थत्वादेवेति निबन्धनकारः शब्दबलवादी मन्यते ।

ननु चानुष्ठानं नोपपद्यत इत्युक्तम् । समाधत्ते—किमिति नोपपद्यते । एकग्रन्थेनाह— किं कर्तव्यतावगमो नास्ति ? अस्यार्थः—यदि हि विना फलं कर्तव्यतावगमो न स्यात् तदा स्यादेव फलाभावेऽ[न]नुष्ठानम् । अस्ति च फलं विनापि कर्तव्यतावगमः । तस्मात् कर्तव्यतावगमे सति कामादयः सम्बध्यन्त इति दर्शितं भावार्थाधिकरणे । तेनास्ति फलं विनापि कर्तव्यतावगमः । ननु च स्वर्गकामादिवत् भवत्वत्रापि फलावगमः इत्यत्राह— यत्र ते स्वर्गकामादयः तत्रैवाभ्युदयपर्यन्तः कर्तव्यतावगमः । यत्र पुनः न विद्यते कस्तत्र कर्तव्यतावगममपह्नुते । कर्तव्यताज्ञानाच्चानुष्ठानं न फलावगमादित्युक्तम् ।

गमादित्युक्तम् । तन्मूलत्वात् फलावगतेः । अत एव जीवनादेरप्यधिकारिविशेषणत्वं सिद्धं भवति । एवं(तर्हि)कर्तव्यतामवगच्छन्नपि यो नाम न करोति स्वर्गकामचोदनास्वपि तस्याक्रियां को नाम वारयितुं क्षमः । योऽपि स्वर्णमुपलभ्य मृत्तिकेति ब्रूयात् कस्तस्योत्तरं ददाति । किमिति तर्हि भाष्यकारः शिष्टविगर्हणमुपन्यस्यति( सनिश्चयं )? अयमभिप्रायो भाष्यकारस्य—योऽपि लौकिकशास्त्रावगतिमविद्वान् फलाभावे न करोति तस्यापि मूढात्मनो विद्यत एव लौकिकं शिष्टविगर्हणं प्रवृत्तये । तस्मान्नायमपह्नोतुं शक्यते वाक्यार्थः 'कलञ्जभक्षणं न कुर्यात्' इति ।

॥ ६ ॥ [1]तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २१ ॥

इदमत्र चिन्त्यते - किमनुगमनादिना आचारगणेन जातमात्रोऽधिक्रियते उत उपनीत इति । एतदुक्तं भवति- किं जननमेवाधिकारिविशेषणं

---

तन्मूलत्वात् कर्तव्यताज्ञानपूर्वकानुष्ठानमूलत्वात् फलावगतेः । अनुष्ठानपर्यन्ते हि कर्तव्यताज्ञाने सति स्वर्गादिः काम्यमान[म]स्य फलत्वेन संबध्यते नान्यथा । यत एव कर्तव्यताज्ञानमात्रेणानुष्ठानसिद्धिः अत एव जीवनादेरप्यधिकारिविशेषणत्वं सिद्धं भवति । एवं कर्तव्यतामवगच्छन्नपि यो नाम न करोति स्वर्गकामचोदनास्वपि तस्याक्रियां को नाम वारयितुं क्षम इति । योपि स्वर्णमुपलभ्य मृत्तिकेति ब्रूयात् कस्तस्योत्तरं ददाति । कर्तव्यतामपि यो नाम अकर्तव्यतामाह कस्तस्योत्तरं ददातीति । यदि कर्तव्यतामात्रेणानुष्ठानं किमिति तर्हि भाष्यकारः शिष्टविगर्हणमुपन्यस्यति । विनापि शिष्टविगर्हणमनुष्ठानसिद्धेः । समाधत्ते —अयमभिप्रायो भाष्यकारस्य-योऽपि लौकिकशास्त्रावगतिमविद्वान् फलाभावे न करोति तस्यापि मूढात्मनो विद्यत एव लौकिकं शिष्टविगर्हणं प्रवृत्तये । तस्मान्नायमपह्नोतुं शक्यते वाक्यार्थः—कलञ्जभक्षणं न कुर्यादिति ।

॥ तस्मिंस्तु ॥

अध्यायसङ्गतिसिद्ध्यर्थं संशयं भाष्यकारीयं व्याचष्टे— इदमत्र चिन्त्यते

---

1. p 1402

उतोपनयनमिति । तत्र पूर्वपक्षवादी मन्यते - स्वर्गादेस्तावत् अधिकारि विशेषणता नोपपद्यते ; दृष्टार्थत्वात् आचारगणस्य, आधानस्येव । तस्मात् सामर्थ्यमेवाधिकारिविशेषणम् । ननु चैवं सति न जातमात्रस्याधिकारः स्यात् । एतदुक्तं भवति - नोपनयनमपेक्षते ।

एवं प्राप्तेऽभिधीयते-उपनयनोत्तरकालमेवाधिक्रियत इति । का युक्तिः ? स्वाध्यायाध्ययनोत्तरकालं वैदिकैः पदार्थैरधिक्रियते वैदिकश्चाय-माचारगण इति स्मृतिपादे उक्तम् । स्वाध्यायाध्ययनं तु उपनीतस्य । भवतु स्वाध्यायाध्ययनमुपनीतस्य । पदार्थास्तु यथा यस्यावगम्यन्ते तस्यैव ते न भवन्ति यथा निषादस्थपतेः इष्टिः । ननु च तत्र स्वाध्यायविरोधा-देवमभ्युपगतम् । इह तु स्वाध्यायाविरोधात (कामिनामिव) अधीतवेदा-

---

किमनुगमनादिना आचारगणेन जातमात्रोऽधिक्रियते उत उपनीत एव । एतदेव विवृणोति—एतदुक्तं भवति - किं जननमेवाधिकारिविशेषणं उतोपनय-नमिति । तत्र पूर्वपक्षवादी मन्यते -स्वर्गादेस्तावदधिकारिविशेषणता नोपपद्यते दृष्टार्थत्वादाचारगणस्याधानस्येव । यथाऽऽधानेऽग्न्यर्थे स्वर्गादेरधिकारिविशेषणत्वं नास्ति तथाऽस्मिन्नप्याचारगणे दृष्टार्थेनैवात्राधिकार इति न स्वर्गकामस्याधिकारः कल्प्यते । तस्मात् सामर्थ्यमेव अधिकारिविशेषणम् । यदि सामर्थ्यमेवाधि-कारिविशेषणं तदा जातमात्रस्यासामर्थ्यात् कथं जातमात्रस्याधिकारः उच्यत इत्याह — ननु चैवं सति न जातमात्रस्याधिकारः । परिहरति—एतदुक्तं भवति नोपनयनमपेक्षते इति । अनुपनीतपरोऽयं जातमात्रशब्द इति यावत् ।

एवं प्राप्तेऽभिधीयते उपनयनोत्तरकालमेवाधिक्रियत इति । का युक्तिः ? स्वाध्यायाध्ययनोत्तरकालं हि वैदिकैः पदार्थैः अधिक्रियते । वैदिकश्च पाठगण इति स्मृतिपादे उक्तम् । स्वाध्यायाध्ययनं तु उपनीतस्य । तेनोप-नयनोत्तरकालमाचारेष्वधिकार इति । अनेन भाष्यार्थस्वरूपमुक्तम् । आक्षिपति—भवतु स्वाध्यायाध्ययनमुपनीतस्य । पदार्थास्तु यथा यस्यावगम्यन्ते उपनीत-स्यानुपनीतस्य वा तस्यैव ते न भवन्ति यथा निषादस्थपतेरिष्टिः । अत्र चोदयति—ननु च तत्र स्थपतीष्टौ स्वाध्यायविरोधात् कर्मधारयविरोधात् एवमभ्यु-पगतम् निषादस्यैवाधिकार इति । इह तु आचारगणे स्वाध्यायाविरोधात् अधीत-

नामेवाधिकारो भविष्यति कामिवत् । अयुक्तमिदम् । तत्र हि अधीतवेद-संभवे न मन्त्राध्ययनप्रयुक्तौ प्रमाणमस्ति विदुषां कामिनामित्युक्तम् । इह पुनरमन्त्रसाध्यत्वात् आचारगणस्य नैतच्छक्यते वक्तुम् । किञ्च न चोपनीतमात्र एवाधीतवेदो भवति । तदुपनीताधिकारे वैदिकत्वप्रदर्शनं शङ्क्यमेव ।

अत्रोच्यते । अयमभिप्रायो भाष्यकारस्य-प्रागुपनयनाद्विधयः पितुः दार्विहोमिकस्य वा उपलभ्यन्ते उपनयनं चाचार्यस्य । तदुत्तरकालं तु संस्कृतविषया वैदिकविधयः श्रूयन्ते तन्मूलाश्च स्मार्ता अपीति तेऽपि तदुत्तरकालभाविन एवेति भगवान् भाष्यकारो मन्यते । तस्मात्सूक्तमुप-नीतस्याधिकार इति ।

---

वेदानामेवाधिकारो भविष्यति कामिवत् यथा कामिनामधीतवेदानामेवाधिकारः तथेहापि । अन्यथा तत्राप्यनधीतवेदानामधिकारनिवृत्तिः स्यात् । परिहरति—अयुक्त-मिदं अधीतवेदानामेवाधिकार इति प्रमाणाभावात् । यत्तु कामिनामिवेत्युक्तम् तत्राह—तत्र हि अधीतवेदसंभवे न अध्ययनप्रयुक्तौ प्रमाणमस्ति विदुषां कामिनामित्युक्तम् । इह पुनरमन्त्रसाध्यत्वात् आचारगणस्य नैतच्छक्यते वक्तुं—अनधीतवेदो नाधिक्रियत इति यस्मान्मन्त्रप्रयुक्तिरत्र नास्ति इत्युक्तम् । ततो-ऽनधीतवेदस्यापि अधिकारो युक्तः । किञ्च न चोपनीतमात्र एवाधीतवेदो भविष्यति । यद्यधीतवेदस्याधिकारः यद्युपनीतमात्र एवाधीतवेदो भवेत् तत एवं स्यात् । न चैतदस्ति । तस्मादुपनीताधिकारे वैदिकत्वप्रदर्शनं शङ्क्यमेव । अत्राभि-धीयते-अयमभिप्रायो भाष्यकारस्य । प्रागुपनयनाद्विधयः पितुः दार्विहो-मिकस्य वोपलभ्यन्ते । उपनयनं चाचार्यस्य । अयमाशयः—यावन्तः केचि-द्विधयो वैदिकाः ते सर्वे उपनीतस्य सतः नानुपनीतोऽधिकारीति पितुरेवाधिकारः । दार्विहोमिकस्य वा कर्तुकामस्य । बालकस्योपनयने आचार्योऽधिकारी कर्ता च । तदुत्तरकालं तु संस्कृतविषया वैदिका विधयः श्रूयन्ते । तन्मूलाश्च स्मार्ता अपीति तेऽपि तदुत्तरकालभाविन एवेति भगवान् भाष्यकारो मन्यते सर्वत्र हि दृष्टानुसार्यनुमतं वैदिकाश्च विधयः प्रत्यक्षाः उपनीतविषयाः स्मृत्यनु-मिता अपि तथैव भवितुमर्हन्तीति भावः । तस्मात्सूक्तं उपनीतस्याधिकार इति ।

॥ ७ ॥ [1]अभ्यासोऽकर्मशेषात्वात् पुरुषार्थो विधीयते ॥ २३ ॥

अस्मिन्नधिकरणे सर्वशक्त्यधिकरणे स्थिते भवति संशयः—किं कालशून्यः शौचशून्यश्च प्रयोगो जीवननिमित्ततया कर्तव्यः उत नेति । तत्र पूर्वपक्षवादिनोऽभिप्रायः— निमित्तबलेनाङ्गत्यागोऽभिहितः । तस्माद्यावन्निमित्तं प्रयोगः [जुहुधि जुहुधि] इत्येव होतव्यमिति । ननु चाहारविहार-काले न शक्यते प्रयोगः कर्तुमिति । यथा शक्यते तथाऽभ्यसनीयः शौचमप्यङ्गमेव । अतः शौचपरित्यागेनापि प्रयोगः कर्तव्यः ।

॥ अभ्यासः ॥

कथमत्र पूर्वपक्षमाशङ्कते ? यथा कालाङ्गत्वात् कर्मणो वैगुण्यमापद्यते तस्मादा-गते कालेऽनुष्ठानं कर्तव्यम् तत्राह—अस्मिन्नधिकरणे सर्वशक्त्यधिकरणे स्थिते भवति संशयः किं कालशून्यः शौचशून्यश्च प्रयोगो हि जीवननिमित्ततया कर्तव्यः उत नेति । अस्यार्थः—सर्वशक्त्यधिकरणे इदमुक्तं अधिकारबलेनाङ्ग-त्यागेनानुष्ठानं कर्तव्यमिति । तदिहापि जीवननिमित्तकः प्रयोगः किमधिकारबलेन अङ्गभूतकालं परित्यज्य कर्तव्यः उत नेति चिन्ता । तत्र पूर्ववादिनोऽभिप्रायः—निमित्तबलेनाङ्गत्यागोऽभिहितः तस्मात् यावन्निमित्तं प्रयोगः । अस्यार्थः—जीवननिमित्तो जीवनाधिकारः कालाभावेऽपि जीवनं निमित्तभूतमस्ति इति तद्बलेनाङ्ग-भूतकालपरित्यागेनानुष्ठानं कर्तव्यमिति "जुहुधि जुहुधि" इत्येव होतव्यमिति । किमिति जुहुधि जुहुधि इत्येव होतव्यमिति । आभीक्ष्ण्येन होतव्यमित्यर्थः । तथाहि —क्रियासमभिहारे तव्यप्रत्ययार्थे जुहोतेर्लोट् विधीयते तस्य स्थाने हिशब्दादेशः स च लोट आदेशः । तथाच सूत्रं—"क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ततश्च 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम् । तथा 'यथाविध्यनु-प्रयोगः पूर्वस्मिन्' निमित्ततव्यप्रत्ययान्तस्य जुहोतेरनुप्रयोग इति । ननु च आहार-विहारकाले न शक्यते प्रयोगः कर्तुमिति । परिहरति—यथा शक्यते तथाऽभ्यसनीयः येन प्रकारेणाहारविहारकाले च प्रयोगः शक्यते कर्तुं स प्रकार आस्थेयः । ननु च शौचादि त्यक्तं स्यात् अत्राह—शौचमप्यङ्गमेव । अतः काल-

1. p. 1403

अत्रोच्यते—नाभ्यासापेक्षं शास्त्रं शक्तस्यापि निमित्तावगमोपपत्तेः। प्रतिपन्ने हि निमित्तेऽङ्गत्यागोऽभिहितः तस्मिन्नधिकरणे। इह पुनः निमित्तमेव नाभ्यासापेक्षं प्रतीयते तदभावेऽपि निमित्तावगमात्। एवं तर्हि कालशून्यं क्रियताम्। नेति ब्रूमः। कालशून्यमपि निमित्तं नैव प्रतीयते नित्ययुक्तत्वात् कालस्य। ननु च सर्वाण्येवाङ्गानि नित्ययुक्तानि। सत्यं नित्ययुक्तानि, न पुनरङ्गान्तरत्यागेन प्रतीयन्ते। कालः पुनः कालान्तरत्यागेन निमित्तमवगमयति शौचमिव। तस्मान्न

---

शौचपरित्यागेनापि प्रयोगः कर्तव्यः। राद्धान्तमाह—अत्रोच्यते नाभ्यासापेक्षं शास्त्रम् शक्तस्यापि निमित्तावगमोपपत्तेः। अस्यार्थः—यथा शक्यते तथा कर्तव्यमिति योऽयमभ्यासः तदपेक्षमिदं शास्त्रं न भवति। सर्वाङ्गोपसंहारे शक्तस्यापि निमित्तावगमोपपत्तेः। यदि हि सर्वाङ्गोपसंहारे शक्तस्याधिकारे जीवनस्य निमित्ततावगमो नोपपद्यते तदा एवं स्यात्। नचैतदस्ति। तस्मान्नाङ्गभूतशौचकाल-[त्यागे] प्रमाणमस्ति। नन्वधिकारबलेन त्यज्यते इत्यत्राह—प्रतिपन्ने हि निमित्तेऽङ्गत्यागोऽभिहितः तस्मिन्नधिकरणे। यादृशं निमित्तं तादृशे प्रतिपन्ने सति अङ्गत्यागः सर्वशक्त्यधिकरणे दर्शितः। इह पुनः निमित्तमेव नाभ्यासापेक्षं प्रतीयते। जीवनमात्रमेव निमित्ततया न प्रतीयते। यदि हि अभ्यसापेक्षं शास्त्रं एवं तर्हि निमित्तं प्रतीयेत। तदा जीवनमात्रमेव निमित्तं स्यात् शौचानपेक्षम्। न चैतदस्ति अभ्यासाभावेऽपि निमित्तावगमोपपत्तेः। यदि हि जीवनश्रुतेरनधिकारात् नाभ्यासापेक्षं शास्त्रं एवं तर्हि कालशून्यं क्रियताम्। कालस्य पुरुषविशेषणत्वानुपपत्तेः अङ्गमात्रत्वात् तेन तत्त्यागेनापि भवत्यनुष्ठानम्। नेति ब्रूमः कालशून्यं निमित्तं नैव प्रतीयते नित्ययुक्तत्वात् कालस्य। नित्यसंबन्ध[ात्] काले कर्मणि शक्तस्याधिकारात् तत्कालमेव जीवनं निमित्तं अन्यस्मित् काले तदुपसंहारसमर्थत्वात्। अत्र चोदयति—ननु च सर्वाण्येवाङ्गानि नित्ययुक्तानि। अस्यार्थः—साधिकारिसन्निधौ निरधिकारितया श्रवणात् तदर्थत्वेनोपादीयन्ते। न च कश्चिद्विशेषः कालस्य नित्यत्वेनोपादानं इतरेषामनित्यत्वेनेति। तेन सर्वेषां नित्यान्वये सति किमिदं नित्ययुक्तत्वात्कालस्येति। परिहरति—सत्यं नित्ययुक्तानि न पुनरङ्गान्तरत्यागेन प्रतीयन्ते। यस्मिन्नपि काले तानि न सन्ति तस्मिन्नपि काले पुरुषस्य

कालशून्यनिमित्तमवगच्छामः । न चानवगमनिमित्तं भवितुमर्हति । भाष्यकारस्तु कालमेव निमित्तमाह 'न कालो गुणो निमित्तं ह्येतत्' इति । तच्चायुक्तम् । जीवनस्य निमित्तत्वात् । काम्ये प्रयोगे कालस्योपादानं न स्यात् अनङ्गत्वात् । तस्मादयमत्र भाष्यार्थः-न गुणः कालः निमित्तमनवच्छिन्दन्नित्यर्थः । आत्मकालं जीवनं निमित्तत्वेनावगमयत् निमित्तमिति उक्तनिमित्तं ह्येतदिति ।

॥ ८ ॥ [1]तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ २७ ॥

[कथं पुनरत्र पूर्वपक्षः यावता निमित्तस्यावृत्तौ नैमित्तिकस्य भवि-

---

तदुपसंहारसामर्थ्यमस्तीति सत्यधिकारे तत्त्यागेनापि युक्तमनुष्ठानम् । कालःपुनः कालान्तरत्यागेन निमित्तमवगमयति शौचमिव । अस्यार्थः—सर्वशक्त्यधिकरणेन अङ्गत्यागेनाप्यनुष्ठाने गौणावयवत्वे प्राप्ते - अङ्गशास्त्राणामत्यन्तबाधो नास्ति । कालस्य तु पुनः त्यागे अत्यन्तबाधापत्तिरेव स्यात् निरवयवत्वात् कालस्य शौचमिव । यथा तस्यैव शौचं अशौचपरित्यागेन निमित्तमवगमयति तथेत्यर्थः । तस्मादन्यथानुपपद्यमानकालानुरोधेन निमित्तताऽवसीयते । यत एव कालानुरोधेन निमित्तताऽवसीयते तस्मान्न कालशून्यनिमित्तमवगच्छामः । न चानवगमनिमित्तं भवितुमर्हति । भाष्यमाक्षिपति—भाष्यकारस्तु कालमेव निमित्तमाह—"न कालो गुणः निमित्तं ह्येतत्" इति । तच्चायुक्तम् जीवनस्य निमित्तत्वात् । निमित्तत्वे कालस्य काम्ये प्रयोगे कालस्योपादानं न स्यात् अनङ्गत्वात् । समर्थयते—तस्मादयमत्र भाष्यार्थः—न कालो गुणो निमित्तमनवच्छिन्दन्नित्यर्थः । निमित्तमनवच्छिन्दन्नित्येतदध्याहृत्य भाष्यग्रन्थो व्याख्येयः । निमित्तानवच्छेदको गुणो न भवति किन्तु निमित्तावच्छेदको गुण इति यावत् । उक्तनिमित्तं ह्येतदिति यदुक्तं तदात्मकालीनजीवननिमित्तत्वाभिप्रायेण । न साक्षान्निमित्तत्वाभिप्रायेण । एतच्च तस्मादाश्रितकालस्य यावज्जीवनं प्रयोग इत्यनेन भाष्येण प्रकटीकृतम् ।

॥ तेषामौत्पत्तिकत्वात् ॥

कथं पुनरत्र पूर्वः पक्षः ? यावता निमित्तस्यावृत्तौ नैमित्तिकस्य

---

1. p. 1404

तव्यमित्यागते काल इति युक्तम् । एवमत्र पूर्वपक्षः कालानुरोधेन निमित्तावगतिः । अङ्गं च कालः सकृदनुष्ठानेन कृतमङ्गशास्त्रमिति निमित्तमपि तथैव तदनुरोधित्वात् । राद्धान्तस्तु नैतद्युक्तम् सकृदेवानुष्ठानं कर्तव्यमिति] उत्पद्यमानं हि कर्म कालसंयुक्तमेवोत्पन्नमिति तत्कालीनं जीवनमवगमयतीति निमित्तमित्युक्तं न पुनर्विधेयतामपि निमित्तस्यापादयति । अविहिते च कृतः शास्त्रार्थ इति न शक्यते वक्तुम् । तस्मात्तत्कालीनं जीवनं निमित्तभूतं पुनः पुनः शास्त्रार्थानुष्ठानं प्रयुङ्क्ते । आगते आगते कालेऽनुष्ठानं कर्तव्यमिति सूक्तम् । लिङ्गमुक्तम् ॥

॥ ९ ॥ [2]तथान्तः क्रतुप्रयुक्तानि ॥ २९ ॥

केन पुनर्विशेषेणवेदं पुनरतिदिश्यते । तस्य हि असति विशेषे न

---

भवितव्यमिति आगते काले इति युक्तम् । एवमत्र पूर्वः पक्षः-कालानुरोधेन निमित्तावगतिः अङ्गं च कालः सकृदनुष्ठानेन कृतमङ्गशास्त्रमिति निमित्तमपि तथैव, तदनुरोधित्वात् । अस्यार्थः-कालस्तावदङ्गम् सकृच्चोपसंहारे कृते कृतमङ्गशास्त्रमिति न पुनः पुनरङ्गशास्त्रमाश्रयणीयम् । कालानुरोधे च पूर्वाधिकरणे निमित्तसङ्कोचोऽवर्णि । तेन सकृदुपसंहरणीयाङ्गभूतकालानुरोधेन निमित्तमपि सकृदेव । अन्यथा तदनुरोधिता न स्यादिति क्रियावत् । राद्धान्तस्तु नैतद्युक्तम्-सकृदेवानुष्ठानं कर्तव्यमिति । उत्पद्यमानं हि कर्म कालसंयुक्तमेवोत्पन्नमिति तत्कालीनं जीवनमवगमयतीति निमित्तमित्युक्तम् न पुनर्विधेयतामपि निमित्तस्यापादयति । अस्यार्थः-यदि निमित्तत्वमस्माभिः पूर्वाधिकरणे कालस्योक्तं तत् कालस्य नित्ययुक्तत्वात् तदुपसंहारसमर्थस्यैवाधिकारात् कालान्तरे च नियमेन तदुपसंहारासामर्थ्यात् बलात् तत्कालमेव जीवनं निमित्तमवगमयतीत्यनया युक्त्या । न पुनः निमित्तस्य विधेयतामप्यापादयति । अविहिते च तस्मिन्निमित्ते अविधेयभूते चेत्यर्थः । निमित्तावृत्तौ कालोपसंहारसामर्थ्ये च सति कृतः शास्त्रार्थ इति न शक्यते वक्तुं, पुनरधिकारावृत्तेः । तस्मात् तत्कालीनं पूर्णिमान्तरकालीनं जीवनं निमित्तभूतं पुनः पुनः शास्त्रार्थानुष्ठानं प्रयुङ्क्ते । आगते आगते कालेऽनुष्ठानं कर्तव्यमिति सूक्तम् । लिङ्गमुक्तम् ।

---

2. p. 1404

तुल्यता भवति । अयमस्ति विशेषः क्रत्वर्थत्वाच्छेदनादिनिमित्तानां होमानां सकृत्कृतेनैव प्रयोगवचनोपकारसिद्धेः कृतोऽधिकार इति पूर्वपक्षवादी मन्यते । सत्यमेवं क्रतूपकारायैवानुष्ठानं तथापि पुनः पुनः भेदनाद्युत्पत्तौ न पुनः पुनरधिकारं वारयितुं उपकारो न क्षमः । ननु च तथापि निष्प्रयोजनत्वात् किमधिकारः करिष्यति । न निष्प्रयोजनता । अधिकाराद्धि प्रयोजन न प्रयोजनतोऽधिकार इत्युक्तम् । तस्माद्यावदधिकार-मतापि पूर्ववत् प्रयोगः । इयांस्तु विशेषः यावत्प्रधानप्रयोगं हि सः तदधिकारत्वादस्याग्निहोत्रादिभिः नैमित्तिकानाम् ।

---

॥ तथान्तः क्रतु ॥

ननूक्तं निमित्तावृत्तौ नैमित्तिकस्यावृत्तिरिति । तेन भेदनाद्यावृत्तौ नैमित्तिकानामपि होमादीनामावृत्तिरुक्तैव । केन पुनर्विशेषेण वा इदं पुनरतिदिश्यते असति विशेषे[न]तुल्यता भवति अपि तु एकतैव स्यात् । अयमस्ति विशेषः । क्रत्वर्थत्वाच्छेदनादिनिमित्तानां होमानां सकृत्कृतेनैव प्रयोगवचनोपकार-सिद्धेः कृतोऽधिकारः इति पूर्वपक्षवादी मन्यते । अस्यार्थः-यद्यप्येतानि नैमित्तिकानि तथाप्येषां क्रत्वङ्गत्वात् क्रतूपकारायानुष्ठानम् । एकश्चायं क्रतुप्रयोगः सकृत्कृतेनापि चाङ्गेन प्रधानोपकारनिर्वृत्तेः निवृत्तावपि न पुनरनुष्ठानम् प्रयोजना-भावात् । अग्निहोत्रादीनां तु न प्रयोगवशेनानुष्ठानं, किन्तु निमित्तबलेनेति युक्तं पौनः पुन्यम् ।

राद्धान्तस्तु सत्यमेवं क्रतूपकारायैव अनुष्ठानं तथापि पुनः पुनर्भेद-नाद्युत्पत्तौ पुनः पुनरधिकारं वारयितुं तावदुपकारो न क्षमः । ननु भवतु पुनः पुनरधिकारः तथापि निष्प्रयोजनत्वात्किमधिकारः करिष्यति ? नानुष्ठानान्तरं प्रयोजयितुं शक्नोतीति भावः । परिहरति—न निष्प्रयोजनता । अधिकाराद्धि प्रयोजनं न प्रयोजनतोऽधिकार इत्युक्तम् अनपेक्षत्वसिद्धये प्रमाणलक्षणे । अस्यार्थः-यदा अधिकारः आवृत्तः तदा विधानमावृत्तम् । यथाविहि-तस्य च प्रयोजनकल्पना । तेन यावद्वारं निमित्तमापतति तावद्वारं नैमित्तिकेनानुष्ठितेन क्रतूपकारो निष्पद्यते नान्यथेति कल्प्यते । तस्माद्यावदधिकारमतापि प्रयोगः इयांस्तु विशेषः यावत्प्रधानप्रयोगं हि सः । तदधिकारत्वादस्य अग्नि-

॥ १० ॥ आचारात् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ ३० ॥

गुर्वनुगमनादिषु नागमनमधिकारिविशेषणमिति मन्यते पूर्वपक्षवादी । गुरुमागतमभ्युत्थानेन प्रीणीयादिति विधानं मन्यते । सकृच्च कृतं प्रीणनमिति कृतः शास्त्रार्थः ।

न ह्यधिकारिविशेषणत्वादृते निमित्तता संभवतीति तद्वदित्यतिदेशः ।

॥ ११ ॥ ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३१ ॥

ननु चात्र पूर्वपक्ष एव नोपपद्यते न हि वचनमदृष्ट्वा पूर्वपक्षः वचनेन राद्धान्त इति युक्तम् । अतोच्यते । यावज्जीवनादीनामधिकारि-

---

होत्रादिभिः नैमित्तिकानाम् । इयान् विशेषः ते स्वतन्त्रा एव प्रयोक्तव्याः भेदनादिहोमास्तु यावत् प्रधानं प्रयुज्यते तावत्प्रयोक्तव्याः प्रधानाधिकृतस्यैव भेदनादिहोमेष्वधिकारात् । प्रधानाभावेऽधिकाराभावात् ।

॥ आचारात् ॥

ननु स्वर्गकामादीनामपि अधिकारिविशेषणत्वात् अधिकारावृत्तौ प्रयोगावृत्तिर्युक्तेति कथं पूर्वपक्ष इत्याशङ्क्याह—गुर्वनुगमनादिषु नागमनमधिकारिविशेषणमिति पूर्वपक्षवादी निमित्तस्यापि गुर्वागमनादेः अधिकारिविशेषणतां न मन्यते पूर्वपक्षी । निमित्तेनापि वाक्यार्थेऽन्वयोपपत्तेः गुरुमागतमभ्युत्थानेन प्रीणीयादिति विधानं मन्यते। सकृच्च कृतं प्रीणनमिति कृतः शास्त्रार्थः इति। राद्धान्तमाह—न हि अधिकारिविशेषणत्वादृते निमित्तता संभवतीति तद्वदित्यतिदेशः । अस्यार्थः-अनुष्ठानं प्रति निमित्तभाव एव अधिकारिविशेषणत्वेन विना न संभवति अधिकारमात्रनिबन्धनत्वात् अनुष्ठानस्य । तस्मात् यावत् निमित्तं तावत् अधिकारिविशेषणमिति बलादङ्गीकरणीयम् । अत एव सूर्यसङ्क्रान्त्यादे:[दि:] पुरुषसंबन्धाभावात् असंबद्धस्य च विशेषणत्वानुपपत्तेः अधिकारिविशेषणत्वासंभवान्न निमित्तम् । अपि तु कालतयैवान्वयः स्नानादीनामिति मन्तव्यम् । तस्मादागमनस्याधिकारिविशेषणत्वात् आवृत्तावधिकारावृत्तेः पुनरभ्युत्थानं कर्तव्यमिति ।

॥ ब्राह्मणस्य ॥

ननु चात्र पूर्वपक्ष एव नोपपद्यते न हि वचनमदृष्ट्वा पूर्वपक्षः

विशेषणत्वानुपपत्तेः अधिकारिशून्यतया विश्वजिदादिवदधिकारोऽप्यध्या-हार्यः[1]इति पूर्वपक्षवादी मन्यते। का युक्तिः? अनिष्पन्नस्य वस्तुनोऽधिकारि-विशेषणभावो नोपपद्यते। कस्मात्? साध्यं सिद्धं वा [2]पारलौकिकतया संबध्यते। ततः किं? इदं ततो भवति—सिद्धं निष्पादकतया संबध्यते। साध्यं फलतयेति। जीवनं सिद्धम्। तस्मात् साधनभाव एव युक्त इति मन्यते। राद्धान्तस्तु ऋणदर्शनमवश्यकर्तव्यतां सूचयति जीवनमधिकारि-विशेषणतया ज्ञापयति। ननु च सिद्धस्य साधनभावादृते संबन्धो नोपपद्यते इति किमत्र दर्शनं करिष्यति। अत्रोच्यते। उक्तमस्माभिः स्वर्गकामाधि-करणे न कर्तुः नियोग इति। नियोज्यश्च साध्यं यात्रच्छब्दादित्युक्तम्।

---

वचनेन राद्धान्त इति युक्तम् न्यायपरत्वादस्य शास्त्रस्येति। अत्रोच्यते। यावज्जीवनादीनामधिकारिविशेषणत्वानुपपत्तेः अधिकारिशून्यतया विश्व-जिदादिवदधिकारोऽप्यध्याहार्यः इति पूर्वपक्षवादिनोऽभिप्रायः। का युक्तिः? उत्तरं-अनिष्पाद्यस्य वस्तुनो अधिकारिविशेषणभावो नोपपद्यते? कस्मात्? साध्यं सिद्धं वा पारलौकिकतया संबध्यते। यावत्किञ्चित् वाक्ये साध्यं सिद्धं वा श्रूयते तत्सर्वं तावत् क्रियया संबध्यते। ततः किं? इदं ततो भवति-सिद्धं निष्पादकतया साध्यं फलतयेति, जीवनं सिद्धम्। तस्मात्साधन-भाव एव युक्त इति मन्यते। साध्यस्य तु फलतयाऽन्वितस्यान्यथा फलत्वानुपपत्तेः अधिकारिविशेषणता भवति। तेन स्वर्गादेरधिकारिविशेषणता न जीवनादेरिति। राद्धान्तस्तु—ऋणदर्शनमवश्यकर्तव्यतां सूचयति। जीवनमधिकारिविशेषण-तया ज्ञापयति। अन्यथाऽवश्यकर्तव्यत्वानुपपत्तेः। ननु सिद्धस्य साधन-भावादृते संबन्धो नोपपद्यते इति किमत्र दर्शनं करिष्यतीति निर्मूलं दर्शनं व्यामोह इति यावत्। अत्रोच्यते—उक्तमस्माभिः स्वर्गकामाधिकरणे न कर्तु-र्नियोग इति। यदि कर्तुः नियोगः स्यात् तदा जीवनं कर्तृविशेषणं स्यात्। यदा तु नियोज्यस्य सतः अधिकारिणः कर्तृत्वं तदाऽनया नियोज्यविशेषणमेव जीवनम्। नन्वेवमपि [2]कर्तृविशेषणता न संभवतीत्यन्वयो न संभवति इत्याशङ्क्याह—नियोज्य-

---

1. अधिकारकल्पना विश्वजिन्न्यायेन—मातृका.
2. क्रियायां—मा.

तस्मान्न साध्यता नियोगे नियोज्यविशेषणत्वे हेतुः । नियोज्यविशेषणं चाधिकारिविशेषणमित्युक्तम् । ऋणदर्शनसामञ्जस्यं चान्यथा नोपपद्यत इत्युक्तम् । तस्मान्नित्यान्येवैतानि कर्माणि निमित्तनित्यत्वादिति सिद्धम् । अथवा [1]ऋणवाक्ये ब्राह्मणशब्दश्रवणात् ब्राह्मणस्यैवाधिकारः ब्राह्मणस्यैवैतानि कर्माणीति पूर्वपक्षवादी मन्यते विध्युद्देशे ब्राह्मणशब्दश्रवणाभावात् अस्य चार्थवादस्यान्यार्थत्वात् यथाधिकारं व्याख्या युक्ता । नैतद्वशेनाधिकारः ।

इति बृहत्यां षष्ठाध्यायस्य

द्वितीयः पादः

—: * :—

श्चायं यावच्छब्दादित्युक्तम् स्वर्गकामाधिकरण एव । कर्तृविशेषणताया अनुपपत्तिश्च अव्यवच्छेदकत्वात् स्वर्गवत् । यथा स्वर्गस्य कर्तृविशेषणता न संभवति इत्येकादशाद्ये निरूपितम् तथा जीवनस्यापि नाजीवन् कश्चित्करोति । यच्च साध्यतयाऽन्वितस्य स्वर्गस्य पश्चान्नियोज्यविशेषणत्वमिति तदपि नोपपद्यत इति दर्शयति—नियोगाच्च साध्यं स्वर्गादिष्वपि नियोज्यविशेषणस्यैव सतोऽर्थात्साध्यत्वमिति दर्शितम् । तस्मान्न साध्यता नियोगे नियोज्यविशेषणत्वे हेतुः । ननु च भवतु नियोज्यविशेषणता जीवनस्य तथापि कथमवश्यकर्तव्यतेत्याह—नियोज्यविशेषणं चाधिकारिविशेषणमित्युक्तम् नियोज्य एवाधिकारी भवतीति । अधिकारस्यावश्यकर्तव्यात् अनुष्ठानमावश्यकमिति ऋणदर्शनसामञ्जस्यं चान्यथा नोपपद्यत इति तदनुसारादपि नियोज्यविशेषणत्वमेव युक्तम् । तस्मान्नित्यान्येवैतानि कर्माणि निमित्तनित्यत्वादिति सिद्धं दर्शनं मूलसंभवान्न व्यामोह इत्यर्थः । अथवा ऋणवाक्ये ब्राह्मणशब्दश्रवणात् ब्राह्मणस्यैवाधिकारो विशेषणादधिकारावगमात् विध्युद्देशे ब्राह्मणशब्दश्रवणाभावात् । अस्य चार्थवादस्यान्यार्थत्वात् विध्यन्तरशेषत्वादिति यावत् । यथाऽधिकारं व्याख्यानं युक्तम् नैतद्वशेनाधि-

1. p. 12 अयं मन्त्रार्थो ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन—मा

कारः । अयमाशयः-यावज्जीवनचोदनायामेव वाक्यशेषभूतमर्थवाद[गतं] ब्राह्मणपदं [यदि]स्यात् तदा वाक्यस्य संभूयकारित्वात् तदनुरोधेनापि अधिकारिपदं व्याख्यायेत वाक्यान्तरशेषत्वात् । तन्निरपेक्षार्थबोधकत्वात् यावज्जीवचोदनाया ब्राह्मणस्यैवाधिकारवर्णनं न युक्तम् मूलापेक्षत्वात् । दर्शनस्य मूलभूतयावज्जीवनानुसारेण ब्राह्मणग्रहणमुपलक्षणत्वेन वर्णनीयमिति ।

इति महोपाध्यायश्रीशालिकनाथकृतायां ऋजुविमलायां पञ्चिकायां

षष्ठाध्यायस्य द्वितीयः पादः

— :*: —

## ॥ षष्ठाध्यास्य तृतीयः पादः ॥

### ॥ १ ॥ सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात् ॥ १ ॥

अस्मिन्नधिकरणे गम्भीरस्य न्यायमहाह्रदस्य उपरि बहवो लघुधियः प्लवन्त इति न्यायविचारमेव तावदादितः आरभामहे—

तत्र तावत् **केचित्** एवं चोदयांबभूवुः—यथा जीवनादिकमधिकारिविशेषणं तथा सकलसाङ्गप्रधानकर्मकलापानुष्ठानसामर्थ्यमपि । तत्र यस्तावत् कात्स्न्येंन यत्प्रयोगमुपसंहर्तुं प्रभवति तद्विषयो नायं विचारः—किं अङ्गत्यागेनाप्यनुष्ठानं कर्तव्यं उत नेति । यस्तु न प्रभवति तस्यानधिकार एव शूद्रस्येवाग्निहोत्रादौ ।

**यदपि** चैके समाधानधियाऽभिदधति न—प्रवृत्तावेवेदं यथाशक्त्यनुष्ठानमुच्यते । किन्तु प्रवृत्तस्य । तेन सर्वाङ्गोपसंहारसामर्थ्येनादावधिकृतस्य यद्यन्तरा शक्तिः व्यापद्यते तदा प्राक्तनाधिकारदार्ढ्येनानुष्ठानं परिसमाप्यत एव । अत एव नित्येष्वग्निहोत्रादिषु शूद्रादीनां नानुष्ठानम् । अधिकारसमधिगमसमय एव तेषामशक्तत्वादिति ।

**तदपि** जातुषमिवाभरणं विप्रतिपन्नजनमनीषानलशिखा[ यां ] विलीयते । तथाहि—अधिकारिविशेषणयोगात् अधिकारी, प्रवर्तते च । आप्रयोगापवर्गं चाधिकारानुवृत्तिरनुष्ठानसमाप्तयेऽभ्युपगमनीया । अन्यथा हि निवृत्ताधिकारस्यानुष्ठानं न शब्दतः, नाप्यन्यतः प्रमाणात् स्यात् । तत्र मध्ये प्रयोगेऽपि सत्यामशक्तौ शक्तेरधिकारांशनिवेशित्वान्निवर्तेत एवाधिकारः । निवृत्ताधिकारस्य च किन्निबन्धनमारब्धप्रयोगपरिसमापनम् । शिष्टविगर्हणाभयादिति चेत्; तर्हि नैमित्तिककाम्ययोः न कश्चिद्विशेषः । निमित्तपर्यन्तेषु चेदमधिकरणमित्याचार्याः । तस्मादारम्भसमये प्रयोगमध्ये वा शक्तिविरहिणामधिकाराभावादनुष्ठानमयुक्तमिति ।

**यदपि** कश्चिदाह—यन्नित्यं कर्तव्यं तत्र सर्वाङ्गयुक्तमिति असंभवान्नित्येषु यथाशक्त्यनुष्ठानमेव शास्त्रार्थः । तेन सर्वाङ्गोपसंहारसामर्थ्यं विनापि नित्येष्वधिकार इति

तदिदं मीमांसातन्त्रमनाद्रियमाणस्य स्वमनीषिकाकल्पितम् । तथाहि—यथाविनियोगमधिकार इति न्यायस्यावगतिर्नास्ति । तेन जीवतोऽपि यच्चोदितं तत् यस्यैव चोदितं तत् तस्यैवावश्यकर्तव्यमिति नान्यस्य । नित्यान्विताङ्गयुक्तं च कर्म अनुष्ठानोपसंहारसमर्थस्यैव तदवश्यं कर्तव्यम्; अशक्तस्य किमायातम् । न चासंभाव्योऽयं शास्त्रार्थः कदाचित् सर्वाङ्गोपसंहारशक्तिसंभवात् । अन्यथा काम्यानां कर्मणामनवकाशत्वापातादिति यावत् । यत्किञ्चिदेतत् । यदि च यो यावच्छक्नोति नित्यकर्मणि तस्य तावदेव चोदितमिति स्यात् तदा शूद्रादीनामग्निविद्यावियोगित्वात् तद्रहितमेवानुष्ठानं चोदितमिति तेषामप्यग्निहोत्रानुष्ठानं स्यादिति सकलाचारविरोधः ।

तथेदमपरे वदन्ति—इह च निमित्तपर्यन्तेषु फलं नास्तीति न तत्प्रयुक्तमनुष्ठानं तथापि नियोगसिद्धिं प्रति विवादाभावात् स्वसिद्ध्यर्थं नियोग एवानुष्ठानमाक्षिपतीति समाश्रयणीयम् । अन्यथा तदसिद्धेः । नियोगसिद्धिस्तु यथाचोदितकृत्स्नानुष्ठानलभ्येति कृत्स्नस्यैवानुष्ठानमाक्षिपति न विकलस्य । न चेदमाश्रयितुं युक्तम्—कदाचित्सकलस्य साधकत्वं कदाचिद्विकलस्येति । सकलस्यापि कलापस्याधिकारविधिना युगपद्गृहीतत्वात् । तथा गृहीतस्य साधकत्वकल्पनात् । यदि विकलस्यापि साधकत्वं तदा अङ्गवत् प्रधानमपि परित्यज्य किमित्यनुष्ठानं[न]स्यात् ।

अपि च काम्येषु कर्मसु कस्माद्विकलानुष्ठानं नेष्यते । फलासिद्धेरिति चेन्न, नियोगायत्तत्वात्फलसिद्धेः । नियोगादेव कालान्तरभाविफलमिति मीमांसकप्रवराः प्रतिपेदिरे । यदि च विकलादेव नियोगसिद्धिः अत्रापि किं न स्यात् । अथात्र सकलसाध्यत्वं नियोगस्याश्रीयते, नित्येष्वपि किमयं नियोगो राजाज्ञया निर्वासितः ? तदिदमधिकरणं श्रद्धाविप्रलब्धमतीनामेवादरणीयमिति ।

अत्र प्रभाकरसेवाहेवाकजडिमानमारचयन्ति । सत्यं शक्तिरधिकारिविशेषणं तथाप्येषा चिन्ता युज्यत एव । द्विधा हि पुमांसः तिरोहितशक्तयश्चातिरोहितशक्तयश्च । तत्र[ये]अतिरोहितशक्तयः तेषां यद्यपि शक्तिरस्ति[तथापि](तेषां)ते प्रतिबन्धकवशात् शक्तिफलमनुष्ठानं न लभन्ते । कथं पुनस्तेषां शक्तिरस्तीति गम्यते ? फलगम्या हि सा फलाभावे किं तस्यां प्रमाणम् ? अत्राभिधीयते—य एव प्राक् कार्यं कुर्वन्नुपलब्धः स एव पुनरन्तरा न कृतवान् । पुनश्च कारणान्तरसमुपनिपाते कुर्वन्नुपलभ्यते । तत्र किं शक्तेर्नाशोत्पादौ कल्प्येयाताम् उत तिरोधानतद्विगमाविति ।

तत्र धर्मिकल्पनातो धर्मकल्पना लघीयसीति पूर्वशक्तिविनशपुरस्सरो न शक्त्यन्तरोपजनः कल्प्यते। किन्तु अन्तरा कार्यानुदयदर्शनात् प्रतिबन्धमेव मन्यामहे। पुनरेव कार्योदयदर्शनात् तदपगम एव कल्पनामर्हति । तस्मादनुष्ठानाभावेऽपि तिरस्कृता शक्तिरस्तीति सुगममेतत्। तत्र शक्तेरधिकारिविशेषणत्वात् तिरोहितायामपि च सद्भावाविशेषात् तिरोहितशक्तीनामप्यधिकारो भवत्येव। अनुष्ठानात्प्राग्भाविनी हि दशा पुरुषस्याधिकारविशेषणम् नानुष्ठानमेव, तस्याधिकारायत्तत्वात्, प्रागधिकारादसंभवात् । तेन शक्तिरेवाधिकारिविशेषणम् । सा च तिरोहितशक्तीनामप्यस्ति इत्युक्तोऽधिकारः। ये तु स्वभावत एवोक्ताः शूद्रादयः अत्यन्तोच्छिन्नशक्तयः नान्धादयः तेषां शक्त्यभावादेव नाधिकारः। तत्र ये तिरोहितशक्तयः तेषामधिकारे सति कस्यचिदङ्गस्यानुष्ठानाभावे सति किमधिकारदार्ढ्यसद्भावादनुष्ठानं भवतु उत अङ्गासद्भावादननुष्ठानं (तेषां शक्तयभावादेव नाधिकारः । तत्र ये तिरोहितशक्तयः तेषामधिकारे सति) इति चिन्ता। सा चेयमुपक्रमे प्रयोगमध्ये च तुल्या।

तत्र पूर्वपक्षवादी मन्यते—यद्यपि प्रतिबद्धशक्तीनामधिकारो भवति तथाप्यसौ निवर्तत एव साधनवैकल्यात् । कृत्स्नानुष्ठानसम्पाद्यो निमित्तपर्यन्ते विनियोगः प्रतीयते। यदा च कृत्स्नमनुष्ठीयते तदा विकलत्वात् साधनस्य नियोगसिद्धिर्नास्ति तदभावाच्च न पुरुषस्याधिकारः । नियोज्यसंबन्धिनियोगलक्षणे कार्ये साधनतया कर्मणामधिकार इत्युत्पन्नाप्यधिकारप्रतीतिः विलयमुपैति। यदि नित्ये विकलादपि नियोगसिद्धिः तदा कार्येऽपि तथा स्यादिति। तथा प्रधानपरित्यागेनापि अनुष्ठानं प्राप्नोति अङ्गैस्सह साधनत्वे प्रधानस्याप्यविशेषादिति।

राद्धान्ती त्वाह—सत्यमधिकारो यावदधिकारविधिना प्रयुज्यते तावतैव विनियोगार्थनिर्वृत्तिः न यावद्विनियुक्तं तावतैव; बाधवत्। सर्वेषामङ्गत्वे सत्यपि केषाञ्चिदङ्गानां बाधे यावन्त्येवाधिकारविधिनाऽनुष्ठाप्यन्ते तावद्भिरेव तत्सिद्धिः तथेहापि अधिकारविधिरेव साधनभावमुपकल्पयति न प्रमाणान्तरम्। तेन यावत्प्रयुङ्क्ते तावतैव तत्सिद्धिं गमयति। यथासंभविनश्च प्रयुक्तिः नासंभविनः। तेन सत्यधिकारे यावत्संभवं प्रयुक्ताङ्गसम्पाद्य एवाधिकारविधिः निमित्तपर्यन्तेष्विति कल्प्यते।

यत्तूक्तं—काम्योऽपि तथा स्यादिति । तत्र ब्रूमः—काम्ये फलपर्यन्तान्वयित्वात् अधिकारस्य फलं प्रति करणीभूत एव यागादिर्विषयः। नचेतिकर्तव्यतारहितस्य

फलं प्रति करणताऽस्ति । कृत्स्ना चेतिकर्तव्यता । तेनैकदेशाभावेऽपि इतिकर्तव्यतया शून्यतया करणत्वानुपपत्तेः अकरणीभूतस्य विषयत्वमिति । इतिकर्तव्यताविरहे केवल-विषयात् विषयाभावे च नियोगाभावात् तदभावे चाधिकाराभावात् नानुष्ठानसिद्धिः । अत एव प्रधानपरित्यागेऽप्यनुष्ठानं स्यादिति नाशङ्कनीयम् । नित्येषु फलान्तरा-भावात् न करणीभूतस्य विषयत्वमिति इतिकर्तव्यताविरहे केवलविषयप्रत्यभिज्ञानात् नियोगापत्तेः अधिकारो युक्तः । तद्बलेन चानुष्ठानमपीति ग्रन्थार्थः ।

**निमित्तपर्यन्तमत्राधिकारं चिन्तयत्याचार्यः** इति काम्येषु नेयं चिन्तेति दर्शयति । चिन्तास्वरूपमाह—**किमङ्गैरनुपसंह्रियमाणैः निमित्तत्वमेवापैति** किमङ्गैरनुपसंह्रियमाणैः कृत्स्नानुष्ठानसाध्यस्य विध्यर्थस्य असिद्धेः अधिकाराभावा-ज्जीवनादेः (न) निमित्तत्वमेवापैति सत्यपि तस्मिन्ननुष्ठानात् । [उ]त निमित्तत्वं ना(न्ना)पैति अनुपसंह्रियमाणैरप्यङ्गैः उक्तेन न्यायेन नियोगेन नियोगार्थसिद्धेरधिकारे सति निमित्तत्वमनुष्ठाने युज्यत एव ।

स्ववचनमेव विवृणोति—**एतदुक्तं भवति—किमधिकारावगमो भवति । उताधिकारानवगमात् कथञ्चिदनुष्ठानमिति ।**

यदाऽधिकारावगमो भवति तदा निमित्तत्वमेवापैति । यदा तु अधिकारान-वगमात् कथंचिदनुष्ठानं तदा निमित्तत्वं नापैति । ननु च यदाऽङ्गानुष्ठानासंभवः तस्याधिकार एव नास्ति । यस्य चाधिकारः तस्य च कृत्स्नानुष्ठानमेव संभवतीति चिन्तेयं न ज्ञायते कीदृशी[ति] तदाह—

**ननु च संशय एवायमप्रकटीकृतार्थः इति । अयं प्रकट्यते—सर्वाङ्ग-विशिष्टे कर्मणि अधिकृतस्य कदाचित् प्रयोगशक्तौ सामर्थ्यानपगमेऽपि चिन्तेयमिति विषयविशेषप्रदर्शनेनैव संशयो व्याख्यातः ।**

यस्य सामर्थ्यं नापगतं तस्य सर्वाङ्गविशिष्टे कर्मण्यधिकृतस्य प्रयोग[ा]शक्तौ किं निमित्तत्वमेवापैति उत नेति चिन्ता । कथं पुनः सामर्थ्यानपगमोऽशक्तिश्च । शक्तिरेव हि सामर्थ्यम् । तेन सामर्थ्यमनपगतं अशक्तिश्चेति परस्परविरुद्धम् । समाधत्ते—

**दैवान्मानुषाद्वापि तिरस्कारादशक्तिः न पुनराजानतः, स्वभावशक्ति-रस्त्येवेति सामर्थ्यानपगमो वर्ण्यते ।**

दैवाद्रोगादेः मानुषात् अभिघातादेः शक्तेस्तिरस्कार इति अशक्तिरित्युच्यते। एतत्तु प्रागुक्तमेव। तस्मात् कदाचिदशक्तिरिति सूक्तम्। ननु तिरस्कारेऽपि शक्तेः अनधिकार एव अत्राह—

**सामर्थ्यं चाधिकारहेतुः नोपधानव्यपेक्षम्।**

सामर्थ्यं स्वाभाविकमेवाधिकारिविशेषणं न पुनः उपधानसापेक्षम्। उपधानशब्देन उपाधिभूतं वस्त्वभिमतम्। प्रतिबन्धापगमं चिकित्सादि। अप्रतिबन्ध च सामर्थ्यं नाधिकारहेतुः किं तर्हि स्वाभाविकम्। न हि कार्यात् प्राक् अप्रतिबन्धता शक्तेः शक्यते वक्तुम्। कार्यं चानुष्ठानमेव। तेन सत्यनुष्ठाने अप्रतिबन्धशक्तिनिश्चये सति अधिकारः, अधिकारे चानुष्ठानमिति इतरेतराश्रयता स्यात्। तस्मात् स्वाभाविकी शक्तिरधिकारिविशेषणम्। अधिकृत एव प्रतिबन्धविगमावपि तथा। यथा नयनाच्छादनपक्ष्मविगमः(मौ) आज्यावेक्षणादिषु इति भवति संशयः—किमुपधानाद्रोगादेः प्रवृत्तिशक्तिरिवाधिकारोऽपि विरुध्यते उत उपाधिनिरपेक्षत्वात् अप्रवृत्तावप्यधिकृत एवेति। अत्र पूर्वपक्षवादी पश्यति—

**सत्यमनुपाधिकमेवाजानतः स्वभावत एव यत्सामर्थ्यमनुपाधिकं अनपेक्षितप्रतिबन्धविगमं अधिकारहेतुः किन्तु प्रवृत्त्यर्थत्वात्तस्य उपाधिविहताया अपि प्रवृत्तेः हेतोरकिञ्चित्करं विद्यमानमपि।**

अस्यार्थः—सामर्थ्यस्य प्रवृत्तिः प्रयोजनम्। तत्र यदि सत्यपि सामर्थ्ये प्रवृत्तिर्नास्ति तदा विद्यमानं अकिञ्चित्करम्। तस्मिन् सत्यपि प्रतिबन्धवशेन प्रवृत्त्यनुपपत्तेः। असत्यां प्रवृत्तौ कृत्स्नानुष्ठानस्य संपादनीयस्य विध्यर्थस्यासिद्धेः निवर्तत एवाधिकारः। तस्मात् सर्वाङ्गोपसंहारेणैव [अङ्गीकरणी]या प्रवृत्तिः। अत्रैवाधिकारकार्यस्य नियोगस्याभिनिर्वृत्तिः नैकदेशप्रयोगात् अन्यथा को विशेषः फलपर्यन्तेष्वधिकारेषु? असावपि फलपर्यन्तोऽधिकारः अनौपाधिक एव उपाधिनिरपेक्ष एव। न च प्रवृत्त्यशक्तौ कार्यक्षमो भवति, तथाभूते सकलाङ्गयुक्तेऽधिकृतत्वात्।

**अत्राभिधीयते। फलपर्यन्ते विशेषं वक्ष्यामः निमित्तपर्यन्तेष्वधिकारानप(व)गमो वर्ण्यते प्रवृत्तावशक्तावपि। यदि प्रवृत्तावशक्तिः कथं तर्हि वर्ण्यते? इत्थं वर्ण्यते। अनौपाधिके अधिकारावगमे हि निमित्तत्व-**

मपह्नोतुं शक्यम् । भवति हि अशक्तेरौत्पत्तिक्याः शूद्रादीनां नाधिकारः न पुनः स्वाभाविकसामर्थ्यवशेनोपजातस्याधिकारस्य प्रतिबन्धवशेनाशक्ते-रधिकारविघातः(म्) ।

तस्मादनपगताधिकारस्य यथाशक्त्यनुष्ठानमनुष्ठानविदो मन्यन्ते एवं यथाशक्त्यनुष्ठानं नित्येष्वस्ति ।

अत एवात्र नित्याधिकारे गौणो मुख्यश्च शास्त्रार्थ इत्याचक्षते मीमांसकाः ।

चोदयति—

किमिदं कूश्माण्डभूतं प्रलप्यते असंबन्धं, एकदेशस्य शास्त्रार्थस्य गौणत्वं मुख्यत्वं चेति ।

परिहरति—

भवानेवात्र प्रलापी ।

न मीमांसकाः प्रलापिनः । कथमिति पृच्छति । उत्तरं—अविहन्यमाने हि अशक्तावप्यधिकारे यावच्छक्त्या चानुष्ठाने प्रतीयमाने अर्थाक्षिप्ते च संभवति श्रौतापाये च नोपादानं विरुध्यते ।

ननु यदि श्रौतं त्यज्यते तदाऽपरमपि किमिति न त्यज्यते इत्यत्राह—

यावदशक्तिस्तावन्नोपादीयते । तथापि शक्यत्यागेषु न किञ्चन प्रमाणमस्ति शक्योपादान [इव] इति ।

अनेन हि यथाशक्त्यवगमो हेतुः । तेन किञ्चित्त्याज्यं किञ्चिचोपादातव्यम् । पुनश्चोदयति—गौणस्य किमायातम् ।

भवतु अर्थस्य किमायातं ? यद्यप्यर्थान्नीवारादि उपादीयते तथापि कथं गौणत्वं ?

परिहरति—

तदेव हि आर्थमभ्युपगम्य न शक्यते उपादातुं यावत् गौणता व्रीहि-शास्त्रार्थस्य नोच्यते तावन्नीवाराणां नोपादानं संभवति । ननु च किञ्चिद्विकल-व्रीहिशास्त्रार्थग्रहणेनापि कर्मसिद्धेः कथं गौणतेत्यत्राह—

न हि नीवाराणां न प्रतीत्या भूयोऽवयवसामान्यमुपपद्यते । नीवारानेव ह्युपाददानः भूयोवयवसामान्योपादानं शक्नोति कर्तुं नान्यथा । नीवारेषु चोपादीयमानेषु सिद्धं गौणत्वम् । तस्मात्सुष्ठूच्यते गौणो मुख्यश्च शास्त्रार्थ इति । अन्यत्र कथमिति अत्राह—

**आरादुपकारकाङ्गहानेऽपि कस्यचिच्चोपादानात् सदृशबुद्धिर्भवति ।**

अभिन्नेऽपि धर्मिणि यथा[लोके](योगे)कस्यचिदनेकगुणसंभृ(भू)तस्य दृष्टस्य पुनः कालान्तरे कैश्चिद्गुणैर्वियुक्तस्य द्रष्टारो भवन्ति वक्तारः स इवायं दृश्यत इति । अवस्थावतोऽभेदेऽप्यवस्थानां भिन्नानां सादृश्यमुपपद्यत एवेति । तस्मादुभयं सिद्धं गौणमुख्यता यथाशक्त्यनुष्ठानं च । दर्शनमुक्तम् । 'तदेव यादृक्कीदृक्च होतव्यं' इति वचनमिदं कस्मान्न भवति येन दर्शनमुच्यते । उत्तरं—

**(स)[न]यादृक्कीदृक्शब्दार्थौ विधातुं शक्येते विहितापेक्षत्वादनयोः ।**

विहितद्रव्यमपेक्ष्य यादृक्कीदृक्शब्दार्थौ विधेयौ नान्यथा । तत्र यदि तावत् द्रव्यं विशिष्टमेव विहितं तदा न यादृक्कीदृक्शब्दार्थौ विधातुं शक्येते । अथ द्रव्यमात्रं विहितं न विशेषः तदापि प्राप्तत्वाद्विधानं नोपपद्यते । तस्मात् न्यायानुवादाविति सूक्तम् ।

**॥ २ ॥ काम्येषु चैवमर्थित्वात् ॥ ८ ॥**

नन्वेकादशे दर्शितं कामाधिकारे सकलाङ्गोपसंहार एव कर्तव्य इति । किमपरमिह चिन्त्यत इति । अत्राह—

**इह विकृतयः उदाहरणम् । एकादशे यदधिकरणं तत्प्रकृतिविषयम् ।**

इह तु विकृषु चिन्ता केन विशेषणेन ? उत्तरं—

**न ह्यत्राङ्गोपदेशः । किं तर्हि ? कार्यतो हि संबन्धः । विकृतिषु अङ्गानि नोपदिश्यन्ते । किन्तु कार्येण करणोपकारलक्षणेनाभिसंबध्यन्ते ।**

**कश्चैवं सति विशेषः ? अयमस्ति विशेषः । उपदिष्टे हि कर्मण्यधिकारः । उपदेशावगतिपुरस्सरोऽतिदेशः । विकृतिषु च प्रधानमात्रमेवोपदिश्यते । अतः कार्याभिसंबन्धानामङ्गानां कदाचिदनुष्ठानाशक्तेः अधिकारो निवर्तते इति शक्यते वक्तुं उपदेशविषयत्वादधिकारस्य ।**

उपदिश्यत इत्युपदेशः । एवं चौपदेशिकस्याधिकारस्य न सङ्कोचः कुतो भवति । क्रियतां को दोष इत्यत्राह—

**न हि कार्येण करणोपकारलक्षणेन प्राकृतान् पदार्थानतिदिशता प्रमाणभूतेनोपदेशस्य सङ्कोचो न्याय्यःउपदिष्टार्थसिद्ध्यर्थत्वात् कार्यस्य । उपदिष्टोऽर्थः कथं नाम सिद्ध्येदित्येवमर्थं कार्यं प्रमाणमाश्रीयते । तेन यदर्थमेव यज्जातं तस्य तेन सङ्कोचो[न]न्याय्यः । न हि गुणानुरोधेन प्रधानं सङ्कोचमर्हति ।**

इदमत्राकूतम्—यद्यपि साङ्गप्रधानविशिष्टस्य नियोगस्य कार्यभूतस्य तदनुष्ठान-योग्यमेव संबन्धीभवितुमर्हति । आकाङ्क्षासन्निधियोग्यतानां सम्बन्धहेतुत्वात् । तथा च भवतु नाम तथाविधस्यैवाधिकार इति अयोग्यस्य नाधिकारः । यस्तु शक्त एव[1]तिरोहितशक्तिः किञ्चिदातिदेशिकमङ्गमुपसंहर्तुं न शक्नोति तस्यापि विकृतिषु काम्यास्वपि नानुष्ठानमनुपपन्नम् । न च तत्रैवं शक्यते वक्तुं-फलं प्रति करणी-भूतेष्वधिकारात् सेतिकर्तव्यताकस्य च करणत्वात् अङ्गाभावे करणत्वानुपपत्तेः विषयत्वाभावे चाधिकारासंभवात् अननुष्ठानमिति, उपदिश्यमानविषयत्वादधिकारस्येति ।

**अत्राभिधीयते—यदि कार्यनिरपेक्षोऽधिकारः फलपर्यन्तेषु स्यात् स्यादेतदेवम् ।**

अस्यार्थः—फलपर्यन्तेषु करणीभूतेषु अधिकारात् सेतिकर्तव्यताकस्य करण-त्वात् कार्येण च प्रमाणेन विना विकृतिष्वितिकर्तव्यताया अभावात् कार्यसमर्पितेति-कर्तव्यतान्वयलब्धकरणभाव एवोपदिष्टे प्रधाने साधिकार इति आतिदेशिकोप-संहारेणानुष्ठानम् । यदि परं फलपर्यन्तेष्वपि करणोपकारनिरपेक्ष एवाधिकारः स्यात् तदैवातिदेशिकस्यापि अङ्गस्य त्यागः स्यात् । न चैतदस्ति तदाह—**यथा च सत्कार्य एव सकरणोपकार एव उपदेशोपदिष्टे प्रधानेऽप्यधिक्रियते फलार्थी तथा एकादशे वक्ष्यामः ।**

काम्यनिमित्ताधिकारयोर्विशेषमपरमाह—

**यथा च निमित्तपर्यन्तेषु निमित्तापगमो माभूदिति विगुणमपि कर्तुं युक्तम् ।**

---

1. अविरोहित-मा

अनुष्ठानं प्रति निमित्ततया प्रतीयते । यदि चानुष्ठानं न क्रियेत निमित्तत्व-मेवापैति । न च तद्युक्तम् । [अतो]विगुणमपि कर्तुं युक्तम् । अनुष्ठानं प्रति निमि[त्तं] फलावगतिः अननुष्ठानेऽपि [1]फलावगमाविरोधात् । प्रत्युत विगुणानुष्ठाने सा फला-वगतिर्न संभवति साध्यत्वात् फलस्य साध्यस्य सेतिकर्तव्यताककरणायत्तत्वात् इति सर्वाङ्गोपसंहार एव अत्रापि विकृतिष्वपि न्याय्यः ।

**॥ ३ ॥ क्रियाणामाश्रितत्वात् द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥**

ननु च गौणमुख्यत्वेशास्त्रार्थ इत्युक्तम् । न पुनस्तत्प्रत्ययादृतेऽनुष्ठानं संभवति । यदि मुख्यशास्त्रार्थैकदेशोऽपि नानुगृह्यते तदा किमननुष्ठानेन । गौणा-वगतावपि तदित्येवानुष्ठाने हेतुः । तस्मात् तत्प्रत्यये यत्नः कर्तव्यः ।

**पूर्वपक्षमाह-ननु चानुमानीकी क्रियेत्युक्तम् । स्वरूपाग्रहणे तु कथं तत्प्रत्ययः ।**

अनुमानेन क्रियाऽवगम्यते अनुमानाच्च स्वरूपावगमे च प्रत्यभिज्ञाया अनुप-पत्तिरिति कथं क्रियायां तत्प्रत्यय इति ।

राद्धान्तमाह—**शास्त्रावगम्यतया तत्प्रत्ययाभिधानं न स्वरूपेणे-त्यदोषः ।** यद्यप्यानुमानिकी क्रिया तथापि तस्य द्रव्यान्तरेण क्रियायाः तेनैव शब्देनाभिधानम् औपाधिकत्वेन शास्त्रावगम्यतया तत्प्रत्ययः न पुनः स्वरूपेणेत्यदोषः । शास्त्रावगम्यत्वं चानुष्ठानहेतुः न स्वरूपावगतिरिति सूक्तं शास्त्रार्थानन्वयित्वम् । **ननु स्वरूपे प्रत्यभिज्ञानं किमिति नोच्यत इति** सुहृद्भावेन कथयति । स्वरूप-प्रत्यभिज्ञानं तु न प्रत्यक्षादृतेऽस्तीति प्रथमपादे उक्तम् बुद्धिकर्मणी अभिहिते-ऽप्रत्यक्षे इति ।

अत्र यदि शास्त्रावगम्यतया तत्प्रत्यभिज्ञाभिधानं **कथं तर्हि स्वे स्वे प्रमेये(न)[तेन]तेन प्रमाणेन प्रत्यभिज्ञाप्यस्तीत्युक्तम् ।** भवति प्रत्यक्षेण प्रत्यक्षग्राह्ये शास्त्रावगम्ये च शास्त्रेणेत्यापतितम् । परिहरति—

**नैतदेवम् दर्शनान्तरस्य स्मरणपूर्विका हि प्रमितिः प्रत्यभिज्ञेत्युक्तम् । पूर्वदर्शनानुसन्धानेन प्रतीतिः सा प्रत्यभिज्ञा तदेवेदमिति ।**

---

1. फलापगम-मा

अनुमानादिषु पुनः न दर्शनान्तरपूर्विका प्रतीतिः, विषये लिङ्गादिमात्रभाव्यमनुमानादिकम्। तेन पूर्वदर्शनानुसन्धानं तत्र नास्तीति। प्रत्यक्षं तु पूर्वदर्शनसंस्कारसचिवेन्द्रियजन्यतया पूर्वदर्शनानुसन्धानेनोत्पद्यत इति युक्तं प्रत्यभिज्ञानम्। अतो विषयान्तरानवगतिमात्रम्। **अत्रोच्यते। न, प्रत्यभिज्ञाबलस्यैवंजातीयकस्योपाधिभूतत्वात्।** शब्द एव परं तत्र प्रवर्तते न पुनः प्रत्यभिज्ञाऽस्तीति।

**॥ ४ ॥ श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥**

**ननु सर्वशक्त्यधिकरणेऽयथाभूतमपि कर्तव्यमेवेत्युक्तम्।** तेन व्रीह्यादीनामपि परित्यागेनानुष्ठानमुक्तमेव। अतः कथमत्र पूर्वपक्षाशङ्का? उत्तरं— **तेनैवमुक्तम्।** यथाश्रुतमपि कर्तव्यमित्येतावदुक्तम्। यदि श्रुतान्तरासंभवेऽपि श्रुतान्तरं कर्तव्यमेवेत्युक्तम् अथाप्येतदधिकरणं न कर्तव्यम् व्रीहिश्रुत्यर्थासंभवेपि पुरोडाशश्रुत्यर्थः कर्तव्य एव।

एकदेशी समाधत्ते—**एवं तर्हि प्रयोजनमिदं तस्याधिकरणस्य।**

दूषयति—**प्रयोजनेऽर्थ्यमाने पूर्वपक्षेण किं?**

कृत एवात्र पूर्वःपक्षः। तेन प्रयोजनमिदं न भवति। परमसमाधाता आह—य[दी]दं **सर्वशक्त्यधिकरणस्य प्रयोजनमात्रं न भवति एवं तर्हि कर्तव्य एवात्र पूर्वःपक्षः।** स एवाह—**उक्तं द्वितीये शास्त्रान्तरतया द्रव्यविधयो नावगम्यन्त इति।** निरपेक्षसाध्यभेदे[वा]ऽनुबन्धभेदे वा शास्त्रान्तरता भवति। न द्रव्यविधीनां प्रधानविधिकार्यानपेक्षं कार्यान्तरमस्ति। न चानुबन्धभेदः। तेन शास्त्रान्तरता तावन्न शक्यते वक्तुम्। तथा द्वादशे वक्ष्यामः। **कार्येण विकल्पः न शास्त्रान्तरतया।** कार्येण विकल्पो वक्ष्यते। स न शास्त्रान्तरतया भवति। शास्त्रान्तरत्वे हि विकल्पानुपपत्तेः। कुतः? कार्यान्यत्वे हि शास्त्रान्यत्वं नान्यथा। तेन शास्त्रान्यत्वे सति बलात् कार्यान्यत्वापत्तिः। एकार्थास्तु विकल्पेरन्नित्युक्तं[न] नानार्थानाम्। तेन शास्त्रान्तरता तावत् द्रव्यविधीनां नास्ति।

**भवत्वेवं ततः किम्? इदं ततो भवति—आग्नेयोऽष्टाकपालः "व्रीहिभिर्यजेत" इति चैकं शास्त्रम् एकश्च शास्त्रार्थः** कार्यस्यानन्तरस्य श्रुत्यन्तरस्य त्यागोऽयम् यस्य श्रुत्यन्तरस्य त्यागेन श्रुत्यन्तरार्थोऽनुष्ठीयते।

उपसंहरति—**तस्माद्युक्तं यत्समिधो यजतीत्येवमाद्यर्थपरित्यागेनाग्नेयोऽष्टाकपाल इत्यस्यार्थस्यानुष्ठानम्।** अनुबन्धभेदेन शास्त्रभेदात् शास्त्रान्तरत्यागे-

नापि शास्त्रान्तरार्थस्यानुष्ठानं युक्तम्। युक्तमेव। व्रीहिभिर्यजेतेति पुनश्शास्त्रान्तरानुपपत्तेः तदभावे नानुष्ठानमिति पूर्वपक्षवादी मन्यते।

**अत्राभिधीयते—सत्यं नेदं शास्त्रान्तरम् पुरोडाशशास्त्रात् व्रीहिभिर्यजेतेति।** यत एव शास्त्रान्तरं न भवति **अत एवानुष्ठानं पुरोडाशश्रुत्याऽस्तीति श्रुतद्रव्यपरित्यागेऽपि अनुष्ठानमुचितम्।**

यदि पुरोडाशश्रुत्यैव द्रव्यमाक्षिप्यते **किं तर्हि** व्रीहिभिर्यजेतेत्यनेन **क्रियते।**

उत्तरं—**नियमो व्रीहीणाम्।** पुरोडाशनियोगाङ्गत्वे निर्ज्ञाते नियोगसिद्ध्यर्थतया व्रीहीणामेवोपादानम् अन्यसाधकतानवगमात्। अविहितेषु व्रीहिषु क्रियामात्रसिद्धये यत्किञ्चिद् द्रव्यमुपादीयत इति नियमः प्रयोजनं भवति। न हि नियमः शास्त्रार्थत्वं (कामं) विहन्ति पुरोडाशविधेः। यदि हि नियमे सति पुरोडाशविधेः शास्त्रार्थत्वं विहन्येत तदा नियमाभावे पुरोडाशश्रुत्यर्थो नानुष्ठीयेत। न चायं(अ) शास्त्रार्थतां विहन्ति। कुतः? नियमो हि अनिर्ज्ञाते कार्ये आत्मानं लभते। न च शास्त्रादृते कार्यावगतिः। तस्मात्सिद्धं नियमाभावेप्यनुष्ठानम्। नियमनिरपेक्षत्वात्कार्यस्य नियममन्तरेणापि शास्त्रस्यार्थवत्त्वात्। कथं नियमनिरपेक्षतेत्यत्राह—**नियमेन हि तदपेक्ष्यत इति।** अत्र न तेन नियमः। तस्मादशास्त्रान्तरत्वेऽपि तदभावे नियमाभावेऽनुष्ठानसिद्धिः। यत्पुनर्द्रव्यान्तरविधानमुक्तम् तत्परिहृतम्।

**॥ ५ ॥ न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥**

केन पुनः प्रसङ्गेनेदमधिकरणमायातम्। यदि तावत् द्रव्यगुणचोदनाभावेऽपि शास्त्रान्तरमपि प्रधानं कर्तव्यमित्युच्येत पूर्वेणैवाधिकरणेन गतमिदम्। अथैषामभावेऽकर्तव्यतामेव मन्यते तत् पूर्वाधिकरणेन सर्वशक्त्यधिकरणेन च विरुद्धम्। पूर्वाधिकरणे हि प्रधानशास्त्रार्थोऽनुष्ठेय इत्युक्तम्। तथा सर्वशक्त्यधिकरणेन च विरुद्धम् प्रयाजादिकर्माभावेऽपि प्रधानं कर्तव्यमिति सर्वशक्त्यधिकरणे प्रतिपादितम्। उच्यते। सामान्यं तच्चिकीर्षा हि इत्यनेन सदृशे प्रतिनिधौ प्राप्ते तदपवादार्थमिदमधिकरणम्। केषु चिन्नेष्यते सदृशप्रतिनिधिः येषु च नेष्यते तानीमानि प्रत्युदाहियन्ते—न देवताग्निशब्दक्रियं इत्यनेन सूत्रेणैव सदृशप्रतिनिध्यपवादोऽयम्। अत एव कर्माण्यत्रोदाहरणम्। तत्रापि प्रतिनिध्यभावस्य संभवात्।

येषां तु मते पूर्वाधिकरणोक्ते द्रव्यान्तरोपादाने तत्प्रतिषेधार्थमेवेदमधिकरणं तेषां मते कर्मोदाहरणमसंबद्धं स्यात् ।

ननु च देवताभावेऽपि अननुष्ठानमेव प्रधानस्यापि मन्यन्ते केचित् । तेन प्रतिनिध्यपवादमात्रता त्वत्र नास्तीति । किन्तु कर्मणो लोपप्रतिपादनार्थमेव । केचिच्छब्दं प्रयुञ्जानः अस्मिन्नर्थेऽनास्थां दर्शयति । एतच्च वक्ष्यामः । समाधत्ते—नान्तरीयकमेतद्भविष्यति । देवताप्रतिनिधौ प्रतिषिद्धे नान्तरीयकमेतद्भविष्यति कर्मापि त्याज्यमेवेति । कथमिदं नान्तरीयकमित्यत्राह—युक्त्यन्तराभिधानात् देवताविरहे कर्मार्थत्यागे अन्यार्थसंयोगात् इति । अतो मूलाधिकरणयुक्तेः युक्त्यन्तरस्य भाष्यकारेणोक्तत्वात् । अत्रैव प्रतिपादयिष्यामस्तद्युक्त्यन्तरम् । तत्र पूर्वपक्षवादी सदृशचिकीर्षां मन्यते । तावता च लाभेन कियानपि शास्त्रार्थ-स्सङ्गृहीतो भवति ।

एवं प्राप्तेऽभिधीयते—न देवतादिष्वेतत्संभवति यो ह्युद्देशस्स्यूर्य इति । उपादीयमानेषु [नीवारेषु]व्रीह्यवयवसामान्यलाभो लभ्यते । नैवमत्र किञ्चिल्लभ्यते । 'व्रीहिभिर्यजेत' इति व्रीहीणां साधनभावोऽवयवपर्यन्तः तेन साधनीभूतसाधारणावयवलाभेन तत्र शास्त्रार्थैकदेशानुग्रहः । देवतायां तु तन्नास्तीति । न हि भास्वरत्वादिगुणपर्यन्तोऽत्र शास्त्रार्थः इति ।

ननु आहवनीये जुहोति इत्ययं शास्त्रार्थः अग्न्यन्तरेऽप्युपादीयमाने प्रायेणानुगृह्यत एवेत्यत्राह—एवमाहवनीयादिष्वप्यग्निषु न द्रव्यान्तरे किञ्चित् सादृश्यं साधारणरूपमुपलभामहे । चोदनालक्षणत्वादाहवनीयशब्दवाच्यस्य स्वरूपस्य । आधानादिजन्यस्यातीन्द्रियस्याहवनीयशब्दवाच्यत्वात् तस्य कश्चिद्भागो द्रव्यान्तरोपादानेनानुगृहीत इति नास्ति प्रमाणम् । अथ शब्दमात्रमुपादीयते न मन्त्रसादृश्यं किञ्चिदुपात्तं भवति । मन्त्रतया चोपादानं न शब्दतयेति व्यर्थं शब्दमात्रस्योपादानम् ।

एवं कर्मस्वपि सादृश्याभावान्न किञ्चित्सादृश्यमुपादातुं शक्यते । कर्मणामतीन्द्रियाणां साधारणमसाधारणं वा रूपमवगन्तुं न शक्यत इति सादृश्याभावान्नान्योपादानम् । इदानीं देवताभावे तद्युक्त्यन्तरमाह—

**देवतायां पुनः द्रव्यान्तरे उपादीयमाने आस्तां तावत् सादृश्यं, देवतात्वमपि नास्तीति । कोऽभिप्रायः एवं वदतो भाष्यकारस्य ? अय-**

मभिप्राय:-तदभावे केवलं कर्मानुष्ठानमपि नैव संभवतीति मन्यते । देवताभावे यागस्यानिष्पत्तौ केवलं कर्मानुष्ठानमपि न संभवति ।

ननु च 'अग्निहोत्रं जुहोतीति' इत्यवगमात् शास्त्रार्थस्य देवताविशेषाभावे सामान्यतः सिद्धे किमित्यननुष्ठानम् ? यथाह देवानां प्रिय:-यदि देवतात्वं नाम सामान्यमस्ति, प्राग्विशेषचोदनायाः तच्च नास्ति चैव हि, यस्य विषयश्चोद्यते सैव तस्य देवता नान्येत्युक्तम् । अतः सामान्येन देवता नास्ति स्वरूपतो विशेषतोऽपि तावत् देवता भवति शब्दमात्रोपकारिणी हि सेत्युक्तम् । कुतः तस्यां सादृश्यं सामान्यं वा ? यदि देवता सा । तथा मन्त्रे शब्दान्तरोपादाने न किञ्चित्सादृश्यमुपलभामहे, वर्णसंहत्यात्मनो मन्त्रस्यापि कार्यत उपगमात् । स्वभावतो हि वर्णाः परस्परविलक्षणा एव । तेषां मन्त्रभावः कार्यसमधिगम्य एव स वर्णसङ्घातान्तरे उपात्तेऽनुगृहीत इति न शक्यते वक्तुम् क्रमान्यतो नास्ति । एवं तर्हि देवताया विना यागानुपपत्तेः अग्निहोत्रं जुहोतीति शास्त्रार्थः परित्यक्तो भवति । उत्तरं-चोदिताग्न्यभावे यदि न शक्यते संपादयितुमिति तदा किमन्यदतस्त्यागाच्छ्रेयः ।

यदिशब्दं प्रयुञ्जानोऽत्राप्यनास्थामाह । यदि देवताभावेपि यागानपायः तदा भवत्वनुष्ठानम् । अथ याग एव न संवर्तेत तदा भवतु त्यागः [किमेतेन] (किं नैतेन) निर्बन्धेन । तस्मान्न केवलं सादृश्यं नास्ति देवतायां सामान्यमपि नास्तीति, तदभावे चानुष्ठानमपि नास्तीति । तदिदं नान्तरीयकम् ।

॥ ६ ॥ प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

पूर्वपक्षमाह—

सादृश्यलाभात् साधारणावयवलाभात् सदृशप्रतिनिधिरिति तच्चिकीर्षा हीति वक्ष्यामः । तेन माषा अपि प्रतिनिधेया इति ।

ननु च प्रतिषेधः श्रूयते न माषा यज्ञसम्बन्धाः कर्तव्या इति । तेन कथं प्रतिनिधिरिति ।

परिहरति—

सत्यं श्रूयते यत्र माषा इत्येव सम्बध्यन्ते तत्रासौ प्रतिषेधः । इह पुनः श्रुतद्रव्यसदृशा इति प्रतिनिधीयन्ते न माषा इति ।

अयमाशयः—यत्र माषाणां यज्ञसंबन्धः तत्रासौ प्रतिषेधः। कुतः? यज्ञसंबन्धप्रतिषेधात् इह तु माषाणां यज्ञसंबन्धो नास्ति। श्रुतसंपादकतया इह माषा नान्तरीयकाः। तस्मान्नात्र प्रतिषेधः क्रमत इति पूर्वपक्षवादिनोऽभिप्रायः।

अत्राभिधीयते। सत्यं सदृशा इति प्रतिनिधीयन्ते ते न माषा इति न पुनः माषभावोऽपह्नोतुं शक्यते। यदि माषभावोऽपह्नूयेत तदा प्रतिषेधो नावतरेत्। न च तस्यापह्नवोऽस्ति। स एवाह—प्रतिनिधौ माषभावो न विवक्षितः इति। एतदपि सत्यं, किन्तु प्रतिषेधो माषभावविषयतया माषभावस्य माषत्वस्य विषयतया माषजात्याश्रयतया प्रतिषेधो वारयितुं न शक्यते। ननु भवतु माषजात्याश्रयतया यज्ञसंबन्धस्तु नास्तीति अत्राह—

तस्य च नान्तरीयकयज्ञसंबन्धानपहारात् संभवो न निवारयितुं शक्यते।

ननु च विकल्पः प्राप्नोति विहितप्रतिषिद्धत्वात् ततश्च कथमेकान्तेनानुपादानमिति अत्राह—न चात्र विकल्पोऽप्याशङ्क्यते श्रुतसंभवमात्राक्षेपात् प्रतिनिधानस्य। ये श्रुतस्य द्रव्यस्यावयवाः तेषामाक्षेपोऽवैधश्रुतस्य विषयस्य संभवात्। प्रतिषेधस्य श्रौतस्य च माषत्वस्य प्रतिषेधविषयस्य संभवात् भिन्नविषयत्वान्न विकल्पः। तस्मात् प्रतिषेधातिक्रमात् भयात् न प्रतिनिधेया माषा इति।

॥ ७ ॥ तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥ २१ ॥

अधिकारिणमाचिक्षिप्सुः पृच्छति—कस्यायं प्रतिनिधिः कर्तव्यतया चिन्त्यत इति। किमयं प्रतिनिधिरुपादेयो नेति चिन्त्यते॥

उत्तरं—यस्य कर्मण्यधिकारस्तदीय इति। आक्षेप्ता आह—एवं चेत् स्वाम्यपचारे कोऽन्यः प्रतिनिधत्ते। यदि स्वाम्येवापचरितः कस्तर्हि प्रतिनिधिमुपादत्ते। एकग्रन्थेनाह—तदिदं बालजल्पितमिव प्रतिभाति। समाधत्ते—अस्त्यत्र प्रतिनिधेर्विषयः पत्नीयजमानयोरन्यतरापचारेऽन्यतरं प्रतिनिधातुः नीवारवत्।

एवं प्राप्तेऽभिधीयते—अधिकृतयोः सहत्वं कर्मणि। प्रत्येकमधिकृतयोः स्त्रीपुंसयोः प्रत्येकमेव प्रयोगे प्राप्ते सहत्वं चोदितम्। ततः किं? इदं ततो भवति।

अधिकृतः कर्म कुर्वन् यजमानाकारतामापन्नः । न कर्तुरधिकार इत्युक्तम् । अधिकृतस्य सतः कर्तृत्वम् तत्रायं सहभाव इत्युक्तं भवति ।

चोदयति—सत्यमेवं कारकमात्रव्यापारः अन्यतरापेक्षितः । शक्यते च कारकमात्रव्यापारोऽन्येनापि संपादयितुम् । परिहरति—सहत्वं ताभ्यामपेक्षितम् न सहितभावः । अधिकारवशप्राप्तेऽनुष्ठाने सहत्वमात्रमपेक्षितं, न सहकर्तृत्वं कर्मणः । कस्मात् सहभावोऽपेक्षितो न सहितत्वमिति अत्राह—नेतरेतरयुक्तयोः कर्तृत्वं कर्तृत्वे च सहभावः । एकवचनश्रवणात् नेतरेतरयुक्ताः कर्तारः । किन्तु कर्तृत्व एव सहभावः पत्नीयजमानयोः । तस्मात् नाधिकाराद्दते प्रतिनिधानं संभवति । अधिकारायत्तप्रयोगसहत्वसिद्धये प्रतिनिधानमिति नाधिकारमन्तरेण तत्सिद्धिः । अधिकृतश्चेन्मुख्य एव न प्रतिनिधिः तस्मादप्रतिनिधेया स्वामिता । सोऽयं कार्यभूतसहप्रयोगासंपत्तेः न प्रतिनिधिः । सहत्वमेव परित्यज्य अनुष्ठानं किमिति न भवतीति नास्याधिकरणस्य विषयः । तथाऽधिकृतेनापरिणेत्रापि सहत्वमिति स्त्री न यजतीत्यपि ।

॥ ८ ॥ बहुनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २२ ॥

सत्रेष्विदानीं चिन्त्यते—किं कस्यचिदपचारे प्रतिनिधाय सत्रिणः प्रयोगं परिसमापयन्ति उत नेति । कस्य चित्स्वामिनोऽपचारे किं स्वामिनोः स्वामिनं प्रतिनिधाय सत्रं समापयन्ति उत नेति चिन्ता । पूर्वपक्षमाह—न ह्यस्वामी यजमानो भवतीत्युक्तमधस्तात् । प्रतिनिधीयमानश्चासौ यथा न स्वामी तथा वक्ष्यामः । तस्मादत्रापि पूर्ववत् प्रतिनिधानाभावात् 'ये यजमानास्त ऋत्विज' इति वचनात् यजमानैरेवार्त्विज्यं कर्म कर्तव्यम् । स्वामी च यजमानो भवति यो हि फलभागी स यजमान उच्यते । न चास्वामी फलभागी । अस्वामी चायं प्रतिनिधीयमान इति उत्तराधिकरणे वक्ष्यते । तस्मात् पुरुषान्तरेऽपि प्रतिनिधीयमाने तत्कार्यासिद्धेः पूर्ववदत्रापि प्रतिनिधेरभावः ।

अत्रोच्यते—अत्र हि सहितत्वमपेक्ष्यते न सहभावमात्रं इतरेतरयुक्तानां कर्तृत्वेन श्रवणात् । अतः तत्सिद्ध्यर्थं इतरकारकवत् कर्त्रन्तरं प्रतिनिधातव्यम् । बहुकर्तृके कर्मणि एकैकस्याधिकारात् कर्तृत्वमुपादेयम् । कथं तर्हि प्रतिनिधित्वाचोयुक्तिः ? स्वामिस्थाने निपातात् ।

नन्वेवं तर्हि अनधिकृतमप्युपादाय प्रयोगप्रारम्भः स्यात् । भवतु न दोषः स्वामिनि प्रवृत्तेऽपचारिते पुरुषान्तरोपादानमपि अवैगुण्यान्नचाय्यमित्युच्यते ।

नन्वस्वामिनो यजमानता नास्ति । अयजमाने चानुष्ठातरि आर्त्विज्यस्यैव वैगुण्यं स्यात् । उच्यते । ये यजमाना इति प्रधानकर्तृतयैवार्त्विज्येषु विनियोगः [न]फलभागितैव विवक्षिता । वाक्यभेदप्रसङ्गात् । न चात्मनेपदात् तस्योपादानशेषता । यथानिर्ज्ञातप्रधानकर्तृमात्रलाभेन विशेषणस्यानपेक्षितत्वात् इति ।

॥ ९ ॥ स स्वामी स्यात् तत्संयोगात् ॥ २३ ॥

ननु च कर्तृत्वेनोपादानमित्युक्तम् । कथमत्र स्वाम्याशङ्का ? यो ह्यारभ्य परिसमापयति स फलभागी यश्च फलभागी स स्वामी । तेन प्रतिनिधीयमानः स्वामी न भवति इति कथं स्वाम्याशङ्केति । समाधत्ते—सत्यमुक्तं, तथाप्याशङ्का काचिद्विद्यत एव । अधिकारमुखेन कर्तृत्वमुक्तम् । ऐश्वर्यं हि कर्मणि प्रतीत्य कर्तृत्वं भजते पुरुषः । अतोऽनधिकृतस्य कर्तृता नोपपद्यत इति पूर्वः पक्षः । यदाऽधिकृतत्वं तदा कर्तृत्वं, अथानधिकृतः तर्हि न कर्तृत्वमिति भावः ।

राद्धान्तमाह—सत्यं, अनधिकृतस्य कर्तृत्वं नास्ति । इतरैः पुनः कर्तृत्वमात्रमुपादीयते सङ्ख्यापूरणाय । तस्याः कर्मणि श्रवणात् । अयमाशयः- अधिकृतकर्तृत्वमापन्नैः अनधिकृतस्य सामदानादिभिः शक्यमापादयितुं कर्तृत्वम् । कर्तृत्वेनेतरेषां प्रयोजनम्, तावन्मात्रेणैव सङ्ख्यापूरणादिति । तस्मादार्थकर्तृत्वमात्रमेवोपादीयते श्रौतस्यानुपयोगात् । आर्थं श्रौतमधिकृतत्वम् । तयोरार्थमेवोपादीयते । तस्यैव चोपयोगात् । इतरत् श्रौतं औपयोग्येवेति ।

॥ १० ॥ स तद्धर्मा स्यात् कर्मसंयोगात् ॥ २६ ॥

पूर्वपक्षमाह—यद्यसौ न स्वामी स कथं स्वामिधर्मेण संबद्ध इति पूर्वः पक्षः । राद्धान्तमाह—भवति संबन्धः । स्वामिनो हि इदमर्थतयाऽऽक्षिप्तं कर्तृत्वम् । अतस्तद्धर्मापत्तेः । कोहि .... .... .... .... सूक्तम् ।

अस्यार्थः—स्वाम्यर्था एते संस्काराः कर्त्रादिकाः प्रतिपन्नाः । यश्चासावेकः कर्ता प्रतिपन्नः तस्य स्थाने बहवः कर्तारः प्रतीता इति । स्वामिनामैदमर्थ्येन स्वामिष्वपि कर्तृभूतेषु तद्धर्मत्वमाक्षिपति । तत्स्थानापत्त्या तद्धर्मा भवन्तीति ।

॥ ११ ॥ सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

पूर्वपक्षमाह—ननु च श्रुतद्रव्यापचारे यथाशक्त्यनुष्ठानप्राप्तौ द्रव्यमात्रोपादानमेव प्राप्तम् । न हि [सदृशेनासदृशेनवा] (सदृशसदृशेषा) समाप्तौ कश्चिद्विशेषः । राद्धान्तमाह—सत्यं समाप्तौ न विशेषः । उपदेशत्यागे तु यावत्संभवं नास्ति प्रमाणम् (अपयाति) । यावत्तु उपदेशलवोऽपि लभ्यते तद्द्रव्यमुपादातव्यम् । जातेर्हि साधनता व्यक्तिपर्यन्ता । व्यक्तेरपि साधनता अवयवव्यापारपर्यन्ता इति साधनभूतावयवत्यागे न किञ्चित् प्रमाणमस्ति ।

ननु कार्यस्योभयथापि सिद्धेः किमुपदेशादरेणेति अत्राह—उपदेशतः कार्यावगमात् उपदेशाविरोधेन च कार्यत उपादानं कार्यविदो मन्यन्ते । तस्मात्सूक्तं श्रुतसदृशस्योपादानमिति ।

॥ १२ ॥ निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २८ ॥

अत्र पूर्वपक्षवादिनोऽभिप्रायः—यावच्छ्रुतसंभवः तत्त्यागे प्रमाणं नास्तीत्युक्तम् । अतो वैकल्पिकस्योपादानमेव न्याय्यम् । श्रुतसंपत्त्यर्थं हि सदृशमुपादीयते । यदपि तत्सदृशमुपादीयते तत् श्रुतसंपत्त्यर्थम् । श्रुतं चेन्मुख्यमेव संपद्यते को नाम गौणीं सम्पदं प्रतिपद्यते ।

अत्राभिधीयते—प्रयोगार्थं हि प्रतिनिधानम् । अपचारे हि प्रतिनिधिः । प्रयोगे चापचारः । तस्मात् प्रयोगार्थमेव प्रतिनिधानम् । प्रयोगस्य चोपात्तमङ्गं न श्रुतमात्रमेव । प्रयोगस्य हि श्रुते संबन्धः न प्रयोगस्य अनेकप्रयोगसाधारणं कर्म प्रयोज्यं(कर्म) तत्रानेकगुणसंबन्धोऽपि युक्तः । कस्मात् प्रयोगस्य श्रुतमङ्गं न भवतीत्यत्राह—श्रुतोपादानमात्रसाध्यत्वात् प्रयोगस्य [1]एकश्रुतोपादानमात्रेण तस्य सिद्धेः अनेकश्रुतसंबन्धानुपपत्तिः । प्रयोगसंपत्त्यर्थश्चायं प्रतिनिधिः न श्रुतसम्पत्त्यर्थः । एतदुक्तं भवति - न श्रुतावागमसम्पत्त्यर्थो भवति । यदि हि तथा स्यात् तदा वैकल्पिकमप्युपादीयेत । श्रुतानुष्ठानसम्पत्त्यर्थो हि सः । तस्मादुपात्तसदृशमेवोपादेयम् , न वैकल्पिकं तदानीं तस्यानङ्गत्वादिति भावः । अभावविधौ हि पूर्वश्रुताभावे पश्चाच्छ्रुतमुपादीयेत न

1. एतच्छ्रुतो - मा

तुल्यविधौ। यदि हि व्रीह्यभावे यवानां विधिः स्यात् तदा व्रीह्यभावे यवा उपादीयेरन्। न च यवानां व्रीह्यभावे विधिः। यवाभावे वा व्रीहीणाम्। किन्तु तुल्यतया यवा व्रीहयश्च विहिताः।

कस्मात्पुनरभावविधौ पश्चाच्छ्रुतस्योपादानं न तुल्यविधौ तत्राह—

**प्रयोगापेक्षो हि अभावविधिर्भवति। प्रयोग एवाभावसम्भवात्।** न प्रयोज्ये, अभावानुपपत्तेः ननु प्रयोगस्य प्रयोज्यादभेदात् प्रयोज्यार्थोऽपि प्रयोगाङ्गमेव। तेन प्रयोज्याङ्गभूतस्य वैकल्पिकस्यापि प्रयोगाङ्गत्वमस्त्येवेति तदुपादानमेव युक्तम्। विकल्पशास्त्रार्थावाप्तेरिति। अनेनाशयेन पृच्छति—**किं प्रयोज्यार्थः प्रयोगाङ्गं न भवति?** भवतीति भावः। उत्तरं—**भवति तु प्रयोज्यमुखेन नेतरवत् प्रयोगमुखेन।** यथाऽभावे विहितं प्रयोगमुखेनैव प्रयोज्याङ्गम्। न तथा वैकल्पिकम्। किन्तु प्रयोगः प्रयोज्यस्यैवावस्थान्तरमिति प्रयोज्याङ्गं प्रयोगाङ्गतां याति। तत्र प्रयोगे कृतकृत्यत्वात् द्वितीयोपादानात् एकमेवाङ्गं न सर्वमिति उपात्तस्यैवाङ्गत्वात् तत्सदृशमेवोपादेयम्। न वैकल्पिकम्। प्रयोगे तस्यानङ्गत्वादिति।

**॥ १३ ॥ वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥**

ननु अभावविधिप्रतिनिधिनियमयोः न विशेषमुपलभामहे। तथाहि—अभावे विधिरभावविधिः। स हि अभावे विधिः उपादानसामर्थ्याभावे अधिकारे च लीयमाने कस्यचित्प्रतिनिधेरुपादानाप्रसक्तेऽपि विधिः न नियमः। अपि तु वि(धे)धिरेव। यत्र पुनः अनियमेनानेकोपादानसंभवे विधानमेकस्य असौ नियमविधिःउपादानसामर्थ्ये सत्यधिकारे चोदिताभावेऽनेकप्रतिनिधिप्रसङ्गेऽपि एकस्य विधिः नियमफलम्। तत्र संशय उपपद्यते—किं सोमोपादानासामर्थ्ये एतद्विधानं उतानेकप्रतिनिधिप्रसङ्गे नियम इति। **तत्र पूर्वपक्षवादी 'न विन्देत' इति असामर्थ्यमत्रगम्यत इति मन्यते।** न विन्देदिति भावः। अत इदमवगम्यते यदि सोमं लब्धुं न शक्नुयादिति। तेन वेदनसामर्थ्यं नास्तीत्यवगत इत्युक्तम्। न पुनरपचरित इत्येतस्मादवगम्यते। अतोऽसामर्थ्ये विधिरभावे विधिरेव।

**अत्राभिधीयते। न शक्यतेऽसामर्थ्यनिरूपणम्—अद्रव्यत्वकर्तुं न विद्मः कोऽसावसमर्थ इति।** यथा अद्रव्याधिकरणे उक्तम्—अविद्यमानद्रव्यस्यापि

द्रव्योपादाने सामर्थ्यमस्ति इति। तथा अनुपात्तसोमस्यापि सोमलाभसामर्थ्यमस्त्येव। तेन सामर्थ्यम्। सर्वपुरुषाणां सहजसामर्थ्यसंभवात् संभवति अपचाराभावात्। स एवापचारोऽनेन लक्ष्यते। अवेदनेन असामर्थ्यफलत्वात् अभावस्य, असामर्थ्येनाभावो लक्ष्यते। तस्मात् सामर्थ्येऽधिकारिणः सोमाभा(व:)वे अनेकप्रतिनिधौ प्रसक्ते नियमः पूतीकानामिति सिद्धम्।

स्थितेऽप्यद्रव्याधिकरणे साक्षाच्छब्देनैव असामर्थ्योक्तित्वात् असामर्थ्यस्यायं विधिरिति अधिकाशङ्का।

असामर्थ्याभावात् लक्षणया अभाव एवार्थादनेन लक्ष्यत इति तन्निराकरणम्। प्रयोजनमुक्तम्।

॥ १४ ॥ न प्रतिनिधौ समत्वात् ॥ ३२ ॥

पूर्वपक्षमाह—किं पुनः कारणं प्रतिनिधिसदृशस्य उपादाने? मुख्यो गौणश्च शास्त्रार्थ इति भ्रान्त्या प्रतिनिधिसदृशस्योपादानमाह।

राद्धान्तमाह—यस्मान्न प्रतिनिधिसम्पत्त्यर्थः प्रतिनिधिः किं तर्हि? श्रुतसम्पत्त्यर्थः। श्रुतमेवोपादातुकामः प्रतिनिधिमुपादत्ते तदुपादानेऽपि श्रुतलेशलाभात्। तदर्थश्चेत् श्रुतसम्पत्त्यर्थश्चेत् प्रतिनिधिः तत्सदृशमेव श्रुतसदृशमेव द्रव्यान्तरमुपादेयम्। तस्मिन्नुपादीयमाने श्रुतैकदेशानुग्रहादिति युक्तम्।

॥ १५ ॥ स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥

नन्वभावविधिनिराकरणस्येदं प्रयोजनं यत्पूतीकापचारेऽपि सोमसदृशमेवोपादेयमिति[1] किमर्थमिदमधिकरणमारभ्यत इत्याशङ्क्याह—यत्प्रयोजनमुक्तं तदेवेदमाक्षिप्यते पूर्वपक्षे यत्र प्रतिनिधिनियमः श्रूयते तेनारब्धकर्मण्यपचरिते(क)[त]स्मिन्नियम एवादर्तव्यः। स हि तत्र श्रुतः श्रुतसम्पत्त्यर्थश्च प्रतिनिधिः इत्युक्तम्। यत्र पुनरर्थात् प्रतिनिधानं तत्र श्रुतद्रव्यसदृशमेवेति युक्तम्, अर्थस्याता(त)त्त्वात्।

1. अनुपादेयः - मा

अयमाशयः—सर्वे हि द्रव्यविषयो नियमार्था एव। तेन सोमाभावे विहितत्वात् पूतीकस्य तदपचारे तत्सदृशमेवोपादातव्यम्। सोमापचारे तत्सदृशमिवेति। एवं प्राप्तेऽभिधीयते—

**यत्रापि प्रतिनिधिनियमः श्रूयते तत्रापि न द्रव्यस्यायं नियमः।** पूतीकस्वरूपस्याप्ययं नियमः। किन्तु तद्गता हि ये श्रुतद्रव्यसदृशाः श्रुतद्रव्यसाधारणा अवयवाः त एव नियम्यन्ते। अन्यथा हि पूतीकस्वरूपविधिः स्यात् न प्रतिनिधिनियमः। अप्रसक्तत्वात् पूतीकस्वरूप(स्या)ग्रहणस्य। प्रतिनिधिनियमश्चायं प्रतिपादितः अपेक्षितविधेः। यतोऽयं प्रतिनिधिनियमः अतोऽत्रापि अर्थेन तुल्यं मुख्यसदृशमेवोपादातव्यम्। एवं खलु न्याय्यम्—मुख्यसदृशमपि तदेवोपादातव्यं यत्र पूतीकसाधारणाः सोमावयवा विद्यन्ते, न पुनर्यत्र पूतीकसदृशाः सोमावयवा विद्यन्ते तदुपादेयम्। सोमापचारे तेषां नियतत्वात्। तत्सोमावयवसदृशं च पूतीकसदृशं चोपादेयमिति।

अत्र चाधिकरणे अनपेक्षितसादृश्याः पूतीका विद्यन्त इति पूर्वः पक्षः। अपेक्षितविधानात् तद्गतावयवा एव नियम्यन्त इति राद्धान्तः।

**॥ १६ ॥ मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३५ ॥**

यत्र प्रतिनिधिः प्रकृतः तत्रोत्तराधिकरणेन मुख्यस्याङ्गीकारो वक्ष्यते। यत्र च प्रतिनिध्युपादानं न सङ्कल्पितं तत्र पूर्वपक्षाभावादनारम्भ्यमेवाधिकरणमिति मत्वाऽऽह—

**श्रुते द्रव्येऽपचरिते प्रतिनिधानार्थं प्रवृत्तस्य यदा मुख्याधिगमो भवति तदा किं मुख्य एवोपादातव्यः उत प्रतिनिधिरिति** प्रतिनिधिसङ्कल्पनात् पूर्वपक्षवादी प्रतिनिधिरुपादातव्य इत्यर्थः।

**अत्रोच्यते।** सत्यमसौ सङ्कल्पः। किन्त्वसावक्रत्वर्थः। यद्यपि नीवाराः सङ्कल्पिताः तथापि तत्त्यागेऽनृतवदनप्रतिषेधातिक्रमो नास्ति। क्रत्वर्थविषयसङ्कल्पत्यागे स दोषः। न च नीवारसङ्कल्पः क्रत्वर्थः नीवाराणामक्रत्वर्थत्वात्। श्रौतसदृशमात्रं हि तत्र क्रत्वर्थत्वम् श्रुतैर्द्रव्यैर्व्रीहिभिः साधारणा येऽवयवाः ते तत्र क्रत्वर्थाः न पुनः प्रतिनिधिद्रव्यम्। ते च मुख्ये उपादीयमाने उपात्ता भवन्ति। तेन मुख्यमेवोपादेयम्। वैकल्पिकानां पुनः व्रीह्यादीनां श्रुतविषयत्वात् सङ्कल्पस्यासावपि क्रत्वर्थः इति किं तत्परित्यागे अनृतवदनप्रतिषेधातिक्रमदोष इति युक्तो नियमः।

यत्(न)सङ्कल्पितं(:) तदेवोपादातव्यमिति स्थितेऽधिकरणे दुष्टाशयः पृच्छति–

किं पुनरत्र पुरुषार्थत्वेन मिथ्यासङ्कल्पना भवेत् । शिष्टाः खल्वत्र प्रमाणम् । यदि शिष्टा ईदृशे विषये मिथ्यासङ्कल्पदोषं स्मरन्ति । भवतु मिथ्यासङ्कल्पदोषः पुरुषस्य तथापि क्रतौ मुख्यमेवोपादातव्यमिति ।

॥ १७ ॥ प्रवृत्तेपीति चेत् ॥ ३६ ॥

प्रवृत्ते पुनः कर्मणि प्रतिनिधिना श्रुतद्रव्योपलब्धौ किं श्रुतमेवोपादातव्यं उत प्रतिनिधिनैव समाप्तिरिति प्रतिनिधौ केषुचित्संस्कारेषु प्रवृत्तेषुचिन्ता ।

अत्र पूर्वपक्षवादी प्रतिनिधेः श्रुतसम्पत्त्यर्थत्वात् तदेवोपादातव्यमिति मन्यते यथा पूर्वाधिकरणे ।

नन्वत्र केचन संस्काराः कृताः पुनः कर्तुं न शक्यन्ते । तेन तदनुग्रहाय प्रतिनिधिनैव समाप्तिरिति । नायं दोषः । संस्काराणां प्रधानार्थत्वात् प्रधानं च प्रयोगसम्पत्तये । तेन प्रधानं द्रव्यमेवादरणीयम् । संस्कारास्तु नीयन्तामिति भावः ।

एवं प्राप्तेऽभिधीयते—उपादानेप्येतच्चिन्त्यते नोपात्ते ।

उपादानसमय एवेदं चिन्त्यते किं श्रुतं न इति । नोपात्ते । तत्र च यथाविनियोगमुपादानमिति विनियोगानुरोधेन श्रुतमेवोपादीयते । यत्रोपादीयते यत्रोपादानसमये विनियुक्तं न लभ्यते तत उपादातव्ये किमप्युपादीयते । उपात्ते च तस्मिन् पुनरुपादानान्तरासंभवात् तेनैव प्रयोगस्संम्पादनीयः । उपात्तेन प्रयोगनिर्वृत्तौ श्रुतेनप्यश्रुतमेव कृतार्थत्वाच्छास्त्रस्य उपादानं हि शास्त्रस्य प्रयोजनम् । तच्च कृतमिति । तस्मात् प्रतिनिधिनैव सम्पादयितव्यमिति ।

॥ १८ ॥ द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३७ ॥

संस्कारक्षमे प्रतिनिधौ मुख्ये चाक्षमे संस्काराणां कस्योपादानं युक्तमिति । संस्काराणां श्रवणात् संस्कारक्षममुपादेयं मन्यते पूर्वपक्षवादी प्रतिनिधावुपात्ते द्रव्यशास्त्रार्थोऽपि अनुगृहीतो भवति केवलं विकलत्वमात्रं तस्य। मुख्ये उपात्ते श्रुतसंस्कारत्याग एव[1] तेन संस्कारश्रवणात् प्रतिनिधिरेवोपादातव्य इति ।

1. तेन न - मा

राद्धान्तस्तु—सत्यं संस्कारश्रवणं किन्तु श्रुतस्य संस्कारश्रवणम् । श्रुताभावे पुनः न च संस्काराः । श्रुतद्रव्याश्रिता हि संस्काराः क्रतोरङ्गम् तदभावे तेषामनङ्गतैव स्यात् । तस्मात् श्रुतद्रव्यमुपाददतः यदि नाम संस्कारा न भवन्ति न भवन्तु नाम तदभावेऽपि प्रधानार्थोपपत्तेः । न हि संस्कारो द्रव्यस्य द्वारम् । तेन संस्काराभावेपि द्रव्यशास्त्रार्थो निष्पद्यते । द्रव्याभावे पुनः न संस्कारशास्त्रार्थोपपत्तिरिति श्रुतस्यैवोपादानम् । उपाददतिरूपसिद्धौ यत्नः कर्तव्यः, "आङोदोनास्य विहरणे" (पा. सू 1-3-20) इत्यात्मनेपदप्राप्तेः ।

॥ १९ ॥ अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणा-
मर्थशेषत्वात् ॥ ३९ ॥

ननु यत्र पुनः प्रयोजनमेव श्रुतेन नोपपद्यते । तत्र श्रुतमप्यश्रुतमेव प्रयोजनार्थत्वाच्छ्रुतस्य । अतः प्रयोजनसिद्ध्यर्थं समर्थस्यैवोपादानमत्रेति पूर्वाधिकरणस्य प्रत्युदाहरणमात्रमेतत् ।

॥ २० ॥ विधिरप्येकदेशे स्यात् ॥ ४० ॥

ननु च संस्काराभावेऽपि प्रधानमुपादातव्यमित्यनेनैतद्गतम् । किमभ्यधिकमत्र चिन्त्यते ।

अस्यार्थः - शेषकार्याणि द्रव्यप्रतिपत्त्यर्थानि द्रव्यं प्रति गुणभूतानि । तेन तदभावेऽपि द्रव्यमेवोपादातव्यमिति । उत्तरं—इदमभ्यधिकम् - पुरोडाशस्यावदानश्रुतयो भवन्ति । न च प्रधनामात्रसंभवे पुरोडाशत्वोपपत्तिरिति नियतपरिमाणत्वात् पुरोडाशस्य । अस्यार्थः - पूर्वार्धादवद्यतीत्यवदानं पुरोडाशे श्रुतम् । न च द्व्यवदानमात्रं पुरोडाशो भवति नियतपरिमाणाभिव्यङ्ग्यत्वात् पुरोडाशाकृतेः । तेन पुरोडाशे असमर्थतया नीवारा एवोपादातव्याः । पुरोडाशानुरोधेन व्रीहीणां त्यागो युक्त इति । तस्मान्नीवाराणामेवोपादानम् । पुरोडाशानुरोधेन व्रीहीणां त्यागो युक्त इति । तस्मान्नीवाराणामेवोपादानं पूर्वपक्षवादी मन्यते ।

राद्धान्तस्तु सत्यं पुरोडाशस्यावदानं, न पुनस्तत् पुरोडाशार्थम् । किं तर्हि ? क्रत्वर्थम् । पुरोडाशो द्व्यवदानं प्रति गुणीभूत एव नापेक्ष्यते ।

ननु भवतु व्यवदानं प्रति पुरोडाशस्य गुणभावः व्रीहीन् प्रति प्रधान[भाव] एव। व्रीहयोऽपि पुरोडाशनिर्वृत्त्यर्थाः । पुरोडाशास्तु व्यवदानार्थाः । तेन प्रधानभूत-पुरोडाशानुग्रहाय गुणभूतानां व्रीहीणां त्यागो युक्त इति ।

उच्यते। पुरोडाशप्रकृतिद्रव्यतयाऽङ्गभूता व्रीह्यादयः साक्षात् द्व्यवदाने संबध्यन्ते। तन्मयत्वात्तस्य। तेन बहिरङ्गत्वात् पुरोडशस्यैव त्यागः अन्तरत्वाङ्ग-द्व्रीहीणामनुग्रह इति युक्तः। अतः पुरोडाशोऽपि यत्र गुणभूत इति यावत् नापेक्ष्य(क्ष)ते [तत्र] किं पुनः शेषकार्याण्यप्रयोजकानि। तस्मात् प्रधानमात्र-निर्वृत्त्यर्था व्रीहय एवोपादातव्या इति। दर्शनमुक्तम्।

इति ऋजुविमलायां षष्ठाध्यायस्य

तृतीयः पादः

—: * :—

# ॥ षष्ठाध्यास्य चतुर्थः पादः ॥

## ॥ १ ॥ [1]शेषाद्द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ ७ ॥

**ननु यस्य हवींषि नश्येयुः इत्यादिके वचने अवदाननाशे द्रव्यान्तरविधानार्थे सति पूर्वपक्षाशङ्काभावात् कथमिदमधिकरणमारब्धम् ।**

समाधत्ते—**असत्यपि वचने न्यायादयमर्थो लभ्यत इति प्रदर्शयितुम् ।** वचनव्यतिरेकेण हि द्रव्यान्तरमागमयितव्यम्, न शेषादवदेयमित्ययमर्थो न्यायेनैव लभ्यते। तेन चैकस्य द्रव्यस्य पूर्वार्धद्वयं वा संभवतीति दर्शयितुमिदमधिकरणमारब्धम्।

**यदि न्यायेनैवायमर्थो लभ्यते वचनमिदानीं किमर्थम् ?** उत्तरं—**द्रव्यविशेषाधानार्थमिति ब्रूमः ।** न्यायतः पुरोडाशान्तरागमे प्राप्ते द्रव्यविशेषस्याज्यस्य लक्षणया अप्राप्तस्य विधानार्थम्। यदि वचनमेतत् न्यायत एव द्रव्यान्तरागमे प्राप्ते द्रव्यविशेषविधानार्थं **एवं तर्हि 'निर्देशात्' इति सूत्रं (6-4-2) 'यस्य हवींषि' इत्येतन्निर्देशाभिप्रायेण कथं व्याख्यातम् ।** न ह्यनेन वचनेन द्रव्यान्तरागमो निर्दिश्यते ।

समाधत्ते - **द्रव्यविशेषविधानं तु शेषादिति ज्ञापनार्थम् ।** अस्यार्थः— यद्यप्येतत् द्रव्यविशेषविधानार्थम् तथापि(वि)शेषा(णा)न्नावदेयमिति ज्ञापयति । एवं द्रव्यान्तरविधानादेव । तेन पूर्वपक्षनिराकरणार्थमेतदुक्तमिति भावः । शेषनिर्देशस्तु प्रयुक्तो भाष्ये शेषकार्याणामप्रयोजकत्वान्न तदनुरोधेन द्रव्यान्तरमुपादेयमिति ।

## ॥ २ ॥ अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥

**कथं पुनरत्र पूर्वपक्षाशङ्का शेषादेव पुनरवदेयमिति । न हि शेषकार्याणि द्रव्यं प्रयुञ्जते ।** यदि हि द्रव्यं प्रयुञ्जीरन् तदा तैर्द्रव्यस्य प्रयुक्तत्वात् तदकरणे द्रव्योपादानवैयर्थ्यात् पुनरवदानं स्यात् । न चैतदस्ति । समाधत्ते- **स्थित एवाप्रयोजकत्वे प्रतिपत्तीनामियमाशङ्का अविरतश्शास्त्रार्थः शेषस्य**

---

1. 1429

**विद्यमानत्वादिति । न पुनः प्रयोजकत्वमाशङ्क्यते । प्रधाने(तु तेन)हुते शेषः स्विष्टकृदादिभिः प्रतिपाद्यत इति श्रुतम् । तस्य शास्त्रार्थस्याविरतिरेव । तेन पुनरवदेयमिति ।**

**राद्धान्तस्तु कार्यार्थत्वाच्छास्त्राणां शास्त्रार्थानां कृतत्वाच्च कार्यस्य नानुपपत्तिः शक्यते वक्तुम् ।**

यद्यपि शेषश्रुतिरविशिष्टा तथापि कार्यार्थमनुष्ठानं द्रव्यप्रतिपत्तिः स्विष्टकृदादीनां प्रयोजनम् । यच्च द्रव्यं स्विष्टकृदादिभिः प्रतिपाद्यं तत्(द)विनष्टम् । तेन प्रतिपाद्यद्रव्याभावादुपरतः शास्त्रार्थः । यदि परं शेषकार्याणां प्रयोक्तृत्वात् पुनः करणं तच्च नास्तीत्युक्तम् । प्रतिपत्त्यन्तरविधानाच्च पुनरदानं न कर्तव्यमिति ।

**॥ ३ ॥ [1]निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥**

**केयमधिकारे चिन्ता कथं वा नास्ति ?**

**उत्तरं - शेषचिन्तेयं के भक्षयितार इति न पुनः कस्याधिकार इति ।**

समाधत्ते—**अत्रोच्यते - अधिकारचिन्तैवेयम् । कार्यविनियुक्तकर्तृमतोऽधिकारः उताविनियुक्तकर्तृकस्यापीति ।** एतदुक्तं भवति - यजमानस्यैवाधिकारः चिन्त्यते । किं[ये]विनियुक्ता ऋत्विजः तद्युक्तस्यैवाधिकारः उत कर्त्रन्तरयुक्तस्यापीति ।

**पूर्वपक्षवादी तु अश्वमेधादिष्वशक्तेरिति इडायां च विनियुक्तकर्तृनियमादविनियुक्तकर्तृकस्याप्यधिकार इति मन्यते ।**

अस्यार्थः-यदि विनियुक्तकर्तृकस्यैवायमधिकारः तदाऽश्वमेधे शेषभक्षणस्याशक्यत्वात् अनधिकार एव स्यात् । तथा 'यजमानपञ्चमा इडां भक्षयन्ति' इति वचनं ऋत्विजामिडाभक्षणे नियमार्थं 'इडैव तैरेव भक्षयितव्या' इति । तच्चैवमुपपद्यते यदि वचनान्तरेणान्यस्यापि भक्षणं प्रसज्यते । न च तद्वचनं यजमानप्राप्त्यर्थं, तस्यापि कर्तृत्वेन प्राप्तत्वादिति न पुनः विनियुक्तव्यतिरिक्तानां विनियोग इति शक्यते वक्तुम् श्रुत्यादीनामभावात् ।

---

1. 1431

[अविनियुक्तकर्तृकस्याप्यधिकार इति शक्यते वक्तुं न पुनरप्रकृतानां विनियोग इति तद्विनियोगे श्रुत्यादीनामभाव इति]

एवं प्राप्तेऽभिधीयते—विनियुक्तकर्तृकस्यैवाधिकार इति। कुतः? न ह्यश्रुतेनाधिकारः शक्यते वक्तुम्। श्रुतविषयत्वादधिकाराणाम्। यादृशो विषयः श्रूयते तदनुरूपोऽधिकारो वर्णनीयः। ऋत्विजां च कर्मकरत्वेनोपादानात् तत्कर्तृकभक्षयुक्तो विषयः प्रतीयत इति तद्युक्तस्यैवाधिकारः।

यत्पुनर्वचनं तत्प्राप्त्यर्थं कर्मकरत्वेन ऋत्विजामुपात्तत्वात् भक्षोऽपि तैरेव प्राप्तो न यजमानेन, तत्प्राप्त्यर्थं वचनमुपपद्यत इति दर्शितम्। अश्वमेधे पुनः तद्वदेवाधिकारः कार्यार्थः पुनरन्योपादानमिति नाधिकारान्तरं प्रयुञ्जीत। अपि हि विनियुक्तकर्तृकमेव कार्यमिति शब्दादवगम्यते।

एतदुक्तं भवति-[विनि]युक्तस्याधिकारः तथापि तावन्मात्रेणैव कार्यसामर्थ्यात् न सहायत्वेनाप्रकृतानामुपादानादिति।

॥ ४ ॥ अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥

इहैतावच्छ्रूयते 'भिन्ने जुहोति' न पुनः कृत्स्नभिन्ने एकदेशभिन्ने वा इति। तत्र संशयः किं भिन्नस्यैवयः संस्कारः उत भेदेनापगतोऽधिकार इति। अनेन भाष्यकारीयस्य सन्देहस्य करणे संदेहः कृतः। ननु य[द्य]त्र भेदनवतोऽधिकारः तदा अधिकारान्तरत्वे सति दर्शपूर्णमासाङ्गता न स्यात्। ततश्च प्रकरणबाध इति अधिकृताधिकारादङ्गत्वसिद्धिः।

पूर्वपक्षमाक्षिपति—अत्रोच्यते - भेदनवतो होमश्चोद्यते 'तस्मात् भिन्ने जुहोति' इति। भेदनमात्रमत्र श्रूयते न पुनः परित्यक्तसामर्थ्यस्य अपरित्यक्तसामर्थ्यस्य वा भेदनवत इति विशेषोऽवगम्यते। अविशेषे च परित्यक्तसामर्थ्यस्य संस्कारानुपपत्तेः भिन्नसंस्कारकत्वे निरस्ते भेदवतो होमश्चोद्यत इति वदामः।

समाधत्ते - पूर्वपक्षवादी तु कार्यत एव विशेषोऽवगम्यत इति मन्वानः समर्थसंस्कारं मन्यते। एवमारादुपकारककल्पना च कृता भवति। अधिकरणाशङ्कानिवृत्तिश्च न वक्तव्या भवति। अयमाशयः—सन्निपत्योपकारादारादुपकारताङ्गसंशये सति सन्निपत्योपकाराश्रयणं न्याय्यम्। अन्तरङ्गत्वात्।

तेन होमस्यापि भिन्नसंस्कारत्वेन सन्निपत्योपकारकत्वाश्रयणं न्याय्यम् । न च परित्यक्तसामर्थ्यं संस्कारमर्हतीति कार्यपर्यालोचनया परित्यक्तसामर्थ्यं भिन्नं प्रतीयते । सप्तमी त्वियं अगारे गावो वास्यन्तामिति च द्रष्टव्या । तेनाधिकरणभूतस्यैव संस्कारात् तन्निवृत्तिरपि वक्तव्या न भवति । राद्धान्तमाह—**अत्रोच्यते–सत्यमेवं, किन्तु अत्र सप्तमीनिर्देशात् न कर्मभावो भिन्नस्य ।** न हि कर्मभावे सप्तमी भवति । यत्तु 'अगारे गावो बध्यन्तां' इति तत् प्रमाणान्तरतस्तथावगमात् । अत्र तु न तथा । किन्तर्हि निमित्तभाव एव सप्तमीयम् तेन भिन्नस्य निमित्तता । युक्त्यन्तरं चाह—**संस्कार्यत्वे च न नित्यसंस्कारस्य अङ्गभावः शक्यते प्रतिपत्तुम् भिन्नस्यानित्यत्वात् ।** होमस्तावत् नित्यमङ्गम् । तदनुरूपं च च द्वारमाश्रयणीयम् । यदि च भिन्नसंस्कारो द्वारं स्यात् तदा भेदनस्यानित्यत्वात् तत्समाधानद्वारो होमोऽपि न नित्यः स्यात् । अतस्सोऽयमनन्वयी शास्त्रार्थः स्यात् । निमित्तभावे एवम् । नायं दोषः । नित्यानित्यसंयोगलक्षणो दोषो न भवति सति निमित्ते त्वङ्गत्वावगमात् नैमित्तिकमेवाङ्गम् न पुनः संस्कारपक्षे निमित्तेऽसति अङ्गहोम इति शक्यते वक्तुम् । न च निमित्तमधिकारिणां मते उपपद्यत इति दर्शितम् । तेन भेदवतो होमश्चान्यत इति ।

चोदयति—**अथ कस्मादधिकरणसप्तम्यैवेयं न भवति ।** उत्तरं—**न भवति आहवनीयबाधप्रसङ्गात् ।**

सर्वहोमेष्वाहवनीय[स्य] प्राप्तत्वात् भवतु बाध एवेति चेत् तत्राह—**अन्यथा वोपपत्तेः** निमित्ते सप्तमी(ते) त्वेनाप्युपपत्तौ न बाधः शक्यते वक्तुम् । **अथ कस्मान्निमित्तनैमित्तिकसंबन्ध एव न चोच्यते किमधिकारिविशेषणेन भेदनिमित्तमिति ।** एतावदेव किमिति प्रधानहोम एव न ज्ञाप्यते किमित्यपरं होमान्तरमाश्रीयते तत्र च भेदनमधिकारिविशेषणमिति ।

उत्तरं—**सिद्धविषयो हि संभवति । न च सिद्धविषये वेदस्य प्रमाण्यमस्तीत्युक्तं भवति ।** यदि वेदेऽपि सिद्धानुशासनं स्यात् तदा निमित्तनैमित्तिकभावमात्रे वाक्यं पर्यवस्येत् । न चैतदस्ति अनुष्ठानोपदेशकत्वादिति होमानुष्ठानविधिरेव । होमानुष्ठाने चाधिकारिविशेषणस्यैव निमित्तत्वमित्युक्तम् । तस्माद्भेदनवतो होमश्चोद्यत इति सिद्धम् । **शेषमुक्तम्**

**॥ ५ ॥ क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १७ ॥**

दर्शपूर्णमासयोः श्रूयते---अथ यस्य पुरोडाशौ क्षायतः तं यज्ञं वरुणो गृह्णाति । यदा तद्धविष्कं कर्म सन्तिष्ठते अथ तदेव हविर्निर्वपेत् यज्ञो यज्ञस्य प्रायश्चित्तिरिति । तत्रायमर्थः-यस्य यज्ञस्य पुरोडाशौ क्षायतः तं यज्ञं वरुणो गृह्णाति यदा तद्धविष्कं कर्म सन्तिष्ठते तदा तदेव हविः पुनर्निर्वप्तव्यमिति । यस्य पुरोडाशौ क्षायत इति पूर्वाधिकरणन्यायेन कृत्स्ने चैकदेशे च क्षामे निमित्तस्य हविःक्षाण-लक्षणस्य विद्यमानत्वात् । यस्य पुरोडाशौ क्षायत इति वचनविहितेन नैमित्तिकेन भवितव्यमिति पूर्वपक्षवादी मन्यते । यदि क्षामसंस्कारार्थमेतत् तदा एकदेशक्षाम एव प्रायश्चित्तं स्यात् न कृत्स्नक्षामे । कृत्स्नक्षामेऽपि निमित्तसंभवात्तत्रापि युक्तमेव । न च कृत्स्नेक्षामे इत्यपि विशेषः श्रूयते । [अतः] उभयस्मिन्नपि क्षामे प्रायश्चित्तं युक्तम् । तद्धविः [संस्था] व्यपदेशो निर्विषय एवैतत्स्यात् (?) । **नन्वेवमप्येक-देशक्षाम एव प्रायश्चित्तं स्यात् । शब्दश्चैवमुपपन्नो भवति । यदि हि अकृत्स्नक्षामे एतद्वचनं स्यात् तदा तद्धविः सन्तिष्ठत इति संभवति ।** अयमर्थः-सर्वदाहे तु दग्धे हविः संस्थानानुपपत्तेः तद्धविर्व्यपदेशो न घटते सर्वदाहे तु हविरन्तरमुपादाय प्रयोगे क्रियमाणे तद्धविर्व्यपदेशो निर्विषय एव स्यात् ।

नन्वेवमपि एकदेशदाह एव प्रायश्चित्तं स्यात् न कृत्स्नदाहे । न हि तदा तद्धविर्व्यपदेशो घटत इति । सत्यम् । तत हविः यस्य तद्धविः इति व्यपदेशः एकदेशदाह एवोपपद्यते । तथापि आर्त्यधिकरणन्यायेन यज्ञसंस्थैव निमित्तं न पुनः तेन हविषा संस्थानं निमित्तं, तेनान्येन [अ]दहतापि हविषा क्रियमाणे नैमित्तिकं युक्तमेवेति । किन्तु यदि सर्वदाह एवैतद्वचनं स्यात् तदा तद्धविः शब्दात् प्रायश्चित्तमित्युक्तं तदन्वारुह्यवादमात्रम् ।

एवं प्राप्तेऽभिधीयते---**अपरिहार्यत्वादेकदेशक्षाणस्य सर्वक्षाणनिमित्तं प्रायश्चित्तमिति युक्तम्** यस्य पुरोडाशौ क्षायत इति विशेषवचनं सर्वदाह एवोप-पद्यते एकदेशदाहे तु सर्वस्य संभवात् विशेषवचनं नोपपद्यते । तस्मात् कृत्स्नक्षाण-प्रायश्चित्तमिति ।

अत्र चोदयति---**यावत्पाकं हि या क्षाणता सा भवत्वपरिहार्या पाकानौपयिकी तु या क्षाणता सा किमिति निमित्तं न भवति ।** यावत्या क्षामतया विना न पाक एव निष्पद्यते तावती क्षामताऽवश्यंभाविनी माभून्निमित्तम् । यया विनापि पाको भवति तावती कादाचित्का निमित्तमस्तु । स चैकदेशक्षामेऽपि

संभवति । लौकिका अपि हि अनीप्सिते पाकानौपयिके दाहे क्षामशब्दं प्रयुञ्जते दग्धो गुळः दग्ध ओदन इति । तेनानीप्सितं पाकानौपयिकं क्षाणमिति ।

परिहरति—[सत्यं]यथा भवानाह, अनीप्सितं पाकानौपयिकं क्षाणमभिप्रेतमिति । तदेव न ज्ञायते कियदीप्सितमिति । तेन ईप्सितपाकानौपयिकत्वेन विशेषो ज्ञातुं न शक्यते । आक्षेप्ता आह—किमिति न ज्ञायते । पुरोडाशसिद्धिरपेक्षिता । यावता पाकेन पुरोडाशः सिद्ध्यति तावान् पाक ईप्सितः ।

समाधाता आह—सत्यं पुरोडाशसिद्धिरीप्सिता सैव तु न ज्ञायते कियता क्षाणेन तु सिध्यति कियदनुपयोगीति । अयमाशयः - यावता पाकेन पुरोडाशः सिद्ध्यति तावानीप्सितः ( तावतानीप्सितं ) तेन यावानेव पुरोडाशसिद्धिविघातकारी पाकः तावानेवानीप्सितः । स च सर्वदाह एव । तावता हि पुरोडाशबुद्धिरपैति । लौकिके पुनः लोक एव प्रमाणं ईप्सितानीप्सितत्वे । तत्र नियमो नास्ति प्रतिपुरुषमीप्सितभेदात् । तस्मात् सुष्ठूच्यते—अपरिहार्यत्वादेकदेशक्षाणस्य सर्वक्षाण एव प्रायश्चित्तमिति । तच्छब्दपरिहारस्तूक्तः अन्येनापि-हविषा संस्थाप्यमानं कर्म तद्धविश्शब्देन लक्षयितुं शक्यत इति ।

॥ ६ ॥ [1]यथाश्रुतीति चेत् ॥ २२ ॥

ननु चोद्दिश्यमानस्य विशेषणमविवक्षितमिति ग्रहाधिकरणे उक्तम् । तेनैवाधिकारिणोऽपि विशेषणमविवक्षितमित्युक्तम् । तेन पुनरुक्तत्वादनारभ्यमेवाधिकरणम् ।

परिहरति—सत्यं केन वोक्तं न प्रतिपादितमिति । यदि प्रतिपादितं किं तर्हि अनेनेदं अनेन किमधिक्रियमाणविशेषणं विवक्ष्यते नेति चिन्त्यते । अस्यार्थः—उद्दिश्यमानस्य विशेषणमविवक्षितमिति तत्रोक्तम् । इह तु अधिक्रियमाणस्य विशेषणमविवक्षितमिति प्रतिपाद्यते । तेन नास्ति पौनरुक्त्यमिति भावः ।

ननु उद्दिश्यमानविशेषणविवक्षाभिधाने नेदमुपलभ्यत इति अत्राह—

---

1. 1438

**नचाधिकार्युद्दिश्यते। किं तर्हि कर्मण्यधिक्रियते। अन्या अधिकारिता अन्या चोद्दिश्यमानतेति मन्यते।** विधेयस्य विषयतापत्तिरुद्देश्यत्वं, कर्मणि स्वामित्वमधिक्रियमाणत्वम्। तेन यत्र विधेयार्थत्वेनोद्दिश्यते तद्गता सा चिन्ता। अत्र तु नियोज्यगता चिन्तेति विशेषः।

**अत्र पूर्वपक्षवादी पदद्वयविशिष्टामार्तिं अधिक्रियमाणविशेषणतया मन्वानः पदद्वयविशिष्टार्तिं निमित्तमित्याह—यस्योभयं हविरार्तिमार्च्छेदिति।** आख्यातेनार्तिरुच्यते। सा च हविरुभयपदाभ्यां युगपत् विशेष्यते क्रय इवारुणैकहायनीभ्याम्। (ते)विशिष्टा चासौ पुरुषविशेषणमिति। उभयविशेषणविशिष्टा आर्तिः निमित्तम्। ऋच्छतिश्च धातुः आङ्पूर्वः आर्तौ वर्तते आर्तिशब्दोऽपि क्तिन्नन्तः तस्मादेव व्युत्पाद्यते। उपसर्गादृति धातौ (पा. सू ६-१-११) इति वृद्धौ कृतायां रपरत्वे च राल्लोपे इलोपे; आर्तिमार्च्छेदिति तु यदुच्यते तदा ओदनपाकं पचतीतिवत् द्रष्टव्यम्। **राद्धान्तवादी तु सत्यं, सर्वविशेषणविशिष्टोऽधिकारी गम्यते। न पुनरेकपदीभूतैः विशेषणैः विशेष्यते समासाभावात् एकपदीभूतानि एतानि न भवन्ति। ततः किं? इदं ततो भवति अधिक्रियमाणविशेषणं हि फलतया निमित्ततया वा गम्यते। न कर्मणः पुनः पुनः स्वविशेषणतया** स्वस्यात्मनः या विशेषणता तया नावगम्यते। **विशेषणमात्रमाह—पर्यवसायी न भवतीति।** किन्तु कर्मणः फलत्वेन निमित्तत्वेन वाऽवतिष्ठते। तच्चेदानीं फलं वा निमित्तं वा। **यथैवाधिकृतविशेषणतयाऽवगतं तथैव भवितुमर्हति। स्वपदार्थप्रयुक्तं च विशेषणतयावगतं न तत्कार्यादृते शक्यत एकीकर्तुम्।** स्वकीये पदार्थे च प्रयुक्तं पदजातं अधिकारिविशेषणतयाऽवगतं न शक्यते कार्यादृते उपादेयादृते एकीकर्तुम्। यथा क्रय उपादेयत्वेन चोदितः एकीभूतविशेषणविशिष्टोऽवगम्यते। न तथेहावगन्तुं शक्यते अनुपादेयत्वादार्तेः। **न चेदं कार्यं** निमित्तपर्यन्तत्वादस्याधिकारस्य। **न च निमित्तमुपादेयं भवति।** अतो नेदं परस्परसंबन्धनिमित्तत्वेनोपादातुं शक्यते। **एकं चेदं वाक्यम्।** **तस्मादन्यतरदत्र निमित्तत्वेन प्रतिपत्तव्यम्। नोभयम्।** हविरार्तिर्निमित्तं नोभयं विशेष्यत्वाद्धविषः। आनन्तर्याच्च। तेन हविषि आर्ते निमित्ते उभयपदमनुवादः—**यद्येकपदीभावावगमाभावात् उभयत्वविशिष्टं हविर्निमित्तं तदा किं हविरेव निमित्तं? उत्तरं—न आर्तिविषयभूतमिति ब्रूमः।**

ननु च आर्तिरपि नैव हविषा एकपदीभूता कथं तद्विषयभूतस्य विशेषणता। नैष दोषः। भावाश्रयत्वान्नाम्नः। न हविः[षः] पुरुषेण संबन्धः। अभावार्थानां क्रियाकारकसंबन्धपूर्वक एव परस्परसंबन्धः। परस्परं पुनः नाम संबन्धि। एकपदीभाव एव हेतुः तेनार्तिसंबन्धात् पुरुषसंबन्धः। तेना[र्ति]र्तिमेव हविः पुरुषस्य विशेषणमिति आर्तिविशेषणीभूतमेव हविः निमित्तमिति सिद्धम्।

**ननु वाक्यादपि परस्परसंबन्धो नाम्नामवगम्यते—यथा देवदत्तस्य गाव इति।** परिहरति—**बाढं स तु वैभक्तिकः। विभक्तिश्च द्वयोरेव संबन्धमाचष्टे, न पुनरन्येनापीति।** औत्सर्गिकमिदं, तेन हविरार्त्यैव संबध्यतां, नोभयत्वेन। तस्मादार्तिविषयं हविर्निमित्तं विशेष्या[त्वा]दानन्तर्याच्च। आर्तिविषयमिति नपुंसकनिर्देशः हविर्विशेषणत्वात्।

**ननु चोभयशब्दे निमित्तत्वेन परिगृह्यमाणे हविषोऽपि अनुप्रवेशः सिद्धो भवति। उभयत्वस्य नित्यसापेक्षत्वात्। अतः सकलपदानुगुण्येन तथैव सम्बन्ध आश्रीयताम्।** यस्योभयं(हविः) आर्तिमार्च्छेत् किं तदुभयमित्यस्यामपेक्षायां हविरेव परिगृह्यते।

परिहरति—**असंबन्धज्ञो भवान् पदार्थजातस्य विशेषणं हि विशेष्यमपेक्षमाणं विषयतयाऽपेक्षते** नात्मनोऽवच्छेदकतया। उभयत्वं सङ्ख्या। सा च आर्तिविषयतया भवितुं नार्हति इति आर्तिविषयं द्रव्यमेवापेक्षते। तेन यद्युभयत्वं हविरपेक्षते तथापि विशेषणत्वेन नैवापेक्षते। किञ्च आर्तिविषयतया आर्तिविषयभावे च तस्य तदेव निमित्तं भवति तदाह—**न चेदमवच्छेदकं, अपितु विषयः। विषयः पुनः विशेषणनिरपेक्षः निमित्ततामापद्यते इति हविरार्तिमात्रमेव निमित्तं व्यर्थ एवोभयपदाकाङ्क्षोपन्यासः।** यदिदं हविषो द्रव्यत्वेन आर्तिविषयत्वं नोभयत्वस्य तदिदमुक्तं—**मृष्यामहे न हविषो विशेषणमिति** अकार्यतया अनुपादेयतया चाधिकृतविशेषणानां यावन्तः परस्परसंबन्धाः प्रदर्श्यन्ते यावत्संभवत्संभवतामिदमेव निराकरणमित्युपरम्यते समासं विना परस्परसंबन्धानां विशेषणत्वानुपपत्तिरिति इदमेव निराकरणं भाष्यकारेणापीति इयतामुपन्यासो निराकरणस्य व्याप्तिप्रदर्शनार्थ एव कृतः। न हि प्रमाणादृते निमित्तसमाहारस्सिद्ध्यतीति सिद्धं हविर्मात्रविषयार्तिर्निमित्तमिति।

॥ ७ ॥ होमाभिषवभक्षणं च तद्वत् ॥ २४ ॥

**अत्रापि द्वयोर्नाम्नोः परस्परसंबन्धो नास्तीति अधिक्रियमाणविशेषणत्वेपि प्रत्येकं निमित्तभावः।** अस्यार्थः—अभिषुत्य हुत्वा भक्षयतीत्यत्र द्वयोः क्त्वान्तयोर्नाम्नोः परस्परसंबन्धो नास्तीति यद्यपि वस्तुस्थित्या परस्परसंबन्धयोरपि पुरुषविशेषणत्वं संभवति तथापि शब्दसामर्थ्यानुसारेण प्रत्येकमेव निमित्तभावः 'अभिषुत्य भक्षयन्ति' तथा 'हुत्वा भक्षयन्ति' इति। तेन ये अभिषवमात्रेऽपि कर्तारः तेऽपि भक्षयन्ति। येऽपि होममात्रे तेऽपीति। **न चोभयपदवदविवक्षा संभवति।** यथा उभयपदमविवक्षितं तथाऽभिषवे निमित्ते हुत्वेति न विवक्षितं अनुवादमात्रम्। न च शक्यं वक्तुं हविषोऽन्यस्योभयत्वं निमित्तं भविष्यतीति। अन्यस्यानुपादानात् हविषश्चोपादानात् तद्विषयत्वमेवोभयत्वे प्रतीयते। इह पुनरविशेषादुभयं निमित्तम्। अभिषवे निमित्ते होमस्य निमित्तता न प्राप्ता। तथा होमे निमित्तेऽभिषवस्येति नानुवादोपपत्तिरिति।

**ननु चाभिषुत्य हुत्वेति संबन्धो भवति। क्त्वाप्रत्ययस्य समानकर्तृकार्थत्वात् द्वितीयेन विना धात्वर्थेन तदनुपपत्तेः।** तदवश्यापेक्षणीये अभिषुत्येति भवति। हुत्वेति तु भक्षयतीत्येतदपेक्षम्। तेनाभिषवहोमयोः परस्परसहितयोः निमित्तत्वमिति। परिहरति—**सत्यं क्रियान्तरापेक्षिता क्त्वाप्रत्ययस्य न पुनः क्त्वान्तक्रियापेक्षिता। तस्या अप्यन्यपरत्वात्। न हि द्वयोरप्रधानयोः मिथस्संबन्धो युक्तः।** किन्तु सर्वं प्रधानेनैव संबध्यते प्रधानं च भक्षयतीत्येतत् न तु हुत्वेति। तस्यापि भक्षयतीत्येतस्मिन् गुणभावात्। तस्मादयमभिसम्बन्धः अभिषुत्य भक्षयति, हुत्वा भक्षयति इति। **क्रमविधानं त्वत्र नैव संभवति प्राप्तत्वात्।** अभिषुत्यैव होमः प्राप्तः हुत एव च भक्षणम् प्रतिपत्तित्वात्। नाप्यभिषवहोमयोः भक्षणाङ्गत्वेन विधानम् अधिकृतविशेषणत्वात्। नापि स्वार्थविधानं, अभिषवस्य 'सोममभिषुणुयात्' इति प्राप्तत्वात्। 'सोमेन यजेत इति च होमस्य। तस्मान्निमित्तनैमित्तिकविधिरेवायम्। स च प्रत्येकमिति पूर्वः पक्षः।

**अत्राभिधीयते—समानकर्तृकतावगमात् क्त्वान्तानामभिषवहोमयोश्चान्यतः प्राप्तत्वात् एककर्तृकत्वस्यैव अभिषुत्य हुत्वेति चोद्यते।**

अस्यार्थः क्त्वान्तेन शब्देन समानकर्तृकता उच्यते । होमाभिषवौ च समानकर्तृकौ सिद्धौ । तेन स एव समानकर्ता उच्यते । तेनायमर्थः सम्पद्यते—अभिषवहोमयोः द्वयोः कर्ता भक्षयति इति । अत्रायं पूर्वः पक्षः ।

**ननु च द्वयोः क्त्वान्तयोः परस्परसंबन्धो नावगम्यते । अन्यार्थत्वात् व्यतिरिक्तविभक्त्यन्तरयुक्तयोरिव ।** यथा अरुणयैकहायन्येति च प्रातिपदिकाव्यतिरिक्तकरणत्वाभिधायितृतीयान्तयोः परस्परसंबन्धो न भवति । तथा क्त्वान्तयोरपि न युक्तं, अव्यतिरिक्तप्रथमान्तयोर्भवत्येव संबन्धः न व्यतिरिक्तविभक्त्यन्तयोः । परिहरति—

**सत्यं, यत्र प्रमाणान्तरं नास्ति तत्र प्रधानक्रिययैव क्त्वान्तस्य संबन्धः । यत्र पुनः प्रमाणान्तरावगतै(रे)त्र तद्विषयता न तत्र विषयान्तरावगतिर्भवति प्रमाणान्तरेण एकवाक्यलक्षणेन**[1], यत्र क्त्वान्तयोरेककर्तृविषयताऽवगता न तत्र कर्त्रन्तरावगतिः । यदि हि एकविषयता न स्यात् तदा एकवाक्यता न स्यात् । एकवाक्यता चावगम्यते । तेनैकवाक्यत्वात् तयोः क्त्वान्तयोरपि परस्परसंबन्धः । यथा कृष्णस्य देवदत्तस्य गाव इति । किन्त्वेकवाक्यताबलात् कृष्णगुणस्य देवदत्तस्यैवेति संबन्धो भवति । एवमत्रापि अभिषुत्य हुत्वेति एककर्तृविषयमेवाधिकारिविशेषणमवगमयति एकवाक्यत्वात् । अधिकृतमुखेन च विशेषणस्य(ा)विध्यन्वयात् सिद्धा समाहारस्य निमित्तता । समाहृतविशेषणविशिष्टस्याधिकारात् सिद्धा समाहृतयोरेव निमित्तता । न चोभयपदवत् निवर्तयितुं सामर्थ्यं नास्तीति शक्यते वक्तुम् , भिन्नद्वारत्वात् पदद्वयस्यास्य कर्तरीति । तत्र पुनः विधिद्वारकमेव पदद्वयमिति विशेषः अभिषवहोमयोस्त्वनन्यतन्त्रत्वात् निवर्तयितुं सामर्थ्यमस्ति । उभयपदं हविर्विषयमेव । तेन हविर्मात्रार्तिनिमित्तं न शक्नोति निवारयितुम् । अयं तु केवलस्य निमित्ततां शक्नोत्येव वारयितुमिति ।

**॥ ८ ॥ [1]पुनराधेयमोदनवत् ॥ २६ ॥**

**'यस्योभावग्नी अनुगतौ' इति उभयशब्दस्याग्निविषयत्वात् हवि(षु) [ष्विव] नैवैकस्य वारणे सामर्थ्यमस्तीति[2] एकस्मिन्नप्यनुगते नैमित्तिकमिति**

---

1. लक्षणं न - मा
2. सामर्थ्यं नास्ति - मा
3. p. 1447

**पूर्वपक्षवादी मन्यते।** अनुगतस्याग्निमात्रस्य सूर्येणाभ्युदयोऽभिनिम्रोचनं च निमित्तत्वेन श्रूयमाणं उभयशब्देन निवर्तयितुं न शक्यते उभयशब्दस्याग्निविषयत्वात्। तेन प्राप्तस्यायमनुवाद इति। **राद्धान्तवादी तु सत्यं निमित्तभावो वारयितुं न शक्यते नैमित्तिकं तु एकस्मिन्ननुगते नोपपद्यते** उभयार्थत्वेन ज्ञातत्वात्। ज्ञातस्य च पुनर्विधानात् पुनराधेयमेव तस्य प्रायश्चित्तिरिति। यदेवाधानमग्न्युत्पादकतया अनुगमे नैमित्तिकमिति सिद्धम्।

**॥ ९ ॥ [1]पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २८ ॥**

**निर्वपतिसंबन्धात् प्रतिनिधिनियमं मन्यते पूर्वपक्षवादी।** ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् इति निर्वपतिश्रवणात् सान्नाय्ये विपन्ने च द्रव्यान्तरं निर्वपेदिति चोद्यते। यदि हि कर्मान्तरं विधीयते तदा तत्र निर्वापस्य चोदकप्राप्तस्य अनुवादकः स्यात्।

**कथमस्मिन्नपि पक्षे ऐन्द्रशब्दः?** यद्योदनं निर्वपेदिति विधीयते कथमैन्द्रशब्दः। न हि सोऽपि विधेयार्थोऽवकल्पते वाक्यभेदप्रसङ्गात्। उत्तरं — **प्राप्तत्वादनुवादं मन्यते।** प्रतिनिधीयमानं द्रव्यमैन्द्रमेव प्राप्तं इन्द्रस्य तस्मिन् कर्मणि देवताभावात्। ननु च महेन्द्रोऽपि[महेन्द्रस्यापि] तत्र देवताभावात्; न चेन्द्रशब्देन महेन्द्रोऽभिधातुं शक्यते। अतः कथमनुवाद इति तत्राह—

**प्राप्तत्वान्महेन्द्रशब्दाश्रवणमपि अदोषः** नावश्यं सर्वमेव प्राप्तमनुवदितव्यमिति भावः। **अतोच्यते। यतः प्राप्तं नावश्यं सर्वमेवानुवदितव्यं विनापि तेन विवक्षितार्थसिद्धेः।** अत एव कर्मान्तरमिदं; अन्यथा हि माहेन्द्रशब्दवत् ऐन्द्रशब्दोऽपि न वक्तव्यः स्यात्। उक्तश्चायम्। स च यस्मिन् पक्षेऽर्थवान् स एव पक्षः आश्रयितुं न्याय्यः। तस्माद्विधानार्थतैव न्याय्या।

नन्वेवमपि निर्वपतिशब्दोऽनर्थक इत्यत्राह—**निर्वपतिशब्दस्तु प्रत्ययोच्चारणमवश्यं वक्तव्यमिति विशेषः।** ऐन्द्रशब्दस्सर्वत्रानर्थकः निर्वपतिशब्दस्तु कर्मविधानार्थं यो विधिस्स वक्तव्यः। तदर्थतयाप्यर्थवानेवेति।

---

1. p. 1448

॥ १० ॥ [1]स प्रत्यामनेत् स्थानात् ॥ ३० ॥

**पञ्चशराव इदानीं चिन्त्यते—किं स्वतन्त्रं कर्मान्तरं उत दर्शपूर्णमासाधिकृतस्यैव तन्नाशे तत्कार्यसाधनमुपदिश्यते उतामावास्याङ्गमिति।** स्थिते कर्मान्तर[त्वे]हि चिन्तोपपद्यते। इदानीमिति वदन् पक्षत्रयमत्र चिन्त्यत इति च दर्शयति। तेन भाष्ये अमावास्यां प्रत्यामनेदिति पक्षः तदा[तथा]किं कर्मान्तरं स्वतन्त्रं उत तदङ्गमेवेति द्रष्टव्यम्। तत्र पूर्वपक्षवादी तावत् विनष्टस्याङ्गभावोऽनर्थकः। अतः तत्कार्यस्यैवेदं साधनमिति मन्यते। स्वतन्त्रपक्षोऽपि मन्दतया नोपन्यस्तः। **राद्धान्तवादी तु स्वातन्त्र्ये तावदधिकारान्तरकल्पनैव दोषः।** कार्यकरणत्वेऽपि प्रधानं प्रमाणं नैवाङ्गि अङ्गता पुनः प्रकरणाम्नानादवसीयते। ननु विनष्टस्य अङ्गभावोऽनर्थक इत्युक्तम्। अङ्गविनाशादेवाविनाशो भविष्यति। हविषि किल विपन्ने कर्मणो द्रव्यान्तरेण क्रियमाणस्य वैगुण्यं संभवति। तच्च वैगुण्यमङ्गविधानादेव प्रतिसमाधास्यते।

**ननु चान्यथापि इदं विधानमुपपन्नमित्युक्तम्। कार्यकरणतया विधानोपपत्तेः स शक्यतेऽङ्गतया विधानम्। उत्तरं —न प्रकरणेऽन्यथोपपद्यते।** प्रकरणादङ्गतैवावगम्यते। प्रत्यक्षश्च प्रकरणपाठः। कार्यस्वातन्त्र्ययोस्तु करणनोपपद्यते। तस्मादङ्गतैवेति युक्तम्।

॥ ११ ॥ [2]विश्वजिदप्रवृत्ते भावः कर्मणि स्यात् ॥ ३२ ॥

**आगुरतः कर्म चोद्यते। अत्र संशय इति।** अनेन सविषयतया[तां] न्यायस्य दर्शयति विश्वजिद्वा भवति अन्यद्वा। सर्वथा यदागूर्यमाणस्य कर्म चोद्यते। तत्रायं विचारः—आगुरत इति रूपसिद्धौ यत्नः कर्तव्यः। गुरतेरनुदात्तेत्त्वात् आत्मनेपदप्रसक्तेः। संशयस्वरूपमाह—

**किं यदागुरितं सत्रादि तत्प्रवृत्तौ सत्यामेव इदं कर्म उत अविशेषेण अथ[अ]प्रवृत्तावेवेति।** अनेनाविशेषपक्षो यद्यपि भाष्यकारेणोपन्यासकाले मन्दत्वान्नोपन्यस्तः तथापि निराकरणदर्शनादुपादातव्यः इति दर्शितम्। आगुरितमिति

1. p. 1149 2. p. 1451

शब्दसाधुतायां यत्न आस्थेयः । गुरीव्रातोरीदित्वादिट्प्रतिषेधोपपत्तेः । विशेषानुपादानादविशेषेण[1] इति प्राप्ते उच्यते—

आगूर्यमाणस्य प्रवृत्तौ विश्वजित् इति । एवमङ्गता भवति । न निमित्तपर्यन्तोऽधिकारः कल्पितो भवति । आगूर्यमाणेभ्यः प्रवृत्ते कर्म विधीयमानं आगोरणनिमित्तकं भवति । तच्च न युक्तम् । अधिकारान्तरकल्पनाप्रसङ्गात् । प्रवृत्ते तस्येदमङ्गमिति कल्पना लघ्वी । अविशेषे पुनः निमित्तपर्यन्तता । प्रवृत्त्यभावपक्षेऽङ्गतैवेति विप्रतिषिद्धम् । स्वतन्त्रताङ्गत्वयोर्विरोधात् ।

अत्रोच्यते—अप्रवृत्तस्यैवेदं कर्माऽऽगुरमाणस्य चोद्यते । आगूर्यमाणस्यागोरणविशेषार्थत्वात् न शक्यते विधेयस्याङ्गता वक्तुम् । 'यः सत्रायागुरते स विश्वजिता यजेत' इति नायमभिसंबन्धः 'सत्राय विश्वजिता यजेत' इति व्यवहितान्वयप्रसङ्गात्, किन्तु सत्रायागुरते इति । तेनागोरणविशेषणत्वात् आगूर्यमाणं प्रत्यङ्गता चतुर्थीबलेन विधीयमानस्य न शक्या सम्पादयितुम् । तेन स्वतन्त्रतैव न्याय्या ।

ननु चास्मिन्नपि पक्षे आगोरणस्य निमित्तपर्यन्तता कल्पनीया । तद्वरं समभिव्याह्रियमाणसत्राङ्गतैवाश्रीयताम् । निमित्तपर्यन्तत्वेऽपि स्वतन्त्राधिकारान्तरमाश्रयणीयम् । अङ्गत्वे तु तन्न भवतीति । उत्तरं— नायं दोषः आगोरणस्य समाप्तिपर्यन्तत्वात् आगूर्यमाणकार्यपर्यन्ततैवाश्रीयते तस्मात् पूर्वाधिकृतकार्यपर्यन्ततैवेति न कार्यान्तरं कल्पितं भवति । आगोरणमुद्यमनं, उद्यमनं च समाप्त्यर्थम् समाप्तिश्च कार्यपर्यन्ततैवोच्यते उद्यमनं च तस्य भवति । तेन सत्रता कार्यतया प्रतिपन्ना । तस्य विश्वजिद्विधीयमानः तत्कार्यपर्यन्त एवावसीयते । अतः कार्यान्तरकल्पना नास्ति । तदेवैश्वर्यं विश्वजितापि पुरुषस्य यतः साध्यते तस्मादयमेव पक्षः श्रेयान् विश्वजिता सत्रकार्यं कुर्यादिति ।

॥ १२ ॥ [2]वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥

केयमधिकारे अङ्गाङ्गिचिन्ता । यदि काललक्षणा यदि वा श्रौतार्थः उभयथाप्यङ्गप्रधानचिन्तैव । एकत्र पक्षे श्रुत्या वत्सस्य व्रताङ्गतया विधिः ।

---

1. अविशेषणं-मा 2. p 1452

अन्यत्र पक्षे लक्षितस्य एककाल[स्य]व्रताङ्गतयैव विधिरिति विशेषः तेन लक्षणे सङ्गतिर्नास्तीति ।

**अत्रोच्यते । श्रौते वत्से विधीयमाने विधिः काललक्षणायामधिकारः ।** कथं ? उत्तरं-**एकत्र व्रते वत्सः चोद्यते** प्रत्यय[अमावास्या]ङ्गतया वा । अन्यत्र व्रतिनः कालः । कथं पुनः लक्षणायां व्रतिनः कालश्चोद्यते इत्यत्राह— **न कालः कर्मणा संबध्यते । अनपेक्षितत्वात् प्रयोगाङ्गं स इत्युक्तम् ।** एकदेशप्रयोग एव कालस्यापेक्षणीयत्वात् । ततः किमित्याह—**प्रयोगश्चाधिकृतस्येति** अधि(कृत्य)[तस्य]सम्बन्धः प्रयोगं चिकीर्षमाणस्य कालापेक्षायां कालो विधीयमानोऽधिकृतस्यैव सम्बन्धितया विधीयते अधिकारनिबन्धत्वात् प्रयोगस्य । तेनाधिकारचिन्तायामस्ति सङ्गतिः कालविधावधिकारसम्बन्धित्वात् । **शेषमुक्तम् ।**

**॥ १३ ॥ [1]कालश्चेत्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ ४१ ॥**

**ननु चैत्र पुरोडाशानामपि अनपायो हि कालस्येत्युक्तम् । किमत्राभ्यधिकं चिन्त्यते । न, पौनरुक्त्यमाशङ्क्यते योऽप्येष पुरोडाशः पौर्णमास्यामस्ति असोमयाजिनः तस्यामसत्यपि अग्नीषोमीये पुरोडाशे पुरोडाशयोर्मध्यवर्तिकालः उपांशुयाजसंबन्धी विद्यत एवेत्युक्तम् । तद्वदिहापि ।** असान्नाय्ययाजिनो वत्सापाकरणाभावेऽपि तत्कालस्यापायो नास्तीति तस्यापि कालविधिर्युक्त एवेति सिद्ध एव राद्धान्तः ।

**किमर्थमिदमधिकरणमारभ्यते ? अस्त्यत्र विशेषः—अधिकारमुखेनैतत्कालविधानम् ।** अधिकृतस्यैवायं कालविधिरुक्तः । तत्र पूर्वपक्षवादी कालोपलक्षणपदार्थयुक्तस्यैवाधिकृतस्येति मन्यते । कालोपलक्षणेन वत्सापाकरणेन युक्तस्यैवाधिकारिणः कालविधिरयं युक्तः । न हि अन्यस्य तत्कालो विधातुं शक्यते । तदभावे तत्काल एवासौ न भवतीति भावः ।

**राद्धान्तवादी तु - सत्यं अधिकृतस्यैवायं कालविधिः । कालसंभवमात्रे त्वधिकृतोऽयम् ।** तस्य हि कालो विधातव्यः यस्य हि कालः संभवति तेन संभव एवाधिकृतोऽयं तस्य कालविधिः । स च कालो वत्सापाकरणरहितस्याप्यस्ति ।

---

1. 1454

ननु च वत्सापाकरणयुक्तः कालो नास्तीत्यत्राह—न पुनरुपलक्षणमप्यधिकारं विशिनष्टि । कुतः? उपलक्षणत्वादेव । अङ्गभूतो हि कालोऽधिकारं विशिनष्टि । न पुनरुपलक्षणम् । प्रतीतिमात्रहेतुत्वात् । यद्युपलक्षणमपि कार्योपयोगि स्यात तदा विशिंष्यादप्यधिकारम् । नचोपलक्षणं कार्यौपयिकम् । किं तर्हि? उपलक्षणायैव । तद्विशिष्टकालविशेषप्रतिपत्त्यर्थमेव । न च सता असता वा उपलक्षणेन कश्चिद्विशेषोऽस्ति अस्य कालस्यान्यतोऽवगमात । कस्मात्? अनपायो हि कालस्तत्रापि सिद्ध न केवलमेकपुरोडाशेऽयमिति ।

॥ १४ ॥ [1]प्रस्तरे शाखा श्रयणवत् ॥ ४३ ॥

अत्रापि विनियोगप्रतिपक्षतयाऽधिकार एव चिन्त्यते । अङ्गविधौ अङ्गभूतशाखाविधौ विनियोगः । कालविधौ प्रस्तरप्रहरणकाले शाखा प्रहरणं प्रति विधीयमानाऽधिकृतस्यैव विधिः । न पुनः गुणार्थे तृतीयेयं शङ्क्यते । उपपद-लक्षणा हीयं न कारकलक्षणा । सहशब्दश्रवणात् सहप्रयोगनिबन्धनैवेयं तृतीया न कारकलक्षणा । तेन कथं शाखायां गुणभावशङ्का ।

सत्यं उपपदविभक्तिरियम् अप्राधान्यं तु अन्यथा नोपपद्यते । तेन गुणभावं मन्यते । 'सहयुक्तेऽप्रधान' इति अप्रधानवाचिनः प्रातिपदिकात् इयं तृतीया । तेन शाखा अप्रधानभूता गुणभूतैवावसीयते ।

अत्र चोदयति—भवत्वत्र प्राधान्यं सहभावे, मा भूत् प्रस्तरे । यद्यप्य-प्राधान्ये सहार्थेयं तृतीया, तथापि तदप्राधान्यं सहभावे ।

किमिदं सहभाव इति? स प्रधानं यस्य तु प्रसिद्ध एव क्रियासंबन्धः, यस्य न तदप्रधानं तेन प्रहरणसंबन्धः शाखाया उच्यत इति । भवत्वप्राधान्यं शाखायाः प्रस्तरं प्रतिगुणीभावो न युक्तः । समाधत्ते—तत्सिद्धिस्त्विह न संभवतीति हि पश्यन् पूर्वपक्षवादी सहभावमविवक्षितं मन्यते । शाखायाः प्रहरणसम्बन्धस्यापि अविदितत्वात् प्रस्तरस्य विदितत्वात् सहभावेऽप्राधान्यं न संभवतीति अविवक्षित एवात्र सहभावः । तस्मात् कारकतयैवात्र गुणभाव उपपद्यत इति पूर्वः पक्षः ।

राद्धान्तस्तु—सहभावाविवक्षा न विभक्तिबलेन युक्ता । विभक्त-योऽपि व्यत्ययेनापि स्मर्यन्ते । अस्यार्थः - यदि शाखाशब्दः तृतीयान्तो गृह्येत

---

1. 1455
b 21

प्रस्तरशब्दश्च द्वितीयान्तः तदा शाखायाः अप्राधान्यात् अनुपपत्तेः सहभावोऽविवक्षितः स्यात्। सा चेयमविवक्षा विभक्तिबलेन। न च विभक्तिः सहशब्दमपि विवक्षितं कर्तुं शक्नोति। विभक्तिव्यत्ययेनापि प्रयोगदर्शनात्। तेनात्र विभक्तेर्व्यत्ययेन वर्णना 'प्रस्तरेण शाखां प्रहरति' इति। उपपद्यते चात्र सहार्थः नोपपद्यमानस्याविवक्षा युक्ता। किञ्च कृतप्रयोजना च शाखा वत्सापाकरणेन। कृतप्रयोजनानां च प्रतिपत्तौ सत्यां न कार्यान्तरकल्पनाऽवकल्पते इति। प्रस्तरप्रहरणमपि कार्यान्तरपरम् न शाखायाः (कार्यान्तरं) कल्पयितुं शक्यते - विनियुक्तविनियोगविरोधादिति। सहयोग एवायं प्रतिपत्तव्य इति विभक्तिव्यत्यय इत्येवात्र न्याय्यः। उपकारश्चात्र विपरीतः तृणमयप्रस्तरः शाखायां दह्यमानायां उपकर्तुमर्हतीति शाखाप्रस्तरे प्रयोजनमुक्तम्। पूर्वपक्षे अमावास्यायामसन्नयता शाखाउपादेया प्रस्तरप्रहरणाङ्गत्वपक्षे। प्रतिपत्तिपक्षे तु यत्रैव सान्नाय्याङ्गभूता शाखाऽस्ति तत्रैव प्रतिपाद्या भवतीति।

इति ऋजुविमलायां षष्ठाध्यायस्य
चतुर्थः पादः

— :*: —

ऋजुविमलायां

# षष्ठाध्यायस्य पञ्चमः पादः

## ॥ १ ॥ अभ्युदये कालापराधादिज्याचोदनास्याद्यथा पञ्चशरावे ॥ १ ॥

अत्रेयं विषयशुद्धिः—अमावास्यायामेव दर्शार्थेन वेदिः क्रियते। अग्निप्रणयनादिकं व्रतादिकं च यजमानसंस्कारः दध्यर्थश्च दोहः। प्रतिपदि दर्शः प्रवर्तते इति। एष तावत् पारमार्थिकोऽनुष्ठाननियमः। यस्य तु यजमानस्य कुतश्चित गणनभ्रमनिमित्ता चतुर्दश्यामेवामावास्याबुद्धिरुपजायते सा तस्याममावास्यायां कर्म प्रवर्तयति। तस्य चन्द्रमसा हविरभ्युदीयते। तत्रेदं श्रूयते 'यस्य हविर्निरुप्तं' इति। तेन यजमानेनाभ्युदितेन हविषा अमावास्यायामेव निमित्ताधिकारं परिसमाप्य पुनस्तदहरेव वेद्युद्धननादि कर्म कृत्वा प्रतिपद्येव दर्शः कर्तव्य इति। अभ्युदये-[ष्टिरि]ति नैमित्तिकमिदं कर्मान्तरं विधीयते। अथवा तदेवापनीतदेवताकं हविः पुनः देवतान्तरैः संयुज्यते इति।

पूर्वपक्षे नियोगः, राद्धान्ते तु अधिकृतस्य प्रयोगविशेषचोदनेति। **अधिकारलक्षणेन(ण न) कर्मसंबन्धिता शास्त्रस्य।** अनेन अधिकरणस्य लक्षणसङ्गतिमाह। अक्षरार्थस्तु दर्शात् कर्मान्तरं विधीयत इति। अयमत्र पूर्वः पक्षः। अत्र च विनियोगो द्वैतीयः कर्मान्तरस्याधिकारे विनियोग उपक्रान्तो दर्शितः। कर्मणः प्रयोगविशेषोऽयं चोद्यत इति राद्धान्तः। तत्र च प्रयोगविशेषचोदना, प्रयोगविशेषश्चाधिकृतस्येति अधिकारिविशेषाश्रयत्वात् अधिकारलक्षणमेवेदमिति भवति लक्षणसङ्गतिः। **ननु च यद्यपि पूर्वपक्षे कर्मसम्बन्धिता शास्त्रस्य तथापि किमित्यधिकारद्वारा चिन्ता न भवतीति।**

**अत्राह—कर्मसंबन्धे हि अधिकृतद्वारा चिन्तोपपद्यते। तस्मिन् सति अधिकारात्। तत्र पूर्वपक्षवादी कर्मान्तरं विधीयत इति मन्यते। त्रेधा तण्डुलान् विभजेत् इति तण्डुलविभागोऽत्रावगम्यते न दधिपयसोः** अस्यार्थः। यदि(देवतैव न)[देवताभ्यः] हविषां विभागः स्यात् तदा अपनीतदेवतानां हविषां देवतान्तरेण संयोगः शक्यते कर्तुम्। ततश्च प्रकृतानामेव कर्मणा-

मयमनुष्ठानविशेषः चोद्यत इति राद्धान्तसिद्धिर्भवति। इह तु तण्डुलान् विभजेत इति तण्डुलविभागः श्रूयते न दधिपयसोः। एवं च तण्डुलानामेवायं स्थविष्ठादिभिर्विशेषैः विशिष्टो विभागोऽवगम्यते न देवतायाः। स्थूलमध्यमसूक्ष्मत्वादिभिः तण्डुला विभक्तव्या इति प्रतीयते। [न]पुनर्देवताभ्यो विभजेदिति। ततश्च पूर्वदेवताभ्योऽनपनीतत्वात् न शक्यते तद्धविः देवतान्तरेण योजयितुमिति। कर्मान्तरं वेदं विधीयते। पूर्वं तु कर्मभावात् अधिकारभावात् परित्यजनीयमेव। दध्यादयस्तु लौकिकाः सन्तः यदि कर्मान्तरेऽपि व्याप्रियन्ते तदा न कश्चिद्दोषः।

युक्त्यन्तरं चाह — **चरुश्च दधिपयसोस्संयोगे देवताविभागे नोपपद्यते।** अस्यार्थः — एकेन्द्रादिसंबन्धित्वेन यद्यपिद्धस्तण्डुलानां च संयोगः तथापि चरुत्वं कथं लभ्यते? तदपि न विधीयते। विधीयते चेत् तदा विहिते कर्मणि गुणद्रव्यविधानानुपपत्तेः कर्मान्तरविधिरेवापतति। न हि देवतान्तरं चरुत्वं च शक्यते विधातुमेकेन वाक्येन विहिते कर्मणि।

ननु संयुक्तयोः दधितण्डुलयोः पाके सति, तथा पयस्तण्डुलयोश्च पाके सति चरुत्वमर्थप्राप्तमेव सत् अनुद्यते(सः)सप्तम्यर्थेनेत्याशङ्क्याह — **पुरोडाशार्थं — तया हि पाकस्तत्रोपदिष्टः। चरोरश्र(व)पणात्।** दर्शपूर्णमासोपयोगि यच्छ्र(व)पणं विहितं तत् प्रथनोत्तरकाले पुरोडाशाकृतिके द्रव्ये सम्पन्ने सति पुरोडाशसंस्कारार्थं न तण्डुलानां चरोरश्रपणात्। यदि तत्र चरुः श्रूयते तदा तण्डुलानां पाको विधी[येत](यते)। तस्मात् कर्मान्तरविधिपक्ष एवैतत्सर्वमुपपद्यत इति पूर्वः पक्षः।

**कथं पुनरत्र अस्मिन् पक्षे आतञ्चनाभ्यासः।** अस्यार्थः। एवमत श्रूयते — "यदि बिभीयादभिमोदेष्यतीति महारात्र एव हवींषि निर्वपेत् फलीकृतैस्तण्डुलैः पर्युपासीत अर्धं हविरातञ्चनस्य निदध्यात्, अर्धं न, यद्यभ्युदियात् तेनातच्य प्रचरेत् यदि न तेन ब्राह्मणं भोजयेत्" इति। यः खलु यजमानः आशङ्कते—प्रवृत्ताऽमावास्या तत्रैव किमत्र चतुर्दशी उत पञ्चदशीति। [स तस्या](सत्या)मेव रात्रौ व्रीहीन्निरुप्य अवहत्य, फलीकृत्य उदीक्षमाण आसीत। सायंदोहनसंपादितं च दधि द्विधाकृत्य अर्धं दधि एकान्तरितकरिष्यमाणस्य कृते अनन्तरं सायं दोहं सम्पाद्य दध्यातञ्चनाय निदध्यात्। अर्धं चैवमेव स्थापयेत्। तत्र यद्यभ्युदयः स्यादेवमेव स्थापितेनार्धेन दध्ना नैमित्तिकाधिकारं निर्वर्त्य निहितेनार्धेन दध्ना सायं

दुग्धे पयसि आतञ्चनं कृत्वा दध्युत्पाद्य अन्येद्युः दर्शमभिनिर्वर्तयेत् यदि तन्नाभ्युदियात् यदेवं निहित(चमेवंनित)मर्धं दधि तेनार्धेन दध्ना दर्शमेव कुर्यात्। आतञ्चनाय निहितं च दधि आतञ्चनस्यानर्थकत्वात् आतञ्चनेनास्याप[स]रणीयं ब्राह्मणभोजनेन प्रतिपादयेदिति। तत्र च यदि कर्मान्तरमिदं नैमित्तिकं भवेत्। तदा यत्तद्दध्यस्ति तद्दर्शार्थमेवेति (ननु) [न] दर्शार्थेनापरेण दध्ना कृत्यमस्तीति आतञ्चनं न क्रियेत तत्रातञ्चनाभ्यासदर्शनं नोपपद्यते। यदा त्वेतत् तदेवामावास्याकर्म(अ)प्रवृत्तं तत्र तदा अनेनैव दध्ना दर्शार्थोपार्जितेन कर्तव्यमिति अपरेद्युः क्वचित्प्राप्तस्य[1] दर्शस्य कृते आतञ्चनेन प्रयोजनमस्तीति युक्त आतञ्चनाभ्यासः। परिहरति—

**वाचनिको भविष्यतीति।** अस्यार्थः—यद्यपि तद् दध्यस्ति तथापि अन्यद्दधि आतच्य प्रचरितव्यमिति वाचनिकमेवं भविष्यतीति न्यायेनैवास्मिन् शास्त्रार्थे स्थितम्।

अत्र कश्चिच्चोदयति—**ननु चेतरस्मिन् पक्षे वाचनिक एवासौ।** अस्यार्थः—यस्मिन्नपि पक्षे न कर्मान्तरमिदं तस्मिन्नपि पक्षे चतुर्दश्यां जनितस्य दध्नः प्रतिपदि क्रियमाणदर्शं प्रति अयोग्यत्वात् वाचनिक एव विनियोगः। अमावास्यायां हि जनितं दधि दर्शे विनियुक्तम्। **अतश्चातञ्चनाभ्यासदर्शनं नोपपद्यते इति इतरस्मिन्नापादनपक्षेऽपि वाचनिक एव।** अयमर्थः—तेनैव दध्ना दर्शः कर्तव्य इति। तत्केन विशेषणेन? प्रपञ्चेनेदमुच्यते वाचनिकोऽयमातञ्चनाभ्यासो भविष्यतीति।

परिहरति—**सत्यं तथापि तूपादानान्तराभावात् प्राप्त इत्युच्यते विनियोगे तूभयोस्तुल्यम्।** आपादनपक्षे हि विनियोगमात्रं तस्य दध्नः न पुनरुपादानम् वाचनिकातञ्चनम्। अभ्यासपक्षे तु विनियोगः उपादानं च वाचनिकम्—तेन दध्यातञ्चनं कर्तव्यं इत्ययमर्थो वाचनिकःस्यात्। तथा विद्यमानेऽपि तस्मिन् दधनि दध्यन्तरमुपादेयं न पुनस्तेनैव दध्ना कर्तव्यमित्येतद्वाचनिकमेवेति।

**एवं प्राप्तेऽभिधीयते—देवतापनयोऽयम्।** कुतः? **विभागवाक्ये त्रैविध्यस्यान्यतः प्राप्तेः।** अस्यार्थः—नायं स्थविष्ठादिभिर्विशेषैः तण्डुलानामेव

---

1. विधिप्राप्तस्येति युक्तः पाठः

विभागो विहितः, अन्यतः प्राप्तत्वात् । किन्तु देवतातो विभागो हविषः, तस्यान्यतः [तोऽ]प्राप्तत्वात् ।

**कुतो व्यस्ततण्डुलानां त्रैविध्येन विभागप्राप्तिः ? उत्तरं—देवता-सम्बन्धविधानतः** । यदा स्थविष्ठादीनां भेदेन देवतात्रयसम्बन्धः तदा अर्थादेव तण्डुलानां पृथक् कल्पनं प्राप्तम् । अतः विभजेदित्येतावदेव विधीयते । न पुनस्त्रेधा विभजेत् इति । त्रेधाशब्दस्तु तण्डुलानां नित्यप्राप्तं त्रैविध्यमनुवदति । स चाविशेषात् हविर्मात्रस्यैव प्रतीयते न पुनः तण्डुलानामेव । देवताभ्यो विभजेदित्युक्ते ज्ञायत एव तत्सम्बन्धिहविषोऽपि विभाग इति ।

तच्च हविर्मात्र न तण्डुलशब्देन विशेष्टुं शक्यते । वाक्यभेदप्रसङ्गात् । उपरितनानि च वाक्यानि अपनीते देवतान्तसम्बन्धे देवतान्तराणीति न कर्मान्तरमवगम्यते । प्रकृतान्येव च द्रव्याणि दर्शाख्येन कर्मणा संबद्धानि देवताभ्यो विशेषेणापनीतानि देवतान्तरैर्युक्तानीति प्रकृतकर्मणि प्रत्यभिज्ञानात् न कर्मान्तरमवगम्यते । न च कालाभावेनाधिकाराभावे कर्मस्वरूपाभावः । नैमित्तिकाधिकारे तान्येव कर्माणि चोद्यन्ते । ततश्च तस्मिन् कृते निमित्ताधिकारे नित्याधिकार[1]निर्वृत्त्यर्थं भूयस्तान्येव कर्माणि कर्तव्यानीति मन्तव्यम् । **ननु चरुशब्दश्रवणं नोपपद्यत इत्युक्तम्** । पुरोडाशार्थत्वात्पाकस्य तद्विधौ च वाक्यभेदप्रसङ्गः । यदि प्राप्तकर्मानुवादेन विधिः गुणविधिः कर्मस्वरूपाश्रितः स्यात्, तदाऽनेकगुणविधानाद्वाक्यभेदः स्यात् । यदा त्वयं कालभ्रमेणाधिकारभ्रान्त्या प्रवृत्तस्याभ्युदयस्याधिकृतस्य विभागनिमित्तको देवताभ्यो विभागे सति तस्यैव यागस्य प्रयोगविशेषश्चोद्यते तथासति न वाक्यभेदः । कथमित्याह **—स एवायं पुरोडाशः तां तामवस्थां नीतः** इति । अनुवादोऽयम् । अस्यार्थः-योऽसौ पुरोडाशश्चोदितः तस्य पुरोडाशस्वरूपतयैव प्रयोगोऽपि प्राप्तः । सम्प्रति अभ्युदये निमित्ते अभ्युदितावस्थायामेव दधिसंयुक्तस्य पयस्संयुक्तस्य देवतापनयं कृत्वा देवतान्तरसंबन्धः क्रियते । तस्य च तथाभूतस्य पेषणं न कर्तव्यमेव । प्रथनार्थत्वात् । तस्य प्रथनस्य च कर्तुमशक्यत्वात् स्तोकत्वात् तण्डुलानां, प्रभूतत्वात् दध्नः पयसश्च । तेनात्र(पी)अपिष्ट्वाप्रथयित्वैव च पाकः कर्तव्यः । [2]तस्यानपनीयत्वात् क्रियमाणे च पाकेऽर्थाच्चरुता । सप्तम्यर्थश्च सम्पद्यत एवेत्यनुवादोयऽम् " दधनि चरुं " " पयसि

---

1. निवृत्त्यर्थं-मा

चरुम्'' इति। यत एव च प्रयोगप्रकारचोदनयाऽनुवा(दो)दानुपपत्तेः प्रकृतकर्मानुप्रवेशस्सिद्ध्यति न पुनः कर्मणि गुणविधानेन च। अत एवेत्यनुवादः। **अयं च भेद(ः)लक्षणे नाभेदः शक्यते वक्तुमिति अधिकृतद्वारमेवेदं शब्दार्थविदो मन्यन्ते।**

भेदाभेदलक्षणे हि द्वितीयेऽध्याये यद्येषा चिन्ता क्रियते तदा कर्मस्वरूपाश्रितत्वात् तत्रैव गुणविधिः स्यात्। तत्रानेकगुणविधानात् वाक्यभेदप्रसङ्गात् कर्मान्तरमेवेदं स्यात्। अधिकारलक्षणे तु चिन्तायामधिकृतस्य प्रयोगविशेषश्चोद्यत इति पुरोडाश एवायं प्रयुज्यत इति पाकस्यापनीतत्वात् अर्थप्राप्तैव चरुता सप्तम्यर्थेन सहानूद्यत इति वाक्यभेदाभावादुपपद्यत एवाभेदः। तेनाधिकारलक्षण इदं चिन्त्यते। तस्मात् पञ्चशरावादिभ्यो विलक्षणमिदं नैमित्तिकमिति सिद्धम्। पञ्चशरावादिभ्यो-हविरार्त्या कर्मैव विनष्टमिति कर्मान्तरं चोद्यते। इह कालापराधेऽपि हविषोऽविनष्टत्वात् कर्मणि अविनष्टे प्रयोगान्तरमिदं नैमित्तिकं चोद्यते। तस्यैवायं प्रयोग इति। प्रकृतद्रव्यप्रत्यभिज्ञानेन इदमवगम्यत इति सुस्थम्। शेषमुक्तम्।

॥ २ ॥ उपांशुयाजेऽवचनाद्यथाप्रकृति ॥ १० ॥

**अमावास्यायामप्युपांशुयाजो विद्यत इति कृत्वाचिन्तेयम्। कथं पुनरत्र पूर्वपक्षाऽऽशङ्का यावता प्रयोग एवेदमुक्तं त्रेधा तण्डुलान् विभजेत् इति हविर्मात्रस्य विभाग इति।** तेनोपांशुयाजहविषोऽपि देवतापनय इति।

उत्तरं—**प्रतिसमाधानदर्शनात् पूर्वपक्षाशङ्का।** यथादधिपयःपुरोडाशानामपनीतायां पूर्वदेवतायां अपरदेवतासम्बन्धः तथेह नास्ति। न च देवतां विना यागो भवति इत्यपनयः एव(वं)देवतायाः। तस्मात्पूर्वपक्षी तावत्समाधानमविभागं मन्यते।

राद्धान्तस्तु—**विभागाविशेषात् सर्वत्र विभागः।** यत्र समाधानं तत्र समाधिः। यत्र तु नास्ति समाधानं तत्र विभागान्त एव नैमित्तिकः प्रयोगः।

**ननु च देवताविभागान्ते यागः प्रयुक्तो न भवति। देवतोद्देशेन हि द्रव्यत्यागो यागः। स च देवतायामनुद्दिष्टायां प्रयुक्तो न भवति।**

परिहरति—**कथं शक्यते वक्तुं न प्रयुक्त इति? वाचनिकत्वादस्यार्थस्य।** अस्यार्थः—य एवासौ यागश्चोदितः तस्य देवताविभागात्मक एव

प्रयोगः कर्तव्य इति वचनेनेदमुच्यते। त्याग एव तु देवतोद्देशो यागः। स च उपाधिविगमेऽपि नानुपपन्नः।

**ननु यद्युपाधिर्न प्रतीयते कथमवगम्यते स एवायं याग इति। प्रकृतस्यैव प्रयोगविधानात् पुरोडाश इव चर्ववस्थे।** यागोऽपि हि विभागान्त एवावसीयते प्रयोगनिष्ठत्वादधिकारशास्त्राणाम्। अधिकारशास्त्राणि तावत् प्रयोगनिष्ठानि प्रयोगमेव चोदयन्ति। न प्रयोज्यविषयश्शेषः। तेन यागस्यैवायमीदृशः प्रयोज्यस्य प्रयोगशेषो ज्ञायत इति न दोषः। यथा पुरोडाश एव चरुभूत इति। कर्मस्वरूप-**विधौ ह्ययं दोषः** देवतोद्देशं विना यागासिद्धिलक्षणः। ननु च देवतापनये सति याकाचिद्देवता कथ्यत इति, अत्राह—**न च सामान्येन देवताकल्पना वचनाव-गम्यत्वात् देवतायाः।** एतदेव कुत इत्यत्राह—**या यस्य हविषः चोद्यते सा तस्य देवतेति स्थितेः। तेन देवताभावं** कल्पयितुं न शक्यत इति। [1]अर्थ-विभागान्त एव प्रयोगो विधीयत इति।

**॥ ३ ॥ निरुप्ते स्यात् तत्संयोगात् ॥ १२ ॥**

**निरुप्तशब्दश्रवणात् निरुप्त एव हविषि उदिते नैमित्तिकमिति पूर्वः पक्षः।**

**ननु च आर्त्यधिकरणेनैव गतमिदम्।** यथा आर्त्यधिकरणे उभयत्व-विशेषणमविवक्षितं, किं तर्हि हविर्मात्रस्यार्तिर्निमित्तं इहापि हविर्मात्रस्य अभ्युदयो निमित्तं निरुप्तग्रहणमविवक्षितमेवेति परिहरति—**न तेन गतमिदमधिकरणं प्रवृत्त-शब्दस्याश्रवणात्।** न हि स्वरूपेण हविषोऽभ्युदयः संभवति किं तर्हि? प्रवृत्तस्य। न चात्र प्रवृत्तशब्दः श्रूयते [2]तेन पुनः श्रुत्यवगतमेव निरुप्तत्वविशेषणमस्तु तस्यैव श्रुतत्वात।

राद्धान्तमाह—**सत्यं प्रवृत्तशब्दो न श्रूयते तथापि यस्याभ्युदि-यादिति प्रवृत्त्यवगमात न विशेषणविषयमेव व्यवस्थापयितुं क्षमम्।** यस्याभ्युदियादित्युक्ते प्रवृत्तत्वं हविषोऽवगम्यते। प्रवृत्तं ह्यभ्युदयो भवति। तेनाभ्युदि-

---

1. अर्थ विभागतः-मा
2. केन-मा

यादित्यस्मिन्नेव पदे प्रवृत्तावगमात् निरुप्तविशेषणमपरनैमित्तिकं न विशेषमव-स्थापयितुमर्हति यस्याभ्युदियादिति—[भ्युप]गमादिति । तस्मात् प्रवृत्तशब्दे श्रुते चाश्रुते च न कश्चिद्विशेषः । **दर्शनमुक्तम् ।**

**॥ ४ ॥ अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः तण्डुलभूतेष्वपनयात् ॥ १६ ॥**

**निरुप्तेऽनिरुप्ते च अभ्युदिते प्राकृतीभ्यो देवताभ्यः अग्न्यादिभ्यो निर्वाप इति पूर्वपक्षवादी मन्यते** तण्डुलभूतानामेव देवतापनयश्रवणात् । **ननु च प्रवृत्तमात्रं हविरभ्युदितं निमित्तमित्युक्तम् । तेन प्रवृत्तमात्रस्य देवता-पनयात् कथं प्राकृतीभ्यो निर्वाप इति ।** परिहरति—**सत्यमुक्तम् ।**

**ननु नैमित्तिकं तु तण्डुलमेतेष्विति वदामः** यद्यपि प्रवृत्तमात्रं हविर्निमित्तं तथापि देवताविभागात्मकं नैमित्तिकं तण्डुलशब्दश्रवणात् । तण्डुलावस्थायामेवेति प्राग[न]पनीतत्वाद्देवतायाः प्राकृतीभ्य एव निर्वापः ।

**अतोच्यते—नैमित्तिकेऽपि तण्डुला अतन्त्रमित्युक्तम् । विभाग-मात्रविधानात् ।** देवताभ्यो हविर्विभजेदित्युक्ते हविर्मात्रस्य विभागोऽवगम्यते तेन तण्डुलग्रहणमविवक्षितमित्युक्तम् । **अभ्युदितं तु हविः विभजनीयमिति शास्त्रार्थः ।** तस्मात् नैमित्तिकेभ्यो निर्वाप इति राद्धान्तः ।

**॥ ५ ॥ विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १७ ॥**

**यदवस्थस्यैव हविषोऽभ्युदयः तदवस्थयैव देवताप(न)नयोऽस्तु तत्पूर्वको देवतान्तरेभ्य एव निर्वापः ।**

**नन्वेवं अवघातोऽपि तर्हि किमिति दधिपयसा युक्तानां न भवति । उच्यते । क्षोदिष्ठादिभेदभिन्नानां दध्यादिसम्बन्धादवघातोत्तरकालमेव दधिपयस्संसर्गं कृत्वा पाकःकर्तव्य इति । विनिरुप्ते सामिनिरुप्ते प्राकृतीभ्य एव निर्वापः प्रवृत्तः । परिशिष्टमपि मुष्ट्यन्तरं प्राकृतीभ्य एव निर्वप्तव्यम्** निर्वापे प्राकृतीनामेवाभिप्रवृत्तत्वात् । न च पदार्थान्तरं मुष्टय इति पञ्चमे उक्तम् । **एवं प्राप्तेऽभिधीयते—अपनयनमवगम्यते दुर्दर्शस्स(म)भवति ।** तस्माद्वैकृतीनां अपनये कृते सति आपादितहविस्सम्बन्धानामुद्देशेनैव निर्वापः कर्तव्य इति प्राप्ते राद्धान्तोऽभिधीयते—

तूष्णीं निर्वापः कर्तव्यः अपनयावगमात् एकत्वाच्च निर्वापस्य (न निरुप्तप्रयसम्भवः)। अस्यार्थः - पूर्वदेवत मुद्देष्टुं न शक्यते । अपनीतत्वात् । न देवतान्तरमपि योजयितुं शक्यते, चतुर्मुष्टिनिर्वापस्यैकपदार्थात्मकत्वात् । न च मुष्ट्यन्तरं पृथक्पदार्थः । नचैकस्मिन् पदार्थे देवताद्वयं सम्भवति, अन्योन्यविरोधात् । न च देवतावयवस्य देवतासम्बन्धः इत्यनुद्देशा परिसमाप्तिः ।

॥ ६ ॥ सान्नाय्यसंयोगान्नासन्नयतः स्यात् ॥ २१ ॥

ननु चर्वर्वस्थस्याविधानात् नैवात्र पूर्वः पक्षः सम्भवति। यदि सान्नाय्याधिकरणे चर्ववस्था विहिता स्यात् तदा सान्नाय्याभावेन न स्यात् असान्नाय्ययाजिनो नैमित्तिकम् । न चर्ववस्था विहितेत्युक्तम् ।

समाधत्ते–अस्त्यत्र काचिदाशङ्का । नह्यसति शृते दधनि वा चर्ववस्था पुरोडाशस्य सम्भवति इति मन्वानः सान्नाय्ययाजिन एव नैमित्तिकं सम्भवतीति पूर्वपक्षयति । अनुवादभूतापि चर्ववस्था सान्नाय्ययाजिन एव सम्भवतीति तस्यैव नैमित्तिकमिति पूर्वः पक्षः ।

राद्धान्तस्तु—उदकेनापि चर्ववस्थासंभवात् निमित्तस्य चाविशेषश्रवणात् नैमित्तिकस्य च देवतासम्बन्धमात्रपरत्वादधिकरणार्थो न विवक्षितः इति ।

यद्यपि विवक्षिता चर्ववस्था, तथापि उदकेनाप्यसौ सम्पद्यत एवेति अविशेषेण श्रुतं नैमित्तिकं न शक्यते विशेषेण सान्नाय्ययाजिन्यवस्थापयितुम् । परमार्थतस्तु देवतान्तरसम्बन्धमात्रं नैमित्तिकम् । अधिकरणार्थस्त्वर्थप्राप्त इति । अविवक्षितार्थत्वात् चर्वर्थस्य यत्रानुवादस्सम्भवति तत्रासौ भविष्यति । न पुनस्तद्बलेन विधिरेव सङ्कोचयितुं न्याय्य इति असन्नयतोऽपि नैमित्तिकमित्युक्तम् ।

॥ ७ ॥ साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् ॥ २५ ॥

ननु चासन्नयतोऽप्युक्तमेव । अनन्तरं तेनैव अक्रीतराजकस्यापीति लभ्यते का अत्र अभ्यधिकाशङ्का या निवर्त्यते । यथा पूर्वस्मिन् अधिकरणे ऽविशेषेण निमित्तश्रवणात् असन्नयतोऽपि नैमित्तिकमित्युक्तम् । तथाऽत्रापि साम्युत्थानस्याविशेषेण श्रवणात् अक्रीतराजकस्यापि नैमित्तिकेन भवितव्यमिति लब्धमेव । किमित्यधिकरणान्तरारम्भः ।

समाधत्ते— अस्त्यत्राभ्यधिकाशङ्का - तत्र हि तण्डुलश्रवणात् अधिकरणार्थस्याविवक्षितत्वात् युक्तमसन्नयतोऽपीति । इह पुनः अक्रीतराजको नैव श्रूयते ‘सोममपभज्य’ इति च क्रीतराजकावगमात् विभागस्य चान्यत्रानुपपत्तेः नैमित्तिकानुरोधेन निमित्तसङ्कोचं पूर्वपक्षवादी मन्यते— यथा अग्नी आदधीत इति । अस्यार्थः—तण्डुलशब्दश्रवणात् औषधेऽपि नैमित्तिकावगमात् असन्नयतोऽपि चौषधसम्भवात्, अधिकरणार्थस्य वाक्यभेदप्रसङ्गेनाविवक्षितत्वात्, अर्थप्राप्तत्वाच्चासन्नयतोऽपि नैमित्तिकमिति युक्तम् । इह पुनरक्रीतराजकस्य श्रवणमेव नास्ति । प्रत्युत नैमित्तिके सोममपभज्य विश्वजिता यजेतेति श्रूयते । तेन सोमविभागविशिष्टस्य नैमित्तिकस्य विधानात् क्रीतराजकस्यैव तथाभूतनैमित्तिकानुष्ठानसम्भवात् । यथा च तत्रोदकेनापि चर्वस्था असान्नाय्ययाजिनोऽपि शक्यते वक्तुं तथा इह नाक्रीतराजकेन सोमविभागश्शक्यत इति विशिष्टनैमित्तिकानुसारेण क्रीते राजनि साम्युत्थानं निमित्तमिति कल्प्यते । यथा—यस्योभावग्नी अनुगतौ इत्यत्र ।

अत्रोच्यते । सत्यं, युक्तमाधाने [1]एकोपायत्वेन अवगमात् आधानस्य । सोममपभज्येति इह सर्वद्रव्यविभागे प्राप्ते लक्षणया नावगम्यत इति न निमित्तसङ्कोचायोक्तम् ।

अस्यार्थः - यदि नैमित्तिकमेवेदं सोमविभागविशिष्टं स्यात् किं यत्र बहूनां सहप्रवृत्तानां मध्ये एकीकृतधनानां साम्युत्थाने प्राप्नोत्येवायं द्रव्यविभागः । स च लक्षणया सोममपभज्येत्यनूद्यते । यो हि क्रीतराजकस्तस्यापि सोमविभागः प्राप्तत्वात् न विधेय एव किन्त्वनूद्यत इति सिद्धेऽनुवादे लक्षणापि न दोषः । तस्मात् प्रवृत्तानामुत्थाने विश्वजिदिति क्रीतराजकानां चेति युक्तम् ।

॥ ८ ॥ दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २७ ॥

ज्योतिष्टोमे बहूनि दीक्षापरिमाणानि श्रूयन्ते । तत्र संशयः । किं तत्र सर्वैः परिमाणैः अधिक्रियन्ते, उत एकेनैवेति । अनेनाधिकरणस्याध्यायसङ्गतिमाह । यथाविनियोगमधिकारावगमात् सर्वैरिति पूर्वः पक्षः ।

---

1. एकोपत्यत्वेनानव-मा

सर्वेषां परिमाणानां विनियुक्तत्वात् सर्वैरेवाधिकारः तदा द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेत्ययं [1][पाक्षिको]द्वादशदीक्ष एव द्रष्टव्यः ।

राद्धान्तमाह—**द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति नित्यश्रवणात् न पक्षान्तरे उपपद्यत इति ।** द्वादशपरिमाण एवाधिकारः द्वादशरात्रीर्दीक्षितस्य भृतिवननं नित्यवदधिकारश्रवणात् ; परिमाणान्तरपक्षे च तदनुपपत्तेः द्वादशपरिमाणेनैवाधिकारः । परिमाणान्तराणि तु विकृतावुत्कृष्यन्ते ।

**कथं पुनरधिकारवशात् विनियोगोत्कर्षः** यावता विनियोगवशेनैव तु किमित्यधिकारो न वर्ण्यत इति भावः ।

परिहरति—**अधिकारपर्यन्तत्वाद्विनियोगशास्त्राणामिति युक्तम् ।** प्रधानत्वादधिकारस्य तदनुरूपो विनियोगो न्याय्य इति । तिर्यगधिकरणे तु अधिकाराविरोधात् यथाविनियोगमधिकारव्यवस्थेति दर्शितम् ।

**॥ ९ ॥ पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥**

**दीक्षाधिकारे पौर्णमासीश्रवणे संशयः—किमविशेषेण या काचित् पौर्णमासी ग्राह्या उत काचित् विशिष्टैव चैत्री माघी वेति ।**

**तत्र पूर्वपक्षवादी अविशेषं मन्यते, वाक्यशेषसामर्थ्ययोर्विरोधात् ।** वाक्यशेषे चैत्रीसङ्कीर्तनात् चैत्रीपौर्णमासीति प्रतिभाति । तेषामेकाष्टकायां क्रयस्सम्पद्यत इत्यस्य सामर्थ्यात् माघीति । तेन विरोधात् अनयोः परस्परव्याघातेनासाधकत्वात् अनियम एव । या काचित्पौर्णमासी ग्राह्या ।

**अपरस्त्वाह—न हि सामान्यज्ञानं वाक्यशेषं विहन्तुमर्हति तेन चैत्र्येव ग्राह्या ।** यद्यपि पौर्णमासीशब्दात् सामान्यज्ञानं तथापि वाक्यशेषात् विशेषोऽवगम्यते । ननु लिङ्गेन क्रयसामर्थ्येन तद्विरुद्धमित्युक्तम् । लिङ्गं तर्हि नियामकं भवतु येन तदपोद्यते ।

अनियमवाद्याह —**एतदेव न विजानीमः अनयोः वाक्यशेषसामर्थ्ययोः किं केन बाध्यत इति ।** सुन्दोपसुन्दन्यायेन परस्परमनयोः पराहतयोः अनियम एव ।

---

1. यःपादः - मा

राद्धान्तमाह—**उच्यते । बाढं ज्ञायते लिङ्गेन वाक्यशेषो बाध्यते ।** सामर्थ्यं हि अधिकारेऽभ्यर्हितम् । विना च सामर्थ्येनाधिकाराभावात् । तेन सामर्थ्यस्य बलीयस्त्वात् वाक्यशेषोऽपोद्यते । वाक्यशेषस्य गुणवादेनाप्युपपत्तेः ।

ननु च माध्यां कार्यसम्बन्धिन्यां चैत्र्याः स्तुतिरनुपपन्ना । तत्राह—**विधेयान्तरस्तुत्यर्थतयैवायमुपन्यासो जर्तिलवत् ।** यथा पयोविधौ जर्तिलस्तुतिः तथा माघीविधौ चैत्रीस्तुतिः । चैत्र्येव साध्वी माघीं त्वपेक्ष्य नापि जघन्येति । तस्मात् सामर्थ्येनैव विशेषग्रहणम् ।

**॥ १० ॥ दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥**

इह पाकादीनां यावद्दीक्षाकालं पर्युदासं मन्वानः पूर्वपक्षवादी अनुत्कर्षं मन्यते । दीक्षितो न ददाति इत्यनेन यावद्दीक्षा पुरुषस्य शास्त्रतः तावत् पर्युदासः पाकादीनाम् शास्त्रतश्च नियतकालैव दीक्षा । तेन [1]दीक्षोन्मोचनस्य [2]उत्कर्षेऽपि पाकादयः कर्तव्या एवेति ।

राद्धान्तस्तु—नायं कालपर्युदासतेति[3] । यदि कालं पयुदस्येत भवेयुः पाकादयः न त्वयं कालपर्युदासः । दीक्षितस्य हि अत्रानधिकारः । दीक्षितत्वं चानुवर्तत एव [आ] अवभृथात् । तस्मात् यावत् दीक्षितः तावत् पर्युदास एवेति युक्तः पाकादीनाम् ।

**॥ ११ ॥ तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥**

कालोत्कर्षे किं प्रतिहोमाः कर्तव्या नेति चिन्त्यते इत्यनेनाक्षेप्तुमनुभाषते ।

आक्षिपति—**कथं पुनरत्र प्रतिहोमाशङ्का ? दीक्षितः पर्युदस्त इत्युक्तम् ।** अस्यार्थः—कर्तव्यस्य अकरणे प्रतिहोमक्रिया सम्भवति । न च दीक्षितस्याधिकारः पाकादिष्वस्ति । अतोऽकर्तव्यानामेवाकृतत्वात् न प्रतिहोमाशङ्का युक्ता । समाधत्ते—**प्राक्प्रमादान्नियतं नित्यशास्त्रं मन्यतेऽप्रमाद इव ।** अस्यार्थः-नित्यशास्त्राणि

---

1. दीक्षामो - मा		2. उत्कर्षोऽपि - मा
3. पर्युदस्येतेति - मा

होमादिविषयाणि नियतानि प्राक्प्रमादात्। यावत् प्रमादो न निपतति। अवभृथोत्कर्षहेतुः दीक्षितत्वानुवृत्तिकारणम्। तावत्पुरुषस्य होमादयः कर्तव्या एव। यथा-ततश्च प्रमादेऽपि आपतिते दीक्षितेन ये होमादयो न कृताः ते कर्तव्या एव सन्तो न कृताःस्युः। तस्मात् प्रतिहोमाः कर्तव्या इति पूर्वः पक्षः।

**राद्धान्तस्तु—सत्यमप्रमादे नियतः कालः। अनधिकारात्तु दीक्षितस्याकरणमेव होमानाम्। अधिकारद्वारत्वान्नियमस्य।** अस्यार्थः—यस्य प्रमादो नास्ति तस्य होमानां नियतःकालः। यस्य पुनः प्रमादो निपतति तस्य दीक्षितत्वेनानधिकारात् प्रतिहोमानामकरणमेव अधिकारद्वारत्वान्नियमस्य। [1]**नियमो हि होमानां अधिकारिविशेनैव। यस्य हि जीवनवतो नित्यमधिकारः तस्य नित्यमनुष्ठानम्। न चाधिकारः प्रागेव भवति।** किन्तु अहरहरधिकारोऽप्यावर्तते। दीक्षितस्य अधिकारः पर्युदस्त इति अधिकाराभावान्न होमानां कर्तव्यतेति किम्नु।

**॥ १२ ॥ प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥**

**दीक्षोन्मोचनोत्तरकालं प्रमादादिष्ट्युत्कर्षे सति अपरं दीक्षितस्य प्रतिहोमः कर्तव्य इति पूर्वः पक्षः।** अस्यार्थः—'दीक्षितो न ददाति न जुहोति न पचति' इति दीक्षितस्य पर्युदासः कृतः। कृतावभृथश्च उन्मुक्तदीक्षो न दीक्षितः, यद्यपि पुनराधेयसम्मितेष्टिर्न कृता। तेनापर्युदस्तत्वात प्रमादादिष्ट्युत्कर्षेऽपि होमादिष्वधिकारात ये होमा न कृताः तेषां प्रतिहोमाः कर्तव्या इति पूर्वः पक्षः।

**एतया पुनराधेयसम्मितयेष्ट्येति क्रममात्रं वचनम्। तेन क्रमानुग्रहायोदवसानीयां कृत्वैव प्रतिहोमाः करिष्यन्त इति मन्यते।**

**राद्धान्तस्तु सत्यं नास्ति पर्युदासः। अधिकारोऽपि नैवास्ति। अधिकारान्तरश्रवणात् पुनराधेयसम्मितयेष्ट्येति।** अस्यार्थः—जीवनमिव कृतोदवसानीयत्वमपि अधिकारिविशेषणानुप्रवेशीति अकृतोदवसानीयस्यानधिकारः। न तत्रानधिकृतस्य नियमोऽस्तीति न कर्तव्याः। समानकर्तृकता हि क्त्वाप्रत्ययस्यार्थः। न च परस्पर[ा]सम्बन्धयोरग्निहोत्रोदवसानीययोः समानकर्तृकता सम्भवति। तत्र यदि कृतोदवसानीयः पुरुषः अग्निहोत्रेऽधिकारी भवति तदाऽधिष्ठानैक्येनापि तावत समानकर्तृकता नातीव दूरोज्झिता भवति। क्रमपरत्वे सा अत्यन्तबाधिता स्यात।

॥ १३ ॥ प्रतिहोमश्चेत् सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥ ४३ ॥

एकस्मिन् काले पर्यवस्थितानां प्रतिहोमानां क्रमनियमप्रमाणाभावात् अनियम इति पूर्वः पक्षः । राद्धान्तस्तु यतःप्रमादः ततः प्रभृत्येव कर्तव्या इति । अतिपन्नप्रतिसमाधानमतिपन्नक्रमेणैव कर्तव्यमिति भावः ।

॥ १४ ॥ प्रातस्तु षोडशिनि ॥ ४४ ॥

[1]अत्र केषां चित्सार्थं, षोडशिनि प्रातरिति व्यवस्थाप्रदर्शनार्थं च षोडशिनः पृथक् ग्रहणम् ।

॥ १५ ॥ प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥

'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति श्रूयते । तत्र सन्देहः—किं निमित्तपर्यन्त एवायमधिकारः उत कार्यपर्यन्त इति । अनेन भाष्यकारीयसंशयो व्याख्यातः । यदि हि भेदनवतः, स्वतन्त्रोऽयमधिकारः स्यात् । अथ तु कार्यपर्यन्तः, प्रकृतक्रतूपकारपर्यन्तोऽयमधिकारः तदा दर्शपूर्णमासयोरेव भेदने सति होमः तदङ्गभूतः कर्तव्य इति ।

असाध्यत्वादधिकारिविशेषणस्य निमित्तपर्यन्त एवायमधिकार इति पूर्वपक्षवादी मन्यते ।

यत्र हि साध्यमधिकारिविशेषणं भवति तत्र हि कार्यपर्यन्तोऽधिकारो भवति । अत्र तु न साध्यमधिकारिविशेषणमिति न कार्यपर्यन्तता युक्ता । सा(तु)चैवमनुपकार-[क]स्याङ्गस्यानुपपत्तेः सर्वत्र ज्योतिष्टोमादिष्वपि भेदनेनैव तत्राहिताग्नेर्होमा भवन्ति ।

निमित्ताविशेषात् अनाहिताग्नेः किमिति न भवति ? उत्तरं—होमविधानात् । न ह्याहवनीये होमः संभवतीति । नैमित्तिकानुरोधेन निमित्तसङ्कोचः आधानवत् । नात्र तिरोहितमिव किञ्चिदस्ति ।

एवं प्राप्तेऽभिधीयते—कार्यपर्यन्त एवायमधिकारः । कुतः ? दर्शपूर्णमासाधिकारस्यैव प्रकृतत्वात् । नियोगैक्यावगतिर्न शक्यतेऽपहन्तुम् ।

---

1. अतः मा

अस्यार्थः-भिन्ने जुहोति इति भेदनं निमित्ततया श्रूयते । न साक्षादधिकारिविशेषणतया । निमित्तभावस्त्वधिकारैकनिबन्धनेऽनुष्ठानेऽन्यथानुपपन्न इति अर्थादधिकारिविशेषणता कल्पनीया । दर्शपूर्णमासादिनियोगश्च साक्षाच्छ्रुताधिकारः । तत्सन्निधौ यन्निरधिकारमवगम्यते तेनापि स एवान्वितः उपनीयत इति एकनियोगता तावदवगम्यते । कथं च सा भवति ? यदि करणोपकारं निर्वर्तयति (इति) नान्यथा । तेन कार्यपर्यन्तत्वाद्दर्शपूर्णमासाङ्गमेवेदम् ।

**ननु चैवं सति अधिकारविरोधः प्राप्नोति यस्मादन्यदेवाधिकारनिमित्तम् ।** अधिकारस्य निमित्तमधिकारनिमित्तं अधिकारिविशेषणं भेदनम् अन्यच्च कार्यं दर्शपूर्णमासोपकारलक्षणम् । स्वर्गादिकं अधिकारिविशेषणं कार्यं चैकमेव । **उच्यते । न विरोधः । अधिकारो हि अधिकारिविशेषणं नियोज्यतामापादयति । नियुक्तस्य च कार्यमवगम्यमानं नाधिकारं निरुणद्धि । तस्यैव तदवगमात् ।** यदि कार्यं कल्प्यमानमधिकारिविशेषणमेव निरुन्ध्यात् ततो विरोधात् न कार्यमाश्रीयते । अविरोधे तु कार्यकल्पना नानुपपन्ना । तस्यैवाधिकृतस्य कार्यावगमात् नाद्रीयेतेत्यत्राह — **जीवने पुनः कार्यान्तरानवगमात् निमित्तपर्यन्ततैव युक्ता ।**

ननु किमिति [1]निमित्तं कार्यमवेक्षते । जीवनेऽपि किमिति न कल्प्यते । अथ तु नापेक्षते कथं तर्हि यत्र कार्यं स्वीक्रियत इत्यनेनाभिप्रायेण पृच्छति— **अथ कस्मान्न परिकल्प्यते कार्यं ? उच्यते । न नियोगः कल्पनां विषहते । नियोगसिद्ध्यैव चरितार्थत्वात् ।** जीवनाधिकारेऽपि (वि)नियोगः कार्यभूतः प्रतीयते । तेनैव चरितार्थत्वात् न परं कार्यं कल्प्यते । **प्रतीयमानं(न)पुनर्नापन्होतुं शक्यते स्वार्थविशेषात्** यथा हि—नियोगोऽत्र साध्यभूतः प्रतीयते तथा करणोपकारोऽपि । तेन प्रतीयमानस्यापह्नवोऽनुपयुक्तः । यस्मात् कार्यपर्यन्तोऽयमधिकारः तस्मात् दर्शपूर्णमासाधिकृतस्यैव भेदनवतोऽधिकारः, नाग्निहोत्रे ज्योतिष्टोमे वा । अधिकृतस्योपदेशातिदेशयोः प्रमाणयोरभावात् ।

**॥ १६ ॥ व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥**

---

1. निमित्तकार्य

अधिकरणमध्यायसङ्गतिं दर्शयन् कस्य व्यापत्त्येति न विद्म इति वदन्नवतारयति—**व्यापत्तिमतोऽप्सु प्रहरणं श्रूयते—'व्यापन्नमप्सु प्रहरेत्'** इति। व्यापत्तिमतः पुरुषस्याधिकृतस्याप्सु प्रहरणं श्रूयते। **न ज्ञायते कस्य व्यापत्तिमत इति।** किं तत् व्यापन्नं यस्य व्यापत्त्या व्यापत्तिमान् पुरुष इति न ज्ञायते। यदि व्यापत्तिरधिकारिविशेषणं कथं तर्हि व्यापन्नस्यैव प्रहरणम्। एकमिदं व्यापन्नपदं नाधिकारिणं(कर्म)विशेष्टुं कर्म च [1]समर्पयितुमलमित्यर्थः।

उत्तरं—**तत्कथमित्यपेक्षायामधिकारावगमात्।** अस्यार्थः-कर्मसमर्पणार्थमेव व्यापन्नपदमाम्नातम्। अर्थात् तस्याधिकारिविशेषणत्वम्। केन प्रकारेण ? उच्यते—तद्व्यापन्नस्याप्सु प्रहरणं कथं सम्भवति। यदि व्यापत्तिमद्द्रव्य एवाधिकारी भवति एवमर्थादधिकारिकल्पनायां न दोषः। अत्र च व्यापन्नशब्देन किं ग्रहीतव्यमित्यज्ञानमेव पूर्वः पक्षः।

**राद्धान्तस्तु—किं तदिति विशेषानवगमात् यावत्कार्यकारणतया किञ्चिद्दूषितम्।** एतदेव विस्पष्टयति—**शिष्टानां कार्यं प्रत्ययोग्यं कृतमित्यर्थो व्यापन्नशब्दस्य।** यत एवं व्यापन्नं अतस्तदपेक्षोऽयमधिकारः। शिष्टानां कार्यं प्रति अयोगीकृतं द्रव्यं यस्य तस्य व्यापन्नप्रहरणमिति सिद्धम्।

**॥ १७ ॥ विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥**

**अपच्छेदे संशयः—किमेकैकेनाधिक्रियते उत द्वाभ्यामपीति।** अनेन भाष्यकारीयस्य संशयस्य कारणमुपन्यस्तम्। यद्येकैकेनापच्छेदेनाधिक्रियते तदा द्वयोर्युगपत् अपच्छेदे प्रायश्चित्तं न कर्तव्यम्। [2]अतः द्वाभ्यामधिक्रियते। अपच्छेदशब्देन चात्र विभागफला क्रियाऽभिप्रेता।

संशयमाक्षिपति—**ननु च द्वयोः कथं संभवः ?** द्वयोः अपच्छेदक्रिययोः कथं सम्भवः। एकैकेवेत्यर्थः। समाधत्ते—**एतदेवात्र विचार्यते किं युगपत्कालयोर्द्वयोः एकता भवति, उत तत्रापि एककालतामात्रमेव। एकैकैव तत्राप्यधिकारहेतुरिति।** अस्यार्थः—फलप्रदर्शनमुखेनैतदेवात्र विचार्यते किमेकस्मिन्

1. समापयितुं
2. अथ-मा

काले एकैवापच्छेदक्रिया पुरुषद्वयसमवायिनी भवति । ततश्च तस्या एकेन व्यपदेष्टु-मशक्यत्वात् अन्यतरस्य व्यपदिष्टे चापच्छेदे प्रायश्चित्तविधानान्न भवितव्यं प्रायश्चित्तेन उत अपच्छेदक्रिये निरपेक्षयोरेव पुरुषयोः प्रत्येकं परिसमाप्ते ।

यदि परमेककालमात्रवर्तिन्यौ ततश्चोभाभ्यां व्यपदिष्टावपच्छेदौ युगपत् द्वौस्त इति भवितव्यमेव प्रायश्चित्तेनेति ।

**तत्र पूर्वपक्षवादी कालैक्यादेकमेवापच्छेदं मन्यते ।** कालैक्यनिबन्ध-नोऽयं भ्रमः एकैवेयमपच्छेदक्रिया पुरुषद्वयसमवायिनीति मन्यते । एकद्रव्यमगुणं कर्मेति च प्रक्रियामात्रं पदार्थविदामित्यवलोपः, अन्यतरेण पुरुषेण व्यपदेष्टुमश-क्यत्वात् उभयाधिष्ठानमेककर्तृत्वम् । तस्मात् द्वाभ्यामेवायं व्यपदिश्यते ।

अन्यतरेण पुरुषेण व्यपदिश्यमानोऽपच्छेदः अधिकारहेतुरित्युक्तम् । अतो न यौगपद्येऽधिकारः एकयैव क्रिययाऽनुमितया फलोपपत्तेः न क्रियान्तरानुमाने कारण-मस्तीति गूढोऽभिप्रायः ।

**अत्रोच्यते — न द्वाभ्यां व्यपदेष्टुं शक्यतेऽपच्छेदः द्व्यधिष्ठाना अपच्छेदक्रिया एका न भवति, इतरनिरपेक्षत्वात् कर्तृभावस्य ।** तस्मादि-तरेतरयुक्तयोः कर्तृत्वमिह न भवति । कर्तृत्वाभिप्रायेण निरपेक्षतोक्तेति सिद्धान्त्यभि-प्रायमबुद्ध्वा चोदयति -- **कथं पुनरपच्छेदो न द्वितीयमपेक्षते ।** अपादानभूत-द्वितीयानपेक्षाऽपच्छेदक्रियैव नोपपद्यत इति भावः ।

**उत्तरं—अपेक्षत एव द्वितीयमपच्छेद इति सन्मात्रतयाऽपादानत्वेन । न तु व्यपदेश्यस्य ।** तथा न कर्तृतयाऽपेक्षते । व्यपदेशश्चात्र कर्तृतयाऽपेक्षते । व्यपदेशश्चात्र कर्तृभावेनेति । व्यपदेश्यव्यपदेशतानिषेधेन कर्तृत्वं निषेधति ।

**कथं पुनः प्रत्येकमुभयसंपाद्ये द्वे क्रिये कथ्येते ? उच्यते । एकैका-पच्छेददशायां यादृशमेकैकगततत्फलं दृष्टं तथाभूतमेव द्वयोरपि अवगम्यत इति द्वयोरपि क्रियानुमानमविरुद्धम् ।** अतः समर्थितमिदं भगवतः काश्यपस्य सूत्रं "एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणं कर्म" इति । (1 - 1 - 17) कर्मलक्षणम् । तस्मात युगपज्ज्ञापितायामपि सिद्धमेकैकस्याधिकारहेतुत्वं तत्तद्धविः प्रति ।

**॥ १८ ॥ तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥ ५१ ॥**

इदमिदानीं चिन्त्यते । किं नैमित्तिकयोर्विकल्पः उत समुच्चय इति । यदा स्थितं यौगपद्ये(न) निमित्तद्वयमस्तीति तदा नैमित्तिकद्वये चिन्तोपपद्यते किं समुच्चयः उत विकल्प इति । तत्र विरोधात् विकल्प इति वदामः । सर्वस्वादाक्षिण्ययोः विरोधात् युगपदुपसंहर्तुमशक्यत्वात् विकल्प एव न्याय्य इति राद्धान्तः । **अथ कस्मात् तदनुरोधेन नैमित्तिकाङ्गद्वयानुरोधेन नावृत्तिः कल्प्यते प्रधानस्यैव, तेन द्वयमप्युपसंहरिष्यति ।**

परिहरति—**नाङ्गानुरोधेन ।** अथ कस्मात् द्विर्न प्रधानस्यावृत्तिर्युक्ता ? । प्रधानं हि अङ्गस्य प्रयोजनं नाङ्गं प्रधानस्य । तेनाङ्गानुरोधेन प्रधानस्यावृत्तिर्नोपपद्यते । अङ्गता चैवं विधानात् नैमित्तिकानामुक्ता वाचनिक्यां पुनः ततो द्वितीयं नैमित्तिकं भविष्यतीति चेत् । नेति [ ब्रूमः ना ] पच्छेदे(:)[प्रायश्चित्तयोः] समुच्चयः, प्रथम-प्रयोगाङ्गत्वेन(ा)निर्ज्ञानात् । यदेव हि प्रथमप्रयोगाङ्गतया विज्ञातं तदेव पुनः त(त्र)त्र कर्तव्यम्, न प्रथमप्रयोगे द्वयोरङ्गता, किन्त्वेकस्यैव । तेनाङ्गत्वाद्द्वितीयस्य पुनस्त(ाव)[त्राप्य]प्यननुप्रवेशः ।

ननु यथा व्रीहियवयोर्द्वयोरपि विनियोगादङ्गता तथेहापि द्वयोरङ्गता किमिति न भवति इति अत्राह—**प्रयोगेऽप्यधिकारद्वारा विनियुज्यते न कर्मणीत्युक्त-मभ्युदयेष्ट्यधिकरणे ।**

यत्पुनः निमित्तसम्बन्धेनाधिकारिणमाश्रित्य विधीयते तत्प्रयोगाङ्गतयैव विधीयते । न च प्रयोगे द्वयोरनुप्रवेशसंभवः । कर्मणि तु विरुद्धानामपि सम्भवो भवत्येव प्रयोगभेदाश्रयत्वेन । तस्माद्विकल्पः । एकैकस्य विनियोगादेकाङ्गतेति । सोऽयं शास्त्रविकल्पः ।

## ॥ १९ ॥ पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥

**केयमत्र बाधचिन्ता ।** अनेनासङ्गतिरुक्ता । **अयुक्ता च सा ।** अनेन युक्तिशून्यतोक्ता । अधिकारे तावद्बाधस्यानवसर एव । तेनात्रेयं चिन्ताऽसङ्गता । **कथमयुक्ता ? उत्तरं—शास्त्रार्थावधारणकाले हि बाधश्चिन्त्यते । अधि-कारद्वारकमिदं बाधचिन्तनम् । तच्च प्रयोगे । न चैकस्मिन् प्रयोगे विरुद्धद्वयस्यावकाशोऽस्ति तेन शास्त्रार्थावधारणायैवेयं चिन्ता । को बाध्यतामिति । न पुनरवधृते शास्त्रार्थे बाधश्चिन्त्यते दाशमिकमिव ।**

तथापि कथमयुक्ततेत्यत्राह—**शास्त्रार्थावधारणकाले हि नात्र पौर्वापर्यमस्ति एकैकस्य शास्त्रस्य स्वार्थबोधकत्वात् प्रयोगे तु।** तत्प्रयोगे च शक्याशक्यत्वे कृताकृतत्वे च। अत्र तन्त्रं प्रसङ्गो वा। एकमन्थेनाह—**युक्तं तावत् कृताकृतत्वे तन्त्रं प्रसङ्गो वा। तन्त्रं न प्रसङ्ग इति शक्यते वक्तुं कृतकृत्यत्वेन हि तन्त्रं भवति। प्रसङ्गश्च पुनरशक्तेः।** अशक्तिश्चात्र न चिन्त्यते। ननु मा (भूत्)भूतां तन्त्रप्रसङ्गौ बाधो भविष्यतीति। अत्राह—**बाधोऽपि चावधृते शास्त्रार्थे नैवोपपद्यते** तस्य बाधितुमशक्यत्वादिति तृतीये उक्तम्। उपसंहरति—**तस्मादन्य एवायं प्रयोग[ा]शक्तिजः प्रयोगबाधः। स चाधिकारे न सङ्गतः यतोऽयं प्रयोगबाधः।** तस्मान्नायं शास्त्रार्थस्य प्राप्तस्य बाधो न विनियोगो बाध्यते। नाप्यप्राप्तत्वं[1] शक्यते वक्तुं शास्त्रार्थस्य यथा तृतीये न प्राप्तिः। तन्त्रप्रसङ्गयोरभावः प्रदर्शित एव।

समर्थयते—**भवत्वयमन्य एव बाधप्रकारो न कश्चिद्दोष इति।** आक्षिपति—**कःपुनरस्याधिकारे प्रसङ्गः? अयमस्ति प्रसङ्गः—अधिकारस्तु प्रयोगाय भवति न कर्मज्ञानाय।** ज्ञाते हि कर्मण्यधिक्रियते। तेनाधिकारद्वारकमिदं प्रयोगान्तरं विधीयते इत्यत्रैव चिन्तितम्।

ननु यद्यपि प्रयोगायाधिकारः तथापि अधिकारशास्त्रार्थावधारणकाले नैव पौर्वापर्य[म]स्यास्ति। तस्मिंश्चासति कथं बाधः। मैवं वोचः, अधिकारशास्त्रं हि प्रतिप्रयोगमावर्तते। कर्मज्ञानशास्त्रवत् सकृदेवावगतार्थो भवति। यस्य च प्रतिप्रयोगमावृत्तिः तस्य प्रतिप्रयोगमेव शास्त्रार्थावधारणे[2]नैव पौर्वापर्ये सति प्रयोगोपपत्तौ, प्रयोगदशायां तयोरशक्यविषयं यत् द्वयोरधिकारशास्त्रयोः घटत एवार्थावधारणे बाध्यता(मि)इति।

**अत्र पूर्वपक्षवादी अनुपजातविरोधितया पूर्वस्यैव सत्यार्थतां मेने।** अनुपजातो विरोधो यस्य तस्यैव सत्यार्थता। उत्तरस्य तु तद्विरुद्ध एवार्थो नात्मानं लभते। **राद्धान्तवादी तु मन्यते—उत्तरस्याप्राप्तावयं हेतुः पूर्वस्यानुपजातविरोधिता।** [3]प्राप्तिर्हि उत्तरस्य अनुपजातविरोधितां पूर्वस्य विरुणद्धि न पुनः प्रयोगम्। इह च न प्राङ्निरोद्धुं शक्यते निमित्तस्य विद्यमानत्वात्। अशक्ते तु

1. अप्राप्तत्वे-मा 2. रणं 3. अप्रा-मा

प्रयोगः परं निवर्तते। ततश्चोत्तर एव प्रयोगः पूर्वस्य बाधको युक्तः। अपरःप्रयोगः पूर्वमबाधित्वा (अनेन) न प्रत्येतुं शक्यते न पुनः पूर्वः परमबाधित्वैव न प्रतीयते। अतोऽनुपजातविरोधितैवात्र प्रयोगे बाध्यत्वे हेतुः उपजातविरोधिता बाधकत्वे।

ननु पूर्वाधिकारे भूते उत्तराधिकारशास्त्रमेव[न]प्रवर्तते इत्यत्राह— **प्रतिप्रयोगावधारणीयं** चाधिकारशास्त्रमित्युक्तम्। अतः कालतोऽपि यत्रावधारणं दशमे तत्रोपजातविरोधितैव बाधकत्वे हेतुरिति दर्शितम्।

**यद्युपजातविरोधितयाऽयं बाधः तदा दाशमिक एवायं बाध इति पुनरत्रासङ्गतिः।** परिहरति—**सत्यं हेतुः न पुनर्द्वारतः।** उपजातविरोधिता योऽयं बाधे हेतुः सा तुल्ये तु दाशमिक एव स्यात् द्वारन्तु(स्तु)भिन्नम्। तत्र हि प्रयोज्यावधृतिः द्वारे हेतुः। इह न प्रयोगावधृतिरिति विशेषः। प्रयोज्यावधारणं प्रयोज्येऽपि तत्र कृतकार्यतया प्रयोज्यान्तरं बाधते। प्रयोगः प्रयोगान्तरं अशक्तेः, अधिकाराश्रया च चोदना प्रयोगविशेषः। चोदना कर्मस्वरूपचोदनेति प्रदर्शितम्। तेनेहैवायं बाधश्चिन्तनीय इति सर्वमुपपन्नम्।

तदयमत्र संक्षेपार्थः - पूर्वप्रयोगविशेषः स तस्मिन्नेव प्रयोगे विधीयते प्रतिपक्षाभावात् उत्तरमपि वाक्यबलेन प्रयोगान्तरं पूर्वोपमर्देन विवियुज्यत इति प्राप्तबाध एवायम्। यथा दशमेऽस्यान्तर्भावो न भवति तथाऽनन्तरमेवोक्तमिति।

**॥ २० ॥ यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् यथेतरस्मिन् ॥ ५५ ॥**

पूर्वं प्रतिहर्तुरपच्छेदे सर्ववेदसदक्षिणे प्रयोगे प्राप्ते **पश्चादुद्गातुरपच्छेदः तस्य बलीयस्त्वमुक्तम् अनन्तराधिकरणे। अदाक्षिण्यं चास्य प्रयोगस्य नैमित्तिकं; पुनस्ततः पूर्ववद्दक्षिणादानं च।** अनेन भाष्योक्तविषयः स्पष्टीकृतः।

तत्र संशयः। **तत्र तद्दद्यात् यत्पूर्वस्मिन् दास्यन् स्यादिति वचनबलात् किं प्रतिहर्तुरपच्छेदनिमित्तकं सर्ववेदसं दद्यात् उत प्रकृतमेव द्वादशशतमिति।** अनेनापि संशयः स्पष्टीकृतः।

**तत्र पूर्वपक्षवादी क्रतुनिमित्तकं स्वाभाविकं दास्यन्नित्युच्यत इति मन्वानो द्वादशशतं दद्यादित्युक्तवान्।** अस्यार्थः—यत् पूर्वस्मिन् प्रयोगे

देयत्वेन प्राप्तं तद्देयमित्युक्ते यत्स्वाभाविकं देयं तदेव प्रतीयते निरपेक्षत्वात्। न नैमित्तिकं निमित्तसापेक्षत्वात्। सापेक्षनिरपेक्षयोर्हि निरपेक्षे प्रतीतिः शीघ्रतरेति स्वाभाविकद्वादशशतमेव पुनस्ततो दातव्यम्।

**राद्धान्तस्तु प्रयोगाभिप्रायं दास्यन्नित्युच्यते, न कर्माभिप्रायम्** अस्यार्थः—[1]अत्र पूर्वस्मिन्नित्यनेन पूर्वशब्देन न कर्मोच्यते एकत्वात् कर्मणः पूर्वापरव्यपदेशाभावात्। किन्तु प्रयोग उच्यते। तेनायमर्थः—यत्पूर्वस्मिन् प्रयोगे दातव्यं तद्दद्यादिति। पूर्वप्रयोगे च प्रकृतिकर्तुरपच्छेदनिमित्तकं सर्ववेदसमेव तेनोत्तरस्यां क्रतौ देयम्।

**ननु च पूर्वदानाभिप्रायमेतत्, तत्र द्वादशशतमप्यस्ति। यत्किल पूर्वदाने देयं तदभिप्रेत्येदमुच्यते यत्पूर्वस्मिन् दास्यन् स्यात् तद्दद्यात् इति।** तत्र पूर्वं देयं द्वादशशतमप्यस्ति। पूर्वप्रयोगे हि विनियोगतो द्वादशशतमप्यस्ति सर्ववेदसं च। अतः कथं सर्ववेदसस्यैव दक्षिणात्वम्।

परिहरति—**यद्यपि द्वयमस्ति तथापि द्वयोरनुग्रहात् सर्ववेदसमेव।** तस्मिन् दीयमाने द्वयमपि दत्तं भवति। द्वादशशतादप्यधिकाभिप्रायः सर्ववेदसशब्द उक्तः। तेनोभयानुग्रहः। ऊने हि उभयानुग्रहो न भवेत्। एतच्चात्राभ्युपगम्यवादमात्रं तथापीति वचनात्। मूलयुक्तिमाह—**न चात्र पूर्वतामात्रमभिप्रेतम्। किन्तु स्वप्रयोगाभिप्रायैवेयं पूर्वता सा च सर्ववेदसदक्षिणैव।** अस्यार्थः—यस्यैव प्रयोगस्य यः पुनः स्तुतिः स एवात्र प्रयोगः पूर्वशब्देनोक्तः न पूर्वतामात्रम्। द्वादशशतप्रयोगश्च पूर्वतः। तदुपमर्देन तु प्रतिहर्तुरपच्छेदनिमित्तकः परतः सर्ववेदसदक्षिणः प्रयोगः। तस्यैवेयं पुनः स्तुतिरिति सर्ववेदसमेव देयम्।

**ननु सापि सर्ववेदसदक्षिणा तत्र बाधिता[न]किन्तु पूर्वप्रयोगे बाधिता** (न पुनरस्तीति युक्ते प्रयोगे) तत्र तद्दद्यादिति वचनात् सर्वथा न बाधिता किन्तु पूर्वप्रयोगे बाधिता पुनस्ततो देया। तस्मान्नात्र नैमित्तिकं बाधितम्। कालमात्रस्य तु अपहाण्या पूर्वप्रयोगे दक्षिणा सा[न]तदानीमेव देया। किन्तु पुनःस्तुतौ देया इति

---

1. यत्र-मा

कालमात्रस्योत्कर्षः । न दक्षिणाबाधः । ततश्च यैव सा प्रागभावी प्रतिहर्तुरपच्छेद-निमित्ता सैवोत्कृष्य दातव्येति ।

॥ २१ ॥ अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥ ५६ ॥

प्रयोगविषयत्वादधिकारस्य द्वादशाहविषयं च (यश्च) एकं प्रयोगं मन्वानः सर्वावृत्तिं पूर्वपक्षवादी मन्यते । पुनर्यज्ञेन यजेत इति प्रयोग-विषयोऽयं नैमित्तिकोऽधिकारः प्रयोगस्यावृत्तिमाह द्वादशा[हा]त्मकश्चाय-मेकप्रयोगः इति तस्यैवावृत्तिरिति पूर्वपक्षवाद्याह । राद्धान्तस्तु—कर्मविषय-त्वादधिकारस्य द्वादशाहे च कर्मभेदात् प्रतिकर्म नैमित्तिकमिति कर्मण एवावृत्तिः न कर्मगणस्य । यस्मिन्निमित्तमुपपद्यते तदीय एव प्रयोगः पुनरावर्तते । एककर्मणि चेदं निमित्तं, न कर्मगणे द्वादशाहे । एकैकानां कर्मणामवान्तरप्रयोगाश्च बहव एव, तेन कर्मण एकस्यैव प्रयोगावृत्तिः न कर्मगणस्य ।

अक्षरार्थस्तु—कर्मविषयत्वादधिकारस्य अधिक्रियतेऽनेनेति व्युत्पत्त्या निमित्त-मधिकारशब्देनोच्यते । अतः कर्मविषयत्वमधिकारस्यैवोक्तम् ।

इति ऋजुविमलायां षष्ठाध्यायस्य
पञ्चमः पादः

—: * :—

# ॥ षष्ठाध्यायस्य षष्ठः पादः ॥

॥ १ ॥ सन्निपातेऽवैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

इदानीमिदं श्रूयते—अधिकृतविशेषाणां श्रूयते । तत्र बहुकल्पेषु कर्मसु समानकल्पानामेवाधिकारः उत भिन्नकल्पानामपीति । अनुभाषितमाक्षिपति—ननु चाधिकृतविशेषश्रवणे संशय एव नास्ति । व[ा]सिष्ठादयोऽप्यधिकृतत्वेनैवात्र सम्बध्यन्ते, न कर्तृतया प्रथमोपनिपातित्वादधिकारस्य । ततश्च नाराशंसकल्पेनैव तेषामधिकारसिद्धिरिति । इतरेषां तनूनपात्कल्पेनेति समानकल्पानामेवाधिकारो युक्तः । न भिन्नकल्पानां वैगुण्यात् । समाधत्ते—सत्यं क्रत्वर्थानपायाद्भवति संशयः । अस्यार्थः—प्रयाजादयस्तावत्क्रत्वर्था एव । न पुरुषार्थाः । क्रतोश्चैतदुभयमङ्गम् । ततश्चैकानुष्ठानेऽपि क्रतोरवैगुण्यम् । अवैगुण्ये च क्रतोरधिकारसिद्धिरप्यधिकृतानामिति । अत्र चोदयति—क्रत्वर्थानपाये कथं पुनस्संशयः यावता भिन्नकल्पानामप्यधिकार इत्ययमेव पक्षः श्रेयानिति ।

उत्तरं—सत्यं न संशयः, विपर्ययमेव पूर्वपक्षवादी मन्यते । कथं ? क्रत्वर्थश्चेन्नापैति न वैगुण्यं शक्यते वक्तुम् । वैगुण्याच्चाधिकारविघातः स्वमनीषिकया । अस्मिंश्च पक्षे वसिष्ठादिश्रवणमनुवादमात्रम् । क्रतोर्वसिष्ठादिसम्बन्धित्वात् । यतः क्रतोरेकोपादानत्वेऽपि अवैगुण्येनायं पूर्वः पक्षः । एवं च सति कार्यसिद्धिः सामान्यमात्रतया शिरोवदिति प्रदर्शितम् । यथा ऋतपेये घृतव्रतविधानात् घृतदुहि निवृत्तायामन्ययापि गवा कार्यसिद्धिः । तथाऽन्येनापि द्वितीयेन प्रयाजेनान्यप्रयाजकार्यसिद्धिरित्येतावन्मात्रेणाशिरवदिति दृष्टान्तः ।

ननु अङ्गान्तरानुपसंहारे वैगुण्यमित्यत्राह—कार्यार्थत्वादुपदेशोपसंहारस्य तस्य कार्यसिद्धावनुपसंहारेऽपि अदोष इति । यद्वा उभयसंभवे नैकमपि निमित्तं भवतीति बृहद्रथन्तरवदिति प्रदर्शितम् । भिन्नकल्पोदयपुरुषसम्भवे वसिष्ठादयो विश्वामित्रादयश्च निमित्तं न भवन्ति एकैकस्य निमित्तत्वात् । यथा बृहत् रथन्तरं च प्रत्येकं निमित्तमिति एकस्य न निमित्तत्वमिति नैमित्तिकव्याघातः । अयमभिप्रायः—उपदेशोऽपि तावदनुपसंहार उक्तः । यद्वा

उपदेश एव भिन्नकल्पानां पुरुषाणां समाहारः नास्तीति। केन पुनर्विशेषेणा-शिखदिति यस्मात् यजमानसम्मितौदुम्बरी भवति इत्युपन्यस्तम्। अत्रापि कार्यसिद्धिस्तुल्यैव। उत्तरं—**सत्यं, किन्तु परिहारेऽभ्यधिका शङ्काऽस्ति।** तामनेन दृष्टान्तव्याजेनोपन्यस्य परिहर्तुं भेदेन पुनरुपन्यासः। का पुनरसौ? तामाह—**कारकतयैव किमिति यजमानशब्दो न प्रवर्तते 'ऋत्विग्वत्' तेन(न)क्रत्व-न्तरगतेनापि यजमानेन सम्मानं प्राप्नोति।** यदा स्वामितया यजमानशब्दो वर्तते तदा क्रत्वन्तरवर्तिना सम्मानं न भवति। तस्यास्वामित्वात्। कर्तृमात्रपरिग्रहे तु तस्यापि कर्तृत्वात तेनापि सम्मानं शक्यते कर्तुं तन्निराकरणार्थं दृष्टान्तान्तरो-पादानम्।

निराकरणमाह—**न कर्तृमात्रतया ग्रहणम् अधिकृतमुखेनोपादान-सम्भवात्। अधिकारपूर्वकमेव कर्तृत्वमिति तत्पुरस्सरमेव कर्तृत्वं परिगृह्यते।** तेनाधिकृतेन सम्मानं कर्तव्यमिति न क्रत्वन्तरगतयजमानान्तरपरिग्रहः आत्मनेपदानु-ग्रहाच्च स्वाम्येव ग्राह्यः। न कर्तृमात्रम्। अतोऽधिकृतो यजमान इति स्थितम्। उपादेयत्वात् सम्मानं प्रति बहवो न कुर्वन्तीति विशेषो दृष्टान्तेनोपादानस्य। प्रथमे पुनः शिरोवदिति व्याख्याने यथा पुरुषशीर्षमुपदधाति इति श्रवणात् स्मृतिबाधः। तथेहापि कल्पान्तरेण कल्पान्तरस्य बाधः इति। अस्मिन्नप्यप्राप्तिरेव द्रष्टव्या निमित्तो-पसंहारवत्। क्रत्वर्थत्वे हि शवशीर्षस्य स्पर्शने न प्रतिषेधः प्रवर्तते। तेन दृष्टान्ते-नात्राप्राप्तिरेव द्रष्टव्या। यथा निमित्तोपसंहारपक्षे प्राप्तौ च कल्पान्तरस्य प्रमाणं नास्तीति अयुक्तोऽयं पक्षः। अत एवापरितोषात् द्वितीया व्याख्या कृता।

**अत्राभिधीयते—नेदमाशिखदिति शक्यते वक्तुं, नापि निमित्तोप-संहारवत्।** एतदुक्तं भवति-नापि निमित्तोपसंहारवदप्राप्तिः, नाप्याशिखदिति कृत-कृत्यता सम्भवति। कथं तर्हि? अधिकृतविशेषणं हि एतत् वसिष्ठादीनां भृगूणामिति च। तथापि किमित्याह—**अधिकारद्वारं च प्रयोगे कर्मस्वरूपे सम्भवती-त्युक्तम्।** अधिकृतसम्बन्धेन प्रयोगविशेषोऽयं विधीयते न कर्मस्वरूपम्। तथा च प्रयोगे कृतकृत्यताप्राप्तिरपि नास्तीति समानकल्पानामेवाधिकारः एकप्रयोगत्वादिति स्थितम्।

**॥ २ ॥ वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥**

राजपुरोहितौ सायुज्यकामौ यजेयातामिति श्रूयते। तत्र संशयः—किं समासार्थात् द्विवचनं उत प्रातिपदिकार्थादिति। यदि समासार्थद्वित्वे द्विवचनं तदा राज्ञः पुरोहितौ द्वौ यजेयातां (उत)प्रातिपदिकार्थद्वित्वे तदा राजा पुरोहितश्च यजेयातामिति।

**ननु इतरस्मिन्नपि पक्षे समासार्थादेव द्विवचनं द्वन्द्वोऽपि हि समास एव।** उत्तरं—**सत्यं समासः न तु समासार्थे द्विवचनं, समासिनावेव द्विवचनार्थेन सम्बध्येते इतरेतरयुक्तौ।** इतरेतरयोगे हि द्वयोर्द्वन्द्वः। तत्र समासवर्तिभिः पदैः स्वार्थाः इतरेतरयुक्ता एव प्रतिपाद्यन्ते। न पुनः पदद्वयेन कश्चिदर्थः प्रतिपाद्यते। यद्गतं तद्‌द्वित्वं हि वचनेनोच्यते। यत्र पुनः समासार्थ एव द्विवचनं तत्रैकवचनमेव भवति। यथा समाहारे। समाहारे हि यो द्वन्द्वः तत्र समाह्रियमाणमर्थद्वयं समाहारलक्षणार्थमुच्यते। ततश्च तस्यैकार्थ्यात् एकवचनमेव भवति समाहारे। समाहारे हि यो द्वन्द्वः तत्र समाह्रियमाणे(म)र्थे द्विवचनग्रहणं द्विवचनोपलक्षणार्थम्।

नन्वेवमितरेतरयोगस्यापि एकत्वादेकवचनं प्राप्नोति। न च दृश्यते, के[ते]नाभिप्रायेण पृच्छति—**किमिति इतरेतरयोगो न समासार्थः** येन तत्रैकवचनं न भवति। अथ समासार्थेऽपि तस्मिन्नेकवचनं न भवति समाहारेऽपि न स्यादिति भावः। उत्तरं—**न समासार्थ इति ब्रूमः उपाधिमात्रं हि स तदा भवति समासिनावेवेतरेतरयुक्तः [क्तौ] समासार्थः** समाससंज्ञकाभ्यां पदाभ्यामुच्यते। यत एवेतरेतरयोगे समासिनावेवोच्येते, अत एव च युगपदधिकारणता एकशेषश्च एवंविधविषय एव न समाहारविषयः।

कथं पुनर्युगपदधिकरणवचनता? न तावत् वाचकवृत्त्या, सम्बन्धग्रहणाभावात्। पदान्तरप्रयोगवैयर्थ्याच्च। न च लक्षणावृत्तिः सम्भवति अनुपपत्तेरभावात्। स्वार्थहानप्रसङ्गाच्च। अत्रोच्यते। लक्षणावृत्त्या युगपदधिकरणवचनता। तथा हि-धवखदिरौ हि च्छिन्धि इत्यत्र धवशब्दो धवमात्रं ब्रवीति स धवार्थः, खदिरसहितां स्वावस्थां लक्षयति अवस्थावस्थावतोः सम्बन्धात। द्विवचनश्रवणं चानुपपद्यमानं लक्षणाहेतुः। तर्हि प्रातिपदिकार्थद्वित्वे सम्भवति। न च द्वन्द्वे पदद्वयव्यतिरेकी द्विशब्दोऽस्ति। समासपदे एव सहितावस्थस्वार्थमात्रप्रतिपादनपरे। तदा तयोरपि प्रत्येकं द्वित्वाभावात् किमाश्रित्य घटतां द्विवचनम्। यदा तु समासपदे इतरेतरयुक्तस्वार्थप्रतिपादनपरे भवतः, तदा तथाभूतयोरर्थयोः द्वित्वं समवेतमिति द्वि-

चनोपपत्तिः। समासे तु प्रत्येकपदाभिहितयोरर्थयोः समाहारलक्षणत्वादुपपन्नमेक-वचनमिति न युगपदधिकरणवचनतायां प्रमाणमस्ति। एकशेषे च तन्त्राभिधानात्[न] परस्परसहितार्थप्रतिपत्तिः। इतरेतरयोगे च परस्परसहितार्थप्रतिपत्तिरिति तदपवाद एकशेषः तद्विषय एव, न समाहारविषयो द्वन्द्वः पक्षे।

यदा युगपदधिकरणबलात् इदमापद्यते उक्तेन न्यायेन सहितवचनता, एवं चेत् पुरोहितार्थगतमेव द्वित्वं न्याय्यम्। अन्यथा हि पुरोहितशब्दो राजन्यपि स्यात्। तत्र लक्षणाप्रसङ्गः स्यात्। कथं पुनरेकस्मिन्नेवोच्चारणे पुरोहिते राजनि च वर्तमानः पुरोहितशब्दो लक्षणया वर्तत इति शक्यते वक्तुम्। **पुरोहिते तु श्रौत एव सः। न च श्रौतो लाक्षणिकश्च सकृदुच्चारितो भवति।** परिहरति—**सत्यं युगपदधिकरणश्रवणबलादिदमापद्यते। उक्तेन न्यायेन यदा सहितावस्था-लक्षणत्वेन युगपदधिकरणं तदा श्रौते लाक्षणिके च तात्पर्यं भवति।** परमार्थतश्च यत्र श्रौतार्थः लाक्षणिक एव। तथा च दर्शितं धवखदिरौ चेति। न हि युगपदधिकरणवचनतां विना द्विवचनमुपपद्यते। अतः श्रौते संभवत्यपि लक्षणामङ्गी-कृत्य हेयत्वेनायं पक्षः उपन्यस्यते। यद्यपि पुरोहितार्थोऽप्यस्ति तथापि लक्षणा प्राप्नोतीति। अनेन दोषेण पूर्वपक्षवादिना हेयत्वेनायं द्वन्द्वपक्ष उपन्यस्तः।

**ननु वसानौ इति द्वित्वं पुंस्त्वं च एषशब्दो व्यभिचरति एवमत्रापि पुरोहितद्वित्वं चैषशब्दो न व्यभिचरतीति** द्वितीयेऽर्थे प्रतिपादकत्वात् नैव लक्षणाप्रसङ्ग इति। परिहरति—**वचनाभिप्रायः। तदुक्तं पुंस्त्वं द्वित्वं च औकारान्तद्विवचनं न व्यभिचरतीत्युक्तम्।** न प्रातिपदिकाभिप्रायम्। प्रातिपदिकस्य हि युगपदधिकरणत्वेन विना द्विवचनानुपपत्तिः। यथा राजपुरोहितं चेति। तेन यत्र द्विवचनं तेन प्रातिपदिकेन इतरेतरयुक्तः स्वार्थः प्रतिपादनीयः। न च लक्षणां विना तदुपपद्यते। तस्मात्सुष्ठूच्यते लक्षणेति। लक्षणात्वे हेयोऽयं पक्ष इति पूर्वः पक्षः।

**ननु षष्ठीसमासपक्षेऽपि राजशब्दो लाक्षणिक एव षष्ठ्यर्थलक्षकत्वात्।**

परिहरति—**भवति। का नो हानिः? पुरोहितशब्दमङ्गीकृत्य लक्षणा-त्वेन न हातव्योऽयं पक्ष इत्युक्तम्।**

ननु च षष्ठीसमासपक्षेऽपि तस्य लक्षणात्वमन्यपरत्वादित्याह—**उत्तरपद-प्रधानोऽयं षष्ठीसमास इति ।**

**एवं प्राप्तेऽभिधीयते—सत्यमेवम् । किन्तु एकत्वात् पुरोहितस्य षष्ठीसमासेऽपि द्विवचनानुपपत्तिरेव सम्बन्धिशब्दत्वात् पुरोहितशब्दस्य द्वयोः सम्बन्धित्वेनाभावात् ।** अस्यार्थः—पुरोहितशब्दोऽयं सम्बन्धिशब्दोऽयम् । न चैकस्य राज्ञो द्वौ पुरोहितौ सम्बन्धिनौ सम्भवतः । तेन षष्ठीसमासेऽपि अर्थाभावात् द्विवचनानुपपत्तिरेव । तेन वरं लक्षणैवाश्रीयतां द्विवचनोपपत्त्यर्थम् ।

ननु च विनियोगदर्शनात् द्वौ पुरोहितौ भविष्यतः यथा अञ्जलिविधानात् द्वौ हस्तौ व्यापार्येते तत्राह—**यत्पुनरञ्जलिवत् इत्युक्तं तदत्र न सम्भवति । असम्बन्धितयैव द्वितीयस्य सम्बन्धिनोऽभावात् । पुरोहितं वृणीत इत्येकवचनश्रवणात् ।** ननु भवतु सम्बन्धिशब्दः पुरोहितशब्दः कार्यान्तरेऽपि नियोग एव सम्बन्धितामापादयिष्यति । यो यस्य राज्ञः तानि तानि कर्माणि करोति स तस्य पुरोहितो भवति इति सम्बन्धिद्वयसम्भवात् तत्राह—**उत्पत्तिश्च सम्बन्धे हेतुः न कार्ये विनियोगः एतदपेक्षत्वाद्विनियोगस्य ।** अस्यार्थः-वरणोत्पन्नः पुरोहितो भवति न पुनः कार्यान्तरविनियोज्यः पुरोहितत्वापेक्षत्वात् कार्यान्तरविनियोगस्य । तदत्र सङ्ग्रहार्थः—विनियोगतः पुरोहितत्वं तस्य तु वरणेनोपसङ्ग्रहः । ततश्च द्वयोर्विनियोगदर्शनात् द्वयोः सङ्ग्रहः विनियोगार्थत्वात् सङ्ग्रहस्येति पूर्वः पक्षः ।

राद्धान्तस्तु पुरोहितस्य सतः विनियोगानुवृत्तित एव पुरोहितत्वम् । उत्पत्तौ च एकवचनश्रवणात् एक एवोत्पद्यत इति द्वयोः राज्ञोः सम्बन्धिनोः पुरोहितयोः सायुज्यं न भवतीति प्रदर्शितं भाष्ये । तस्माल्लक्षणैवात्र ज्यायसी अर्थसम्भवात् । **लिङ्गमुक्तम् ।**

**॥ ३ ॥ सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥**

**ननु च सर्ववर्णानामिति नोपपद्यते आर्त्विज्ये यजमानश्रवणात् ।** अस्यार्थः-प्रकृतौ ब्राह्मणकर्तृकमार्त्विज्यं प्रतिपन्नम् । इह तु आर्त्विज्ये यजमानः कर्तृत्वेनोच्यते 'ये यजमानास्त ऋत्विज' इति श्रवणात् । यद्यब्राह्मणोऽपि सत्रेऽधि-

कारी स्यात् तदा तस्यार्त्विज्ये कर्तृत्वे सति ब्राह्मणकर्तृत्वं बाध्येत। ब्राह्मणे ह्यधिकारिणि न कश्चिद्बाध्यते। नचाबाधेनोपदेशोपपत्तौ बाधो न्याय्य इति ब्राह्मणानामेवाधिकारो युक्तः सत्रेषु।

न चेयं वचनव्यक्तिरत्र चिन्त्यते—किं ये यजमानाः त ऋत्विज इति यजमानोद्देशेनार्त्विज्यं संस्कारकतया विधीयते उत आर्त्विज्ये यजमानाः कर्तृत्वेन विधीयन्त इति।

तत्र यदि यजमानसंस्कारः तदा आर्त्विज्यं ऋत्विग्भिरेव कर्तव्यमिति सर्ववर्णानामधिकारो भवेत्। यदि तु यजमानानामार्त्विज्ये कर्तृत्वविधिः तदा ब्राह्मणानां पूर्वोक्तन्यायेनाधिकार इति। तेन प्राप्यवचनव्यवस्थाश्रयणेन सर्ववर्णानामधिकारशङ्का युक्तैव। न चेयमिह चिन्ता युक्ता कर्तुं, अधिकारलक्षणेऽसङ्गतत्वाद्विनियोगनिर्णयस्य। तस्मादसङ्गतत्ववादिनां चिन्तां विना पूर्वपक्षो निर्युक्तिक इव प्रतिभाति।

उच्यते। **अयमभिप्रायः पूर्वपक्षवादिनः, यथाधिकारमङ्गवचनं तत्पूर्वकत्वात् स्वयंकर्तृभावस्य।** अस्यार्थः-यजमानानां सकामार्त्विज्यविधानात् विनियोगः। यजमानानां यजमानता च सत्यधिकारे। तेन पूर्वसिद्धाधिकारोपजीवित्वात् अयमङ्गविधानस्य अधिकारवशेन वर्णनम्[न] पुनरेतद्वशेनाधिकारः। अधिकारश्च स्वरूपतस्त्रयाणां नाम विभाति। तेषां चार्त्विज्येऽपि विनियोग इति उपदेशनातिदेशिकी ब्राह्मणकर्तृता बाध्यते। तथा च लिङ्गं ब्रह्मसामविधाने वर्णत्रयदर्शनम्।

**अत्रोच्यते**—केन वोक्तं यथाधिकारमङ्गवचनम् इति। किन्तु नाधिकारोऽधिकारान्तरं निवर्तयितुं क्षमः बाधकारणाभावात् असावप्यधिकार एव ब्राह्मणानामार्त्विज्यमिति ब्राह्मणकर्तृकत्वेनार्त्विज्यं इति श्रूयते। आर्त्विज्यशब्देन ऋत्विक्कर्माण्युच्यन्ते। "यद्यत् ब्राह्मणकर्म तदुक्तं....कर्म हीनेन न कर्तव्यं" इति स्मरणात् क्षत्रियवैश्ययोः निषिध्यते। नायमार्त्विज्ये निषादाधिकारो यथा नातिक्रम्यते तथा सत्रेष्वधिकारो वर्णनीयः। न चात्र क्रत्वर्थतया विषयभेदेनाधिकारद्वयाविरोधः। द्वयोरप्यधिकारयोः पुरुषार्थत्वात्। यद्यपि च सत्रेषु नाङ्गानि ऋत्विक्कर्तृकाणि तथापि तान्यार्त्विजान्येव प्रकृतौ तेषामार्त्विज्येन ज्ञातत्वात् तद्देवतावत्। इदमधिकरणं आर्त्विज्ये यजमानमाश्रित्य वर्णितम्।

यत्पुनरत्र भाष्ये आर्त्विज्येन यजमानसंस्कारनिराकरणं तत्प्रतिकरोति— **यदि परमार्त्विज्यं अदृष्टायैव चोद्यते स्वामिनाम्** । अस्यार्थः -यदि स्वामिनामदृष्टाय संस्कारायार्त्विज्यं चोद्यते तदा एवं सति सत्रे सर्वेषामधिकारः स्यात् । न च तदस्तीत्युक्तं भाष्ये । तस्मादधिकारानुरोधेन ब्राह्मणानामेव सत्रेष्वधिकार इति सिद्धम् । दर्शनमहीने चरितार्थम् । तत्र वर्णत्रयसम्भवात् ।

**।। ४ ।। वासिष्ठानां वा ब्रह्मत्वनियमात् ।। २४ ।।**

**ननु चेदमधिकरणं वचनमदृष्ट्वा पूर्वपक्षं कुर्वतामनारम्भणीयमेव ।** वैश्वामित्रो होतेति वचने सति वासिष्ठानामेव सत्रमिति पूर्वपक्षाभावात् नेदमधिकरणमारम्भणीयमेवेत्यर्थः ।

समाधत्ते—**सत्यमेवं, किन्त्वत्र कल्पान्तराशङ्कानिराकरणाय पूर्वपक्षप्रदर्शनम् । का पुनरत्र कल्पान्तराशङ्का ?** वासिष्ठे ब्रह्मणि होतापि वासिष्ठसमानकल्प एव भवतु वासिष्ठो वा । उभयथाप्यवैगुण्यात् । तथा होतर्यपि (वि)वैश्वामित्र एव तत्समानकल्पो वा भवत्वित्याशङ्कते—**द्वयोर्वचनयोर्विद्यमानत्वात् कल्पद्वयेन भवितव्यमिति ।** तन्निराकरणार्थमिदमधिकरणम् । न पुनर्वासिष्ठानां तत्समानकल्पानामेवाधिकार इति तन्निराकरणार्थमेतत् । वसिष्ठवचनस्यान्यार्थत्वेन निरस्ते वासिष्ठे पुनर्होत्रैव नियमो भवतीति सिद्धं अवासिष्ठानां अतत्समानकल्पानां च सत्रम् । वैश्वामित्रतत्समानकल्पानामेव सत्रमिति ।

**।। ५ ।। विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ।। २७ ।।**

**कथं पुनरनाहिताग्न्याशङ्का ? स्थिते स्वाग्निनिष्ठं कर्म कर्तव्यमिति न्याये परकीयानामग्नीनामाहवनीयत्वाभावात् ।** समाधत्ते—**लिङ्गदर्शनाशङ्कया प्रसङ्गं मन्वानस्य पूर्वः पक्षः ।** सारस्वते सत्रे "परस्थैर्वा एते स्वर्गं लोकं यन्ति येऽनाहिताग्नयः सत्रमासते" इत्यनाहिताग्नीनां सत्रदर्शनात् । तथा "अग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत् यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्" इति संसर्गदर्शनात् । आहवनीयेनैव कार्यनिष्पत्तेरपि अनाहिताग्नेरप्यधिकाराशङ्का ।

**अत्रोच्यते—नात्र प्रसङ्ग उपपद्यते तत्कार्यापरिज्ञानात् ।** यदि हि आहवनीयकार्यं ज्ञायते तदा परकीयेनापि तत्कृतमिति प्रसङ्गः स्यात् । न च

तज्ज्ञायते । होमनिर्वृत्तिः नाहवनीयकार्यं किं तर्हि अग्निद्रव्यमात्रस्य । लिङ्गस्य परिहारं वक्ष्यति । [1]पात्राणां पुनः स्वैः इत्यश्रवणात् पूर्वपक्षवादी प्रसङ्गं मन्वानो यस्य कस्यचिदिति ब्रवीति । अस्यार्थः—यथा स्वाग्निनिष्ठकर्म कर्तव्यमिति स्थिते प्रसङ्गो नास्ति तदा[था]तर्हि यत्र स्वैरिति न श्रूयते नापि न्यायतःप्राप्यते तत्र प्रसङ्गेन भवितव्यं यथा पात्रेषु इति । पूर्वोपजीवनेनोत्थानात् अन्तरागर्भिणीत्वम् ।

**राद्धान्तवादी तु सत्यमत्र प्रसङ्गो विद्यते स तु दीर्घकालत्वात् सत्राणां आयुषश्च परिमाणाज्ञानात् अन्यैरपि तदर्थमुत्पन्नैः कृतमेव तद्भवतीति पात्रान्तरोपादानमेव न्याय्यमिति । मन्यत इति सम्बन्धः ।**

सत्यमत्र प्रसङ्गो विद्यते स त्वयुक्त इति वाक्यशेषः । कुतः ? **दीर्घकालत्वात् सत्राणां, आयुषश्च परिमाणाज्ञानात्** कदाचित् सत्रेचेत् प्रवृत्ते व्यापद्येत योऽत्र स्थायी तस्य पात्राणां सत्रे व्यापृतानां प्रतिपत्तिलोपः स्यात् । प्रतिपत्तौ वा सत्रक्रियावैगुण्यम् । **अन्यैरपि** च सत्रार्थमुपात्तैः सत्रं **कृतमेव भवति** इत्यनया राद्धान्तवादी मन्यत इति योज्यम् । आधस्त्यस्य **लिङ्गमुक्तम् प्रायश्चित्तमापदि स्यादिति ।** सारस्वते दर्शनं तु भाष्ये न परिहृतम् ।

तत्राह—**सारस्वते दर्शनं तु सत्रे यद्यन्यथा नोपपद्यते तदा वचनं तर्हि भविष्यति । न च तावता सर्वाणि सत्राण्येवानाहिताग्नीनामपि भवेयुरिति भावः ।**

**॥ ७ ॥ पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्यात् यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन्नधिकारः स्यात् ॥ २६ ॥**

**कथं पुनः अध्वरकल्पादिषु सन्देहः सामान्येनाधिकारे श्रूयमाणे किं वैश्यस्यैवाधिकारः उत त्रयाणां वर्णानामपीति संशयः ।** इत्थं संश(ये)[यः] किमध्वरकल्पादिषु अधिकारो नियम्यते साप्तदश्यवचनेन वैश्यस्यैवाधिकारः उत पाञ्चदश्यप्रत्याम्नायेन साप्तदश्यं क्रत्वर्थतया चोद्यते इति । तत्र पूर्वपक्षवादी अधिकारनियमः साधीयान् इति मन्यते । साप्तदश्यं किल वैश्यनिमित्तकं तेनैतद्वचनेनैवं दर्श-

---

1. अत्र जुह्वादीनामप्रयुक्तत्वात् इत्यधिकरणारम्भो द्रष्टव्यः । अन्तरागर्भिणीत्वात् न पृथगुक्तिः ।

यति यथा साप्तदश्यं भवति तथा कुर्यादिति। वैश्ये चाधिकारिणि तद्भवति । तेन वैश्यमेव नियच्छति । ननु पाञ्चदश्यप्रत्याम्नायेन क्रत्वर्थतया साप्तदश्यविधिरेव[1] कस्मान्न भवतीत्यत्राह—**क्रत्वर्थे हि वैश्यकर्तृके साप्तदश्यस्य चोदकप्राप्तत्वान्न विधानं सम्भवतीति ।** न चात्र तत्पर्युदासः श्रूयते तेन विधिवैषम्यं स्यात् एकस्यैव विधेरनुवादकत्वं चेति । तस्मादधिकार एव कस्मान्न भवतीत्यधिकारनियमः ।

**राद्धान्तस्तु क्रत्वर्थेन स्वरूपविधिरवगम्यमानो नाधिकारं नियन्तुं क्षमः । ननु च वैश्यकर्तृके विधानं न सम्भवतीत्युक्तम् ।** समाधत्ते—**न सम्भवति यस्मान्न कार्यतः प्राप्तिरूपं विहन्ति ।** कार्यतो हि निमित्तसापेक्षा वैश्यकर्तृकेऽपि प्राप्तिः । उपदेशस्तु निमित्तानपेक्षतया विदधाति । यथा त्र्यनीकायां अन्योवतेष्वाम्नानं गुणार्थमित्याशङ्क्य निमित्तनिरपेक्षतया ऐन्द्रवायवाग्र[ता]विधानम् । तेन वैश्यकर्तृकेऽपि विधायकत्वमेव । यथा च तत्र वैकृते निमित्त[ा]भावेप्यनुष्ठानं भवतीति विधिप्रयोजनं तथेहापि ब्राह्मणराजन्यकर्तृके प्राप्तिः विधिप्रयोजनम् । तस्मात्सर्वेषामधिकार इति स्थितम् ।

एवं तावत् वचनश्रवणेनाधिकरणस्थितिः[2] ।

एकं प्रकृतौ सप्तदश वैश्यस्यानुब्रूयादिति , अपरमपि अध्वरकल्पायां सप्तदशसामिधेनीरनुब्रूयात् इति । तृतीयमाश्रित्य विचारं कुर्वन्ति तद्दूषयति—**अनारभ्य चिन्ता तु न शास्त्रतः कार्यतो वोपपद्यत इति नादृता ।** प्राकृतवचनं कार्यतः प्राप्तावुपयुज्यमानं चिन्तनीयम् । वैकृतं तु वचनं शास्त्रतः प्राप्तावुपयुज्यमानं चिन्तनीयम् । वैकृतं तु पुनरारभ्यवचनमिति तच्चिन्ता नादृता भाष्यकारेण ।

**इति ऋजुविमलायां षष्ठाध्यायस्य**
**षष्ठः पादः**

—: * :—

1. विधेरेव-मा 2. स्थितिकम्

# षष्ठाध्यायस्य सप्तमः पादः

## ॥ १ ॥ स्वदाने सर्वमविशेषात् ॥ १ ॥

विश्वजिति सर्ववेदसं श्रूयते । वेदसशब्दः स्वशब्दस्यार्थे वर्तते । स्वशब्दश्चायं ज्ञातिधनादिष्वविशिष्टः आत्मीयवचनोऽयं स्वशब्दः । आत्मीयत्वं च ज्ञातिधनादिष्वविशिष्टं इत्यविशेषेण सर्वत्र स्वशब्दो वर्तते । न च विशेषे किञ्चन प्रमाणमस्ति एतद्देयं एतन्नेति । सर्वशब्दश्रवणात् । तस्मद्यावदस्य स्वं तावत्सर्वमिति पूर्वः पक्षः ।

अत्र च सर्वस्यात्मीयस्य दानश्रवणात् ददातिः परस्वत्वापादने वर्तते न पुनः स्वत्यागे तस्याशक्यत्वात् । अत्र चोदयति – **कश्चिद्दाना(दा)भिमानी । ननु यथैवात्मनः स्वं तथैव परस्मा आपादनीयम्** । न च पित्रादयः परेभ्यः पितृत्वेनापादयितुं शक्यन्ते । उच्यते । **स्वं तावद्देयम् । दीयमानस्य च यथैव परस्वत्वापत्तिर्भवति तथैव परिकल्पनीयम्** । येन रूपेणात्मनः स्वता तेनापादयितुं न शक्यते [येन रूपेण शक्यते] तेनापादयिष्यते । न च कश्चिद्विरोधः ।

**राद्धान्तस्तु स्वशब्दस्तावदयं नैकार्थः सम्भवति स्वभावभेदात्** । अस्यार्थः—ज्ञातिधनात्मीयवचनोऽयं स्वशब्दः स चैकया शक्त्या न वर्तते । किं तर्हि गोशब्दवदनेकार्थः । अनात्मीये च ज्ञातौ धने च प्रयोगदर्शनात् ज्ञातिशब्दवत् धनशब्दवच्च । तथाऽऽत्मनि वर्तते आत्मीये च । नात्मनि श्रौतः आत्मीये लाक्षणिकः इति शक्यते वक्तुं विपरीतपक्षाणां सम्भवात् । तस्मादगृह्यमाणविशेषत्वादात्मनः आत्मीयस्यायं वाचकः । न चायमेकार्थवचनतयैव चतुर्ष्वपि प्रयोगं लभते स्वार्थभेदात् । ज्ञातिषु ज्ञातित्वात् स्वत्वं धने धनत्वं आत्मीये आत्मीयत्वं आत्मन्यात्मत्वमिति नैकं सामान्यमस्ति सर्वेषु अनेकार्थः स्वशब्दः न च युगपत् सर्वेषु वर्तते किन्तु कदाचित्कचिदिति । तत्र ददातिशब्दसम्बन्धात् धनविषय एव वर्तते । ददातिर्हि स्वत्यागे परस्वत्वापादनात्मके वर्तत इति दर्शितं चतुर्थे । धनविषये हि तथा सम्भवति तेन सर्वधनं देयमिति शास्त्रार्थः । तेन पित्रादयो न देयाः ।

युक्त्यन्तरमाह—**नचात्मज्ञात्यादिषु यः स्वशब्दार्थः स शक्यते परस्मा आपादयितुम् । अन्यथा हि आपाद्यमाने न स्वं परस्मा आपादितं भवति** ।

**स्वं सत् परस्मा आपादितं न भवति । किञ्च विशेषप्रमाणं चात्र विद्यते ।** अस्यार्थः—यद्यपि स्वशब्द आत्मीयार्थतयैव ज्ञातिधनादिषु वर्तते तथाप्यात्मीयविशेषेऽप्यत्र प्रमाणमस्ति । प्रकृतौ हि धनविषयमेव दानं तस्य चेयं सर्वता विधीयत इति धनविषयैव सा सर्वस्वता[ऽव]तिष्ठते । आत्मीयमपि दीयमानं धनमेव देयं नान्यत् प्रकृतिवदिति तस्यैवेयं सर्वस्वता विधीयत इति ।

**॥ २ ॥ न भूमिःस्यात् सर्वान् प्रत्यविशिष्टत्वात् ॥ ३ ॥**

**भूमौ स्वशब्दो भवति ।** भोग्यविषयं धनविषयमित्यर्थः । तेन देया भूमिरिति पूर्वः पक्षः ।

राद्धान्तमाह—**न तु सा परस्मा आपादयितुं शक्यते सर्वान् प्रत्यविशिष्टत्वादिति ।** अस्यार्थः—भूगोलकं गोपथराजमार्गजलादिसमन्वितं कृत्स्नमेव दातुं न शक्यते गोपथादीनां सर्वान् प्रत्यविशिष्टत्वात् यथा भूस्वामी तत्र स्वामी तथाऽन्योऽपि । गमनागमनादिभोगो हि तत्र स्वामिता, न परं स च सर्वेषामविशिष्टः । लौकिकं च स्वत्वम् । ये तु ग्रामादिकं ददति तेऽपि वास्तुक्षेत्रादिकमेव ददतीति मन्तव्यम् । ग्रामस्तु तदवच्छेदक इति निरवद्यम् ।

**॥ ३ ॥ अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥**

**अत्रापि प्रसज्यप्रतिषेधाशङ्कया पूर्वः पक्षः ।** अश्वा न देया इति प्रसज्यप्रतिषेधं मन्यते । तत्र विहितप्रतिषिद्धत्वात् विकल्पेन दानं सर्वदानमेव प्रसज्यप्रतिषेधे कारणम् । तथा सति पक्षेऽपि तावद्दानं भवति । **पर्युपदासेन राद्धान्तः । एकवाक्यत्वबलेनाश्ववर्जितं च सर्वं भविष्यति ।**

**॥ ४ ॥ नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥**

**अत्रापि सर्वशब्दानुरोधेन यावद्भोग्यं देयमिति मन्यते पूर्वपक्षवादी ।** शयनासनादीनि यावन्ति स्वशब्दवाच्यानि तानि सर्वाणि देयानीति । यस्य सर्वाणि न सन्ति तथापि क्रीत्वा क्रीत्वा दातव्यमिति पूर्वः पक्षः ।

**राद्धान्तवादी तु विद्यमानेनैव स्वेन स्वतोऽधिकारसिद्धेः नाविद्यमानोपादानमुत्सहते विधिः कर्तुम् ।** यावद्यस्य धनं तावतः सर्वत्वमुच्यते । सर्व-

शब्दोऽयं प्रकृतापेक्षः विद्यमानं चाधिकारिणः स्वं प्रकृतं नाविद्यमानमपि। तेन तस्यैव सर्वस्वमुच्यते। तावता च दत्तेनाधिकारसिद्धिरिति नापरमप्यविद्यमानमप्युपादाय दातव्यम्। **न चात्र दानचोदनेत्युक्तम्**। यदि हि स्वं प्रति दानं चोद्येत तदा स्वं दानेन सम्बन्धयितव्यमिति भवेदप्युपादानकल्पना। इह तु स्वेन दानं कर्तव्यमिति यथोपात्तेनापि कृते कृतमेवेति नोपादानकल्पनेत्युक्तं भाष्ये।

**॥ ५ ॥ शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥**

**धर्मोपनते चिन्ता — भोग्यत्वात् देयमाशङ्क्य न धर्मोपनतः परस्मै शक्यत आपादयितुं तदधीनत्वात् धर्मोपनतस्येति राद्धान्तः।**

अस्यार्थः—धर्मोपनतस्य भोग्यत्वात् देयतामाशङ्क्य न देय इति सिद्धान्तः। स हि धर्मशिक्षार्थं यस्मिन्नुपनतः तस्यैव भोग्यो नान्यस्य भोग्यः शक्यते वक्तुं तथा तस्यानुपनतत्वात्। स हि धर्मोपनतः उच्यते यो धर्मं ब्रुवाणस्योपनतः परिचारकबलेन। तस्मिंश्च स्वयमेव केवलं भोक्तृत्वम् न पुनः परमपि प्रत्युपादातुं शक्यते।

**॥ ६ ॥ दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥**

इदमिदानीं सन्दिह्यते — **किं यत्प्राक् दक्षिणाकालात् स्वं तदन्यत्र न विनियुज्यते यो(धर्मः) यच्च भविष्यतीति ज्ञायते तत्सर्वमेव देयं, उत दक्षिणाकालवर्त्येवेति।** मया विश्वजित्कर्तव्य इति ज्ञानादन्यत्र न विनियुक्ते तथा प्रमाणतया यस्य भाविनो निर्णयः तदपि देयम्। उत यथेष्टविनियुक्तशेषवर्तमानमेव देयमिति। तत्र भविष्यद्वर्तमानसर्वस्य भूतवर्तमानसर्वस्य च स्वशब्दार्थत्वात् देयतामाशङ्क्य अव्यवस्थानात् तत्कालवर्त्येव देयमित्यवगम्यत इति राद्धान्तः। व्यवस्थितो हि शास्त्रार्थो युक्तः तेन वर्तमानमेव सर्वं देयमिति राद्धान्तः।

**॥ ७ ॥ अशेषत्वात् तदन्तः स्यात् कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥**

**ननु च त्रिधाव्यवस्थानादचिन्तनीयमेवेदमधिकरणम्।** समाधत्ते — **सत्यं तथापि कर्मापेक्षो दानाधिकारः न दानापेक्षं कर्मेति इममर्थं प्रदर्शयितुमिदमुपन्यस्तम्** अस्यार्थः—विभागो नास्तीति कृत्वा न्यायव्युत्पादनमेवैतत् क्रियते। तत्र पूर्वपक्षवादी दानापेक्षं कर्मेति मन्यते। सर्वस्वं हि साक्षाद्देयत्वेनोप-

देशेन विहितं भवति। दत्ते च तस्मिन् द्रव्यसाध्यत्वात् कर्मणः तदन्ततैव युक्ता न शेषयितव्यं किञ्चित्कार्यार्थमिति शक्यते वक्तुम् तेषां कर्मणां चोदकप्राप्तानामुपदेशबाधेऽसमर्थत्वात्।

**राद्धान्तस्तु कर्मानुष्ठानार्थं सहायान्वेषणार्थं च दानमिति प्रधानभूतकर्मानुरोधेन (न)दानशास्त्रं वर्णयितव्यम्।** तेन क्रत्वर्थव्यतिरिक्तद्रव्यमेव सर्वं देयमिति। द्रव्यविभागस्तु उदाहरणापेक्षया द्रष्टव्यः। अत्रोदाहरणे त्रेधाव्यवस्थापनात् तदपेक्षोऽयमुदाहरणेऽपरो विशेष इति प्रदर्शयितुं विभाग उपन्यस्तः। न न्यायावलोपितया। तस्मादनवद्यम्।

**॥ ८ ॥ अहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषात् ॥ १४ ॥**

**कथं पुनः नाम्ना धर्मातिदेशे बलीयसि द्वादशशताशङ्का?** सप्तमाद्ये नाम्ना धर्माणां पदार्थानामतिदेशो बलीयान् लिङ्गेन धर्मातिदेशात् इत्युक्तमिति पूर्वपक्षो नोपपद्यते। उत्तरं—**गणधर्मापेक्षया। गणो हि गणस्य धर्मानपेक्षते इति गणान्तः पातिन एव धर्मो न्याय्यः अपेक्षितत्वात्।** तेन द्वादशाहिक एव विध्यन्तो युक्तो नैकाहिक इति। एका चेयं गणचोदना। तेन गणधर्माकाङ्क्षा। तस्मात् सर्वेषां द्वादशशतं दक्षिणेति तुल्यो दानाधिकारः। अधिकारशब्दं प्रक्षिप्य लक्षणे सङ्गतिमाह।

**राद्धान्तस्तु—सत्यमेका गणचोदना चोदनीयास्तु भिद्यन्ते तदपेक्षया च धर्मग्रहणम्।** अस्यार्थः - यद्यप्येका चोदना तथापि चोदनीयानां कर्मणां भेदात् तदपेक्षयाचाधिकारविधेः धर्मग्रहणं करणान्यपेक्ष्य चाधिकारविधिः धर्मान् गृह्णाति। बहूनि चैतानि करणानीति तदपेक्षया प्रत्येकं धर्मातिदेशः तत्र कस्यचिन्नाम्ना, कस्यचिल्लिङ्गेनेति। तस्मात् नामैव बलवत्।

**कथं पुनरितरेषां दक्षिणा।** यदि सर्वस्वं एकस्मिन्नहनि दक्षिणा, अन्यत्र द्वादशशतं एकया च दक्षिणया भवितव्यमिति दशमे स्थापितम्। अतो विरोधात् कथमितरेषां दक्षिणा। उत्तरन्यायान्तरमिदं चिन्त्यते - **विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स्वधर्मत्वमित्यत्र।**

**॥ ९ ॥ विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥**

**ननु च नियमविधौ सति सर्वदानं द्वादशशताभ्यधिकेनैव सर्वस्वदानेनाधिकृत इति वक्तव्यम् । किमिदं समेन वेत्युच्यते ।** अस्यार्थः - भाष्यकारेणात्र विधान एवमुच्यते—द्वादशशताधिकेन तत्समेन वाऽधिक्रियत इति । तदनुपपन्नम् । यस्मात् प्रकृतौ द्वादशशतं विधायाह—एवं वा ऋत्विज आगमयितव्याः अपि वा सर्वस्वेनेति । एवं चोक्ते द्वादशशताधिकमेव सर्वस्वं प्रतीयते । ये हि द्वादशशतेन[1] नानमन्ते न तरां ते न्यूनेन । तेनाधिकं सर्वस्वं तच्च विश्वजिति नियम्यते । तेनाधिकेनैव सर्वस्वेनाप्यधिकारो न द्वादशशतसमानेनेति ।

**अत्राभिधीयते—समग्रहणमानत्यन्तरापेक्षया न द्वादशशतापेक्षयेत्यदोषः ।** अस्यार्थः—'योऽयं तत्तुल्यया दक्षिणयाऽधिकार' इत्यूचे स आनन्त्यन्तरापेक्षया तत्तुल्यमित्यनेनाभिप्रायेण तत्तुल्याधिकार इत्युच्यते । न द्वाद्वशशतापेक्षया द्वादशशताधिकमेव किञ्चित् आनतितुल्यत्वात्तुल्यमित्यदोषः ।

**॥ १० ॥ अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेधः तच्छ्रुतित्वात् ॥ २१ ॥**

**नार्थलोपेनात्र पूर्वः पक्षः ।** अस्यार्थः—यद्यत्रापरिमितशब्देन तावत् यस्य परिमाणं नास्ति तदवयवानुसारेणोच्यते न तस्य दानासम्भवः सर्वस्य दीयमानस्य परिमाणसम्भवात् । अथावयवार्थतिरस्कारेण अपरिमितशब्देन बह्वुच्यते तदा अवयवार्थत्याग एव दोषः । तेनावयवार्थक्षोभेन परिमितं न देयं इत्यत्रार्थः । असमर्थसमासाश्रयणेऽपि अवयवार्थानुग्रह एव हेतुरिति पूर्वः पक्षः । **दानचोदनाप्रकरणात् श्रुतिश्चोपपन्नतरेति राद्धान्तः ।** 'एका देया' इत्यादयः दानचोदनाः प्रकृताः तत्समीपे च अपरिमितं देयमिति । तेन दानचोदनासाहचर्यात् इयमपि दानचोदनैवेति मन्तव्यम् । तेन अपरिमितं देयमित्येवं सम्बन्धः । समासश्रुतिश्चोपपन्नतरा । समर्थसमासो हि श्रुतित एवावगम्यते । तेन अपरिमितं देयमित्यर्थः । अपरिमितशब्देन बह्वन्युच्यन्ते ।

ननु चैवं सति अवयवार्थलोपः प्राप्नोति इति पूर्वपक्षवारणम् । राद्धान्तमाह—**प्राप्तस्य प्राप्तिरित्यपेशलम् ।** लोके हि अपरिमितशब्देन बह्वन्युच्यन्ते अपरिमितमस्य धनमिति बह्विति गम्यते । तेनावयवार्थलोपेन दर्शनात् नायं दोष इति । **तथा च प्रवीणादिषु दृष्टम् ।** प्रवीणकुशलशब्दानां रूढित्वं दृष्टम् । प्रवीण-

---

1. द्वादशेन-मा

शब्दो हि न गौण इति शक्यते वक्तुम् । वीणावादनगुणयोगेन हि वर्तमानः प्रकर्ष एव केवलेन व्यवतिष्ठते । तस्मात्तत्रारोहन् रूढ इत्युच्यते । एवमप्यपरिमित-शब्दोऽप्याधिक्य एव वर्तमानो रूढ इति ।

॥ ११ ॥ अनियमोऽविशेषात् ॥ २३ ॥

**आपेक्षिकत्वात् बह्वर्थस्य सहस्रस्य प्रकृतत्वात् तदभ्यधिकमिति न्याय्यम्** । तत्किलापेक्षितं यत्प्रतियोग्यपेक्षं तस्मिन् सन्निहिते सम्भवति तदपेक्ष-मेवाभ्यधिकत्वं प्रतीयत इति ।

॥ १२ ॥ परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥

अत्र चिन्त्यते—**किमेवमधिकारविधयोऽथवा क्रत्वर्थानामेव स्तुति-रिति** । माषादीनां सङ्कीर्तनं किमधिकारप्रदर्शनार्थं उताराण्यादिस्तुत्यर्थमिति सन्देहः । पुरुषसंयोगादधिकार इति पूर्वपक्षवादिनोऽभिप्रायः । अन्यथा हि पुरुष-श्रवणं सविशेषणमनर्थकं स्यात् बह्वर्थत्वाद्धि[1] पुरुषसङ्कीर्तनं गोत्रविशेषेण सङ्कितं स्तुतिमात्रत्वेऽनर्थकं भवति । विकारार्थत्वे सार्थकमित्यधिकारविधिरेव ।

ननु 'निवीतं मनुष्याणां' इत्यनेन तत्रापि पुरुषसम्बन्धात् विधित्वमाशङ्क्य स्तुतित्वं दर्शितम् इहापि तथैवेति । नेति ब्रूमः । तत्र पुरुषविनियोगः क्रतुविनियोगे बाधितः कर्मान्तराश्रयणात् । क्रतुप्रकरणे क्रतुरेव कार्यं प्रतिभाति । तत्र पुरुष-धर्मत्वं स्यात् तेन पुरुषसंयोगोऽर्थवादमात्रम् । इह पुनरधिकारमुखेन क्रत्वर्थविघात उपपद्यते । अधिकारेऽपि माषादीनां क्रत्वर्थत्वादिति चिन्त्यते । अतः पुरुष-श्रवणात् क्रतोश्चाविघातात् अधिकारविधिरेवायम् । विशेषतस्तु तद्गोत्राणां सामान्यतो वा अतद्गोत्राणामपि सामान्यत एव वा विशेषस्य स्तुत्युपयोगित्वादिति । यस्मा-द्वार्ष्ण्येनैवं कृतं तस्मादन्योऽपि तत्कुर्यात् इति सामान्यत एवायं सिद्धिः ।

**एवं प्राप्तेऽभिधीयते—सत्यं न क्रतुना विरोधः न पुनरधिकारान्तरं प्रत्येतुमेव शक्यते तदवगमात्** पाकादय एवं कुर्वन्तीत्येतावन्मात्रमत्र श्रूयते, न

---

1. त्वादि - मा

पुनरन्योऽप्येवं कुर्यादिति तेनाधिकारावगमात् आरण्यव्यतिरिक्ताधिकारान्तरावगमात् न माषादिविषयमधिकारान्तरं प्रत्येतुं शक्यते। ननु च माषपाकादिसङ्कीर्तनमनर्थकमित्याशङ्क्याह – **विनियोगस्य च विनियोगान्तरेणैकवाक्यत्वात्।** स्तुत्यर्थत्वात् आरण्यविनियोगेनैकवाक्यत्वात् स्तुत्यर्थमेव माषमात्रे पाकादिकीर्तनम्। **अतो न विषयतः** न नियोगत इत्यर्थः। विनियोगो हि नियोगस्य विषयः तथापि नियोगतः साक्षाद्विध्यश्रवणात् नाधिकारस्य नानात्वं शक्यते प्रतिपत्तुम्। तस्मात् स्तुतिरेवेति न्याय्यम्।

**॥ १३ ॥ सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु ॥ ३१ ॥**

**कथं पुनरत्र त्रिवृत इति श्रवणात् संशब्दार्थाशङ्का?** अस्यार्थः—यद्यपि पञ्चाशतः त्रिवृतः संवत्सरा इति संवत्सरशब्दः श्रूयते तथापि त्रिवृत इति श्रवणात् अहान्येव प्रतीयन्ते त्रिवृच्छब्दोऽहन्येव वर्तितुं शक्नोति त्रिवृत्स्तोत्रमुखेन सवनार्थोपसंहारात् अहरेव प्रतीयते। संवत्सरशब्दोऽपि अहस्स्वेव नामधेयत्वोपपत्त्यर्थो द्रष्टव्यः। अतः कथं संवत्सरशब्दार्थ इत्याशङ्कते। **उच्यते। द्वादशाहवदेतत् भविष्यति इति।** यथा द्वादशाहेन यजेत इत्यत्र त्रिवृदादयः शब्दाः स्तोत्रवचना अपि अहर्द्वारेण सम्बध्यन्ते एवमत्रापि पञ्चाशतः त्रिवृतः संवत्सरा इति **यावद्भिः अहोभिः त्रिवृद्भिः पूर्यते तावता त्रिवृतामह्ना त्रिवृता इति व्यपदेशो भवतीति पूर्वपक्षवादी मन्यते।** अस्यार्थः—द्वादशाहेन यजेतेत्यत्राधिकारवाक्ये अहश्शब्दश्रवणात् उत्पत्तौ त्रिवृदादयः शब्दाः अहान्येवोपलक्षयन्ति तथापि अधिकारवाक्ये संवत्सरश्रवणात् उत्पत्तौ त्रिवृदादयः शब्दाः यावद्भिरहोभिः संवत्सराणां पञ्चानां पञ्चाशता पूरणं भवति तावत्सु वर्तते। तेषामपि स्तोत्रयोगित्वात्। अत एव चोत्पत्तावपि संवत्सर[1]शब्दसामानाधिकरणात् त्रिवृदादिशब्दानाम्। अतः सहस्रसंवत्सरयोगिन्यधिकारे स्थिते सहस्रसंवत्सरश्रवणात् नूनं केचिद्दीर्घायुषो विद्यन्त इति गन्धर्वाद्युपन्यासः। नह्याशङ्कनीयमर्थं वेदो विदध्यादिति न्यायात् विधिबलादेव दीर्घायुषः कल्पनीयाः। एवं रसायनकुलकल्पार्धतृतीयशताद्युपन्यासः। तुल्यत्वाददृष्टकल्पनायां यदा द्राघिष्ठं अदृष्टानां कल्पनम्। तथा रसायनस्यापि ज्योग्जीवितत्व[वकत्व]कल्पनं तथा कुलकल्पना अर्धतृतीयशतपुरुषाधिकारकल्पना।

---

1. शब्दादसा-मा

एवं प्राप्तेऽभिधीयते—त्रिवृतः संवत्सरा इति हि श्रूयते न त्रिवृतां संवत्सरा इति। यदि त्रिवृतां संवत्सरा इति श्रूयते ततः त्रिवृच्छब्देन अहकेन सह सम्बन्धोऽवकल्पते। यदा तु त्रिवृत इति अहान्युच्यन्ते तदा संवत्सरशब्देन मुख्यसामानाधिकरण्यं न भवतीति त्रिवृच्छब्देन वा त्रिवृतां समूहो लक्षणीयः। संवत्सरशब्दो वा गौण्या वृत्त्या अहस्सु वर्णनीयः इति चिन्तायां विचारितत्वात् संवत्सरशब्द एवानिर्णीयमानार्थः त्रिवृच्छब्दानुगुण्येन लक्षणया वर्णनीयः।

तथाहि—सावनेनापि संवत्सरोऽस्ति षष्ट्यधिकैः त्रिभिरन्हां शतैः। तथा साङ्क्रान्तोऽपि भवति आदित्यस्य द्वादशराशिभेदनेन। तथा नाक्षत्रोऽपि भवति द्वादशभिः गणपरिवृत्तिभिः इन्दोः। तथा चान्द्रोऽपि तिथिगणनायां षष्ट्यधिकैः त्रिभिरेव शतैः सर्वत्र चात्र संवत्सरशब्दो मुख्यः। तेनासौ न ज्ञायते क्व प्रयुज्यत इति। तेन तद्वशेन न पदान्तरवर्णना, पदान्तरवशेनैव तस्य वर्णना। इत्यतो न द्वादशाहवदेतदुपपद्यत इति संवत्सरशब्दोऽत्राहस्सु नामधेयोपपत्त्यर्थो द्रष्टव्यः। पञ्च पञ्चाशतस्त्रिवृत इत्येतावदेवात्र विधीयते अत्र तु संवत्सरशब्दस्य विहितान्वयित्वात्। अर्थान्तररूपे वृत्तिर्दृष्टा। तस्मात् सिद्धोऽधिकारो विना कल्पनया सहस्रेणान्हां कर्माणि कर्तुं लौकिकानामपि सामर्थ्यादिति स्थितम्।

इति ऋजुविमलायां पञ्चिकायां

षष्ठाध्याये सप्तमः पादः

— :*: —

# षष्ठाध्यायस्य अष्टमः पादः

॥ १ ॥ इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥

अत्र भाष्यकारेणैवमुक्तम्—पक्षान्तरमपि विचारयिष्यतीति। यदि च पक्षान्तरमस्ति किमिति नोपन्यस्यते तत्राभिप्रायमाह—**इह पक्षान्तरानुपन्यासे मन्दयुक्तिकः पक्षः नान्यपक्षप्रतिपक्षतयोपन्यसनमित्यभिप्रायः।**

अत्र भाष्यकारः एवं विचारयति—किं पवमानेष्टिसंस्कृतेष्वग्निषु चतुर्होतृहोमाः उतासंस्कृतेष्वपीति। तदसङ्गतमिति मत्वा समर्थयमान आह—**चतुर्होतृषु होमेषु किमाहिताग्नेरधिकारः उतानाहिताग्नेः अथवा अविशेषेणेति चिन्त्यते।** करणचिन्ता तु भाष्यकारेणैव कृता। तत्रानारभ्याहवनीयविधानात् आहिताग्नेरिति पूर्वः पक्षः। सर्वहोमेषु आहवनीययोग इत्याहवनीयवतः साग्नेरधिकारः। **कथं पुनरनाहिताग्नेरिष्टिरिति वचनमेतस्मिन् पक्षे?** अतो वचनेनानाहिताग्नेरिष्टिर्भवतीति भावः। उत्तरं—**यदग्निसंयुक्तं कर्म तन्न भवतीत्यभिप्रायः।** जपानामेष वादः अनहिताग्नेरेषवा इष्टिरिति न होमस्य। एष वा अनाहिताग्नेः क्रिया यदुतेष्टिरिति। इष्टिशब्दोऽनिष्टिषु गौणः प्रशंसार्थः। **अविशेषाशङ्का तर्हि कथं?** उत्तरं—**आहिताग्नेरधिकारो न शक्यते वारयितुं अवैगुण्यात् सर्वहोमानां न तस्य किञ्चिद्वैगुण्यं** क्लेशसाध्यत्वेन तावदधिक्रियते। अनाहिताग्नेस्तु वचनं भविष्यति इति।

**पितृयज्ञवदप्यनाहिताग्निना कार्य इति।** यथा तेन द्वयोरप्यधिकारो भवत्विति युक्ता शङ्का।

**राद्धान्तस्तु यत एव चाविशेषेण विधानमाहवनीयस्य अत एवाधिकारिविशेषणमास्कन्दितुमर्हति।** विनियोगविशेषमिव पदे जुहोति वर्त्मनि जुहोति इति यथा। यदि हि चतुर्होतृहोमानेवाधिकृत्याहवनीयो विहितः स्यात [स्यात] आहिताग्नेरधिकारः। यतस्तु सामान्येनाहवनीयो विहितः ततो हि न

शवनोत्यनाहिताग्नेर्वाचनिकमधिकारमास्कन्दितुं पदे जुहोतीति विनियोगान्तरमिव। तेना[ना]हिताग्नेर्वाचनिकोऽधिकारो युक्तः। एषा वा अनाहिताग्नेरिष्टिः इति वचनात्।

अत्र चेयं वचनव्यक्तिः—यैश्चतुर्होतृहोमरूपेष्टिः एषा वाऽनाहिताग्नेरिति। यदुक्तं आहिताग्नेरवैगुण्यादधिकारो निवर्तयितुं न शक्यते अनाहिताग्न्यर्थं तु वचनमिति। अत्र ब्रूमः। उक्तं च नाधिकारविशेषं साधारणविधिरास्कन्दतीति। विशेषेण चात्र अनाहिताग्नेरयमधिकारः। तत्र चाहवनीये जुहोतीति सामान्यविधिर्नावतरतीत्युक्तम्। तस्मात् वाचनिकोऽयमधिकारोऽनाहिताग्नेः। अतो यत्र चोभयसंयोगः तत्रैवोभयोरधिकारः यथा पिण्डपितृयज्ञे। तत्र हि अ[प्य]नाहिताग्निना कार्यमिति अपिशब्देनान्वाचयः क्रियते। अत्र तु स नास्ति। तस्मादनाहिताग्नेरेवैषोऽधिकार इति सिद्धम्।

## ॥ २ ॥ उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥

इह माणवकहोमाश्चिन्त्यन्ते, नाचार्यस्य[1], आचार्यस्याहवनीयसंभवात्। सिद्धान्ताभावप्रसङ्गाच्च। माणवककर्तृकाश्च माणवकहोमा येष्वाचार्यस्याधिकारो न श्रूयते। इह चिन्त्यते—उक्तमाधस्त्येऽधिकरणे चतुर्होतृष्वनाहिताग्नेरधिकारश्रवणात आहवनीयविधिरेव बाधित इति। इह पुनः अनाहिताग्निशब्दाभावात् आहवनीयस्य च सर्वहोमार्थत्वात् आहिताग्नेर्माणवकस्य स्वकर्मण्यधिकार इति तत्सिद्ध्यर्थमाधानं करिष्यति। ननु चाधीतवेदस्य गुरुकुलान्निवृत्तस्य कृतदारपरिग्रहस्याधानमुच्यते तत्कथमनधीतवेदस्याधानं ? अत्रोच्यते। क्रममात्रं हि तत् वाक्याच्चाहवनीयसंयोगः आहवनीये जुहोतीति। तेनाहवनीयानुग्रहात् क्रमो बाधिष्यते। तदाह—**वाक्याङ्गभूतं क्रममपि बाधत इति पुनः क्रममात्रम्।** ननु च सह पत्न्या आधानं श्रूयते। असति सहभावे कथं तदुच्यते। न चाकृतदारस्य पत्नी सम्भवति। उच्यते। क्रियतां दारसङ्ग्रहः सहाधानसिध्यर्थम्। **ननु कथमनिवृत्तौ गुरुकुलात् दारान् कुर्यात्।** गुरुकुलनिवृत्त्यनन्तरं दारक्रियाविहिता यतः। परिहरति—**उक्तं क्रममात्रं तदिति।** तस्मादाहिताग्नेरधिकारः ऐश्वर्यलक्षणः।

---

1. नाचार्यता - मा

अत्रोच्यते । नायं पक्षः सम्भवति । यस्मान्न दारोपयमनमाधानं प्रयुङ्क्ते । यदि ह्याधानेन दारोपयमनं प्रयुज्यते तदा सहभावोपपत्तये स्यादप्युपयमनम् । न च तदस्ति रागस्यैव प्रयोक्तृत्वात् कृतदारग्रहणस्य सम्भवात् । अत्र चोदयति—**केन वोक्तं प्रयुज्यत इति । रागत एव त्वसौ कृतदार इत्युक्तमस्माभिः ।** क्रमस्यानङ्गत्वात् वाक्याच्च दुर्बलत्वादित्यनया युक्त्या । परिहरति —**सत्यमाह भवान् । किन्त्वत्रास्ति किञ्चिद्वक्तव्यम् ।** उपनयनोत्तरकालं हि वैदिकेऽधिकार इति प्रतिपादितम्, [न]प्रागुपनयनात् । तदा दार्विहोमिकाचार्याणां विषय इत्युक्तम् । तेन माणवकस्य वैदिकोऽधिकारो नास्ति । न चानग्निकृतदारनियमस्संभवति । न चाकृतदारस्याधानं इत्यनाहिताग्नेरेवाधिकारः । **ननु चापत्यान्यार्थेषु दारेषु नियमः धर्मार्थमिति न प्राप्नुयुः । तत्र नियमाभावात् ।** परिहरति—**कृतदाराणां हि तद्धर्मनियमः । न हि धर्मार्थो दारसङ्ग्रहः । रागप्रयुक्तो दारसङ्ग्रहः** न धर्मप्रयुक्तः । तेन दारनियमं विना दारसङ्ग्रहो नास्ति । तस्मात्सिद्धमनाहिताग्नेः प्रागौपनायनिको विधिरिति ।

**ननु च प्रागुपनयनादधिकार एव नास्तीति त्वयैवोक्तम् ।** तेन माणवकस्य होम एव न सम्भवतीति कुतोऽयं विचारः ? उत्तरं—**बाढमधिकारो नास्तीति न पुनः कार्यतोऽपि नास्तीत्युच्यते** स्वाध्यायाध्ययनवदैश्वर्यपक्षोऽस्ति। नियोज्यलक्षणस्तु नास्तीत्यर्थः । कार्ये चाधानेऽनधिकारादनाहिताग्नेरधिकार इत्युक्तम् । **एकत्वान्नियमस्य न पुनः दारसङ्ग्रह इति । सत्यमेवम् द्वितीयो दारसङ्ग्रहो न स्यात् यदि तु वचनं न स्यात् ।** पुनराधानवदस्ति तु वचनम् धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत अन्यतराभावे कुर्यादिति वचनस्यापायो नैवास्तीति स्थितिः । तेन वचनात् द्विर्दारसङ्ग्रहो न विरुद्धः । **दर्शनमुक्तम् । पिण्डपितृयज्ञवदिति च परिहृतम् ।**

॥ ३ ॥ **स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्**
**तादर्थ्याच्चापवृज्येत ॥ २० ॥**

**अत्रापि (वि)नाऽऽहवनीयस्य विधिः शक्यते बाधितुमिति पूर्वपक्षवादी मन्यते** यस्मान्नात्र माणकस्येव आधानेऽनधिकारः शक्यते वक्तुम् । आधाने सहभावदर्शनात् (न)प्राप्तिरेव प्रयाजादिष्विव दर्शपूर्णमासप्रकृतित्वात् अस्य कर्मणस्-

द्विधानेनाहवनीयस्य प्राप्तेः। तन्मुखेन चाधानाक्षेपादाहवनीयस्योपायत्वात्। तस्मादाहिताग्नेरेवाधिकारो निषादस्येति। उच्यते। **नाधाने तावदधिकारित्वं पश्यामः विधानाभावात्।**

**ननु दर्शपूर्णमासप्रकृतित्वेनाधानस्य प्राप्तिरुक्ता।** परिहरति—**सत्यं, अग्नीनां तु सा प्राप्तिः तेषामङ्गत्वात्। ननु च अनाहितस्य तस्यानङ्गत्वात् अग्निद्वारा भविष्यत्याधानस्य प्राप्तिः।** क्रत्वाक्षेपकं परिहरति—**प्रकृतावपि नैवाधानमग्न्यर्थमधिकारकं, किं तर्हि? विनियोगतः तदग्न्यर्थं, न** क्रत्वधिकाराक्षिप्तमाधानं प्रकृतौ। किं तर्हि? विनियोगेन हि क्रमेण तदग्न्यर्थमिति। न चाधिकारादृते विनियोगोऽत्र लभ्यत इति। अधिकारमपास्य विनियोगोऽत्र नास्ति। केवलमधिकारमात्रं नाक्षिपत्याधानमित्यसंस्कृतेष्वेवाग्निषु स्थितमिदं कर्म।

**ननु च विनियुक्तेष्वग्निषु अधिकार इति तन्मुखेनाप्यधिकारस्य प्राप्तिः। सत्यम्। न(नु)तु पुनरधिकृतस्याधाने विनियोगानुष्ठानम्।** आधानेनाग्न्युपादानम्। अनधिकृतश्चायं निषाद इत्युक्तम्। तेन आधानेनाग्निर्न सिद्ध्यति निषादस्येत्यग्निलोपेन कर्म कर्तव्यम्।

अत्रायं पूर्वः पक्षः—

यद्यप्यनङ्गतया आधानमतिदेशेन न प्राप्यते तथाप्यतिदिष्टाहवनीयसिद्ध्यर्थं निषादस्याक्षेपो भविष्यति।

राद्धान्तस्तु अलौकिकत्वादाहवनीयस्य निष्पत्तेर्नाक्षेपकम्। अतो यत्कर्तृकमाधानमाहवनीयाद्युत्पादकं विनियोगतोऽवगतं तत्कर्तृकेनैवाहवनीयोत्पत्तिः नान्येन, निषादकर्तृकस्योत्पादकत्वेना[1]विज्ञानान्नाक्षेपः सम्भवति।

**॥ ४ ॥ अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥**

**अवकीर्णिपशौ कं विशेषं पश्यति आशङ्काहेतुभूतं तस्यापि दाराभावात् न सहाधानमुपपद्यते।** उत्तरं—**अयमभिप्रायः—तस्य दाराः सैव भवतु नियमातिक्रमात् यया सहावकीर्णी।** दारा इति बहुवचनात् तद्भवति इत्येक

1. त्वेन वि-मा

वचनात् कर्म सैवेति सम्बन्धात् । तस्मात् सत्सु दारेषु आहवनीयसम्बन्धो नैव बाधितुं शक्यत इति पूर्वपक्षवादी मन्यते ।

**राद्धान्तवादी तु अतिक्रमे निर्हरणायैतत्प्रायश्चित्तं नियमानुसम्बन्धादिति तादृशस्याधिकारादिदमपि पूर्वाधिकरणवद्द्रष्टव्यम् ।** अवकीर्णिपशुर्हि अवकीर्णिना कृतदोषनिर्हरणेन ब्रह्मचर्यमेवानुसन्धातुं घटयितुं विहितं प्रायश्चित्ततया । निवृत्तस्य च पापात् प्रायश्चित्तम् । तेन तां परित्यज्यैवावकीर्णिपशुः कर्तव्यः । तेन तादृशस्यैव ब्रह्मचारिण एव त्यक्तस्त्रीकस्यैवाधिकारादिदमपि माणवकहोमाधिकरणेन तुल्यम् ।

**॥ ५ ॥ उदगयनपूर्वपक्षाहः पुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥**

**कथं पुनरत्र स्मृतिवचने सति पूर्वपक्षाशङ्का** उपनयनादिषु संवत्सरादिकालनियमश्रवणात् । अष्टवर्षस्यार्थः अष्टवर्षं ब्राह्मणमुपनयीतेति श्रूयते यस्य पूर्णा अष्टौ वर्षाः सोऽष्टवर्षः तेन निषेककालादारभ्य पूर्वे[र्णे]ष्वष्टसु वर्षेषु उपनयनमिति नोदगयनादिस्मृतेरादरः सम्भवतीति ।

**राद्धान्तस्तु वर्तमानेष्वेवाष्टसु वर्षेषु स नियमो नातिवृत्तेष्वित्यविरोधः ।** यदि हि स्मृतिः श्रुतिविरुद्धा स्यात् बाध्येतापि स्मृतिः । न चास्ति विरोधः । श्रुतावपि वर्तमानेप्यष्टवर्षे उपनयनं श्रूयते । तस्योदगयनादिश्रुत्या सह विरोधो नास्ति । स ह्यष्टवर्ष उच्यते । उत्तरं—**अष्टमो हि तस्य वर्षोऽस्ति यदि परिपूर्णः तेन भविष्यत्येवाष्टवर्षः । दर्शनमुक्तम् ।**

**॥ ७ ॥ याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥**

**नोपात्तद्रव्यसंभवे सत्यप्यन्योपादानं युक्तं, अदृष्टकल्पनाप्रसङ्गात् तदभाव एव [1]क्रयो विधीयते भृतिवननं चेति पूर्वः पक्षः ।** अस्यार्थः-द्रव्योपादानार्थं हि याच्ञादि विहितम् । असति द्रव्ये द्रव्योपादानं विहितं कर्तव्यं न सत्येव । तस्मात् प्रयोजनालोचनया द्रव्याभाव एवायं विधिरिति ।

---

1. तयोर्वि-मा

**राद्धान्तस्तु—सत्यमेवं यदि पुरुषार्थत्वेन विधानं स्यात् । क्रत्वर्थ एवायं विधिः । नच क्रतोरुपात्तं नाम किञ्चिदस्ति इत्यस्यैव दृष्टार्थत्वम् ।** अस्यार्थः—क्रत्वर्थत्वेन याच्ञाविधानं क्रतुप्रकरणाम्नानात् । न च पुरुषार्थत्वेन प्राक् क्रत्वर्थं द्रव्यमस्ति पुरुषार्थयाच्ञयैव हि क्रत्वर्थं क्रियते । तस्मात् विद्यमानस्यापि याच्ञयैव क्रत्वर्थं द्रव्यं भवति नान्यथा, तेनास्यैव क्रत्वर्थस्य सतो दृष्टार्थत्वम् ।

**ननु यदि दृष्टार्थत्वं तदा दृष्टस्यान्येन सम्भवे नित्यं तर्हि याच्ञादेरुपसंहारो न भवति ।** अत्रोत्तरं—**न चैतावता दृष्टार्थत्वेनानुपसंहारः शक्यते वक्तुं, सर्वस्य युगपद्विधानात् । ऐकशब्द्यादिति वक्ष्यति । तस्मान्नित्यवत्कर्तव्यम् ।** अस्यार्थः-ऐकशब्द्याद्धेतोः सर्वस्य विधिनिष्पत्त्यर्थत्वेन युगपद्विधानम् । तेन सिद्धेऽपि दृष्टेऽर्थे विध्यर्थस्य यथाचोदिताङ्गसाध्यत्वात् नित्यमुपादानं कर्तव्यम् । तेनायं याच्ञादिविधिः विध्यर्थनिष्पत्त्यर्थत्वेन याच्ञादिवचनात् अप्राप्तविधिरेवास्तु । नियमस्तु प्रयोजनमात्रम् । अस्मिन् विधौ सति याच्ञादेरेव नियोगार्थसिद्धिहेतुत्वेनाभ्यनुज्ञानात् नित्यमुपादानम् । असति तु तस्मिन् क्रियासंबन्धसिध्यर्थमन्यदुपादीयेतेति नियमः प्रयोजनं विधेः ।

**॥ ८ ॥ तथा भक्षप्रैषाच्छादनसंज्ञपहोमद्वेषम् ॥ २८ ॥**

**कःपुनरत्र विशेषः ?** उत्तरं—**अयमस्ति विशेषः । पुरुषार्थद्वारेणानुप्रवेशात् । संज्ञपनस्य हृदयाद्युत्पत्त्यर्थत्वं मन्वानस्य भवति काचिदाशङ्का ।** अस्यार्थः—क्रत्वर्था अपि भक्षादयः पुरुषार्थद्वारेण क्रतावनुप्रविशन्तीति यत्र परं पुरुषार्थोपायो नास्ति तत्रैवैषामङ्गभाव इति भक्षादिषु तावदाशङ्का । संज्ञपनहोमे त्वेवम्—न संज्ञपनाङ्गं होमोऽवकल्पते । प्रायश्चित्तस्थानीयो हि स श्रूयते मन्त्रवर्णश्रवणात् । प्रायश्चित्तं च वैगुण्ये सत्यवकल्पते । न च संज्ञपनमात्रे वैगुण्यं, तस्य हृदयाद्युत्पत्त्यर्थत्वात् । प्रत्युत साद्गुण्यायत्तत्वादिति ।

**राद्धान्तस्तु—अधिकारविधिनैकवाक्यत्वात् प्रकरणविधीनां पूर्ववदनुष्ठानम् ।** अस्यार्थः—प्रकरणे हि विधीयमानः श्रूयमाणः अधिकारविध्यर्थः अधिकारविधिश्च तत्सम्बन्धः प्रतीयमानः तैरेव सद्भिर्निश्चीयते । अतस्तदनुगुणद्वारा कल्पनीयत्वे(न) सत्यपि पुरुषार्थसिद्धिः तेन भक्षादिजन्यपुरुषार्थद्वारेणैव विधिरिति

परिकल्प्यते तथा संज्ञप्तहोमोऽपि संज्ञपनमात्रनिमित्ततः, न वैगुण्यप्रतिसमाधानार्थः। मन्त्रवर्णस्तु विध्यानुगुण्येनैव वर्णनीय इति भक्षाणामपि नित्यमनुष्ठानम्।

॥ ९ ॥ अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥

अत्रापि तर्हि अधिकारविधिनैकवाक्यत्वात् नित्यमनुष्ठानं तेन विना विध्यर्थासिद्धेः। न चेदं वाच्यं अनुष्ठीयमानमिदं प्रयोजनशून्यमिति नानुष्ठेयमिति। यस्मात् यः सर्वाङ्गोपसंहारसमर्थः सोऽपि कामी भविष्यति। न ह्यनेन यत्रैव प्रयोजनमस्य तस्यैवाधिकारः।

राद्धान्तमाह—उच्यते। स्वार्थपरित्यागेनैव हि विधानमेव न प्रतीयते द्वारनियमस्यापेक्षितत्वात्। न चाविहितस्यानुष्ठानं युक्तम्। तस्मादर्थशून्यमेवंविधं अननुष्ठीयमानमपि नाधिकारं विहन्ति इति सिद्धमधिकारविधिर्न विहन्ति। विनापि तेन(ापि) अधिकारविधिस्सिध्यत्येव। नित्यवत्तस्याविनियुक्तत्वात्। सति द्वारे तस्य विनियोगः नासत्यपि। यच्चेदमुक्तं - यत्र पुरुषे द्वारं न सम्भवति तस्याधिकारो माभूदिति तदयुक्तम्। यथाविनियोगमधिकार इत्युक्तम्। अस्य च परार्थस्यानित्यद्वारकत्वात् अनित्यमेवार्थात् विनियोग इति न शक्यते तद्वशेनाधिकारो निवर्तयितुमिति।

॥ १० ॥ पशुचोदनायामनियमोऽविशेषात् ॥ ३० ॥

लक्षणसङ्गतिमाह—इदमत्र चिन्त्यते - किं सामान्येन पशुमतोऽधिकारः उत छागवत एवेति। ननु विनियोगमुखेनापि एषा चिन्तोपपद्यत इति किमित्यत्रैव चिन्त्यते? तत्राह — विनियोगे पुनश्चिन्त्यमानेऽविशेषात् विनियोगद्वयसिद्धेर्न शक्यते विशेषोऽवधारयितुमित्यधिकार एव चिन्त्यते। अस्यार्थः - न विनियोगे घटते तथामन्त्रस्यापि छागाभिधायितया। अधिकारे तु परस्परविरोधाद्द्रव्यमुपसंहर्तुं न शक्नोति। विरोधे सति शक्यते पशुविशेषो मन्त्रबलेनावधारयितुमित्यत्रैव चिन्ता युक्ता। तत्र पूर्वपक्षवादिनोऽभिप्रायः— सामान्यशब्दोऽयं पशुशब्दः गवादिशब्दवत्। तेन पश्वाकृतिमात्रस्य विनियोगात् मेषादिष्वपि जात्यविशेषात् यःकश्चित्पशुरुपादातव्यः। ननु मन्त्रवर्णेन विशेषेऽवस्थानमित्यत्राह— क्वचिच्च विशेषमन्त्रस्य अर्थवत्त्वमुपपन्नमेवेति न सामान्यं विशेषेऽवस्थापयितुमर्हति। योगाद्वा—गमनयोगाद्वा, वर्णसामान्याद्वा, अक्षर-

सामान्याद्वा मन्त्रस्यैव सामान्यार्थता युक्ता। प्रमाणान्तरवशेन हि मन्त्रस्यार्थोऽवतिष्ठते इत्युक्तम् । विनियुक्तद्वारस्मारकत्वात मन्त्राणां यथाविनियोगंत् वर्णना युक्तैव । तस्मा पशुमतोऽधिकारः ।

**अत्रोच्यते । स्यादेतदेवं यद्ययं पशुशब्दः सामान्यवचनः स्यात् । किं तर्हि औपाधिकोऽयं सर्वपशूनां पुच्छवत्त्वोपाधिकः शब्दशब्द इव श्रोत्र-ग्राह्यत्वोपाधिकः सर्वशब्दानाम् ।**

कस्मादेवं भवतीत्यत्राह—**प्रत्यभिज्ञानाभावात्** छागे हस्तिनि च (न)प्रत्यभिज्ञानेन सामान्यं तावन्नास्ति तदभाव एव शब्दप्रवृत्तिमौपाधिकीं दर्शयति। स च वालधिरुपाधिनियमः । कथं पुनः प्रत्यभिज्ञा नास्तीत्यत्राह —**यथा च प्रत्यभिज्ञा नास्ति एवं प्रथमपाद एव दर्शितम्** पूर्वाकारावमर्शाभावादिति। यस्मादयमौपाधिकः सर्वपशूनां पुच्छवत्त्वोपाधिकः शब्दो व्यक्तिवचनः । अतो न विशेषमन्त्रोपस्थापितमतिक्रामति। तत्रैव प्रवर्तते प्रयोगैक्यात । एकाधिकारविधिपरिग्रहो मन्त्रस्य, परिगृहीतत्वात । तेन च विशेषस्य सन्निधापितत्वात् ।

अभ्युपगम्यापि सामान्यवचनतां ब्रूमः । विशेषनिष्ठतैव सामान्या(पि)नां युक्ता नित्यवन्मन्त्राम्नानसामर्थ्यात न मन्त्रस्य पाक्षिकत्वं युक्तम् । न च सामान्यं विशेषेऽवस्थाप्यमानं शब्दार्थतां जहाति । यद्यपि विनियोगेन विरोधः तथापि तस्य कार्यानुगुण्यात् विशेषावस्थितिरेव न्याय्या । अनुष्ठानानुगुणो हि विनियोगः अनुष्ठानार्थत्वात् अनुष्ठानं च मन्त्रान्वितमिति तद्वशेन विशेषावस्थापनमेव न्याय्यम् । न च [रूढौ]सम्भवन्त्यां यौगिकत्वं सम्भवतीत्युक्तम्। तस्मात सुष्ठूच्यते छागो वा मन्त्रवर्णात् इति । **शेषमुक्तम्** ।

**इति श्रीशालिकनाथमिश्रविरचितायां ऋजुविमलापञ्चिकायां**

**षष्ठाध्यायस्याष्टमः पादः**

**अध्यायश्च समाप्तः**

—: * :—

ऋजुविमलायां

## ॥ *नवमाध्यायस्य प्रथमः पादः ॥

### ॥ १ ॥ यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

विशिष्टकार्यावगम्यत्वादूहस्य विशेषातिदेशलक्षणं हेतुः । अस्यार्थः— विकृतौ प्राकृतानां पदार्थानामतिदेशेन प्राप्तौ सत्यां प्राकृतात् कार्यात् विशिष्टं कार्यमवगम्यते । तत्प्रमाणकश्चोहः । तेन भवति विशेषातिदेश ऊहस्य हेतुः । अत्रेयं प्रक्रिया - ऊह्यत इत्यनया व्युत्पत्त्या विकृतप्रयोग ऊहशब्देनोच्यते । स च प्राकृतात् कार्यादन्यस्मिन् कार्येऽवगतेऽवगम्यते । तथाहि—प्रकृतावववघातादीनामपूर्वसाधनभूतविशेष[1]व्रीहयो यवाश्च कार्यत्वेन प्रतिपन्नाः । विकृतौ नीवारद्रव्यवत्यां अपूर्वसाधनभावाविशेषात् अतिदेशेन प्राप्तानां नीवारा एव कार्यत्वेनावसीयन्ते । ततश्च तेष्ववघातादयः क्रियमाणा विकृता भवन्ति । कारकभेदेन क्रियाविकारस्यापरिहार्यत्वात् ।

कथं पुनर्नीवाराणां कार्यत्वावगमः ? उपदेशस्तावद[2]पूर्वविशेषगृहीतधर्माणां विशिष्टापूर्वसाधनविषय एव । नचाऽत्र प्रमाणान्तरमपि प्रक्रमते । उच्यते । शाब्दं प्रमाणं द्विविधं, उपदेशजं कार्यजं च ।

कः पुनरुपदेशः ? किं पुनः कार्यम् ? उच्यते । उपदेशो नाम ग्रन्थसन्दर्भस्य पाठः । कार्यं तु द्वारभूतम् करणोपकारादि । तत्र ग्रन्थसन्दर्भजं दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः व्रीहिभिर्यजेत यवैर्यजेत व्रीहीनवहन्ति इत्यादिपर्यालोचनयाऽपूर्वप्रयुक्ततां सर्वधर्माणामनुसन्दधतां व्रीहीणां यवानां चापूर्वविशेषसाधनत्वं तुल्यमाकलयतां व्रीहियवकार्यकमवघातादीति ज्ञानमुपजायते । तच्चेदमुपदेशजम् । शाब्दं पुनश्च

---

* सप्तमाष्टमाध्याययोः ऋजुविमलामातृका कुत्रापि नोपलब्धा अतः नवमाध्यायः मुद्राप्यते—

1. R विशेषभूता
2. P पूर्वविशेषगृहीतधर्माणां

[1]विकृत्यपूर्वान्तरे द्रव्यान्तरवति चोदकप्राप्तेष्ववघातादिषु इयं जिज्ञासोपजायते—कथमेते प्रयोक्तव्या इति। तदर्थं च कीदृशं कार्यं उपदेशेन प्रयुज्यत इत्येतन्निरूप्यते।

किं दर्शपूर्णमासापूर्वसाधनविशेषः कार्यतया प्रतीयते, उत यस्यापूर्वस्यावघातोऽङ्गं तदीयसाधनविशेष इति। तत्र यदि दर्शपूर्णमासापूर्वसाधनता विवक्षिता तदा नीवाराणां तद्रूपताभावात् तेषां कार्यता न स्यात्[2]। अथ तु यस्यापूर्वस्यावघातोऽङ्गं तदीयसाधनतामात्रं विवक्षितं तदाऽस्ति तद्रूपता नीवाराणामिति तेषामपि कार्यता व्रीहीनवहन्तीत्यादिभिरेव प्रतीयते। तत्र विशेषापूर्वाङ्गभावज्ञानमिदं नान्तरीयकं दर्शपूर्णमासापूर्वसाधनविशेषः कार्यभूत इति। अपूर्वविशेषसम्बन्धिनो हि धर्मस्य तदीयं कार्यं भवितुमर्हति अपूर्वैदमर्थ्याविरोधादिति। नान्तरीयकमपूर्वविशेषसाधनत्वमविवक्षितम्[3]। यदीयोऽवघातस्तत्साधनमेव कार्यमिति चोदनार्थः। अतश्च व्रीहीनवहन्तीत्यनयैव चोदनया नीवाराणामपि कार्यत्वमवगम्यते। तदिदं कार्यनिरूपणज्ञानमुपजायत इति कार्यजं शाब्दम्। तेन नाप्रमाणत्वं नाशाब्दत्वं नोपदेशत्वमिति स्वयमेव भगवता विवरणकारेणोदितमित्यनवद्यम्। श्लोकमप्युदाहरन्ति—

प्राकृतस्थानपतितपदार्थान्तरकार्यतः।
ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः॥ इति

आक्षेप्यं भाष्यमनुभाषते—**त्रिविधश्चोह इति**। आक्षिपति—**किमिदं त्रैविध्यं ?** विकृतप्रयोगात्मकता मन्त्रसामसंस्कारविषये तुल्येति भावः। समाधत्ते-**उच्यते—कार्यभेदं स्वस्थाने वक्ष्यामः। तद्भेदायोह्यमपि प्रयोगरूपं भिद्यत इति तत्रैव वक्ष्यामः**। कार्यप्रमाणको हि प्रयोगविकारः स प्रमाणभूतकार्यत्रैविध्यात् त्रिविधो भवति।

तथाहि—अवघातादीनां तण्डुलप्रकृतिद्रव्यं कार्यम्, मन्त्राणां समवेतोऽर्थः, साम्नामक्षराणीति। तद्वशेन च त्रयाणामपि विकारो भवतीति त्रैविध्याभिधानं भाष्यकारस्य प्रयाजादिविषये ऊहो न भवतीति दर्शयितुम्। न हि तेषां कश्चित्प्रयोगविकारोऽस्ति। अन्यदप्युपोद्घातादिनेत्यनेन भाष्यमनुभाषितम्। य(थे)दिदमाद्यमधि-

---

1. p. विकृतावपू
2. नास्ति
3. मविहितम्

करणं उपोद्घातेन प्रसक्तानुपस(क्त्या)क्तं ईष्टे भुङ्क्त इति अनुहसिद्ध्यर्थं, देवताप्राधान्यं प्रसक्तं तत्सिद्ध्यर्थमीशितृत्वं, भोक्तृत्वं च (त्व)देवताया अनुप्रसक्तमिति ।

अत्र भाष्यकारेणाग्निहोत्रादित्रयमुदाहरणं गृहीतम् । तत्र तात्पर्यं पृच्छति— **किं कारणं ? केन पुनः कारणेनाग्निहोत्रादय एवोदाहरणम् ? यावता सर्वाणि कर्माणि धर्मवन्त्युदाहार्याणीति ।**

उत्तरं—**केवलोपदेशार्थे हि प्रतिप्रकरणं नियमात्मके निरूपितेऽतिदेशः प्रवर्तते ।** अन्यथा हि सर्वत्रैवोपदिष्टत्वात् धर्माणां साधारणता स्यात्, नातिदेशः स्यात् । अतिदेशावगतधर्मविषयश्चोह इत्यतिदेशसिद्ध्यर्थमेतान्येवोदाहरणानि नान्यत् । अत्र पौरुक्त्यं सप्तमाद्येन सह परिचोद्योत्तरविवक्षयैवेदमपूर्वप्रयुक्तत्वमुच्यत इत्यर्थशः परिहारो दत्तः । यःपुनरयं द्वितीयः परिहारः एतेन चेह प्रयोजनं ऊहे विवक्षिते इति असावयुक्तः यस्मात् तत्रापि सप्तमाद्ये अपूर्वप्रयुक्ततयैव धर्माणां प्रतिप्रकरणं नियमः सिद्ध्यति नान्यथा । तेनैतेन चोहप्रयोजनमित्युक्तम् । सप्तमाद्येऽप्यस्य प्रयोजनत्वात् । समाधत्ते—**ननु भाष्ये अयजिप्रयुक्तत्वेऽपि सति न प्रतिप्रकरणं नियमः सिद्ध्यतीत्यन्यथापि नियमं दर्शयति ।** तेनापूर्वप्रयुक्तता एकान्ततः [1]तत्र न व्युत्पाद्या । पुनराक्षिपति—**यदेव भाष्यकारेणोक्तं तदेव न विद्मः किमिदमयजिप्रयुक्तत्वं नाम ।** यजेरन्यदयजिरिति अपूर्वमेवान्यदिति भावः ।

समाधत्ते—**अत्रोच्यते । करणप्रयुक्तत्वं अयजिप्रयुक्तत्वमुच्यते ।** यजेरन्यदयजिरिति करणमुच्यते तेन प्रयुक्तत्वमयजिप्रयुक्तत्वमुच्यते । [2]ननु करणता केन(प्रयोजकमत) [प्रमाणेन करणत्वावगमः] अत्र आह—**कार्यकरणसम्बन्धोऽह्यत्र नियोगलक्षणः ।** साध्यभूतेन हि नियोगेन समभिव्याहारोऽन्यथा नोपपद्यते । यदि नियोगः कार्यभूतः करणभूतश्च यजिर्न स्यात् इति कार्यकरणता नियोगेनावसीयते ।

कथं पुनः करणप्रयुक्तत्वे सति प्रतिप्रकरणं नियम इत्यत आह—**करणप्रयुक्तत्वेऽपि च नियोगविशेषसम्बन्ध उपपद्यत एवेति प्रतिप्रकरणं नियमसिद्धिं मन्यते ।**

---

1. R तत्राप्यूह्या
2. R केन प्रमाणेन प्रयोजकत्वं अतः यजिस्वरूपमेवाह-न करणता न च तृतीयापि विभक्तिरस्ति य आख्यातप्रत्ययस्य न करणतायाः स्मर्यते ।

अस्यार्थः-यजिप्रयुक्तत्वे हि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेनाधिकारवन्तं यजिमुद्दिश्य समिधो यजतीत्यादिभिः समिदादीनां विधानमिति प्रतिप्रकरणं नियमो न स्यात्। करणप्रयुक्तत्वे तु दर्शपूर्णमासाभ्यामित्यधिकारवाक्यावगतं करणं सन्निधिमात्रेणापूर्वमिव धर्माणां ग्राहकं तेन विशिष्टमेव करणं ग्राहकमिति विशिष्टापूर्वसम्बन्धात् प्रतिप्रकरणं नियमसिद्धिः। तेन अपूर्वप्रयुक्तत्वे करणप्रयुक्तत्वे च प्रतिप्रकरणं नियमसिद्धेः सप्तमाद्ये अपूर्वप्रयुक्तता एकान्तेन न व्युत्पादनीया। अत्र-त्वधिकरणे सैव व्युत्पाद्यते तां विना ऊहासिद्धेः। करणप्रयुक्तत्वेहि धर्माणां व्रीहयोऽपि करणभूता धर्मान् प्रयुञ्जत इति करणभूतव्रीहिरूपताभावे नीवाराणामवघाताद्यूहो न भवेत्। अपूर्वप्रयुक्तत्वे तु व्रीहिस्वरूपस्याविवक्षितत्वादपूर्वसाधनविशेष एव विवक्षित इति सिद्ध्यत्यूहः तेन सप्तमाद्ये इदं चिन्त्यते किं यजिप्रयुक्ता उतायजिप्रयुक्ता इति। इह तु अयजिप्रयुक्तत्वेपि किं करणं प्रयोजकमुतापूर्वमिति चिन्त्यते—

तत्र पूर्वपक्षी करणमेव स्वानुग्रहमपेक्षत इति मन्यते। राद्धान्ती तु करणवत् तदनुग्रहमपि कार्यमेवाकाङ्क्षति तस्यैव चिकीर्षितत्वादिति।

**अथ कस्मादिदमेवायजिप्रयुक्तत्वं तत् सप्तमाद्ये सिद्धान्तत्वेन न लिखितम्?**

उत्तरं—**अस्थायित्वादस्यार्थस्य**। सामान्येनायजिप्रयुक्तत्वमस्थायि। किन्त्वपूर्वप्रयुक्तत्वमेव स्थायि। स्थायी च पक्षः सिद्धान्तत्वेनोपन्यसनीयः शिष्याणां भ्रमनिवृत्त्यर्थम्। अतोऽयमेवापूर्वप्रयुक्ततापक्षः स्थायी संव्यवहारार्थमत्रानीत इति हेतोरपूर्वप्रयुक्तत्वमुक्तम्। यद्ययजिप्रयुक्तत्वमस्थायि किमर्थं सप्तमाद्ये तच्चिन्त्यत इत्युपन्यस्तं तदाह—**अस्थायिनः पुनरुपन्यासः किमर्थः?** उत्तरं-**पुनरुक्तिपरिहारश्च**। च शब्दस्तुशब्दार्थे। **किमेतावदेव प्रयोजनम्?** उत्तरं—**अन्यदस्तीति हन्तिपिष्ट्यधिकरणे वक्ष्यामः**। तत्र पूर्वपक्षौपयिकमिदम्। अथवा अन्यामेव चिन्तां इत्येतद्भाष्यकारेण यजिनिमित्ततानिरासार्थमुक्तम्। **तदयुक्तम्—यजिनिमित्तत्वे ह्यतिदेशोऽपि न सिद्ध्यति न केवलमूहः तस्मादूहलक्षण एवायमुपन्यास इति न शक्यते वक्तुम्**। अस्यार्थः—दर्शपूर्णमासयजेर्निमित्तत्वे सति तदभावे विकृतौ चोदकप्राप्तानामपि सर्वधर्माणामेवाननुष्ठानम् भेदनाभाव इव भेदनहोमस्य। ततश्च किमतिदेशेनेति अतिदेशाभावोऽपि।

न केवलमूहाभावः तेनोहलक्षण एव नेदं युक्तं चिन्तयितुं, अतिदेशलक्षणेऽपि युक्ता चिन्ता। परिहरति—उच्यते। **सत्यमाह भवान् अतिदेशोऽपि न सिद्ध्यतीति। सप्तमाद्येन त्वधिकरणेन इदमपौनरुक्त्यम्।** अस्यार्थः—न वयं ब्रूमः ऊहलक्षण एवेयं चिन्तोपकारिणीति। किन्तु पुनरुक्ततापरिहारोपयुक्तः। अपूर्वप्रयुक्तत्वे हि प्रतिप्रकरणं नियमसिद्धिः इति सप्तमाद्येन, इह तु यजेर्निमित्ततानिरासः कृतः तेनापौनरुक्त्यम्। **किं पुनरस्य परिहारान्तरस्य प्रयोजनं?** उत्तरं—**इदमेव** वक्ष्यमाणं **प्रयोजनम्।** निमित्तान्तरे यज्यन्तरे प्रयुक्तस्यापि चोदकप्राप्तस्य धर्मजातस्य निमित्ताभावादननुष्ठानं प्राप्तं तस्याननुष्ठानस्य व्युदासो वक्तव्य इत्यभिप्रायो वर्णकान्तरं कुर्वतः सोऽयमननुष्ठानव्युदासः परिहारश्च तेनोच्यते-तत्रेति वाक्योपन्यासे। भाष्यकारो वर्णककायोपन्यासानन्तरं परिहारद्वयमेकेनैव वर्णकेन वर्णितवान् इदानीं किं यजिप्रयुक्ता उतापूर्वप्रयुक्ता इति चिन्त्यत इत्येवमादिना भाष्येण।

अत्र भाष्य एव यागं कुर्यादिति यजिस्वरूपप्रयुक्ततोक्ता। एवं यागेन कुर्यादिति करणप्रयुक्ततोक्ता। तृतीयः प्रकारो वणकान्तरेण वर्णितः एवं वेत्यादिना। भिन्नग इत्युक्तमित्यस्यार्थ इत्येतत्। **वर्णकान्तरं भाष्यकारेणोक्तम्।** भाष्योक्ता एव पूर्वपक्षा इति यावत्।

**॥ २ ॥ संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात् ॥ २ ॥**

**ननु चोक्तमपूर्वं प्रयोजकम्। निमित्तत्वे त्वाद्ये प्रयोजकत्वं वर्णकद्वये, निमित्तत्वं च तृतीये वर्णकेऽपूर्वस्यैवोक्तम्। केयं चिन्ता? किं हन्तिपिषिप्रयुक्तं प्रोक्षणं उतापूर्वप्रयुक्तमिति। उच्यते। पूर्वपक्षोऽभ्यधिकोऽत्र विद्यते। कथं?** उत्तरं—**अपूर्वं हि साध्यतया सम्बध्यमानं धर्माणां प्रयोजकं भवतीति शक्यते वक्तुम्।** अस्यार्थः - यद्यपूर्वं साध्यतया धर्मैः संबद्धमवगम्यते तदा तद्धर्माणां प्रयोजकमिति शक्यते वक्तुम्। यथा आरादुपकारकेषु तेषु प्रथममधिकारापूर्वमेव साध्यतयाऽवगम्यते नावान्तरापूर्वमिति तत्र तत्रोक्तम्। इह पुनः क्रियानिर्वृत्तिरेव कार्यत्वेनावगम्यते प्रोक्षिताभ्यामिति तृतीया निर्देशात्, क्रियापेक्षत्वात् करणभावस्य। न च प्रतीयमानापि क्रियां प्रति साधनता विवक्षितेत्याह—**तदपरित्यागेनैवैदमर्थ्यमुक्तम्।** प्रतीयमानावान्तरकार्यापरित्यागेन धर्माणामपूर्वं प्रत्यैदमर्थ्यमुक्तम् "ये यत्र श्रूयन्ते ते तत्र भवन्ति" इत्यत्र।

ननु यदि क्रियानिष्पत्तिरेवैषां कार्यं तदा अपूर्वासंस्पर्शित्वे सति आनर्थक्यं प्राप्नोति नियमस्य क्रियायाः पुरुषैः कार्यत्वेनावगम्यमानत्वात्। किं तया निष्पादितया? परिहरति—**एवं तर्हि आनर्थक्यपरिहारायैवापूर्वमुपयुज्यते । न पुनः साध्यतया ।** अस्यार्थः - न निष्प्रयोजना क्रियानिष्पत्तिः । तत्सिद्धावपूर्वनिष्पत्तेः । तेन प्रोक्षणादीनामपूर्वसिद्धिरेवार्थो न पुनरपूर्वे साध्ये[र्वं साध्यं?] यथा दीक्षणीयावाङ्नियमस्य परमापूर्वं प्रयोजनम् । न तु तदेव साध्यम् । कस्मादेवमित्याह—**हन्तिपिष्योरपूर्वसम्बन्धितयैव प्रोक्षणविधाने परिहृतं तदानर्थक्यमिति नापूर्वं कार्यतया परिगृह्यते ।** यौ हन्तिपिषी अपूर्वं प्रतिसाधनभूतौ तयोरिदं प्रोक्षणं साधनत्वेन ग्रहीतुम् [गृहीतम् ।]

यदुक्तं हन्तिपिष्ट्यधिकरणोपयोगाय अयजिप्रयुक्तत्वं तदिदमुक्तं भवति। अवहन्तिप्रयुक्तत्वेन, साधनीभूतावहन्तिप्रयुक्तत्वेन परिहृतः । आनर्थक्येनापूर्वप्रयुक्तता शक्यते वक्तुम् यत एवावान्तरकार्यमेव धर्माणां कार्यं अत एव ये यत्र श्रूयन्त इत्युपपन्नं भवति। अन्यथाऽ[वघातादेः अ]पूर्वप्रयुक्तत्वे सत्यवान्तरकार्यस्य कार्यद्वयविरोधेनाविवक्षितत्वे सति आरादुपकारकत्वेन सर्वत्रैव आग्नेयाग्नीषोमीयोपांशुयाजेषु स्यात् प्रयाजादिवत् । यस्मादवहन्तिप्रयुक्ता अवहन्तिधर्माः तस्मादवहन्तौ नखनिकृन्तनेनोहितव्याः । यो नाम मन्दधीः यथाश्रुतग्राही तं प्रति उदाहरणव्याप्तिमाह— **सर्वाण्येवैवंजातीयकानि प्रतीयमानावान्तरकार्याण्युदाहरणानि व्रीहीनवहन्तीत्येवमादीनि ।** सोऽयमङ्गस्य व्रीह्यादेर्धर्मः सन्नपूर्वस्योपकारको, नापूर्वधर्मोऽङ्गनामुपकारकः । न चैवंभूतः शब्दो विद्यते यदपूर्वं हन्तिपिंषिभ्यां क्रियते तत्प्रोक्षणेन कर्तव्यमिति । **यस्मात् प्रोक्षिताभ्यामवहन्तीति श्रूयते** क्रियानिष्पत्तिरेव कार्यं श्रूयत इत्यर्थः । न चावहन्तिरपि साक्षादपूर्वसाधनं येन तद्युक्तमवहन्तियुक्तमपूर्वेण सह सावयवत्वेन संबध्यते । तस्मात् कार्यान्तरानुप्रवेशिनां नाधिकारकार्येण प्रयुक्तिः सम्भवतीति पूर्वः पक्षः ।

**अत्रोच्यते । नाधिकारप्रयुक्तिमन्तरेणोपादानसिद्धिर्धर्माणाम् । न वाऽनुपात्तानामनुष्ठानम् ।** अस्यार्थः-लोके हि सर्वस्य शब्दस्यानुष्ठानोपादेयपरता दृष्टा । यदि वाऽपूर्वप्रयुक्तता धर्माणां न स्यात् तदा तेषां नियोगेनोपादानं अनुष्ठानाक्षेपो न स्यात् । अनुत्प(प)न्नानां वा अधिकारापूर्वानाक्षिप्तानुष्ठानानां अनुष्ठानप्रयोजनाभावादनुष्ठानं न स्यात् ।

अत्रायं भावः-अपूर्वसाधनता अवहन्त्यादीनामेव। सा च विना प्रोक्षणादिभिर्न सिद्ध्यतीति तदर्थतया प्रोक्षणाद्याक्षेपः। तस्मात् सर्वं धर्मजातमपूर्वार्थम्।

**ननु चैवं सति विनियोगव्यवस्थैव न सिद्ध्यति[न च अवह]न्त्यादीनामेव सावान्तरकार्यस्याविवक्षाप्रसङ्गादित्युक्तम्** । परिहरति—**केन वोक्तमवान्तरकार्यं न विवक्ष्यत इति** । पुनश्चोदयति—**कथं वा विवक्षायामवान्तरकार्यस्य प्रधानकार्यस्य प्रयोजकत्वम्** । परिहरति—**उच्यते । अवान्तरकार्यं तावत् किं प्रधानापेक्षितं सत् कार्यं भवति उतानपेक्षितं तत्र यद्यपेक्षितं सत्कार्यं तदा स्वरूपेण कार्यत्वाभावात् प्रधानकार्यमेव प्रयोजकं, अथानपेक्षितं तदाऽवान्तरकार्यमेव प्रयोजकम्** ।

एवं संशय्य निर्णयमाह—**प्रधानकार्येणानपेक्षायामवान्तरकार्यतैव न स्यात्** । तदवान्तरकार्यमुच्यते यत् प्रधानकार्यानुगुणतया क्रियते यथा काष्ठानां पाकं कर्तुं प्रवृत्तानां ज्वलनम्। न वा वाच्यमवान्तरकार्यता माभूदिति। तन्मात्रस्य प्रधानकार्यत्वेऽनुष्ठानाभावप्रसङ्गात्। तदपेक्षायां तु प्रधानकार्यापेक्षायां पुनस्तदर्थत्वेन प्रधानकार्यार्थित्वेनावगमात्। तदपाये प्रधानकार्यापाये धर्मसम्बन्ध एव न स्यात्। तेनावान्तरकार्येऽपि विवक्षिते प्रधानकार्यस्य प्रयोजकत्वाविधानात् अवान्तरकार्यमपि प्रतीयमानं विवक्षितम्। अथ तु उपदेशव्यवस्थैवेयं विनियोगे नैवेयं व्यवस्था—ये यत्र श्रूयन्त इति न पुनः प्रयुक्तिव्यवस्था व्रीह्यादीनां प्रयुक्त्या व्यवस्थैवेयं न सिद्ध्यतीति सिद्धमपूर्वप्रयुक्तत्वम्।

युक्त्यन्तरं वाऽपूर्वप्रयुक्ततायामाह—**नियमविधीनां प्रधानानुप्रवेशश्चतुर्थे दर्शितः** । अस्यार्थः-यद्यवघातादीनामपूर्वं साध्यं स्यात् तदा विधानमवकल्पते प्रमाणान्तरेणापूर्वसाधनत्वापरिज्ञानात्। व्रीह्यादिस्वरूपसम्बन्धित्वे तु विधानमेव नावतरति प्राप्तत्वात्। न च नियमार्थं विधानं अशक्यत्वात्। विनाप्यवघातं तण्डुलादिनिर्वृत्तिदर्शनात् अपूर्वानुप्रवेशित्वे तु नियमविधिरवकल्पते तण्डुलनिर्वृत्त्यर्थं दलनाद्याक्षिपेदपूर्वं विहिते तदेवापूर्वं साधनमिति तदेवाक्षिप्यत इति। एवं तर्हि नियमविधीनामपूर्वमेव कार्यं स्यादित्यत्राह—**तथाभूतोपदेशेन च द्वारनियमस्तृतीये दर्शितः** । व्रीह्यादिसम्बन्धिभूता ह्युपदेशेनैव द्वारस्यापि नियमस्तृतीये दर्शितः। तेन द्वारकार्यमप्याश्रयणीयम्।

उपसंहरति—**अतः प्रोक्षिताभ्यामवहन्तीत्यत्र अवहन्तिद्वारमपूर्वं कुर्यादिति शास्त्रार्थः।** तस्मात् तत्कार्यापन्ने अन्यत्रापि धर्माणामूहसिद्धिरिति। अविरुद्धश्च व्रीहीनवहन्तीत्युपदेशः द्वारस्यापि विवक्षितत्वादिति स्थितम्।

**एवं वा**

**इहेदानीमपूर्वार्थत्वात्सर्वधर्माणां परमापूर्वमेव[ वैणैव ]प्रयुक्तं धर्मजातमिति पूर्वपक्षवादी मन्यत इति सम्बन्धः।** अस्यार्थः—न लौकिकरूपार्थता धर्माणाम् विना धर्मैस्तस्य सम्भवात्। अतोऽपूर्वार्थत्वात् धर्माणां परमापूर्वमेव प्रयोजकम्। नन्ववान्तरापूर्वमप्यपूर्वमेव, तेन तदपि प्रयोजकं स्यादित्याशङ्क्याह—**साधिकारं वाऽपूर्वं परमार्थतः।** परमार्थतः साधिकारमेवापूर्वं नान्यत्। एतदुक्तं भवति—अवान्तरापूर्वाणि नाम न सन्त्येव। किन्तु साधिकारमेव केवलमपूर्वमस्ति। कुत इत्याह—**तच्छून्यानां** अधिकारशून्यानां **तदापत्तेः।** अस्यार्थः—अधिकारशून्यानां प्रयाजादीनामधिकारसन्निधौ श्रुतानां तद्रूपापत्तेः। एतदुक्तं भवति - निरधिकारेभ्यो यजिभ्यः परतो लिङादयः श्रुताः अधिकारापूर्वमेवानुवदन्तीति।

नन्वेवं [अधिकार]शून्यानामपि यागा एव दीक्षणीयादयो धर्मजातं प्रयुञ्जतामित्यत्राह—**अनापन्नतद्भावैः स्वधर्मैः सम्बन्धान्न यागाः स्वरूपेण धर्मान् प्रयुञ्जते** लौकिकत्वात् धर्मसम्बन्धित्वानुपपत्तेः। (दूरोत्सारिततां वाङ्न) नावघातादिवत् द्वारकार्यमत्रोपलभ्यते आरादुपकारित्वादेषां दीक्षणीयाद्यङ्गानाम्। तेनाशङ्कापि नास्ति अन्यस्य प्रयोजकत्वं प्रति साक्षादपूर्वसाधनत्वादेषामिति। **अत्रोच्यते—सत्यमुक्तमनापन्नाधिकाराणां न धर्मसम्बन्ध इति किन्तु कार्यत्वमविशिष्टमवान्तरनियोगस्यापि।** साध्यमान एवासौ तदापत्तिं लभते अधिकारसाधनतां लभते। कुत इत्याह—**न हि असाध्यमानस्य रूपमवघातवल्लोकतः सिद्धम्।** यथा लौकिकमवघातादिरूपं तथाऽवान्तरनियोगस्य रूपम् तेन तदपि साध्यं वचनसमधिगम्यमेव साध्यं च स्वभावतः सेतिकर्तव्यताकस्य करणस्य निष्पाद्यमिति वचनादवगम्यते।

ननु अवान्तरनियोग एव नास्तीत्यत्राह—**नधिकारापत्तिर्भेदं निरुणद्धि अनुबन्धजम्** क्षणिकानां यागानां साधनत्वानुपपत्तेः अवान्तरापूर्वाण्यङ्गीक्रियन्ते अनुबन्धभेदभिन्नानीति(मां)तदापत्त्यापि भेदो न विरुद्ध्यते। **अधिकारे स्वभेदो**

**वर्णितः**। अधिकारावस्थायां त्वभेदः। एतदुक्तं भवति - एकमधिकारापूर्वं साध्यम्। तत्साधनभूतानि तु अनुबन्धभेदभिन्नानि अवान्तरापूर्वाणि यावदनुबन्धं बहूनि भिद्यन्त इति।

ननु भवन्त्वनुबन्धभेदभिन्नानि अपूर्वाणि तथापि कथं धर्माणां तदर्थतेत्याह— **अनुबन्धजं भेदमुद्दिश्य धर्मजातमवगम्यत इत्युक्तम्**। यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादिति वाङ्नियमो दीक्षणीयायां तावत् साक्षात्सम्बन्धः श्रूयते। दीक्षणीयासम्बन्धेन च तत्प्रत्यासन्नतदपूर्वसम्बन्धोऽवगम्यते। तेनानुबन्धभिन्नापूर्वोद्देशेन विधानात् तदर्थता धर्मजातस्य।

उपसंहरति—**तस्मादधिकारापत्तेरवान्तरापूर्वस्याधिकारार्थता**। अधिकारप्रयोजनता धर्माणां न निष्पाद्यतया, अवान्तरापूर्वं धर्मनिष्पाद्यमिति सिद्धमवान्तरनियोगार्थत्वं धर्माणाम् **नियोगावगम्यसाध्येषु** नियोगेन लिङादिनाऽवगम्यं साध्यं अवान्तरापूर्वं येषु विद्यते दीक्षणीयादिष्वित्यर्थः। अवान्तरापूर्वाभावात् अवघातादिवत् दीक्षणीयादिषु परमापूर्वमेव धर्माणां प्रयोजकमिति पूर्वः पक्षः।

अवघातादिवत् द्रव्यादिद्वारेण अधिकारैदमर्थ्यानुपपत्तेः क्षणिकेषु दीक्षणीयादिषु अवान्तरापूर्वाण्यङ्गीकरणीयानि। तानि चाऽलौकिकत्वात् शब्दावगम्यनिष्पत्तीनि। धर्माणां वाक्यादिभिरुपनीतानां प्रयोजनमुक्तम्। उक्तेऽप्यर्थे कस्यचित् मन्दधियो विस्मृतिर्माभूदिति बोधपरिहारद्वारेण उक्तमेवार्थं स्मारयति—**ननु च यागोऽपि लोकत एव सिद्धः किमिदमवघातादिभिर्वैषम्यमिति चोद्यम्**। परिहारस्तु—कार्यपर्यन्ततामङ्गीकृत्यालौकिकत्वमुक्तम् **आरादुपकारकाणां नाभिधेयतया**। यागशब्दाभिधेयतया लौकिकत्वम् किन्त्ववान्तरापूर्वपर्यन्तत्वेनेति विशेषोऽवघातादिभिः।

॥ ३ ॥ **फलदेवतयोश्च** ॥ ४ ॥

**कथं पुनरत्र संशयो यावता अपूर्वप्रयुक्ततैवात्रापि युक्ता**। उत्तरं — **मन्त्राभिधानसामर्थ्याच्च तैः स्वरूपप्रयुक्ततैवोक्ता**। अस्यार्थः—मन्त्रस्तावत् श्रुत्या अग्न्यादिस्वरूपं स्वर्गादिस्वरूपं चाह। तेन मन्त्रलिङ्गेन स्वरूपप्रयुक्तता प्रतिभाति। चोदनातश्च लक्षणा। मन्त्रस्याधिकारचोदनया परिग्रहीतत्वात् तदनुसारेणापूर्वसम्बन्धिस्वरूपलक्षणा भातीत्येवं संशयः। पुनराक्षिपति—**तदयुक्तम्**। **न चोदनादृतेऽभिधानं प्राप्नोति कर्मसम्बन्धितया**। अस्यार्थः - यदि मन्त्रोऽत्र

चोदनया परिगृह्यते तदा कर्मसम्बन्धितया मन्त्रेणार्थाभिधानं न प्राप्नोति। न वा कर्मसम्बन्ध्यभिधानमत्र चिन्त्यते, कर्मसम्बन्धि वाऽभिधानं चोदनानुगुणमिति लक्षणैव युक्ता। तस्मादयुक्तमेवाधिकरणमिदम्। कर्मसम्बन्धित्वे ह्यपूर्वार्थित्वमुक्तं सर्वधर्माणामिति इहापि तदेव युक्तम्। अतो देवताद्वारकं कार्याभिधानमिति स्थितमेव।

**अत्रोच्यते—अस्त्यत्र संशयहेतुः।** तथाहि—फलं तावन्न कर्मार्थितया चोदनावाक्येऽप्यवगम्यते फलस्य पुरुषार्थत्वेनावगमात्। तथापि किमित्याह—**यथाचोदितं च मन्त्रेणाभिधानमिति स्वरूपाभिधानाशङ्का।** यत्खलु यथाभूतं चोदितं तत् तथाभूतमेव मन्त्रेणाभिधातव्यम्। फलं च न कर्मार्थितया चोदितमिति न तस्य कर्मार्थित्वेनाभिधानम् किन्तु स्वरूपेणैवेति स्वरूपाभिधानाशङ्का। अप्रयुक्तेश्च कर्मार्थितां मन्यते। यदि कर्मार्थिमभिधानं न स्यात् तदा मन्त्रस्य प्रयुक्तिर्न स्यादिति कर्मार्थिता मन्त्रस्य। **तस्मादुपपन्नः संशयः।**

अत्र पूर्वपक्षवादी यथाचोदितमभिधानं न्याय्यमिति मन्यते। **अयथाचोदिताभिधाने** यथा चोदितं तथाऽनभिधाने हि मन्त्रस्याङ्गतैव नोपपद्यते। असमवेतार्थाभिधानादिति हेतोः। देवतायां पुनः दातृत्वाशङ्कया मुख्यमभिधानम्। फलदात्री देवता। तेन सापि फलकोटिनिक्षिप्ता न कर्मार्थितया चोदिता। तेन तस्या अपि स्वरूपेणैवाभिधानमिति वक्ष्यमाणफलदात्री देवतेति वक्ष्यामः। तस्मान्न मन्त्रे लक्षणा किन्तु श्रुत्यैव स्वर्गा(न्य)[द्य]भिधानमिति। **अत्रोच्यते-युक्तमुक्तं यथाचोदितमभिधानमिति। नन्वेवमेव चोदितम्। कथं चोदितम्? उत्तरं —समन्त्रकस्य कर्मणः इदं फलम्।** अस्यार्थः-यद्यपि फलं कर्मार्थि न भवति तथापि तावत् कर्मसम्बन्धितयैव चोदितम्। मन्त्रश्च कर्माङ्गभूतः अन्यथा प्रयुक्त्यभावात्। **एवं सति कर्मद्वारकमभिधानं मन्त्रस्य प्रतीयते।** अस्यार्थः-अभिधानस्य कर्माभिधेयं यत् तद्द्वारकमाग्नेयादिकर्माभिधानं मन्त्रेण प्रतीयते। **एतदुक्तं भवति —स्वर्गफलाभिधानद्वारेण कर्मैवाभिधीयत इति।** मन्त्रकार्यतः प्रत्युतायमेवार्थः श्रौतो वर्तते निमित्तापेक्षया लक्षणेत्युच्यते। यो हि कार्यान्वय्यर्थः स एव शब्दार्थ इति। यद्यपि निमित्तं परमालोच्यते लक्षणेयं तथापि अयमेव प्रत्युत श्रौतोऽर्थः। मुख्यस्त्वर्थो नियोगासंस्पर्शादश्रुत एव श्रुतेरतत्परत्वात्। तस्मान्निमित्तावस्थायां न लक्षणादोषः कार्यप्रधानत्वान्मन्त्राभिधानस्य। विनियोगपर्यालोचनया यदेव मन्त्रस्य

स्वकार्ये तदनुगुणमभिधानं, इह च कर्माभिधाने यो मन्त्रो विनियुक्त इति कर्मसम्बन्धित्वेन लक्षणयैव तदभिधानम्। अत्र च फलदातृतया फलांशनिक्षिप्तायामपि देवतायां सत्यां न तत्प्रयुक्तताऽभिधानस्येत्युक्तम्।

॥ ४ ॥ देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥

इदानीं दातृत्वादिभिः कारणैः देवतां न विनियोगार्थां मन्यते पूर्वपक्षवादी। अस्यार्थः-हविर्दानेन गुणवचनैश्च देवतैवाराध्यते। यजेर्देवतापूजार्थत्वात्। पूजायाश्च लोके पूज्यमानाराधनार्थत्वेन दर्शनात्। तथा गुणवचनलक्षणापि स्तुतिर्लोके राज्ञामाराधनार्था दृश्यत इति। न च फलकामिनो निष्फलं देवताराधनमिति देवतायाः फलदातृत्वमवगम्यते। न च फलस्यानीशानायाः तदुपपद्यत इति फलस्यापि सेष्टे इति कल्प्यते। न च हविर(नु)ज्ञाना देवता हविर्दानेनाराध्यते। न चाचेतनायाः विग्रहविरहिण्याश्चैतत्सर्वमिति भोक्तृत्वं चैतन्यं विग्रहवत्ता चेति सर्वमर्थादवगम्यते। सर्वथा यावता विनाऽस्यार्थस्यायोगः तावत्कल्प्यते। तेन प्रधानभूता देवता न नियोगार्था किन्तु सैव प्राधान्येनावगम्यमाना धर्मजातं स्वार्थतया गृह्णती प्रयोजिकेति। एतदेव विवरीतुं चोदयति—

ननु चैवं सति सापेक्षत्वान्मन्त्राणां बहु हातव्यं भवति। अस्यार्थः-शब्दस्तावत् विग्रहवत्तादिषु न प्रमाणम्। तस्यापूर्वे कार्यात्मनि प्रामाण्यात्। तेन प्रमाणान्तरापेक्षैर्मन्त्रैः विग्रहवत्त्वादिकोऽर्थो वक्तव्यः। न च तत्प्रमाणान्तरमस्तीत्यप्रामाण्यापत्तेः स्थितं प्रामाण्यादि बहु हातव्यं भवत्यस्मिन् पक्षे। परिहरति— आराधनस्यौत्पत्तिकत्वं मन्यते पूर्वपक्षवादी—अस्यार्थः-अस्मिन्नधिकरणे राद्धान्तसिद्धौ सत्यां अपूर्वं वाक्यार्थः सिद्ध्यति। यदा तु देवताराधनमेवोपदिश्यते तदा तत्रैवौत्पत्तिकमभिधायकत्वं च शब्दस्य। इदमत्राकूतम्—कार्यप्रतिपादकता लोके शब्दस्य व्युत्पन्ना। तदेव च कामी कार्यतयाऽवबुध्यते यत्फलदानसमर्थम्। आराधनं वा आराध्यदेवताद्वारेण फलदानसमर्थमित्याराधनमेव कार्यतया शब्देनाभिधीयत इति तत्रैव शब्दस्य प्रामाण्यम्। यदा वा आराधनं शब्देन प्रतीयते तदा तद्बलेन विग्रहवत्त्वादिके प्रमीयमाणे न किञ्चिदवहीयते स्मृत्युपचारान्यार्थदर्शनानि चैवमुपपन्नानि भवन्तीत्यभ्युच्चयः।

ननु चैवमपि अतिदेशो हीयते यद्धि देवतान्तराराधनोपायभूतं न तत् देवतान्तरे भवितुमर्हति असदृशत्वादिति भावः। परिहरति— हीयतामेव

**न काचित् क्षतिः ।** यत एवातिदेशो हीयते अत एवाह **यच्चाग्नौ हवनं न तत् सूर्य इति । सूर्याग्न्योरसदृशत्वात् ।**

**किं पुनः कारणं स्थितोऽतिदेशस्त्यज्यते ?** यावता स्थितातिदेशानुगुण्यात् अयमेव पक्षः किमिति न हीयते । उत्तरं—**नियोगसिद्धौ वाक्यार्थभूतायां अतिदेशो नैव त्यज्यते ।** यद्याराधनेनैवोपपद्यते किं कुर्मः एतदधिकरणसिद्धान्तमङ्गीकृत्यातिदेशः स्थापितो न्यायबलात् । पूर्वपक्षवेलायां यदि नोपपद्यते किं कुर्मः ? यत एवायं दोषावहः पक्षोऽत एव त्याज्यतयोपन्यस्त इत्यर्थः । पूर्वपक्षमुपसंहरति—**स्मृत्युपचारान्यार्थदर्शनैः पूर्वपक्षवादी श्रुत्या देवताभिधानमाह ।**

**राद्धान्तस्तु चोदनातस्तावत् यागेनेति प्रतीयते ।** अस्यार्थः-अस्याधिकरणस्य पूर्वपक्षदशायां याग एव देवतापूजात्मकः कार्यतयाऽवगम्यते । यच्च कार्यतया फलकामेनावगम्यते तेन फलं सिद्ध्यतीत्यङ्गीकरणीयम् । तेन यागेन स्वर्गं कुर्यात् स्वर्गकाम इत्ययमर्थः स्वर्गकामो यजेतेत्यत्र प्रतीयते ।

प्रतीयतां का क्षतिरित्याह—**प्रमाणान्तराभावाच्च दातृत्वादिषु न व्रीहिभिर्यजेतेतिवत् व्यवहिता यागश्रुतिः शक्यते कल्पयितुम् ।** यदि हि प्रमाणान्तरेण फलदातृत्वं अग्न्यादीनामवगतं भवेत् तदा देवताव्यवधानेन यागस्य फलं प्रति साधनभावोऽवगम्येत । न च दातृत्वादिषु प्रमाणमस्ति । आराधनभूतयागकर्तव्यतोपदेश एव प्रमाणमिति चेन्न, इतरेतराश्रयप्रसङ्गात् । सिद्धे हि दातृत्वे आराधनं वाक्यार्थो भवति । आराधने च वाक्यार्थे दातृत्वादिकल्पनेति । तस्मात् यागस्य फलकामिनं प्रति कार्यतयोपदेशो नोपपद्यत इति अपूर्वमेव फलदानसमर्थं कार्यतया शब्देन प्रतिपाद्यत इति तदेव वाक्यार्थ इति सिद्धम् ।

यथा च दातृत्वादिषु प्रमाणान्तरं नास्ति तथोक्तं भाष्ये । स्मृत्यादीनां तत्राप्रामाण्यात् । तस्मादपूर्वस्य वाक्यार्थत्वात् यागस्य च तद्विषयत्वात् यदैकस्मादपूर्वं तदा इतरत् तदर्थमिति न्यायेन देवतापि यागार्था सती अपूर्वार्था । तस्मादिदमपि देवतासम्बन्धि कर्मद्वारकमेव अभिधानकर्मभूताभिधेयदेवताद्वारकमपूर्वस्यैवाभिधानमिति स्थितम् । **शेषमुक्तम् ।**

**॥ ५ ॥ द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥**

**स्थिते त्वपूर्वप्रयुक्तत्वे(पि)विनियोगस्याविरोधात् कामाशङ्कां निवर्तयितुमिदधिकरणम् ?** अस्यार्थः - हन्तिपिष्यधिकरणे सर्वेषामेवमादीनामपूर्वप्रयुक्तत्वमुक्तम्। **न च** व्रीह्यादिविनियोगवशेन तदाक्षिप्यते।

**अत्रोच्यते - अस्त्यत्राशङ्का।** तामाह—**युक्तं तावत् प्रोक्षणस्य हन्तिपिषिभ्यां सह सम्बन्धे हन्तिपिष्योः भाव्यार्थतया कार्यपर्यन्तत्वम्।** अस्यार्थः—अपूर्वसम्बन्धो हि यस्यावगम्यते तस्यापूर्वं प्रयोजकं भवति। अन्यथाऽतिप्रसङ्गात्। अत्र च प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति प्रोक्षणस्य युक्तमपूर्वसम्बन्धित्वम् भव्यार्थतया हन्तिपिष्ट्योः साध्यान्तरानुप्रवेशात् प्रोक्षणस्य च तत्सम्बन्धित्वात्। फलदेवतयोश्च साध्यसम्बन्धित्वात् व्यपदेशस्यापूर्वसम्बन्धितयैव हि स्वर्गः फलमित्युच्यते तथाऽग्निरपि देवतेति न स्वरूपेण तेन तत्सम्बद्धस्यापि मन्त्रस्य युक्तमपूर्वसम्बन्धित्वम् तत्सम्बन्धित्वाच्च तत्प्रयुक्तत्वं च। इह तु द्रव्यसङ्ख्यादयो न कार्यपर्यन्तस्वभावाः। नापि साध्यसम्बन्धितयैव व्यपदिश्यन्ते। अतो न कार्यसम्बन्धितया धर्मविधानमेषां भवति।

ननु संस्कारोऽनर्थक इत्यत्राह—**संस्कृतानां तु भवति क्रियान्तरे विनियोग इति।** ननु च तृतीये तेषामर्थेन इत्यत्र विनियुक्तानां सतां व्रीह्यादीनां धर्मविनियोग इत्युक्तम्। कथमिदमुच्यते संस्कृतानां सतां विनियोगो भवत्विति। परिहरति—**तदेवेदमाक्षिप्यते।** एतदेव विवृणोति—**तत्र तृतीये ये यत्र श्रूयन्ते तेषामेव धर्मा इति विनियोगव्यवस्था प्रतिपादिता।** कामाशङ्कां निवर्तयितुमित्यत्राह—**इह सिद्धेन कार्यार्थत्वेन विरोधमाशङ्क्येति।** केन हेतुना तर्हि सा सिद्ध्यतीत्यत्राह—**विरोधाभावेन श्रुत्यादिव्यवस्थोक्ता।** इह पुनः श्रुत्यादिव्यवस्थानेऽसति कार्यगर्भो नोपपद्यते इत्याक्षिप्यते।

**नन्वेवं सति** यदि का[र्य](र्या)गर्भता नास्ति तदा **ये यत्र श्रूयन्ते इत्येतदेवाधिकरणमाक्षिप्तं भवति।** तथा च सति पूर्वपक्षाभावेनानारम्भणीयत्वात्। परिहरति—**न सर्वमधिकरणमाक्षिप्यते द्रव्यादिषु पुनराक्षिप्यत** इति सम्बन्धः। कया युक्त्या आक्षेप इत्यत्राह - **कार्यगर्भता नास्तीति विरोधाशङ्कापि नास्तीत्यनया युक्त्या।** तस्मादविरुद्ध एव व्रीहीन् प्रोक्षतीत्येवमादिषु विनियोगः।

**ननु चैवं सति पुरुषार्थता** प्राप्नोत्यवघातादीनाम्। यदि हि **क्रत्वर्थानां सतां संस्कारः स्यात् तदा क्रत्वर्थता भवेत् यदा तु संस्कृतानां सतां क्रत्वर्थता**

तदानीमक्रत्वर्थद्रव्यसम्बन्धात् पुरुषार्थता प्राप्नोति। उत्तरं—न **प्राप्नोति पुरुषार्थता।** कस्मादेवमित्याह—**शक्यते विभागोऽवगन्तुं अमी क्रत्वर्था अमी पुरुषार्था इति।** अस्यार्थः—ये व्रीह्यादयो निरुप्तास्तेषामेव प्रकृतत्वेनावघातादिसम्बन्धोऽवगम्यते नान्येषाम्। ये निरुप्तास्ते क्रत्वर्थाः अन्ये चाक्रत्वर्था इति शक्यते विभागोऽवगन्तुम्। अतः क्रत्वर्थव्रीहिसम्बन्धान्न पुरुषार्थतावघातादीनाम्। पुनरपि चोदयति—**निर्वापे कथं?** अस्यार्थः - निर्वापे तर्हि कथमपुरुषार्थता। नहि तत्रान्यत्संस्कारोऽस्ति यत्संस्कृतद्रव्यसम्बन्धात् अपूर्वार्थता स्यात् निर्वापस्याप्रिमत्वात्।

परिहरति - **तत्रापि निर्वापपृथक्त्वात् सिद्धमपुरुषार्थत्वम्।** द्वावेतौ निर्वापौ स्तः यः पुरुषार्थो यश्च क्रत्वर्थः। कःपुनः क्रत्वर्थः? यः क्रत्वर्थे द्रव्ये क्रियते यस्य क्रतुः प्रयोजनम् तत्क्रत्वर्थं द्रव्यम्। तस्मादविरुद्ध एव विनियोगः कार्येणेति अकार्यप्रयुक्ततां पूर्वपक्षवादी मन्यते। अत्रोच्यते—**अत्रापि कार्यप्रयुक्ततैव न्याय्या।** अन्यथा हि यदि कार्यप्रयुक्तता न स्यात् तदा नियमनियोगो न सम्पादितः स्यात्। नियोगो हि तदेवानुष्ठापयति। यच्च नियोगसिद्धावङ्गं येन च विनाऽङ्गसिद्धिरेव न स्यात्। तत्र तावत् पूर्वपक्षे अवघातादयो नियोगसिद्धौ नाङ्गभूताः। न च तैर्विना अङ्गस्य कस्यचिदसिद्धिः। अवघातादिव्यतिरेकेणापि पुरोडाशसिद्धेः। ततश्चावघातादिनियमविधिः नानुष्ठितः स्यात्। अनुष्ठानपर्यन्तता चाऽवगम्यते। तेनापूर्वप्रयुक्तताऽऽश्रयणीया। यच्चाधिकारान्तरं वा कल्प्यं अवघातादिविषयं, न च सन्निधानात् कार्यभेदोऽवगम्यमानो भिन्न इति शक्यते वक्तुम्। अविकारविधिसन्निधौ निरधिकारेषु श्रुतेषु स एवाधिकारो बुद्धौ विपरिवर्तत इति नाधिकारान्तरकल्पना शक्या। तस्मान्नाधिकारान्तरकल्पनां सहते नियोगो यथा सन्निहिताधिकारप्रवेशो भवति तथा वर्णनीयमिति तत्प्रयुक्ततैव न्याय्या। तत्प्रयुक्तत्वे च व्रीहिशब्दोऽपि तत्साधनविशेषलक्षणार्थ एव वर्णनीयः। यत एव प्रथममपूर्वग्रहणं पश्चात्तदीयसाधनविशेषविनियोगः अत एव दर्शपूर्णमासावुदाहृत्य विनियोगव्यवस्थोक्ता ग्राहकपूर्वकं विनियोगं दर्शयितुम्।

ननु विनियोगव्यवस्थायामपूर्वकार्यता विरुध्यते कार्यद्वयानुपपत्तेरित्यत्राह—**कार्यविरोधिनी च सेति तेषामर्थेनेत्यत्र प्रतिपादितम्।** अवहन्त्यादिष्वपि नैव पदार्थानुगुणता हेतुरपूर्वप्रयुक्तत्वे प्रोक्षणादीनाम्। किन्तु नियमनियोगसिद्धिरेव। तस्मात् तुल्यत्वाद्धेतोः न वैषम्यम् प्रोक्षिताभ्यामवहन्तीत्यस्य व्रीहीनवहन्तीत्यादिना।

तदेवमिहाधिकरणे सन्निपत्योपकारकाणां ग्राहकपूर्वको विनियोग इति प्रतिपाद्यते आरादुपकारकाणां तु सप्तमाद्ये इत्यवहितेन मनसा[1] ब्रह्मविदेवानुसन्धेयम् ।

इयमभ्युच्चययुक्तिः । पुरुषार्थताऽवहन्त्यादीनां प्राप्नोतीति साधयितुं पूर्वपक्षोक्तं समाधानमनुभाष्य दूषयति–**यदपि च प्रकृतलक्षणं प्रकरणमङ्गीकृत्य कार्यगर्भता ऽपनीयते** तदपनयनं नियमनियोगसिद्धेरयुक्तमित्युक्तम् । निर्वापे चासम्भवात् प्रकृत-लक्षणस्य प्रकरणस्य । न हि तत्र किञ्चित् प्रकृतमस्ति येन क्रत्वर्थता स्यात् ।

**ननु निर्वापभेदादेव सम्भव उक्तः । स एव निर्वापभेदो भिन्नेषु न सम्भ-वति ।** न हि निर्वापत्वात् क्रत्वर्थपुरुषार्थभेदो व्रीहीणामस्तीत्यसम्भवः प्रकृतलक्षणस्य प्रकरणस्य । निर्वापे य एव व्रीहयः पुरुषार्थास्त एव क्रत्वर्थेन निर्वापेण क्रत्वर्थाः क्रियन्ते । पूर्वपक्षावस्थायां तु निर्वापस्याक्रत्वर्थत्वात् न सम्भवतीति पुरुषार्थद्रव्य-सम्बन्धान्निर्वापः पुरुषार्थःस्यात् । तस्मिन् पुरुषार्थे प्रोक्षणमपि प्रकृतनिरुप्तव्रीहिसम्बन्धात् पुरुषार्थमित्यनेन क्रमेण सर्वेषां पुरुषार्थता । **शेषमुक्तम् ।**

**॥ ६ ॥ देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्**
**तस्य च तत्र भावात् ॥ २० ॥**

**स्थिते अपूर्वप्रयुक्तत्वे किं दीक्षणीयावाङ्नियमवत् धर्मसम्बद्धाना-मधिकारेणैकतापत्तिरङ्गनियोगानां उत अधिकारापन्नानामयं धर्मसम्बन्ध** इत्यनेन भाष्यकारीयः संशयग्रन्थो व्याख्यातः । यदि हि धर्मसम्बद्धानां सतामवान्तर-नियोगानामधिकारनियोगसम्बन्धो दीक्षणीयावाङ्नियमवत् तदा अवान्तरापूर्वप्रयुक्तत्वं, अथाधिकारं प्रति साधनीभूतानामेवायं धर्मसम्बन्धस्तदा अवघातादिवत् परमापूर्व-प्रयुक्तत्वम् । **तत्र पूर्वपक्षवादी यज्ञैकदेशसम्बन्धं मन्वानः अधिकारैकताप-न्नानामयं धर्म इति मन्यते ।**

अस्यार्थः—"स्वरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनं तेनोपांशु चरन्ति" इत्यत्र यज्ञशब्दस्य प्राचीनशब्देन सह सम्बन्धः अन्यथा हि स्वराशब्देन सम्बन्धे अर्थवादपदशेषता स्यात् । प्राचीनपदसम्बन्धे तु विधिपदशेषतासामान्यात् प्रवृत्तिविशेषकरत्वात् । तस्माद्यज्ञस्य यत्प्राचीनं तेनोपांशु चरन्तीति यज्ञसम्बद्धानामेवायं

---

1. अनूद्यसन्धे—A

धर्म इति परमापूर्वप्रयुक्ततां पूर्वपक्षवादी मन्यते। देशेन हि तदापत्तिर्लभ्यत इत्यभिप्रायः। **अवान्तरनियोगपरे तु वाक्ये देशनियोगसम्बन्धोऽन्यार्थःस्यात्**। अस्यार्थः— यज्ञस्य प्राचीनमिति योऽयं देशनियोगसम्बन्धः प्रतीयते तत्र नियोगसम्बद्धावस्थान्यवान्तरापूर्वाणि प्रतीयन्ते। तेन तदवस्थानामेव धर्मसम्बन्धः। यदि स्वरूपमात्रेणावान्तरापूर्वाणां धर्मसम्बन्धार्थमेव वाक्यं स्यात् तदा सम्बन्धावस्था स्वरूपमात्रोपलक्षणार्था सती अन्यार्था स्यात्। न च स्वार्थत्वे सम्भवति अन्यार्थता न्याय्या॥

**॥ ६ ॥ प्रणीतादि तथेति चेत् ॥ २३ ॥**

राद्धान्तोपक्रममिदमधिकरणम्। तत्र राद्धान्तिना अवान्तरापूर्वप्रयुक्त्यर्थं दृष्टान्तो दत्तः। यथा प्रणीताः प्रणेष्यन् वाचं यच्छति इति वाङ्नियमोऽवान्तरापूर्वप्रयुक्तः तथेदमुपांशुत्वमिति।

अत्र पूर्वपक्षभाष्यं राद्धान्तवाद्युक्तवाङ्नियमवैषम्यप्रदर्शनार्थं यज्ञस्य श्रुतत्वादिति। युक्तं तत्र वाङ्नियमस्यावान्तरापूर्वप्रयुक्तत्वम् यज्ञसम्बन्धाश्रवणात्। इह च यज्ञस्य प्राचीनमिति श्रुतत्वादिति। पुनश्च वाङ्नियमेनैव सह[साम्यो](स्वस्यो)पपत्त्यर्थं राद्धान्तैकदेशे स्थित्वा "नन्विदानीमेवोक्तं" इत्युक्तम्। यज्ञशब्दश्च यज्ञं तन्वाते इत्युदाहृतः। "यदध्वर्युयजमानौ वाचं यच्छतः तत्प्रजापतेर्हृदयं गत्वा यज्ञं तन्वाते" इत्यर्थवादगतो यज्ञशब्द उदाहृतः। यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छत इति केन केन वाक्यार्थप्रदर्शनपरेण।

अत्र चोदयति—**नैवोपक्रमे यज्ञशब्द उदाहृतः न चानन्तरमुक्तः**। राद्धान्तोपक्रमे हि प्रणीताः प्रणेष्यन् वाचं यच्छति इत्येव तदुदाहृतम् तथानुभाष्येण। सूत्रेपि प्रणीतावदिति? चेत् इत्यत्रापि यज्ञशब्दो नोक्तः कथमिदमुच्यते **नन्विदानीमेवोक्तं यज्ञं तनिष्यन्ताविति**। परिहारमाह—**नन्विदमचोद्यम्**। एतदुक्तं भवति—नन्विदानीमेवोक्तं त्वया पूर्वपक्षिणा यत्रापि यज्ञशब्दः श्रूयते स धर्मविधानायैव युक्तः प्रवृत्तिविशेषकरत्वात् न स्तुतय इति। अस्ति चात्राप्ययं यज्ञशब्दः 'यज्ञं तन्वात' इति। इदमत्राभिप्रेतम्—नायं भाष्ये सम्बन्धो-नन्विदानीमेव यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छत इत्युक्तमिति। किन्तु नन्विदानीमेवोक्तं त्वया यत्र यज्ञशब्दः श्रूयते स धर्मविधानायैव न स्तुतय इत्यध्याहृतेन सम्बन्धः। पुनश्चास्ति चात्रापि अयं यज्ञशब्दो यज्ञं तनिष्यन्ताविति तेनात्रापि यज्ञसम्बन्धावस्था-

नामेव वाङ्नियमसम्बन्ध इत्यत्रापि परमापूर्वप्रयुक्तैव स्यादित्येवं भाष्यमुक्त्वा पुनर्वैषम्याभिधानमदुष्टम् । सत्यमत्रापि यज्ञशब्दोऽस्ति विधिशेषश्च । तथापि विस्तारसम्बद्धोऽसौ । तेन यज्ञं विस्तारयितुं वाङ्नियमः कर्तव्यः । पदार्थसम्बन्धे च यज्ञस्य विस्तार इति पदार्थसम्बन्ध एव युक्तः । स परमापूर्वसम्बन्धः ।

**कथं पुनरस्मिन् पक्षे वीप्सावगतिः ?** यत्किञ्चिच्छ्रवणात् **बहून् प्रति व्याप्तुमिच्छा प्रतीयते साऽवान्तरापूर्वार्थित्वेऽवकल्पते । परमापूर्वार्थित्वे च भागधर्मोऽयम् । एकश्चासौ भाग इति वीप्सावगमो नोपपद्यते ।** उत्तरम्—**अर्थप्राप्तत्वाद्विवक्षेत्यभिप्रायः ।** अर्थप्राप्तानुवादोऽयमित्यर्थः । कथं पुनः प्राप्तिरित्याह —**देशसम्बन्धेपि हि पदार्थमुखेनैवाधिकारसम्बन्ध इत्युपपद्यते वीप्सा ।**

अत्र राद्धान्तोपक्रमे तस्य च तत्र भावादिति सूत्रावयवं व्याचक्षाणेन सन्निपत्योपकारप्रदर्शनं कृतं भाष्यकारेण । परं न केवलारादुपकारकस्यैवावान्तरापूर्वस्यायं धर्मः । किन्तु तस्य च सन्निपत्योपकारकस्यापूर्वस्यायं धर्मः तत्र देशे द्वयोर्भावादिति ।

तत्र चोदयति—**ननु नैवमपि सूत्रार्थो गच्छत्येव ।** तस्य चावान्तरनियोगस्य तत्र भावात् तत्प्रयुक्तमुपांशुत्वमित्यर्थः सूत्रावयवः । परिहरति—**सत्यमेवं सूत्रार्थो गच्छति निराकरणीयस्त्वर्थो नास्ति ।** यन्निराकरणार्थोऽयं सूत्रावयवः स्यात् । न चासावस्ति यन्निराकरणार्थः सूत्रावयवः । तेन मन्दप्रयोजनता स्यात् ।

**कथं निराकरणीयोऽर्थो नास्ति ?** उत्तरं—**तस्यावान्तरापूर्वस्याभावो विस्पष्टत्वान्न शक्यत आशङ्कितुम् ।** यदि हि अवान्तरापूर्वस्याभावाशङ्का स्यात् तदा तन्निराकरणार्थं सूत्रावयवः स्यात् न चासावस्ति । युक्त्यन्तरं बाह्यविशेषेण चाप्राप्तिर्वक्तव्या । न केवलमारादुपकारकस्य उभयविधस्यायं धर्म इति वक्तव्यम् । यदि हि तथा नोच्येत तदा कस्य चिन्मन्दस्य केवलारादुपकारकधर्मत्वाशङ्कैव स्यात् इति यथाभाष्यमेव सूत्रव्याख्यानं युक्तम् ।

इदानीं राद्धान्तोऽभिधीयते—**धर्मवतामेकतावगतिर्युक्ता ।** कुतः ? एकतापन्नानां धर्मसम्बन्धे प्रमाणाभावात् । ननु च यज्ञस्य प्राचीनमिति सम्बन्धावगमः प्रमाणमुपन्यस्तम् । परिहरति—**तुल्यमवान्तरापूर्वसम्बन्धेऽपि एकत्वाद्यज्ञस्य** प्राचीनमित्युपलक्षणार्थमेतत् । तेनोपांशु चरन्तीति धर्मविधेः तेनोपलक्षणतया

यज्ञसम्बन्धो नानुपपन्नः । युक्त्यन्तरं चाह—स्तुत्या वाऽऽनन्तर्येण सम्बन्धाव-गमात् । तस्मादित्यनेन शब्देन व्यवधानाद्यज्ञशब्दः प्राचीनशब्देन सह न सम्बध्यते, किन्त्वानन्तर्येण त्सराशब्देनैवास्य सम्बन्धः । तेन यज्ञसम्बद्धानां उपांशुत्वं न प्रतीयते ।

ननु स्तुतिसम्बन्धेऽपि शाकुनिकदृष्टान्तेन यज्ञार्थमेवोपांशुत्वं प्रतीयते । यथा शाकुनिकस्य त्सरा शकुनिप्रत्ययाय यज्ञस्यापि त्सरा यज्ञप्राप्त्यर्थैवेत्याशङ्क्याह—**दृष्टेन चार्थेन स्तुत्युपपत्तिः ।** पदार्थधर्मत्वे हि दृष्टेनैवार्थेन यज्ञप्राप्त्यर्थत्वं उपांशुत्वेनाशिथिलप्रयत्नैः सुखेन पदार्थान् अङ्गभूतानुपकुर्वद्भिः सुखेन यज्ञः प्राप्यते । पदार्थसम्बन्धाभावे तु अदृष्टेनोपकारेणोपांशुत्वस्य यज्ञप्राप्त्यर्थता स्यात् ।

राद्धान्तेऽभ्युच्चयमाह—**अवश्यंभावित्वाद्यज्ञपदार्थसम्बन्धस्य साक्षाद्देश-सम्बन्धस्याविद्यमानत्वात् वरं प्रथमं पदार्थसम्बन्ध एव** । यच्चोक्तं पूर्वपदार्थ-सम्बन्ध एव । यच्चोक्तं पूर्वपक्षे वीप्सार्थोऽनुवाद इति तत्राह—**वीप्सार्थाविवक्षाया-मयमेव दोषो यदुत तस्य सत्यां विवक्षायां अविवक्षेति** । अतस्सिद्धं धर्मवता-मधिकारापत्तिरिति ।

अत्र भाष्यकारेणोक्तं—''ननु दीक्षणीयादिष्वन्यदेव स्वरान्तरमस्ती''ति । तदसम्बद्धम् । न हि तत् पूर्वपक्षे राद्धान्ते वा उपयुक्तम् इत्याशङ्क्याह—**ननु दीक्षणीयादिष्वन्यदेव स्वरान्तरमस्ति विहितं इत्येतेन ग्रन्थेन याऽत्र प्राप्त्य-प्राप्तिचिन्ता विनियोगाविनियोगचिन्ता दीक्षणीयादिषु प्रधानेषु विशेष-विहितं स्वरान्तरमस्तीति नैतदसम्बद्धम् ।** स्वरान्तरावरुद्धे उपांशुत्वस्या-**विनियोगः ।** तदङ्गापूर्वेषु तु विनियोग इति सा कार्यभेदसिद्ध्यर्था । अन्यत्र तृतीये सिद्धा संव्यवहारार्थं लिखिता । सम्यग्राद्धान्तेन व्यवहर्तुमिदमुक्तम् । शेषं सह प्रयोजनेनोक्तम् ।

**॥ ७ ॥ अग्निधर्मः प्रतीष्टकं सङ्घातात् पौर्णमासीवत् ॥ २६ ॥**

**किमिदं कार्यचिन्तया द्रव्यान्तरं चिन्त्यते ?** अस्मिन् षट्के कार्य-तश्चिन्ता । तथाऽस्मिन्नध्याये तत्सिद्ध्यर्थं द्वारकार्यचिन्ता कार्यार्था । तेन षट्के अध्याये च नेयं द्रव्यान्तरचिन्ता सङ्गतेति । उत्तरं—**कार्यसिद्ध्यमर्थमिदं द्रव्यान्तरं चिन्त्यत इति क्रमः ।**

किं तत्कार्यं यदर्थैषा चिन्ता ? उत्तरं—अग्निं प्रोक्षतीति किमस्य प्रतीष्टकं कार्यं उतैकमेवेति । यदि द्रव्यान्तरमस्ति तदा तदेव प्रोक्षणीयमिति एकं कार्यम् । द्रव्यान्तराभावे प्रतीष्टकं कार्यम् । तदा हि इष्टका एव प्रोक्षणीयाः तदर्थं द्रव्यान्तरचिन्ता । पूर्वपक्षमाह—अत्र द्रव्यान्तरविदां ये अत्रयवेभ्योऽन्य-यविभूतं द्रव्यान्तरं वदन्ति वैशेषिकाः तेषां पक्वामसंयोगे द्रव्यान्तरं न भवतीति राद्धान्तः ।

अत्र चेष्टकाः पक्वाः पुरीषमपक्वं तेन तत्संयोगे द्रव्यान्तरं नास्ति । नचैवं प्रत्यक्षैकबुद्धिः कथमुपपादनीयेत्यभिप्रायेणाह—का पुनरत्रोपपत्तिः प्रत्यक्षबुद्धेः ? । उत्तरं—समुदायालम्बनैवालाक्षजा बुद्धिः पुलकादिष्वत्र न पुनरर्थान्तरापेक्षिणी । अवयवभूताभ्यः इष्टकाभ्योऽर्थान्तरमवयविद्रव्यमपेक्ष्य वा बुद्धिर्न भवति यथा देवदत्ता-दिष्विति वैधर्म्यदृष्टान्तः । तस्मान्न द्रव्यान्तरम् ।

राद्धान्तस्तु वचनात्तावदवगम्यते इष्टकाभिरग्निं चिनुत इति । अन्यथा हि इष्टकाभिश्चिनुत इति स्यात् । यथायमभिप्रायः अव्यतिरेकेऽपि व्यतिरेकशब्दः-प्रयुज्यते यथा शिलापुत्रकस्य शरीरमित्येवमादिषु इति । सत्यं यत्र स्पष्ट एवाभावः तत्र हि द्रव्यान्तराभावात् व्यतिरेकाभावात् अव्यतिरेकवद्भाव एव न्याय्यः । इह पुनः देवदत्तवत् इष्टकानिरपेक्षैव चितौ बुद्धिरुत्पद्यते इति व्यतिरेकवद्भावकल्पना ।

यथाहि देवदत्ते पाण्याद्यवयवनिरपेक्षा एकबुद्धिः अवयविसद्भावे प्रमाणं तथा-त्राप्ययमस्तीति नावयव्यनुपपत्तिः शक्यते वक्तुम् । पक्वामसंयोगेऽपि द्रव्यान्तरमुत्पद्यत इति दर्शनबलादङ्गीकरणीयम् । तेन स्पष्टत्वात् द्रव्यान्तरस्य न व्यतिरेकद्भावकल्पना किन्तु व्यतिरेक एवेति समासमधिकरणम् ।

यस्तु गौतममताश्रयणेन सकलावयविद्रव्यान्तरापह्नवः स वैशेषिकैर्निराकृतो-ऽस्माभिश्च जातिनिर्णये । तदाह—केशोण्डूकन्यायश्च द्रव्यान्तरविद्भिरेव प्रत्युक्तः । यथा अविद्यमानः केशोण्डूकः तैमिरिकस्यावभाति तथाऽवयव्यपीति योऽयं केशोण्डूकन्यायः स वैशेषिकैर्निराकृतः । यत्त्वनुमानमाकर्षणमुक्तं यत्रावयवी विद्यते तत्रैकस्मिन्नवयवे आकृष्यमाणे अवयवान्तरमपि आकृष्यते यथा देवदत्तः । इह च यैवेष्टका आकृष्यते सैवायाति नेष्टकान्तरमपि । तदाकर्षणमत्रानुमानं लिङ्गमुक्तम् । तत् स्थावरेष्वनैकान्तिकत्वात् प्रत्युक्तम् । वृक्षादौ यैव शाखा आकृष्यते सैवायाति

नान्येति । तेन यत्राप्यवयवी तत्राप्येतदस्तीति नैकान्ततोऽवयविनिराकरणे समर्थम् । तस्मादभिन्नं कार्यं प्रोक्षणस्येति सिद्धम् ।

**प्रयोजनमुक्तम्** । पौर्णमासीनिदर्शनमपि यत्पूर्वपक्षिणोक्तं यथा चतुर्होत्रा पौर्णमासीमभिमृशेदिति प्रत्येकमभिमर्शनं तथाऽग्निधर्मेणापि प्रतीष्टकं भा(व्य)व्यम् । तदपि परिहृतम् । युक्तं तत्र द्रव्यान्तरानारम्भात्, इह तु द्रव्यान्तरमारब्धमिति ।

॥ ८ ॥ **पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्** ॥ २९ ॥

**ऊहचिन्तायां कःप्रसङ्गोऽवलोपस्य** । यदि सर्वेषामह्नां पत्नीसंयाजान्तता तदा परस्तात्तनानामङ्गानामवलोप एव । यदा तु प्रागुत्तमादह्नः तदा नावलोप इत्यवलोपचिन्तेयमूहलक्षणे न सङ्गता । बाधचिन्तात्मकत्वादिति भावः । उत्तरं—**न खलु कश्चिदवलोपस्य प्रसङ्गः** । किन्तु अवलोप एवात्र न चिन्त्यत इति हृदिस्थम् ।

**यद्यवलोपोऽत्र न चिन्त्यते कथं तर्हीदमधिकरणम्** । उत्तरम्—**इत्थमधिकरणम् । अयमुपदेशोऽवलोपस्य उत कार्यस्योपसंहार इति** । अस्यार्थः - किमप्राप्त एवाङ्गलोपोऽयमुपदिश्यते अथ कार्यस्य करणोपकारस्योपसंहारः । सकृदनुष्ठितैरङ्गैस्सिद्धिः ।

नन्वन्यथैव भाष्ये चिन्तेति यो मन्यते तं प्रत्याह—**यद्ययम[व]लोपोपदेशस्तदा सर्वेषामह्नामविशेषात् पत्नीसंयाजान्तता । अथ कार्योपसंहृतिस्ततः प्रागुत्तमादह्नः पत्नीसंयाजान्तता** । उत्तमे तु पत्नीसंयाजेभ्यः(यस्याः)परस्तात्तनानामप्यनुष्ठानं सर्वार्थत्वेन ।

नन्वेवमपि काऽत्र लक्षणे सङ्गतिरित्यत्राह—**उपदेशे** अवलोपोपदेशपक्षे **यथोपदेशं कार्यकल्पना** । कार्यप्राप्तिरुपदेशवशेन बाधनीयेत्यर्थः । ततश्च विकृतिष्वपि तथैव कार्यम् पत्नीसंयाजान्तैवाङ्गरीतिः । उपसंहारे तु विकृतिष्वपि यथाकार्यमेव तदन्तता । सहानुष्ठानसम्पत्तिस्तदन्ततायाः कार्यम् । तेन यदुपोत्तममहः तत्र तत्र तदर्थं तदन्तता । द्विरात्र एकस्यान्हः पत्नीसंयाजान्तता, त्रिरात्रे तु द्वयोरिति यथाकार्यमनुष्ठानमित्यूहे सङ्गतिः ।

**तत्र पूर्वपक्षस्तावदुपदेशाभिमानेन** । अवलोपोपदेशोऽयमित्यभिमानेन पूर्वः पक्षः ।

ननूपदेशेन कथं सर्वेषां तदन्ततेत्यत्राह — **न ह्युपदेशे किञ्चिन्नियामकमस्तीति सर्वेषां तदन्ततोपदेशः।** इतिशब्दः समाप्तौ। **अपरः पक्षो राद्धान्ताभासभूतः** भवत्वयमुपदेशस्तथापि असंस्थितशब्दश्रवणात् प्रागुत्तमादह्नः पत्नीसंयाजान्तता। एवमसंस्थितेर्हेतुत्वमुपपन्नं भवति। एवं श्रूयते - पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरति। असंस्थितो हि तर्हि यज्ञः इत्यसंस्थाहेतुका पत्नीसंयाजान्तता कीर्त्यते। प्रागुत्तमादह्नो यज्ञस्यासंस्था। तेन तत्रैव तदन्ततोपदेश इति।

**इमं राद्धान्ताभासमसंस्थानस्यार्थवादत्वेन निराकृत्य पुनरविशेष उक्तः।** अस्यार्थः - पत्नीसंयाजान्ततास्तुतिरियम्। यदि हि पत्नीसंयाजान्तता न स्यात् तदा चिरेण यज्ञस्सन्तिष्ठते तेन संस्थितोऽप्यसंस्थितप्रायः स्यात्। तस्मादवलुप्यन्तामङ्गानीति। तेनाविशेषात् सर्वेषां पत्नीसंयाजान्ततेति।

**राद्धान्तस्तु नैवायमवलोपोपदेशः सम्भवति। प्राप्तत्वाद्धर्मजातस्य।** तदवलोपे प्राप्तबाधप्रसङ्गात्। न चाबाधे सम्भवति बाधो न्याय्यः। मूलयुक्तिमाह— **एकशब्दाद(ह्य)हर्गणस्य द्वादशाहलक्षणस्य कथमितिकर्तव्यताविस्तारः संहरणीय इत्यस्यामाकाङ्क्षायां** उपसंहारविधिरेवायमवगम्यते, नाप्राप्तस्यावलोपस्योपदेशः। द्वादशाहेन प्रजाकामं याजयेदित्येकः प्रयोगविधिः प्रत्यहं विहितमितिकर्तव्यताकलापं युगपत्प्रयुङ्क्ते। तत्प्रयुक्त्यनुसारेणेतिकर्तव्यताकलापस्तावत् सहानुष्ठातव्यः। स केन प्रकारेणेति प्रकारविशेषाकाङ्क्षायां इदं वचनमुपसंहारस्य। उपसंह्रियते सहानुष्ठीयते यत इतिकर्तव्यताकलापो येन पत्नीसंयाजान्ततावस्थानेन तद्विधिरवगम्यते। अपेक्षितविधानात्। यदा चेदं पत्नीसंयाजान्ततावस्थानं इतिकर्तव्यतोपसंहारप्रयोजनं तदा प्रागुत्तमादह्नो व्यवतिष्ठते। एवं च दृष्टार्थैव स्तुतिरुपपन्ना भवति। "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरति असंस्थितो हि तर्हि यज्ञः" इति। यत्रासंस्था तत्र पत्नीसंयाजान्ततावगम्यते सा चानेन न्यायेन प्राप्ता समाप्तिः प्रमाणप्रतिपन्नतयैव स्तुतिरुपपन्ना भवति। अन्यथा यथावगम्यमानार्थाभावेनानुपपन्ना स्यात्। विधानं च विपरीतम्। इतरस्मिन् पक्षे वाक्येन विधानम्। अह्नां हि समाप्तिरस्त्येव। तत्र चोपपदार्थविधानं स्यात्। असत्पक्षे तु संस्थानमेव विधीयत इति श्रुत्या विधानम्। **शेषमुक्तम्।**

**॥ ९ ॥ अभ्यासः सामिधेनीनां प्राथम्यात् सर्वधर्मः स्यात् ॥ ३३ ॥**

**ननु च कार्यशून्यत्वादृचो धर्मसम्बन्ध एव नोपपद्यते । कथं प्रयुक्तिश्चिन्त्यते ।** अत्र किलाधिकरणे किमयं ऋग्धर्मः उत स्थानधर्म इत्यनेन प्रकारेण प्रयुक्तिरेव चिन्त्यते । अयमभ्यासः ऋक्प्रयुक्त उत स्थानप्रयुक्त इति । तच्च न युक्तम् । अकार्यत्वादृचः । कार्यं हि धर्माणां प्रयोजकं भवति नाकार्यमिति । उच्यते । **कार्ययोगमङ्गीकृत्यैषा चिन्ता न ऋक्त्वमात्रतया ।** एतदुक्तं भवति-यावत्कार्यमस्यास्साधनभूतायाः किमयं धर्मः, सामिधेन्यनुवचनतयैव उत प्रथमवचनतयैवेति । त्रिःप्रथमामन्वाहेति यदि प्रवोवाजासम्बन्धोऽभ्यासस्य तदा दर्शपूर्णमासाधिकारगृहीतत्वात् यदेतदीयं प्रवोवाजासाध्यं कार्यं तत्र निविष्टायास्तस्याः अयं धर्मः स्यात । यदा तु प्रथमवचनसम्बन्धोऽभ्यासस्य तदा प्रथमवचनकार्यनिविष्टाया इति ।

तत्र पूर्वपक्षवादी वदति — अवश्यं स्त्रीलिङ्गविवक्षा कर्तव्या । प्राथम्यमात्रविवक्षायां हि पदवर्णधर्मोऽप्याशङ्क्येत ऋच एव धर्मो न स्यात् । तेन प्रथमोद्देशेन विधाने लिङ्गं विशेषणं विवक्षणीयम् । अतो **लिङ्गेनैव संशयव्यावृत्तेः विवक्षितं लिङ्गमित्येवं** वदतीति सम्बन्धः । केन पुनर्लिङ्गमभिहितं विवक्षितमित्याह—**स्त्रियामभिधेयायामित्यपि पक्षो विद्यते** । तेन प्रत्ययेनाप्यते स्त्रीत्वम् । तदेवं स्त्रीत्वस्य विवक्षितत्वात् तद्धर्मोऽयम् । ऋक्स्त्री, तस्मात्तद्धर्मोऽभ्यास इत्येवं प्राप्ते अभिधीयते ।

**नात्र लिङ्गविवक्षोपपद्यते, प्राथम्यस्यानुवादासम्भवात् विधाने च वाक्यभेदप्रसङ्गात् ।** यदि स्त्रियमुद्दिश्य धर्मविधिस्तदा प्राथम्यं तावत् नानूद्यते अप्राप्तत्वात । नहि प्रथमैवेयं ऋक् । न च प्राथम्यं विधीयते वाक्यभेदप्रसङ्गात । तस्माद्वरं स्त्रीत्वमविवक्षितमस्तु ।

ननु तदपि कथमन्वीयत इत्यत्राह—**स्त्रीत्वं पुनः ऋग्विषयत्वात् अनुवचनस्य नित्यप्राप्तत्वात् अनूद्यत इत्यदोषः** । ननु पदवर्णशङ्कापि प्राप्नोतीत्युक्तम् तेन नापि स्त्रीत्वमत्र नित्यप्राप्तम् । परिहरति—**न पदवर्णशङ्का अर्थनिष्ठत्वादनुवचनस्य ।** अर्थप्रतिपत्त्यर्थं हि अनुवचनं तेन यदेवार्थं प्रतिपादयति तस्यैवानुवचनं विधीयते । **वाक्याच्चार्थावगतिः** अनेकपदसङ्घातात्मनो वाक्यादेवार्थावगतिः न पुनरेकस्मात्पदाद्वा । तेन वाक्यस्यैवानुवचनं प्राप्तम् वाक्यं च ऋक् । तेन प्राप्तं स्त्रीत्वमनूद्यत इत्युक्तम् । स्त्रियां यत्प्रातिपदिकं वर्तेत इत्यस्यार्थे इत्यनेनाभिप्रायेण स्त्रियां

यत्प्रातिपदिकं वर्तते तस्माट्टाबादय इत्युक्तं विशेषणभूतत्वाच्च स्त्रीत्वस्यानुवचनसम्बन्धो नास्तीत्याह—**न च विशेषणं क्रियया सम्बध्यते किन्तु विशेष्यतयैव ।**

**ननु चाभिधेयपक्षोऽप्यस्तीत्युक्तम् ।** अस्यार्थः—यद्यपि वस्तुस्थित्या लिङ्गस्य विशेषणत्वं तथापि पृथक्शब्दाभिधेयतया सम्बन्धो भविष्यति सङ्ख्यावदिति । परिहरति—**तथापि विशेषणस्वभावो नैवापैति ।** प्रत्ययेनापि स्त्रीत्वमभिधीयमानं प्रातिपदिकार्थविशेषणतयैवोच्यते इति तस्य क्रियासम्बन्धः । तस्मात् प्राथम्येनैवाभ्यासस्य सम्बन्धो युक्तः । युक्त्यन्तरं चाह **युक्तं चैतत् पञ्चदशार्थसम्पत्त्यर्थावगतेः** । सामिधेनीनां हि पञ्चदशत्वसम्पत्त्यर्थेऽभ्यासे दृष्टार्थता भवति । अतः सामिधेनीप्रथमानुवचनकार्यप्रयुक्तोऽयं धर्म इति स्थितम् ।

**॥ १० ॥ इष्ट्यावृत्तौ प्रयाजवदावर्तताऽऽरम्भणीया ॥ ३४ ॥**

आद्यमधिकरणम् किमारम्भशब्देन कर्मारम्भः कर्मानुष्ठानोपक्रम उच्यते उत इदं मया कर्तव्यमित्यध्यवसानमित्येवमारम्भशब्दस्यार्थं विकल्प्य वर्णितम् । तत्र कर्मोपक्रमः शब्दार्थ इति पूर्वपक्षयित्वा अध्यवसानं शब्दार्थः एकं च तत् सर्वदर्शपूर्णमासप्रयोगाणामिति राद्धान्तितम् । तदिदं पूर्वाचार्यव्याख्यानमयुक्तं मन्वानेन भाष्यकारेण अन्यथा अधिकरणं व्याख्यातम् ।

कथं पुनरिदं पूर्वाचार्यव्याख्यानमयुक्तं मन्यते । उत्तरं—**नायमारम्भशब्दः कस्यचित्पदार्थस्यैकस्य प्रतिनियतस्याद्यामवस्थामाह । किं तर्हि ? सर्वपदार्थानामेव आद्यामवस्थामाचष्टे । ततः किं ? इदं ततो भवति ।** उपात्तस्य सन्निधावुच्चार्यमाणः तस्यैवारम्भमवगमयति । दर्शपूर्णमाससन्निधावयमुच्चार्यते "आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमाणः" इति । तेन तदारम्भमेवावगमयति । इदं मया कर्तव्यमित्यध्यवसानं पुनः सर्वपदार्थानां सर्वकर्मणामेव नित्यनैमित्तिककाम्यानामाधानोत्तरकालभाविनां साधारणत्वात् नैकस्याद्यावस्था तयाऽवगन्तुं शक्यते । एवं ह्यसौ पुरुषस्य सङ्कल्पो यावदग्निसाध्यं मे कर्मोपनिपतिष्यति तन्मया कर्तव्यमिति न पुनर्दर्शपूर्णमासमात्रं कर्तव्यमिति । तेन साधारणत्वात् दर्शपूर्णमासारम्भतया नावगन्तुं शक्यते । अतो दर्शपूर्णमासारम्भ एव तदुपक्रम एव तदी(योऽयं)[याद्य]पदार्थप्रयोग एवायं प्रतिपत्तव्योऽसाधारणत्वात्तस्य तदारम्भतयाऽवगमात् । नाध्यवसानं, **विशेषादृते व्यवहाराभावादध्यवसानस्य ।**

विशेषाभावे दर्शपूर्णमासारम्भोऽयमिति व्यवहाराभावात् । तस्मादध्यवसाननिमित्तिका नारम्भणीया । किन्तु आद्यपदार्थप्रयोगनिमित्तिका । ततश्चावृत्तिरेवापद्यत इति न राद्धान्तसिद्धिः इत्येवं पूर्वाचार्यव्याख्यानमयुक्तम् ।

**ननु भाष्य[व्याख्या]नमपि गतार्थमिव दृश्यते ।** कथं? उत्तरं—**सर्वमेव हि निमित्तमधिकारिविशेषणतयाऽन्वेतीति भेदनादिषूक्तम् । कथमारम्भः शेषित्वेनाङ्क्ष्यते ।** अस्यार्थः - भाष्यकारो ह्येवं विचारयति किमारम्भणीया दर्शपूर्णमासयोराद्यपदार्थं सम्यञ्चं करोति उत पुरुषमारम्भयोग्यमिति । तत्रारम्भस्य निमित्तभूतत्वात् शेषित्वाशङ्का नोपपद्यते । उक्तं हि षष्ठे । 'भेदनादीनि निमित्तभूतानि न शेषीणी'ति । तेन गतार्थमिदमधिकरणं भाष्यकारीयम् । परिहरति—**अस्त्यत्राशङ्का यद्ययं भेदनवदधिकारः परिगृह्यते तदा दर्शपूर्णमासाधिकृतविशेषणवत् प्रतिप्रयोगमावर्तते आरम्भणीया यथा सति भेदने होमः ।** अस्यार्थः - यथा भिन्ने जुहोतीति भेदनमधिकारिविशेषणं, यदि तथाऽऽरम्भः स्यात तदा दर्शपूर्णमासाधिकृ[तः] तेन विशेषणीयः आरम्भवान् दर्शपूर्णमासाधिकृतः आरम्भणीयां कुर्यादिति । यथा यो भेदनवात् दर्शपूर्णमासाधिकृतः स होमं इति । ततश्चाधिकारावृत्तौ प्रतिप्रयोगमारम्भणीया आवर्तते यथा भेदनहोमः । प्रधानाधिकारानुप्रवेशात् अवान्तराधिकारस्य तदावृत्तावावृत्तिः । यदि तु स्वतन्त्रोऽधिकारः स्यात तदा आरम्भणीयाया आवृत्तिर्न स्यात । **अथैवं न कल्प्यते** दर्शपूर्णमासाधिकृतविशेषणं न कल्प्यते तदा अधिकारान्तरत्वात् कार्यान्तरकल्पना स्यात् । **भवत्विति चेन्न । दर्शपूर्णमासशब्दसमभिव्याहारादधिकारान्तरानवगतिः ।** एकस्मिन् वाक्ये दर्शपूर्णमासावाग्नावैष्णवं च समभिव्याह्रियेते । तत्र वाक्येन सम्बन्धोऽवगम्यते । अधिकारान्तरे च स बाधितो भवति । तस्मान्नाधिकारान्तरावगतिः । यत एवं निमित्तभावेप्यावृत्तिः तस्माद्वरमाद्यपदार्थसंस्कारतयैवायं विधिः कल्पितः स्यात् किमवान्तराधिकारेण । आरप्स्यमान इति वरं शेषिणमेव समर्पयतु । यदारम्भसंस्कारकं तदारम्भवतैव क्रियत इति पुरुषश्रवणमनुवादः किमवान्तराधिकारेण वृथा आश्रितेन ।

ननु यदि तुल्यमेव पक्षद्वयेपि प्रयोजनं केन विशेषेणावान्तराधिकारस्त्यज्यते आरम्भसंस्कारः परपक्षश्च परिगृह्यते तदाह—**किं पुनरवान्तराधिकारे गौरवं येन स त्यज्यते ।** उत्तरं—**न खलु किञ्चिद्गौरवं, किन्त्ववान्तराधिकार**

**एव न सम्भवति। कथमसम्भवः ? उत्तरं—नित्यत्वादाद्यस्य पदार्थस्य नावान्तराधिकारसम्भवः।** दर्शपूर्णमासयोर्हि आद्यः पदार्थो नित्यभूतः अनित्यं च विशेषणं भवति। तेन तस्याधिकृतविशेषणांशो नोपपद्यते। भेदनादीनां तु अनित्यत्वात् युक्तोऽवान्तराधिकारः तेषामधिकृतविशेषणतया विधानमेतद्युक्तमिति पूर्वपक्षवादी मन्यते। अतः प्रतिप्रयोगं प्रयाजवदावृत्तिरिति युक्तम्।

अत्रोच्यते—अस्त्यत्रावान्तराधिकारप्रयोजनं सकृदनुष्ठानरूपम्। यथा च तत्सिद्ध्यति। न चेदमधिकृतविशेषणेन भवति आरप्स्यमाण इति पुरुषविशेषणत्वावगतेः। तदाह—**स्पष्टश्चायमधिकार इति।** ननु तथापि किमित्यारम्भः शेषी न भवतीत्यत्राह—**न च निमित्तं शेषी(न)भवितुमर्हति शेषित्वे प्रमाणाभावात्।**

**ननु निमित्तमेतन्न भवति नित्यत्वादाद्यस्य पदार्थस्येत्युक्तम्।** परिहरति—**सत्यं न भवति निमित्तं यद्यारम्भणीया भेदनहोमवत् कर्माङ्गं कल्प्येत।** यो ह्यारम्भणीयामङ्गमिच्छति तेन दर्शपूर्णमासादावारम्भ इत्यास्थेयम् नान्यथाऽङ्गत्वसिद्धिर्यतः। यश्च दर्शपूर्णमासाधिकृतः तस्य नेदं विशेषणमुपपद्यते अव्यभिचारात्। यस्त्वारम्भणीयामङ्गभूतां नेच्छति न तस्य दर्शपूर्णमासाधिकारो विशेषणीयः, किन्तु पुरुषमात्रम्। न च सर्वः पुरुषो दर्शपूर्णमासारम्भवानिति व्यभिचाराद्युक्तं विशेषणम्। स्वतन्त्राधिकार एवायं न भवतीति मन्वान आह—**किमिति चासम्भाव्यमाने चाङ्गत्वे स्वतन्त्राधिकारे दोष उक्तो दर्शपूर्णमाससमभिव्याहाराशब्दानवगतिरुक्ताधिकारान्तरस्य।** उत्तरं—**सत्यं स्वतन्त्राधिकारे कल्प्यमाने भवत्ययं दोषो** दर्शपूर्णमाससमभिव्याहारबाधात्मकः किन्तु अवान्तराधिकार एवायम्। नायमेकान्ततो दर्शपूर्णमासाधिकारसंस्पर्श्यधिकारः। किन्तु तदुपकारकत्वादवान्तराधिकार एवायम्। न चाद्यपदार्थनित्यतयाऽस्य विरोधः। न चास्त्येव नित्यतया विरोधः। तथाहि—यदि दर्शपूर्णमाससमभिव्याहार आदितस्तदा तदङ्गमेवारम्भणीया। तदङ्गत्वे वा आरम्भोऽपि तदधिकृतविशेषणं भेदनवत्। न च नित्यस्य तदुपपद्यत इति शङ्कायामाह—**सर्वत्र चाङ्गाङ्गिभावे नियोगैक्यं कारणम्।** अङ्गाङ्गिनोर्हि नियोगैक्ये सति अङ्गाङ्गिभावो भवति अन्यथा भिन्नकार्यत्वे अङ्गाङ्गिभावानुपपत्तेः।

भवत्वेवं तथापि किमित्याह—**न चात्र नियोगैक्ये प्रमाणमस्ति अप्रकरणाधीतत्वादारम्भणीयायाः।** ननु आरम्भसम्बन्धमुखेन अस्त्येव तन्नियोग-

प्रत्यभिज्ञानं यथा पर्णमयी जुहूर्भवतीत्यनेन अभिप्रायेणाह—**कथं नास्ति नियोगैक्ये प्रमाणमिति**। उत्तरं—**यदि हि स्वतन्त्रसमभिव्याहृतं** आद्यपदार्थरूपं आरम्भ इत्या[रम्भणीय]या सहान्वेति तदा स्यात् वैनियोगिकः आद्येन पदार्थेन सह तन्मुखेन विनियोगैक्ये। इह पुनरारम्भकर्तुरुपसर्जनीभूतं विशेषणीभूतं आद्यपदार्थरूपमारभमाण इत्यारम्भणीययाऽन्वेति। तत्राधिकारान्वये सम्भवति किमिति वैनियोगिकः परिगृह्यते। अधिकारिविशेषणतयैवारम्भान्वयस्तद्विशेषणत्वेन दर्शपूर्णमासयोः। **एवमाधिकारिके सम्बन्धे सति किमिति वैनियोगिकः परिगृह्यते? प्रयोजनभेदो नोपपद्यते तेन परिगृह्यत इति चेत्।**

दूषयति—**सुतरां साक्षात्प्रतीयमानाधिकारत्यागे प्रमाणं नास्ति।** न च प्रयोजनभेदोऽपि नास्तीत्याह—**अस्ति च शब्दार्थे विशेषः सकृत् संस्कृतोऽधिकारी सर्वप्रयोगाङ्गतां लभते।** अस्यार्थः—अधिकारिविशेषणत्वेप्यारम्भस्य साध्यत्वेनैव विशेषणत्वात् स्वर्गवत् तत्सिद्ध्युपयोगित्वमारम्भणीयानियोगस्य। साधिकारे वाक्ये पुरुषप्रधानः सम्बन्धः इति पुरुषार्थत्वादारम्भणीयायाः पुरुषस्यैवारम्भोत्पत्त्यनुगुणः संस्कारः आरम्भणीयया क्रियते। सकृत्संस्कृतश्च पुरुषो दर्शपूर्णमासारम्भयोग्यो जात इति नारम्भणीयाऽऽवर्तते। वैनियोगिके तु सम्बन्धे[के]वलारम्भसंस्कारादारम्भस्य च आवृत्तेरावृत्तिः स्यात् तदाह—**वैनियोगिके पुनः सम्बन्धे प्रतिप्रयोगमावृत्तिरिति।** इह चेदमर्थसारम्—अनारभ्याधीता आरम्भणीया। तेन न तावत् सन्निधानान्नियोगैक्यम्। नापि पर्णतावत् पदार्थान्वयद्वारेण। अधिकारे पुरुषसम्बन्धेन पुरुषार्थत्वादारम्भणीयाया न साक्षादाद्यपदार्थसम्बन्धः। तेन पुरुषस्यैवारम्भयोग्यतां उत्पादयन्ती संस्कारिका। न पुनः क्रत्वङ्गं प्रमाणाभावात्।

एतेनेदमुक्तम्—ये प्रयाजादिष्वधिकारमाहुः तेषां प्रयाजादयोऽपि पुरुषार्था एव भवेयुः न क्रत्वर्थाः तत्रारम्भणीयावत् प्रयाजादिभिरपि अपूर्वोदयानुगुणः संस्कारः क्रियते। तद्वच्च सकृदनुष्ठानं तेषामपि स्यादिति। दीक्षणीया तु प्रकरणाधीता। तेन दीक्षिष्यमाण इति प्रकृताधिकृतविशेषणमेव। अतो नियोगैक्याज्ज्योतिष्टोमाङ्गमिति। न च पुरुषसंस्कारद्वारेणापि क्रत्वनुप्रवेशः स्वतन्त्रपुरुषसंस्कारात् सकृत्संस्कृतस्य सत उत्तरकालं प्रयोगाङ्गत्वात्।

**यद्येवं यद्यारम्भणीया पुरुषसंस्कारिका भेदनहोमोऽपि कस्मात् पुरुषसंस्कार एव न कल्प्यते।** उत्तर—कल्प्यमानेऽपि प्रतिनिमित्तं व्यलीकोत्पत्तौ

**पुनः प्रसङ्गविज्ञानादावृत्तिरेवात्र ।** अस्यार्थः—भिन्ने जुहोतीति भेदननिमित्त-दोषनिर्हरणद्वारेण पुरुषः संस्कर्तव्यः । निमित्तं प्रतिभेदनं दोषोत्पत्तेः तन्निर्हरणार्थं पुनः होमप्रसङ्गविज्ञानमस्तीत्यावृत्तिरेव होमस्य । पुनश्चेदनुष्ठानाविशेषः तेनेदं चोद्य-मचोद्यमेव । तत्रापि संस्कारः प्रकरणात् साक्षादधिकृतसमभिव्याहा[ रात् ]( र्यो ) **भेदनादिषु निमित्तान्यथानुपपत्त्या तु कल्पितः ।** अस्यार्थः—न भेदनादीनां पुरुषसम्बन्धो येन पुरुषसंस्कारकता स्यात् । किन्तु ते क्रत्वर्था एव । यदि तेषु साक्षा दधिकारः श्रूयेत तदा भवेदेवं, किन्तु निरधिकारा एव, भेदनादीनां निमित्तत्वेन-श्रवणात् । निरधिकारस्य च प्रकरणाधीतस्य क्रत्वर्थत्वमेव । अनिमित्तता तु अधिका-रिविशेषणतामन्तरेण न सम्भवतीति क्रत्वर्थाधिकृतपुरुषविशेषणता भेदनादीनां कल्प्यते ।

ननु पुरुषसंस्कारकत्वेपि आरम्भनिमित्तत्वादस्यारम्भावृत्तौ किमित्यावृत्तिर्न-भवति पुरुषसंस्कारभेदनहोमवदित्याशङ्क्याह—**इह पुनर्निमित्तान्तरोत्पाद एव न भवतीति नावृत्तिरिति विशेषः ।** कस्मान्निमित्तान्तरोत्पादो न भवदीत्यत्राह—**अभिन्नत्वादाद्यस्य पदार्थस्य ।** एषोऽभिप्रायः—आद्यपदार्थानुष्ठाने योग्यता पुरुषस्य आरम्भणीयया क्रियते । एकश्चासावाद्यः पदार्थः । तेन तं प्रति योग्यता न भिन्ना योग्यतोत्पत्त्यर्थता च पुरुषस्यारम्भणीयानुष्ठाने निमित्तम् । एका चासौ । तेन निमित्ता-वृत्त्यभावान्नारम्भणीयावृत्तिः । तत्र पुनरभिन्नस्य भेदनमिति सिद्धो निमित्तभेदः । भेदनान्तरोत्पन्नव्यलीकभेदात् तन्निर्हरणार्थतापि तत्र भिन्नैव । तेन पुरुषसंस्कारकत्वे तत्रावृत्तिर्निमित्तावृत्तेः ।

तदिदं भाष्यकारेण प्रयोगान्तरेपि संस्कृत एव लभ्यते इति समानेऽहनी-त्यपि सिद्धमिति दर्शितम् । दर्शपूर्णमासावरप्स्यमान इत्यत्र लृट्प्रत्ययेन अनद्यतनभवि-ष्यद्विहितेन यस्मिन्नेवाहनि दर्शपूर्णमासौ कर्तव्यौ तस्मिन्नेवाहनि कृतयाऽऽरम्भणीयया आरम्भयोग्यता भवतीति । तच्चास्त्येव । यथाऽसौ सकृदारम्भणीया कृता सा दर्शपूर्ण-माससमानाहस्सम्बन्धिन्येव । यथा चैवं तथा दशमे या दीक्षणीयादिष्वारम्भणीया-शङ्का समधिगता सा सोमपूर्वत्वपक्षमाश्रित्य । इष्टिपूर्वत्वे हि संस्कृतत्वात् पुरुषस्य नाशङ्कोपपद्यत इत्यनवद्यम् ।

**॥ ११ ॥ अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्**
**तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥**

अत्र किल समवेतार्थत्वे दृष्टार्थतेति मन्वान आह—**ननु च दृष्टादृष्टार्थत्वं मन्त्राणां न सम्भवतीति संशय एवायुक्तः**। यस्माद् 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इत्युक्तम्। दृष्टादृष्टार्थत्वे चार्थभेदः। तेन मन्त्रैक्यमेव न सिद्ध्यति। एकस्य मन्त्रस्य दृष्टादृष्टार्थत्वं नोपपद्यत इति राद्धान्तवचनव्यक्त्यभावात् संशय एवायमयुक्तः।

राद्धान्ते हि अग्नये जुष्टं निर्वपामीति समवेतार्थम् परिशिष्टमसमवेतार्थमदृष्टार्थमिति प्रयोजनभेद आपद्यते। परिहरति—**उच्यते**—नैवात्र दृष्टादृष्टार्थतया पूर्वोत्तरपक्षौ यथासङ्ख्यं क्रियेते। राद्धान्ते परिशिष्टस्यापि नास्ति अदृष्टार्थत्वमिति एकमन्त्रत्वाविरोधः।

**कथं तर्हि पूर्वोत्तरपक्षौ क्रियेते?** उत्तर—**समवेतार्थतया**। पुनश्चोदयति—**ननु समवेतार्थत्वे सति दृष्टार्थत्वमसमवेतार्थत्वे त्वदृष्टार्थत्वमिति तदेवेदं दृष्टादृष्टार्थत्वं पूर्वोत्तरपक्षयोः**। परिहरति—**नैतदेवम्। सत्यं समवेतार्थत्वे दृष्टार्थत्वं असमवेतार्थत्वे त्वदृष्टार्थता न शक्यते वक्तुम्**। कस्मादित्याह—**न परार्थस्याभिधानस्य कार्यान्तरकल्पना शक्या**। स्तुत्यर्थमप्यभिधानमर्थप्रतिपत्त्यर्थमेव नादृष्टार्थं शक्यते कल्पयितुं प्रमाणाभावात्। एतच्चार्थवादाधिकरणे उक्तम्। **यदि सिद्धान्तेऽपि दृष्टार्थता कथं तर्हि समवेतार्थाभिधानं पूर्वपक्षवादी मन्यते**। यदि हि सिद्धान्ते अदृष्टार्थत्वलोभेन युक्तः पूर्वपक्षः। उत्तरं—**स्वार्थाभिधानलोभात्**। न हि स्वार्थत्वे सम्भवति पारार्थ्यं न्याय्यमिति पूर्वः पक्षः। स्तुत्यर्थत्वे हि पारार्थ्यं समवेतदेवताप्रकाशकत्वे स्वार्थत्वं शब्दानामिति स्वार्थत्वलोभेन समवेतार्थत्वं पूर्वपक्षवादी मन्यते।

अत्र चोदयति - **युक्तं स्वार्थत्वं मान्त्रवर्णिकसवित्रादिदेवताकल्पनायां** सवित्रादिपदैः **तासामेवाभिधानात्। गौणकल्पनायां तु कथं?** यथाहि गौण्या वृत्त्या अग्निरेव सवित्रादिपदैः प्रत्याप्यते तदा कथं स्वार्थता? गौणो हि शब्दः परार्थ एव। उत्तरं—**अत्रापि स्वार्थः प्रयोग इति सिद्धं न शब्दान्तरार्थम् स्तुत्यर्थतया सवित्रादिपदानामुच्चारणम्**। किन्तु तान्येव देवतां प्रतिपादयन्तीति। तेन गौणपक्षेऽपि प्रयोगस्य स्वार्थत्वमेवेति सिद्धं स्वार्थत्वं पक्षद्वयेऽपि।

**एवं प्राप्तेऽभिधीयते—नात्रैकापि कल्पना सम्भवति। पारार्थ्येनाप्येकवाक्यत्वावगमात्**। देवतान्तरकल्पना गौणकल्पना वा न सम्भवति।

स्तुत्यर्थतयाप्येकवाक्यत्वावगमात् सर्वपदानां गम्यतामेकवाक्यता तथापि किमित्याह— **गम्यमाने चैकवाक्यत्वे सिद्धं मन्त्रस्य समवेतार्थत्वमिति।** न प्रतिपदं समवेतार्थ-प्रतिपादकता लब्धेति साक्षात्प्रतीयमानैकवाक्यता न शक्यतेऽपन्होतुम् । तद्व-[शे]न पारार्थ्यमेव न्याय्यम् यथा स्योनं ते इत्यत्रानेकवाक्यतावगम्यते तदा तदनुप्रवेशसमवेतार्थभेदेन । तथाऽत्रापि भवतु इत्यत्राह—**विद्यमाने ह्यर्थे विभज्य-मानसाकाङ्क्षत्वं न नामापेक्ष्यते ।** कल्प्यमाने चार्थे प्रमाणाभावान्न तदपेक्षता शक्यते वक्तुम्। न हि क्लृप्तामेकवाक्यतां कल्प्योऽर्थभेदः शक्नोति वारयितुम्। स्योनं त इत्यत्र भेदो न कल्प्यः। भिद्यमानत्वात् सदनकरणपुरोडाशप्रतिष्ठापनयोः। अतः सिद्धं पारार्थ्येऽपि केषांचित्पदानां मन्त्रस्य समवेतार्थत्वम्।

कथं पुनः सवित्रादिपदानां स्तुत्यर्थत्वमित्यत्राह—**पारार्थ्यं च दर्शितं भाष्यकारेण ।** सवित्रादिपदानि यजमानपरत्वेन स्तुतौ वर्णितानि । तत्र च पुन-राशङ्कितं यदि यजमानपराण्येतानि एवं तर्हि यजमानाश्रय ऊहः प्राप्नोति। तत्र को हेतुरित्यत्राह— **यजमानपक्ष ऊहाशङ्का प्रसवबलात् ।** प्रसवोऽनुज्ञा यजमान-सम्बन्धिनी कीर्त्यत इति बहुयजमानप्रसवकीर्तनाय सवित्रादिपदे वचनोहः शङ्कितः। **सा चोहशङ्काऽविवक्षायामपि प्रसवस्योपपद्यत एव प्रसवकीर्तनमिति नादृता ।** निराकृतेत्यर्थः। यदि विवक्षितता स्यात् तदा अन्यत्रापि कीर्तनार्थमूहः स्यात्। अविवक्षितत्वे तु नैतत्प्रकाशने प्रयोजनमस्तीत्यनूहः।

॥ १२ ॥ गुणशब्दस्तथेति चेत् ॥ ३८ ॥

**यदि सवित्रादयश्शब्दाः निर्वापैकवाक्यत्वादन्यार्थाः एवं तर्हि जुष्टाग्निशब्दावपि अन्यार्थावेव। ततश्चासमवेतार्थत्वं असमवेतार्थत्वे चानूहः।** अस्यार्थः—यद्यप्यग्निः समवेत एव कर्मणि तथापि यज्ञपतिं वर्धानितिवत् परार्थत्वात् मन्त्रेण समवेतत्वेन नाभिधीयते। परार्थता च निर्वापविशेषणत्वेनाभि-धानात्। असमवेतार्थत्वे च यज्ञपतिशब्दवदनूहः।

अत्र भाष्यकारोऽग्निशब्दस्यैवानूहमाह न जुष्टशब्दस्य । तत्र कारणं पृच्छति—**किं पुनः कारणमग्निशब्दस्यैवानूहं ब्रवीति । न जुष्टशब्दस्यापि ।** उत्तरं— **समवेतार्थत्वेप्यसम्भवात् सिद्धान्ते पूर्वपक्षे च जुष्टशब्देनोहः ।** तेन विशेषाभावात् तस्यानूहो नोच्यते।

**एवं प्राप्तेऽभिधीयते**—सत्यं निर्वापेणैकवाक्यत्वं तथापि देवता स्वार्थतयैव निर्वापमाक्षिपन्ती तेनैकवाक्यतां यातीति न पारार्थ्यं शक्यते वक्तुम्। निर्वापेण विना यागाभावात् देवता स्वार्थं निर्वापमाक्षिपतीति न परार्थोऽग्निः। अपारार्थ्ये च समवेतार्थत्वं समवेतार्थत्वे च विकृतावूह इति सिद्धम्। न च अजुष्टे जुष्टवचनमयुक्तं निर्वापेण जुष्टतेति। न प्राङ्निर्वापादजुष्टतेति परिहरति—**नैवेदमजुष्टे जुष्टवचनं** कार्यत्वेन जुष्टार्थावगमात् निर्वापेण जुष्टं करोमीति सम्बन्धः। न पुनः प्राङ्निर्वापात जुष्टं सन्तं निर्वपामीति। यत एवमभिसम्बन्धः अतोऽयमाशंसायां भूतवच्चेत्यस्य विषयः कार्यस्याशंसनीयत्वात्।

॥ एवं वा ॥

**अत्र मुख्ये गौणे वाऽभिधानेऽसम्भव इति किमदृष्टार्थो भवेदयं मन्त्रः धान्यमसीति तण्डुलावापे उत लक्षणयापि तावत् समवेतार्थतैव न्याय्येति चिन्त्यते**—धान्यशब्देन गौण्या वृत्त्या मुख्यया वा तण्डुलाभिधानासम्भवात् तण्डलावापे किमयमदृष्टार्थो भवेन्मन्त्रः उत धान्यसम्बन्धित्वात्तण्डुलानां धान्यशब्दो लक्षणया तण्डुलान् प्रतिपादयतीति समवेतार्थ एवायं मन्त्रो भवत्विति चिन्ता।

**तत्र पूर्वपक्षवादी प्रयोगस्यैदमर्थ्याभावात् अदृष्टार्थतां मन्यते।** अस्यार्थः—यदि लक्षणया धान्यशब्दः तण्डुलान् प्रतिपादयेत् तदा दृष्टार्थो भवेन्मन्त्रः लक्षणापि प्रयोगैदमर्थ्यज्ञाने सति भवति। न चात्र धान्यशब्दस्तण्डुलप्रतिपादनपरत्वेन प्रयुक्त इति प्रमाणमस्ति। तेन लक्षणानुपपत्तेरदृष्टार्थ एव मन्त्र इति।

कथं पुनः प्रयोगैदमर्थ्यान्नावगम्यते दृष्टार्थतेत्यत्राह—**प्रयोगप्रधानो हि वाक्यार्थः तदभावे** अशाब्दैव कार्यकल्पना प्राप्नोति। प्रयोगो हि वाक्यार्थावगमे प्रधानं कारणम् प्रयोगाभावे तण्डुलप्रकाशनं कार्यमिति शब्दशून्यैव कल्पना। न च विनियोगो नो(सो)पपद्यते अदृष्टेनापि द्वारेण तदुपपत्तेः। तस्माददृष्टार्थतैव। इदं चात्राभिप्रेतम्। विनियोगेन मन्त्रस्य तादर्थ्यमवसीयते न पदस्य। पदतात्पर्यमूला च लक्षणोपपत्तिरित्यभिधायकत्वेनोपयोगाभावात् अदृष्टेनैव द्वारेण विनियोगो मन्त्रस्येति।

अत्राभिधीयते—नादृष्टार्थता सम्भवति। कस्मादित्यत्राह—**न हि लक्षणा लोकवत्प्रतिपत्तिहेतुतया वारयितुं शक्यते। यथा शालयो भुज्यन्त**

इति । अस्यार्थः - यदि लक्षणा प्रतिपत्तिहेतुतया वारयितुं पार्यते तदा अदृष्टार्थता स्यात् । नचैतत्सम्भवति लक्षणाया अपि लोकव्यवहारे प्रतिपत्तिहेतुत्वेन दर्शनात् शालयो भुज्यन्त इतिवत् भवति लोके प्रतिपत्तिहेतुः । अत्र तु न सम्भवतीत्यत्राह **—न च सम्भवन्त्यां लक्षणायां विनियोगोऽदृष्टकल्पनां सहते** । तस्माल्लक्षणया समवेतार्थ एवायं मन्त्र इति युक्ता कल्पना ।

**ननु च प्रयोगाभावान्न पदव्यापारवत्तया लक्षणा शक्यते कल्पयितुं** विनियोगेन मन्त्रस्य तात्पर्यावगमो न पदस्य । तेन धान्यपदं लक्षणाव्यापारेण तण्डुलावगमकमिति न शक्यतेऽवगन्तुम् । पदव्यापारश्चात्र चिन्त्यते । कस्मादित्यत्राह—**पदव्यापाराश्रितश्चोहः सत्यपि वाक्यप्रयोजनत्वे समवेतप्रकाशनस्य** । यदि हि धान्यपदस्योप्यमानप्रतिपादनं व्यापार इत्यवगतं भवति तदा विकृतौ मांसस्योप्यमानस्य धान्यशब्देनावगमयितुमशक्यत्वात् मांसशब्द ऊह्यते नान्यथा । यत एव मन्त्रतात्पर्यमात्रेण पदव्यापारात्मिका लक्षणा न सिद्ध्यति **अत एव केचिल्लक्षणैवात्र विवक्षितेति मन्वानाः मृगोऽसीत्यूहं मन्यते** । अस्यार्थः- यावल्लक्षणापर्यन्तो विनियोगो न वर्ण्यते तावत् पदाश्रिता लक्षणा न सिद्ध्यति । तेन लाक्षणिकत्वं पदस्येच्छता एवं वक्तव्यम् - लक्षणयोप्यमानं वक्तव्यमिति विनियोगार्थ इति । ततश्च विकृतावपि मृगोऽसीत्यूहेन भवितव्यं न मांसमसीति । अथ तु लक्षणा न विवक्षिता तदा मन्त्रतात्पर्यावगमात् धिनोतीति धान्यमिति यौगिकधान्यशब्दाश्रयणेन तण्डुलप्रतिपादकत्वोपपत्तेः मांसेपि योगस्य सम्भवात् ऊहो न स्यात् । तदाह—

**अनूहं वा मन्यते । कुतः ? अर्थवाददर्शनात्** । धिनुहि देवानिति मन्त्रार्थवाददर्शनात् । भवत्वर्थवादः तथापि कथमनूह इत्याह—**धान्यशब्दप्रयोगसिद्धिस्तण्डुलेष्वर्थवादादेव** । अर्थवादगतदेवताधिन्वनयोगात् धान्यमिति तण्डुला उच्यन्ते तथा मांसमपि तेन प्रकृतिविकृत्योर्यौगिकत्वादनूहः ।

अत्रोच्यते—**मन्त्रप्रयोजनं समवेतप्रकाशनमित्युक्तं प्रथमेऽध्याये । अतस्तदेव तावत्प्रयोजनम्** । यत्पुनरपदव्यापारादूहो नोपपद्यत इति तदयुक्तम् कुत इत्याह—**लक्षणापि तदाश्रितैव गङ्गाघोषादिषु दर्शनात्** । अस्यार्थः- मन्त्रस्य समवेतप्रकाशनं कार्यमिति प्रयोजनेऽवगते कथं तत्सिद्ध्यतीत्यपेक्षायां प्रतिपदं शक्तिविमर्शो भवति । तत्र तावत् धान्यपदव्यतिरेकिणां पदानां वा[न]

प्रकाशनसामर्थ्यमस्ति धान्यशब्दस्य तु लोकप्रसिद्धलक्षणावृत्त्याश्रयणेन उप्यमान-तण्डुलप्रकाशनद्वारेणावापप्रतिपादकता सम्भवतीति तदाश्रिता लक्षणाऽऽश्रीयते।

यस्मान्मन्त्रतात्पर्यानुसारेणेयं लक्षणा न पुनः लक्षणैव विवक्षिता तस्मान्नात्र लक्षणा विकृतौ, आत्मायत्तत्वात्प्रयोगस्य आर्षेण धान्यशब्देन लक्षणयापि मांसस्याभिधातुमशक्तेः तद्युक्तं तावत् पदान्तरं प्रक्षेप्तव्यम्। तत्र मुख्ये सम्भवति को नाम लाक्षणिकं प्रक्षिपेत् तदाहुः—

'ऋजुमार्गेण सिद्धयन्तं कोऽर्थं वक्रेण साधयेत्' इति। आर्षे तु प्रयोगे किं क्रियताम्?। तथैव प्रयोगे यस्यामपि विकृतौ धान्यशब्दो लक्षणया वर्णयितुं शक्यते तस्यामप्यनूह एव प्रकृताविव आर्षेणैवाभिधानसिद्धेः। नाप्ययं यौगिको धान्यशब्दः शक्यते रूढेरेव प्रयोजनसिद्धेः रूढ्या हि यौगिकत्वे परिहृते तदाश्रिता लक्षणैव श्रेयसी न यौगिकत्वम्। यत्र तु लक्षणयापि प्रयोजन[ा]सिद्धिः तत्र भवत्येव यौगिकाश्रयणम् कार्यप्रधानत्वान्मन्त्रार्थस्य यतोऽयं धान्यशब्दो न यौगिकः तस्मात स्तुतिमात्रमर्थवादः, न तु शब्दप्रवृत्तये योगोपस्थापकः।

ननु च धान्यशब्दस्य तण्डुलप्रतिपादनपरतया प्रयोग इत्यनवगमे कथं लक्षणेत्यत्राह—**न चात्र प्रयोगेण प्रयोजनम्**। कस्मादित्यत्राह—**समवेतप्रकाशने हि स इष्यते**। समवेतमर्थं पदं प्रकाशयतु इत्येतदर्थं प्रयोग इष्यते। तच्चान्येनापि प्रकारेण सिद्धम्। मन्त्रतात्पर्यावगमेनापि पूर्वोक्तरीत्या सिद्धमित्यत्र प्रयोगः। **यदि लाक्षणिकोऽपि मन्त्रेषु शब्दस्यार्थो गृह्यते गौणमुख्योपचारस्तर्हि मन्दप्रयोजनः स्यात्**। उत्तरं—**न मन्दप्रयोजनः, अवगतौ तुल्यप्रयोजनत्वात्**। गौणत्वमुख्यत्वावगत्यवस्थायां तुल्यं प्रयोजनम्। निमित्ते विशेष इत्युक्तं तृतीये। निमित्तावस्थायां विशेषो मुख्यस्य निरपेक्षं निमित्तं गौणस्य [1]मुख्यावगतिसापेक्षं सादृश्यमिति गौणमुख्ययोर्विशेषः। इममेव विशेषं दर्शयितुं गौणमुख्यविचारः। अनेन विशेषेण लिङ्गविनियोज्ये विशेषो न पुनर्गौणमुख्यविचारेणैतदुक्तम् मुख्य एवावगतिर्हेतुर्नान्य इति। तस्माल्लक्षणयापि समवेतार्थत्वं मन्त्राणामिति सिद्धम्।

**॥ १३ ॥ चोदिते तु परार्थत्वात् विधिवदविकारःस्यात् ॥ ४० ॥**

---

1. R मुख्या एवा

**कथं पुनरिडोपहूतेति इडामुपह्वयस्वेति श्रुत्या विनियुक्तस्य मन्त्रस्य कार्यान्तरं यज्ञपतिवृद्धिप्रकाशनमाशङ्क्यते ।** उत्तरं—**विनियोग एवात्र चिन्त्यते । किं यज्ञपतिं वर्धानितीडोपाह्वाने विनियुक्त नेति ।** अस्यार्थः—प्रतीकेनायं श्रौतो विनियोगः । तत्र किं यज्ञपतिं वर्धानित्यपि इडोपाह्वाने विनियोगे सति चिन्ता ।

तत्र पूर्वपक्षी लिङ्गप्रकरणाभ्यां विनियोगान्तरं मन्यते । यज्ञपतित्वेन यजमानस्य वृद्धिविषयत्वेन यज्ञपतिं वर्धानिति तावत् प्रकरणपाठात् प्रकरणिनोऽङ्गम् । शक्नोति चेदं यज्ञपतिं वृद्धिविशिष्टं वक्तुम् । अस्ति च तादृशो यज्ञे । तत्प्रकाशनं च क्रतोरुपकारकं प्रोत्साहजननात् । तेन तत्रैवास्य विनियोगो भवति । **कथं पुनरुपक्रमोपसंहारयोरन्तर्निपतितं वाक्यान्तरं कल्पयितुं शक्यते परस्परसाकाङ्क्षत्वेन पदानामेकवाक्यत्वावगमात् ।**

उत्तरं—**विनियोगवशान्मन्त्राणां यजुषि कल्पना । वाक्यत्वेन नान्यपदाकाङ्क्षया स्योनं ते सदनं इति प्रदर्शितम्**—अस्यार्थः—यजुषि या मन्त्राणां वाक्यत्वेन कल्पने यदेकं वाक्यमिति सा विनियोगवशात् यावतामेकत्र विनियोगः पदानां तावतामेकार्थत्वं एकार्थत्वे चैकवाक्यत्वं न पुनरन्यपदापेक्षया वाक्यत्वकल्पना । यावन्ति परस्परापेक्षणीयपदानि तावन्त्येकं वाक्यमिति सैषा कल्पना । यथा स्योनं ते इत्यत्र सत्यपि साकाङ्क्षत्वे विनियोगभेदाद्भिन्नवाक्यत्वं तथेहापि विनियोगवशात् मन्त्रवाक्यभेदः तस्माद्विभागः विभागात् कार्यभेदः कार्यभेदाच्चोहभेदः यजमानद्वित्वे बहुत्वे चोहोऽन्यथा चानूहो यज्ञपतिशब्दे परिशिष्टभागे इडाभेदे नोहभेदः ।

**एवं प्राप्ते अभिधीयते—स्यादेतदेवं यदि विनियोगान्तरं यजमानवृद्धिविषयं स्यात् । इह तु कल्प्यम् । न च कल्प्योऽर्थः सिद्धस्यार्थस्याविवक्षायां हेतुर्भवति ।** अस्यार्थः—उपक्रमोपसंहाराभ्यां इह तावत् यज्ञपतिं वर्धानित्यस्य पदनिबन्धनैकवाक्यताऽवगम्यते इडोपह्वाने च श्रुत्या उपक्रमोपसंहारौ विनियुक्तौ । तदेकवाक्यतया तस्यापि तत्रैव विनियोगः प्रतीयते । यज्ञपतिवृद्धौ तु लिङ्गेन विनियोगः कल्प्यः । न च क्लृप्तः कल्प्येन बाधितुं शक्यते । तस्मान्मन्त्रत एव मन्त्रमेवालोच्य यदेकवाक्यत्वमवगम्यते तदेव यजुष एकवाक्यत्वे हेतुः । यत्स्योनं त इत्युक्त तत्र प्रकरणेन विनियोगे सति

लिङ्गेनैव यजुषो विभागो भेदेन सम्बन्धः। सदनकरणे प्रतिष्ठापने च लिङ्गेन विनियोगः। अतो युक्तमेतत् पदाकाङ्क्षानिरपेक्षं यजुषो द्वित्वं परिकल्प्यते। इह पुनः लिङ्गं प्रकरणं च श्रौत एव विनियोग उपपद्यत इति सिद्धं पारार्थ्यं इडोपाह्वानपरत्वं च। ततश्चानूहः। केनापि यजमानेनोपलक्षणसिद्धेः विधिवत्। यजमानसम्मितौदुम्बरीत्येकेनापि सम्माने कृतार्थमिति प्रदर्शितं भाष्ये॥

## ॥ १४ ॥ विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

**ननु सूक्तवाकाधिकरणे फलमिदं आयुराशासनं आशास्यमानमायुः फलमित्युक्तम्। तेनात्र फलभागितया न परार्थो यजमान इति कथमत्र पूर्वपक्षःक्रियते।**

समाधत्ते—**सत्यं फलमिदं, नतु यजमानेन सम्बध्यमानस्यास्य कश्चिद्विशेषो विद्यते।** फलमप्येतद्यजमानेन सम्बध्यमानं न गुणतया सम्बध्यते तेन त यज्ञपतिमित्यनेन न कश्चिद्विशेषः यस्मात् नावश्यं फलवत्त्वाय यजमानेनायुराशासनं विशेषणीयं कर्तृतयैव फलमभिसम्बध्यते तथापि मन्त्रार्थोपपत्तेः। न च फलवता फलं प्रति प्रधानभूतेनायुराशासनं विशेषणीयं केवलं कर्तृतयैवाशासनान्वयेऽपि मन्त्रवाक्यस्यार्थोपपत्तेः। **अतो यजमानसम्मितौदुम्बरीवदिति नान्यो यजमानो नापि फलवत्तयेत्यसमवेतं मन्यते।** यथा यजमानसम्मितौदुम्बरी भवतीत्यत्र अन्यो यजमानो न गृह्यते। न च फलितयैव सम्यध्यते, किन्तु कर्तृतयैव तथेहापि। **तेन समवेतस्यापि यजमानस्य परार्थत्वेनाभिधानान्न समवेतार्थत्वं मन्त्रस्य।** ततश्चानूहो यज्ञपतिशब्दवत्।

**अत्रोच्यते—अवश्यमत्र [1]फलितैवाशासनहेतुरिति मन्तव्यम्।** अस्यार्थः—फलभागितैवाशासनहेतुः तेन यद्यपि आशासने कर्तृत्वं तथापि फलभागितया प्राधान्यादपारार्थ्यमित्यूहार्हम्। **कुतः फलभागितैव आशासनहेतुः? उत्तरं—यत्र हि अन्यतः फलावगमः तत्र कर्तृतयापि मन्त्रार्थ उपपद्यत इत्युक्तम्। इह तु मन्त्रादेव फलकल्पना। स चेत् फलवत्तया न सम्बध्यते** मन्त्रश्चेत् फलवत्तां न बोधयति ततो मन्त्रात् फलकल्पनैव विहन्येत। तद्विधाते च

---

1. फलतयैव

हरतौ मन्त्रस्याङ्गत्वं नोपपद्यत इत्युक्तं तृतीये । मन्त्रो हि फलप्रकाशनेन कर्मण्यङ्गतां याति । अफलत्वे तु किं बोधयन् अङ्गतामियात् । तस्मादपरार्थत्वाद्यजमानस्य समवेतस्य प्रकाशनं ततश्चोहसिद्धिः ।

।। १५ ।। असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ।। ४२ ।।

अग्नेयी सुब्रह्मण्येत्यत्र चिन्त्यते—किं हरिवदादयोऽप्यत्रोहितव्या नेति । तदर्थमिदं चिन्त्यते—समवेतार्था हरिवदादयश्शब्दाः उतासमवेतार्थाः ।

**कथं पुनः समवेतार्थाः कथमसमवेतार्थाः? उत्तरं— यदीन्द्रस्य द्रव्यस्य स्वरूपं प्रकाशयन्ति तदा समवेतार्थाः ।** यदि दर्भैस्तृणीत हरितैरितिवत् गुणाभिधानद्वारेणेन्द्र एव प्रकाश्यते ततः समवेतेन्द्रप्रकाशकत्वात् समवेतार्थत्वम् । **अथ स्तुतिं कुर्वन्ति ततो न समवेतार्थाः** यदि हरिवत्तादिकं इन्द्रं स्तोतुमुच्यते तदाऽसमवेतार्थाः ।

**तत्र राद्धान्तवादी स्तुतिमेव न्याय्यां मन्यते स्तुत्यैव निगदार्थोपपत्तेः ।** इतरथा हि गुणपरत्वेन लक्षणा स्यात् । राद्धान्तोपक्रमो व्याख्यातः ।

**पूर्वपक्ष्याशङ्का पुनः अर्थवादात् तत्स्वरूपावगत्यर्थो निगद इति बुद्धिरुत्पद्यते ।** इन्द्रस्वरूपप्रतिपत्त्यर्थोऽयं निगदः । कथं पुनः हरिवत्तादयः इन्द्रमुपलक्षयितुं क्षमाः न हि तेषामिन्द्रसम्बन्धोऽवगतः यथा हरितस्य दर्भसम्बन्ध इति ।

**अत्रोच्यते—अर्थवादात् गुणसम्बन्धावगमात् भवतीन्द्रस्वरूपावगतिः ।** कः पुनरसावर्थवाद इत्याह— **पूर्वापरपक्षाविति दर्शितम् ।**

**राद्धान्तस्तु अर्थवादोऽपि तावत स्तुत्यैवोपपद्यते स्वरूपपरत्वेऽर्थवादतैव हीयेत ।** योऽयमर्थवादः इन्द्रसम्बन्धिहरिवत्तादिप्रतिपादनपरः सोऽपि तावत् स्तुत्यैवान्वये सति अर्थवादो भवति । यदि प्रतीयमानार्थस्वरूपपरो भवति तदा अर्थवादतैव हीयते । यस्मात् स्तुत्यर्थेन विधीनामित्यर्थवादत्वमुक्तम् । यदि चेदं वस्तु यथाप्रतीयमानमेवाश्रीयते तदा आदिमत्ता स्यात् काण्वायनाद्यर्थप्रतिपादकत्वात् आदिमत्ताप्रसङ्गश्च वेदस्य स्यात् । तस्मादयमर्थो यथाश्रुतो न ग्राह्यः ।

एवं तावदिन्द्रस्यैवंरूपता नास्तीत्युक्तमभ्युपगम्याह—**तस्माद्यद्यपीन्द्रः एवंस्वरूपः तथापि हरिवत्तादयः स्तुत्यर्था एवमु[यु]क्ताः । श्रुतिस्ताभ्यां**

हीदं हरतीति चोपपद्यते । इन्द्रस्य हरिवत्त्वं प्रति ताभ्यां हीदं सर्वं हरतीत्युपपत्तिर्युक्तिरुच्यते । तेन हरिवत्त्वैव युक्त्या प्रतिपाद्यत इति ज्ञायते । एवं चाभ्युपगम्यवादमात्रं मूलयुक्तिमाह । यत्र पुनः स्वरूपेपि प्रमाणाभावः तत्र किमन्यदतः स्तुतेः । यथा च स्वरूपप्रतिपत्तये नालमर्थवादः तथा व्याख्यातं भाष्ये । तस्मात् हरिवदादीनां नोहोऽसमवेतार्थाभिधानात् ।

अत्र भाष्यकारेणानूहं दर्शयित्वा उक्तं—"तत्त्वेतन्न रोचयन्ते याज्ञिकाः" इति । तदाक्षिपति—**न रोचयन्ते इति कथने किं प्रयोजनं सिद्धान्तानुपयोगात् । याज्ञिकानुष्ठानविरोधेन च प्रत्युत क्षतिहेतुत्वात् ।**

समाधत्ते—**एवं वचनार्थेषु व्यामोह उपपद्यते** । अतो विप्रतिपत्तौ जिज्ञासेयमित्यरुचिप्रदर्शनेन याज्ञिकानां वचनार्थेषु व्यामोहोऽस्तीत्युच्यते । अतो विप्रतिपत्तौ जिज्ञासेयं क्रियत इति ।

निगदान्तरविधाने तु न दोषः । अथवा यज्ञिकानामरुचिप्रदर्शनेन निगदान्तरमेव आग्नेयी सुब्रह्मण्येत्यत्रास्तीति प्रदर्शयति । तेन न कश्चिद्दोषो न्यायस्य ।

**॥ १६ ॥ असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥**

अथेदमन्यदुदाह्रियते—**नन्वत्र समवेतत्वेपि गुणानां मन्त्रस्य स्तुत्यर्थतैव न्याय्या श्रुतेः । न च स्तुत्यर्थत्वेऽदृष्टार्थत्वं, प्ररोचनया दृष्टार्थत्वोपपत्तेः** । सोमविक्रयिणो ह्येकहायनीस्तुतौ प्ररोचना जायत एवेति दृष्टार्थत्वम् । स्वरूपे पुनरभिधेयेऽङ्गीक्रियमाणे एकहायनीमात्रस्य चोदितत्वात् अचोदितस्वरूपाभिधानेऽदृष्टं कल्पनीयम् । तस्मात् पूर्वपक्ष एव नोपपद्यते । पूर्वेणैवाधिकरणेन गतार्थत्वात् ।

**अत्रोच्यते - अयमभिप्रायः पूर्वपक्षवादिनः सम्भवति** । एकाहायनीस्वरूपापन्हवः शक्यते कल्पयितुम् । ननु अदृष्टार्थमेकहायनीस्वरूपपरत्वमित्यत्राह—**यथाप्रतिपन्नस्य च प्रयोजनकल्पना** । यथाभूतं वस्तु प्रतीयते य[त]थाभूतस्य प्रयोजनं कल्प्यं न पुनः प्रयोजनवशात् अर्थप्रतिपत्तिः । तेन यदि दृष्टं नास्ति भवत्वदृष्टं, किन्त्वत्र दृष्टमप्यस्तीत्याह—**भवति च स्वरूपादपि प्ररोचनेत्यदृष्टकल्पनापि परिहृतैव सुतरां स्वरूपावगमे विक्रेतुर्भवति प्ररोचनेति** ।

अत्र चोदयति—**स्तुतावपि प्ररोचना। स्वरूपावगमे पुनः गौरवादरः किंकृतः?** । परिहरति—**अनन्यव्यापारताकृतः** । न हि स्वरूपपरत्वे सम्भवति परार्थकल्पना आत्मानं लभते। स्वरूपावगमपक्षे हि तस्यै श्रुतमित्यादिपदानां स्वरूपपरत्वम्। स्तुतौ परार्थस्तुतिपरत्वम्। न चैतन्न्याय्यम्। स्वार्थपरत्वसम्भवात्। तस्मात्पूर्वेण वैषम्यम् प्रमाणानवगमादिन्द्रस्वरूपस्य। इह तु प्रमाणान्तरेण स्वरूपावगमात् गुणिप्रतिपत्त्यर्थं हि गुणवचनं इत्यूह एव न्याय्यः।

**शङ्कान्तस्तु—निगदप्रयोगकाले एकहायनीदशायां नेदं स्वरूपमेकहायन्याः। तेन स्तुत्यर्थमेवासदप्यारोपणम्। भाविनीं प्रवृत्तिमङ्गीकृत्योच्यत इति चेत्** । दूषयति—**न प्रयोगाङ्गत्वेन स्वरूपप्रतिपत्तिरुत्पादिता स्यात्** भावित्वावस्थायाः प्रयोगनङ्गत्वात्। अप्रयोगाङ्गत्वेपि स्वरूपप्रतिपत्तिः स्तुतये भविष्यतीति चेत्। दूषयति—**स्तुत्यर्थत्वं प्रतिपन्नं, तर्हि निगदस्य सिद्धमसमवेताभिधानम्** ।

ननु साण्डस्य निरालम्बना स्तुतिरिति नोपपद्यते इत्याह—**उपपद्यते च साण्डस्यापि स्तुतिः गर्भाधानमुखेन** श्रुताद्युत्पत्तिलक्षणगुणयोगः इह स्तुतिरुपपन्नेति हेतोरविकारोऽनूह इत्यर्थः।

**॥ १७ ॥ लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सरस्वती स्त्रीत्वात् ॥ ४५ ॥**

**ननु चात्र प्रातिपदिकार्थस्यैव प्रधानत्वात् नैव लिङ्गवचनानुरोधेन सङ्कोच उपपद्यते समानविधानेपि पाशस्येव** । यथा पाशस्य प्राधान्यान्नोत्कर्षो मन्त्रस्य। तस्मात् पूर्वपक्ष एवात्र ज्यायानिति।

**अत्रोच्यते - स्यादेतदेवं यदि लिङ्गाद्वचनाच्च निष्कृष्टान्तरं सर्वनामशब्देनाभिधीयते** । अस्यार्थः - सन्निहितवचनत्वात् सर्वनाम्नां यादृशं सन्निहितं तादृशमेवाभिधीयते। लिङ्गवचनयुक्तं च सन्निहितमिति तथाभूतमेव प्रातिपदिकेनाप्यभिधीयते इति विशिष्टविषयत्वात् प्रातिपदिकस्यैव विशिष्टे विनियोगः। पाशे पुनर्युक्तं पाशमात्राभिधानात्।

**नन्वत्रापि सर्वनाम्ना वचनविनियुक्तेन विभक्तिरहितेन सन्निहितमात्रं सङ्ख्यालिङ्गवियुक्तमुच्यते यद्वस्तुवृत्तेन सङ्ख्यावल्लिङ्गवच्च** । एतदुक्तं भवति-

यद्यपि सन्निहितस्य वस्तुनः सङ्ख्यालिङ्गे स्तः तथापि सर्वनाममात्रेण विभक्तिरहितेन पशुत्वमेवोच्यते विभक्त्या तु सङ्ख्यालिङ्गयोरभिधानम् । तेन प्रातिपदिकेन मेष्या अपि सन्निहितत्वादभिधानं शक्यते कर्तुम् । प्रातिपदिकं च लिङ्गाद्बलीयः । तस्मात् प्रातिपदिकार्थ एवानेन मन्त्रेणाभिधीयत इति लिङ्गवचनानुरोधेन सङ्कोचो युक्तः ।

एवं प्राप्तेऽभिधीयते - **सत्यमेवं सङ्ख्यावल्लिङ्गवच्च यत्तदेवाभिधीयते सर्वनाम्ना** । ननु सङ्ख्यालिङ्गविभक्तिभिश्च सङ्ख्याऽभिधीयते टाबादिभिश्च स्त्रीत्वं तथापि त्वत्[किं]लिङ्गवदिति चिन्तायां सन्निधानाद्व्यक्तिरेव प्रतीयते न पुनः पशुत्वम् । **व्यक्तिश्चेत् सर्वनाम्ना प्रतीयते न लिङ्गवचनवियुक्ता शक्यते प्रतिपत्तुं, तस्यास्तद्युक्तत्वात् पाशवत् पशुत्ववच्च** । यथा पाशत्वं पाशप्रातिपदिकेन सङ्ख्यालिङ्गरहितं वक्तुं शक्यते एवं पशुत्ववच्च, यथा पशुत्वं पशुप्रातिपदिकेन व्यक्तिमात्रं लिङ्गसङ्ख्यावियुक्तं साक्षाच्छब्देन सन्निधापितं 'अस्मै पशवे अग्निं भरत' इत्येवंविधे वाक्ये प्रत्येतुं शक्यते तथा व्यक्तिर्न शक्यते ।

**ननु व्यक्तिमात्रं सङ्ख्यालिङ्गयोराश्रयभूतं प्रतीयतां तस्यापि सन्निहितत्वात्** । परिहरति - **केयं व्यक्तिमात्रता नाम या सर्वनाम्नोच्यते** । उत्तरं—**सन्निधानाविशेषात् सन्निहितव्यक्तिमात्रं प्रतीयतामिति** । या व्यक्तिलिङ्गसङ्ख्यान्विता तस्याः स्वरूपमपि सन्निहितं, तेन स्वरूपस्यापि सन्निधानाविशेषात् भवत्येव सर्वनाम्नाऽभिधानमिति राद्धान्ती वदति । **सन्निहितं चेत्सामान्यं न तत् सर्वनामप्रातिपदिकाभिधेयम् सन्निहितवचनत्वात् सर्वनाम्नाम्** सन्निहितमात्रं यदि सामान्यं तदा सर्वनाम्ना न शक्यते वक्तुं सामान्यस्य वास्तवसन्निधानाभावात् । व्यक्तिरेव हि वास्तवेन सन्निधानेन सन्निहिता भवति । सामान्यं तु शब्देन सन्निधाप्यते । यदीत्यसंशयेपि संशयवचनम् । तस्मात् विभागशः प्रातिपदिकेनाश्रयमात्रं विभक्त्या सङ्ख्या लिङ्गमिति विभक्त्यर्थौ न शक्यतेऽनवगन्तुं ऋते पशुशब्दसामानाधिकरण्यात् । तच्च नास्ति । अतः सकलप्रातिपदिकार्थावगतेः सविभक्तिकप्रातिपदिकार्थावगतिरेव सन्निधानोपाधिनान्वेति । वाक्ये सलिङ्गसङ्ख्या व्यक्तिः सन्निधानोपाधिना इदंशब्देनाभिधीयमाना अस्य वाक्यस्यार्थः । अतो न स्त्रीलिङ्गयुक्तं द्रव्यमात्रं वाक्यार्थेऽन्विततया शक्यते प्रतिपत्तुमित्यनिमित्तमपदार्थः सारस्वती । अनिमित्तत्वे चापदार्थत्वे च तादर्थ्यं मन्त्रस्य । तस्माद्युक्तमेव स्त्रीत्वात सारस्वती अग्निगुवचनमप्राप्तेति । तार्तीयपश्वधिकरणपूर्वपक्षप्रयोजनविचारोऽयमित्युक्तं भाष्ये । तेन प्रयोजनं न वक्तव्यम् ।

**॥ १८ ॥ आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ५० ॥**

**केथं बाधचिन्ता अप्राप्तिचिन्ता वा ?** । अनेनासङ्गतिमाशङ्कते । यदि इरापदेन गिरापदं प्राप्तमेव बाध्यते इति तदा दाशमिकी चिन्ता । अथेरापद-विनियोगे सति गिरापदस्य प्राप्तिरेव नास्तीति चिन्त्यते तदा प्राप्तिचिन्तेयं तृतीये सङ्गता विनियोगाभावरूपत्वात् । उभयं चैतन्नोपपद्यते ऊहलक्षणे । समाधत्ते— **सत्यमेवं बाधप्राप्तिचिन्तेहलक्षणे न सङ्गतेति कार्यार्थत्वे तच्छास्त्रं न प्राप्त्यर्थं इतीहैव चिन्तोपपद्यते ।** अस्यार्थः - गिरापदकार्ये गुणवचन इरापदमनेन शास्त्रेण विधीयते ऐरं कृत्वोद्गेयमिति । न पुनः साम्नि इरापदप्राप्त्यर्थम् । ततश्च यज्ञायज्ञीये साम्नि स्तुतिरूपं कार्यं कर्तुं प्रवृत्ते गिरापदेन विना कर्तुमशक्तेः गिरापदे आक्षिप्यमाणे एव तत्कार्ये इरापदनियमात् तदेवोपादीयते । तेन कार्यवशेने-रापदयुक्तसामप्रयोगो विकृत इत्यूहलक्षण एवायं चिन्तोपपद्यते । स्तुतिलक्षणकार्या-देव हि गिरापदं प्राप्नोति नोपदेशात् न गिरापदं साम्न्युपदिष्टं तेनेरापदमपि नोपदि-श्यते । किन्तु तदपि कार्यादेवोह्यते ।

**ननु सामोपदेशादृगपि उपदिष्टैवेत्युपदेशादेव प्राप्तिः ।** साम्नः स्तुतावुपदेशात् ऋचा विना तदशक्तेः सामाप्युपदिष्टैव[ष्टमेव] । परिहरति— **नर्च उपदेशस्सम्भवति प्राधान्यादक्षराणाम् । नहि प्रधानं गुणं प्रत्यु-पदिश्यते ।**

कथं पुनः स्तुतिनिर्वृत्तिरित्याह—**माणवकवदेतद्भविष्यतीति वक्ष्यामः ।** यथा आचार्यकरणविधिना उपनयमङ्गभूतं प्रयुञ्जानेन माणवकः प्रयुज्यते तथा ऋगपि स्तुत्या स्वसाधनं साम गुणकर्मभूतमाक्षिपत्येवेति वक्ष्यामः । तस्मात् कार्यत एव प्राप्तिः ऋचः पदानां चेतीहैव चिन्तनीयम् ।

**ननु कार्यतोऽपि प्राप्तौ बाध एवायं अप्राप्तिर्वा,** परिहरति—**अप्राप्तिर्हि उपदेशविषया । प्राप्तिविषयश्च बाध इति नोभयमप्यस्ति ।** विनियोगो हि उपदेशविषयस्तृतीये चिन्तितः । अप्राप्तस्य च बाधो दशमे । इह तूपदेशो नास्ति नापि प्राप्तिरस्तीति । कस्मादुपदेशो नास्तीत्याह—**न चाक्षराणि स्तुतावुपदि-श्यन्त इत्युक्तम् ।**

नन्विरापदोपदेशो कथं गिरापदस्य प्राप्तिरिति पूर्वपक्ष इत्यत्राह—**अत्र पूर्वपक्षो[1] न कार्यं साम[म्नः]स्तुतेः पृथग्भूतं [इ]ष्टमस्तीति ।** इरापदं हि कार्यं-[र्ये]विधेयं, कार्यं च स्तुतेरन्यदिह नास्ति तत्र सामविधानान्नैव पदोपदेशावकाशोऽस्ति । तेनेरापदस्य गिरापदस्य चोपदेशाभावात् तुल्यत्वं तुल्यत्वे च विकल्पः ।

कस्मात् पुनस्तुतावविधानमित्याह—**सामसाध्यं हि कार्यमुच्यते । तच्चासामविरुद्धम् ।** तथापि कथं विकल्प इत्याह—**न गिरापदस्यापि तदपहर्तुं शक्यत इति विकल्पः ।**

**अत्रोच्यते—सत्यमेवं साम्नैव स्तुतिः कार्या । तथापि गिरापदं नैवात्र भवितुमर्हति नियतत्वादिरापदस्य । क्व पुनरयं नियमः ? स्तुत्यभिधान इति ब्रूमः ।** स्तुतिरूपे गुणाभिधाने अयं नियमः इरापदेनैव गुणाभिधानं कुर्यादिति । **नन्वेतदचोदितं स्तुतावित्युक्तम् ।** अस्यार्थः—यद्यक्षरैः गुणाभिधानं कार्यमिति चोदितं स्यात् तदा तत्राक्षरविशेषनियम उच्यते । नचैतदस्ति सामसाध्यत्वात् स्तुतेरित्युक्तम् ।

परिहरति—**सत्यमचोदितं नियोगानुप्रवेशादादरणीयमिरापदविधौ ।** अस्यार्थः—यद्यपि साम्नः स्तुतावुपदेशः तथाप्यार्थमक्षराणां साधनत्वं न शक्यतेऽपह्नोतुम् । तच्च नियमविधावाद्रियते, तस्यापि नियोगानुप्रवेशात् । अतोऽर्थप्राप्तसाधनभावाश्रयणेन नियमोऽयं क्रियते व्रतवत् । यथा पयोव्रतं ब्राह्मणस्येति अर्थप्राप्तशरीरधारणाश्रयणेन पयोनियमस्तथेहापि । अतो न विकल्पः । इरापदस्याङ्गत्वात् तस्यैवोपादानं तेन विना स्तुतिविनियोगासिद्धेः ।

**यत्पुनरिदं** भाष्यकारेण क्व तर्हि सामान्योपदिष्टं भविष्यतीति चोदितं, तथा साप्तदश्यवद्विकृतिषु गिरापदस्याङ्गत्वात् तस्यैवोपादानं तेन विकृतौ निवेक्ष्यत इति परिहृतम् । **तदयुक्तमिव प्रतिभाति ।** कस्मादयुक्तं ? **उपदेशाद्विकृतावितिि च ।** यस्मात्सामान्योपदिष्टविधान उपदेश आश्रितः स च नास्तीत्युक्तम् तथा विकृताविति यदुक्तं तदप्ययुक्तम् । कथमयुक्ततेत्याह—(न्याहृत) **तत्परिसामादिषु नोपपद्यते** परिसामादीनां विकृतित्वाभावात् विकृतौ निवेशो भविष्यतीत्येतत्तावत् परिसामाद्यभिप्रायं नोपपद्यते तेषां विकृतित्वाभावात् । क्रत्वन्तरे पुनःसोमविकारे कार्यतः

1. मा. नाकार्यं

करणोपकारतःस्तुतेः प्राप्तत्वात् तत्रैव इरापदनियमादिरापदमेव । तेन नास्ति गिरापदानुप्रवेशः ।

**अत्रोच्यते—सामावान्तरकार्यमङ्गीकृत्यैतदुक्तम्** । साम्नो हि स्तुतिः परमकार्यं, अवान्तरकार्यं तु परिसामादिकार्यमभिप्रेत्य विकृतावर्थवदित्युक्तं भवति । भवति च स्तुतेः परिसामादिकार्थं ऋत्वन्तर्भूतं तेनात्र विहितमिरापदं परिसामकार्ये न प्राप्नोति अतस्तत्रार्थवत्ता भविष्यतीति सूक्तम् ।

**कथमुपदेशः समर्थनीय** इति चोद्यानुभाषणम् । सामत एव सामोपदेशेन य आक्षेपः स उपदेशोऽभिमतः । नन्वेवमपि परिसामादिषु विकृतिशब्दः कथमित्यत्राह—**विकृतिशब्दश्चान्यत्वाभिप्रायः** । अन्यत्रार्थवत्ता भविष्यतीत्यभिप्रायः ।

**॥ १७ ॥ अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ ५४ ॥**

**कथं पुनरत्र संशयः? यावता अप्रगीतस्य स्तुतिसाधनत्वानुपपत्तेः** प्रगाणेनैव भवितव्यम् । उत्तरं—**तद्धितनिर्देशादेव** । एवदेव विवृणोति—**पूर्वपक्षवादिनोऽभिप्रायः अविकृतादिरापदादयं तद्धितः मतौ छः सूक्तसाम्नोः** इत्यस्मिन्नविकारे विमुक्तादिभ्योऽण् इति मत्वर्थे सामविषयेऽण्प्रत्ययोऽयम् । स चाविकृतादिरापदात् । तस्मादविकृतमेवेदमिरापदम् । यदि हि विकृतं प्रयुज्यते तदा विकारानुरूपस्तद्धितः स्यात् । विकारे सति आ इरा इतिशब्दरूपं, तत्तु विमुक्तादिषु न पठितमिति मतौ छ इति छ एव स्यात् । न चासावस्ति । तस्मादविकृतमिरापदं प्रयोक्तव्यमिति ।

**कःपुनरत्र तद्धितार्थः** । पृच्छतश्चायमाशयः—विकारार्थ एवायं तद्धितः । गानरूपश्च विकारः प्राप्त एवानूद्यत इति । उत्तरं—**इरापदयुक्तं गानं कर्तव्यं** मत्वर्थेऽयम(य)ण्प्रत्यय इत्यर्थः । तस्य प्रतिपदोक्तत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ।

**ननु चाप्रगीतत्वाद्योग एव गानयोग एव न सम्भवति** । परिहरति—**सम्भवति तद्योगः, तत्कार्यकरणत्वादिति** । अयमभिप्रायः—सामकार्यकरणत्वात्तस्य भवति साम्नस्तत्सम्बन्धित्वं तस्मादप्रगीतोपदेशोऽयं तद्धितान्तोपदेशेन ज्ञातः । **राद्धान्तवादिनोऽपि तद्धितनिर्देशादेव स्वरूपमात्रोपदेशानवगतिः** । अस्यार्थः—

नायं विमुक्तादित्वात्तद्धितः। किन्तु तस्य विकार इति। यथा चैवं तथाऽत्र वक्ष्यामः। विकारतद्धितेऽस्मिन् स्वरूपमात्रोपदेशो नावगम्यते। गानप्रत्याख्यानेन स्वरूपमात्रोपदेशो नावगम्यते। **कोऽभिप्राय** इति पृच्छतोऽयमभिप्रायः—भवतु विकारतद्धितः तथापि अप्रगाणरूपो विकारो विधायिष्यत इति।

उत्तरं—**विकारविधाने हि स्वरूपविधानानुपपत्तिः विकारस्य स्वरूपस्य च विधाने वाक्यभेदप्रसङ्गात्**। भवतु तर्हि विकारमात्रविधानं इत्यत्राह—**न चाविहिते स्वरूपे विकारमात्रविधानमुपपद्यते**। निराश्रयस्य तस्यानुपपत्तेः। न च वाच्यमौपादानिकः स्वरूपविधिर्भविष्यति इरापदविकारो हि असतीरापदोपदेशे नोपपद्यत इति अर्थादिरापदाक्षेप इत्यवश्याश्रयणीयप्रथमोपनिपातिस्वरूपविधिनैव विधेरुपपत्तेः विकारस्य गीतिस्वरूपस्य अर्थप्राप्तानुवादसम्भवात्। तस्माद्विकारस्यायमनुवादः। स्वरूपमात्रं तु विधीयते।

**केन पुनः प्राप्तस्यानुवादः? कार्यत एव**। न ह्यविकृतं साम्नः कार्यकरं भवति। कार्यं हीरापदं विहितम्। कथं च तत्सामकार्ये भवति यदि प्रगीताक्षरकार्यं भवति। तस्मात् कार्यत एव गानं प्राप्तमनूद्यते।

कस्मात् पुनः अविकारतद्धितोऽयं उक्तमेतत् विमुक्तादित्वादयं तद्धित इत्यत्राह—**वचनसंयोगाच्च नार्थान्तरे तद्धित आशङ्कनीयः**। न गिरागिरेति ब्रूयात् इति प्रक्रमात् वचनमुच्चारणमवगम्यते। तेनेरावचनमिति वचनसम्बन्धान्न विमुक्तादितद्धितोऽयम्। साम्नि विषये हि स तद्धितः। न चेरापदोच्चारणमात्रं साम, किं तर्हि? सामावयवः। यच्चोच्चारणं गीतात्मकं भवति तच्छन्दविकारात्मकमिति विकारतद्धित एवायम्। तस्माद्विकारानुवाद एवायम्। यतोऽयं स्वरूपमात्रोपदेशो न गीतिप्रख्यातं अत एवाविकृतात् तद्धितोत्पत्तिरदोषः। प्रत्युत विकृतात्तद्धितोत्पत्तिरेव दोषः। विकृतस्य विकाराभावात्।

**अथ विशिष्टविधानं कस्मान्न भवति** अप्रगाणरूपविकारविशिष्टमिरापदं कस्मान्न विधीयते। उत्तरं—**सकृत्तद्धितयोरुभयोः सम्बन्धावगतिः** क्रियाकारकयोरिव कार्ये यस्य विधानं तस्य कुतश्चित्कार्ये विधानम् यथा सोमेन यजेतेत्यधिकारविधौ। तत्र च परस्परान्वयावगमे सति विशिष्टविधानं यथा सोमेन करणभूतेन अवच्छिन्नाया यागक्रियायाः। इह च स्तुतिकार्ये इरापदस्य विधानम्।

न च विकारो विशेषणम् । किन्तु विकारं प्रति तस्य विशेषणत्वम् । तेन कृत्तद्धितेषु प्रत्ययार्थप्रधानेषु प्रत्ययार्थविशिष्टप्रकृत्यर्थविधानं नास्ति विशेषणविशिष्टमात्रानवगमात् ।

किञ्च युगपद्विधानमपि क्रियाकारकवन्नोपपद्यते प्रकृतिप्राप्तिसव्यपेक्षा हि विकारा भवन्ति । कारणकर्तृनिर्देशाश्च ण्वुलादयः क्रियाप्राप्तिसव्यपेक्षाः । प्राप्तायां प्रकृतौ तत्सव्यपेक्षस्य विकारस्य विशेषणत्वेन विधानं नाप्राप्तायाम् । तथा क्रियायां प्राप्तायां ण्वुलादयोऽक्रियाविशेषणत्वेन कर्त्रादीन्यर्पयेयुः नान्यथा । प्रत्ययार्थस्यैव प्रधानत्वादिति नास्ति विशिष्टविधानम् । तस्मात् प्रकृतिविधानमेव न्याय्यम् न विशिष्टविधानमिति ।

**यत्तु प्रयोजनं भाष्यकारेणोक्तं प्रप्रपदं प्रप्रीपदं वा प्रयोक्तव्यं पूर्वपक्षे राद्धान्ते च प्रप्रीपदमेवेति । तत् पूर्वाधिकरणस्यैव प्रदर्शितमिति प्रतिभाति ।** तत्त्वयुक्तमिहेति भावः ।

समर्थ्यते —**यत्पुनरुभयोरप्यधिकरणयोः इति न दोषः** । किमिति पुनरिरापदं परित्यज्य अन्यत्प्रयोजनमुक्तं तदाह—**कथमिति** । उत्तरं—**तद्व्द्रेयमित्युपदेशेन विकल्पो नाप्रगीताशङ्का** । उपदिष्टत्वान्न विकल्पः तद्द्वेयं आई राचादाक्षासाइ गानविधानाच्च नाप्रगीताशङ्का । प्रप्रपदे पुनः उभयमिदं निरसनीयमिति तदेवाधिकरणद्वयस्य प्रयोजनम् ।

**इति श्रीमहामहोपाध्यायशालिकनाथमिश्रकृतौ**
**ऋजुविमलायां पञ्चिकायां नवमाध्यायस्य**
**प्रथमः पादः**

—:*:—

# ॥ नवमाध्यायस्य द्वितीयः पादः ॥

## ॥ १ ॥ सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

अत्र भाष्यकारेण किं गीतिविशिष्टं मन्त्रवाक्यं साम उत गीतिमात्रमेवेति विचार्य वर्णकान्तरमारब्धम्। किं नित्यान्यूहसामानि उतानित्यानीति। तत्र वर्णितेऽपि कस्माद्वर्णकान्तरमित्यत्राह—**अत्र द्वितीयाध्यायचिन्तया सहार्थान्तरवर्णनं सप्तमाध्यायेन सहापौनरुक्त्यकथनार्थम्। इह पुनरुत्तरविवक्षयैव परिहारः। अत्र पूर्वोत्तरपक्षावपरिहार्यावेवेति अधिकरणान्तरवर्णना।** अस्यार्थः—यस्मादिह नवमे उत्तरविवक्षयैव पुनरुक्तिपरिहारः अत्रापि परिहारे पूर्वोत्तरपक्षरचना कर्तुं न युक्ता। न च ताव(सा)परिहार्यावेवेत्यधिकरणान्तरवर्णनं कर्तुं शक्यते, सूत्रकारेण साक्षात् कृतत्वात् तस्मादेतद्दोष[1]परिहाराय वर्णकान्तरं कृतम्।

कस्मात्पुनरत्रोत्तरविवक्षयैव परिहारो यावता द्वितीयेनाध्यायेन सहान्यथैव पौनरुक्त्यं परिहृतम्। द्वितीये हि प्रगीतेपि मन्त्रवाक्ये साम्ति मन्त्रत्रैविध्यं सिद्ध्यति। [2]तदर्थं च गीतिषु सामाख्येत्युक्तम्। तेन नैतेन अ(त)त्र प्रयोजनं गीतिमात्रं सामेति तत्राह—**द्वितीयेन सह यदर्थान्तरवर्णनं तत्सप्तमाध्यायचिन्तया सह[ा] पौनरुक्त्यार्थं,** सप्तमाध्यायचिन्तया तु यत्पौनरुक्त्यं तस्योत्तरविवक्षयैव परिहारः।

ननु नित्यानित्यविचारोऽयमिहासङ्गत इत्यत्राह—**इदं चाधिकरणमुत्तरचिन्तार्थमौपोद्घातिकमिति।** यदि नित्य ऊहः ततः औकृथिक्यमूहसामस्वरूपनिर्णयप्रयोजनं सूत्रजातं जैमिनिना नारब्धव्यम्। प्रारभ्यमाणं वा स्वरूपवर्णनाय यथावस्थितस्वरूपकथनाय न कार्यौपयिकतया कार्यभूतोहोपायत्वेन न प्रारब्धव्यम्। अथ तु कृतक ऊहस्ततो यथान्यायं यथावचनं चोहः कर्तव्य इति तत्परमौकृथिक्यमारब्धव्यम्।

---

1. R दोषमयेन
2. R त्रैविध्यसिद्ध्यर्थं

नन्वनित्यत्वेप्यवकाशो नास्ति तस्यापि पठितत्वात् इत्यत्राह—**ऊहश्च तदनुसारेण न्यायानुसारेण** पठितोऽपि त्यक्तव्योऽपठितोऽपि पठनीय इति व्यामोहस्यापि सम्भवादेकान्ततः पाठपरतन्त्रैर्न भवितव्यमिति[1]भावः ।

तत्र स्वाध्यायवत् छन्दोगानां नित्यवदुपचारं व्यपदेशं च दृष्ट्वा चिकीर्षित ऊह इत्यूहोपदेशभ्रान्त्या अनित्यतापरोऽयमुपदेश इति भ्रान्त्या पूर्वः पक्षः । चिकीर्षितो हि कर्तुमिष्टः इष्टश्च[ा]नित्य एव भवति । अनित्यस्य न्यायापेतत्वेऽनिष्टत्वसम्भवात् ।

राद्धान्तस्तु एके तावदौक्थिक्यं जानन्तोऽपि सामोहनं प्रत्यालस्यात् अन्येनौक्तिक्यविदोहितं साम पठन्ति । अन्ये पुनः औक्थिक्यशास्त्रापरिज्ञानाच्चोहितुमजानन्तः पठन्ति । औक्थिक्यशास्त्रापरिज्ञानं पुनरालस्येन । गुरुसेवां प्रत्यशक्यताच(क्त्या वा)ग्रहणधारणविषया । तदिदं [2]पठनं स्वाध्यायवदुपचारस्य मूलम् । नित्यवत्पाठान्नित्यभ्रमोऽयं छन्दोगानां चिकीर्षित इति । प्रत्युत कार्यतामूहस्य ज्ञापयत्युपदेशः । कर्तुमिष्टत्वाभिधानात् । यत एवमनित्य ऊहः तस्मान्न्यायापेतं नोहितव्यमित्याह । अवकाश[3]सम्भवान्न्यायश्चिन्त्यते ।

## ॥ कर्म वा विधिलक्षणम् ॥

इहाक्षेपेण प्रवर्तत इत्युच्यते भाष्यकारेण । **कः पुनरसावाक्षेपः?** उत्तरं—**रथन्तरमिति द्वितीयानिर्देशस्तावत् उपन्यस्तः, तत्र कोऽभिप्रायः?** उत्तरं—**आख्यातार्थवाचिनि** नाम्नि[4] द्वितीया श्रूयमाणा न कर्माख्यस्य कारकस्य ईप्सिततमत्वं विहन्ति कर्ममुख्यद्वितीयान्तनामधेयप्रदर्शनेन क्रियाया एवेप्सिततमत्वात् यथा ओदनपाकं पचतीत्यस्मिन् वाक्ये ओदनस्येप्सिततमत्वाविघातः पाक एव हि प्राधान्येन निर्दिश्यते । एवमत्रापीति हेतौ द्वितीयोपन्यासः ।

यत्पुनरिदमुक्तं अकर्मकाले प्रयोगात् **प्रधानकर्म सामेति तदयुक्तमिति मन्यन्ते ।** कथं? उत्तरं—**यदि प्राधान्यमृचो ब्रुवते मीमांसकाः तर्हि अर्थाभि-**

---

1. R न पठितव्य
2. R पठितं
3. A काशासम्भव
4. A साम्नि

**धानव्यापृताया एव ऋचो गुणभूतं सामेति ब्रुवते** । अस्यार्थः—अकर्मकाले साम्नः प्रयुक्तत्वात् पुनः कर्मणि प्रयोगो न स्यादिति संस्कारकर्मपक्षे दूषणमापद्यते तच्चेदम(च)दूषक्षम् । ये च संस्कारतां साम्नो मन्यन्ते तेप्यर्थाभिधानं कुर्वन्त्या ऋचः संस्कारकं सामेच्छन्ति । तत्र यद्यकर्मकाले संस्कृतया[1] वा अर्थाभिधानं क्रतूपयोगि कृतं भवेत् तदा पुनः क्रतौ कार्याभावात् ऋचः संस्कारो न क्रियेत । नचाकर्मकाले अभिधानं स्तुत्या स्मृत्या वोपयुज्यते । यथा नोपयुज्येत तथाऽऽह—**स्तुतिस्तावत्कर्मकाले एव चोदिता प्रयाजादिवत् पृष्ठैः स्तुवत इत्यादिभिः । स्मृतिरपि** कर्मकाले चार्थात् प्राप्नोति । कर्मकाल एव स्मृतेरपेक्षितत्वात्[2] । नहि अस्मृतमनुष्ठातुं शक्यत इति । तेन कर्मकाले स्तुतये स्मृतये वाऽर्थाभिधानसिद्ध्यर्थं पुनः साम्नः प्रयोग उपपद्यते । यतोऽर्थाभिधानविशिष्टाया ऋचः संस्कारेऽङ्गीक्रियमाणे न कश्चिद्दोषः । एवं चेन्नैव ऋचः प्राधान्यमिच्छन्ति तेप्य(स)दृष्टसंस्कारं ब्रुवते येन पुनः क्रतौ प्रयोगो न स्यात् । **यद्यकर्मकालमध्ययनं [2]स्तुत्या स्मृत्या वा नोपयुज्यते तर्हि अकर्मकालस्याध्ययनस्य किं प्रयोजनमिति चेत् ।**

उत्तरं—**भवतु तस्य दृष्टं अदृष्टं वा प्रयोजनं किं न एतेन प्रयोजनविचारेण ।** कर्मकाले तावत् गुणभूतेति सिद्धं ( कर्मकाले ) दृष्टार्थत्वात् अभिधानस्य अनभिव्यक्तस्यानभिधायकत्वात् ।

**अतोच्यते—अविषयज्ञो मानुमान् अस्याधिकरणस्य । कथमविषयज्ञः ?** उत्तरं—**अत्रापि हि नैव कर्मार्थतामङ्गीकृत्य गुणप्रधानभावश्चिन्त्यते गीतेरक्षराणां च, किं तर्हि पाठमात्राभिप्राया एषा चिन्ता ।** अस्यार्थः—न कर्माङ्गभूतां गीतिं गृहीत्वा किमक्षराणां प्रधानत्वं गीतेर्गुणभावो यदि वा विपरीतमितीयं चिन्ता । किन्तु स्वाध्यायोत्पन्नसामस्वरूपमाश्रित्य चिन्त्यते—इयं किं गीतेरक्षराभिव्यक्तिरूपत्वात सर्वदैवाक्षराभिव्यक्त्यर्थता अवघातादीनामिवावहन्यमानार्थता, अथवा सर्वत्र स्वप्रधानतैव अनीप्सितकर्मयुक्तानामिव हिरण्यभरणादीनामिति ।

तत्र राद्धान्तस्तावत् अक्षरग्रहणस्यापि कार्योपयोगितया न शक्यतेऽनीप्सितत्वं वक्तुम् इति संस्कार एवेदमिति प्रक्रान्तः । पूर्वपक्षवादी तु आक्षिपति—सत्य-

---

1. R संस्कृताच
2. ,, श्रुत्या

**मनया युक्त्या प्राप्नोति गुणभावः साम्नः ।** किञ्च कर्मकाले यदध्ययनं तत्राभिधानमप्रयोजनं स्तुतेः स्मृतेश्च तदानीमचिकीर्षितत्वात्[1] इति हेतोरभिव्यक्तिरूपस्य संस्कारस्यानुपयोगात् पुरुषार्थत्वं गीतेः । अक्षरार्थत्वेऽङ्गीक्रियमाणे तत्सिद्ध्यर्थमदृष्टं कार्यं कल्पयितव्यम् । क्लृप्ते च तस्मिन् कर्मकालेपि साम्नो दृष्टार्थतैव । कुत इत्याह—**नहि अवघातादीनामिव गुणप्रधानावगमः शक्यते कल्पयितुम् ।** अन्यथा यद्यक्षरेषु कार्यं न कल्प्यते तदाऽक्षराणां प्रधानभावः साम्नश्च गुणभावः कल्पयितुं न शक्यते यथाऽवघातादीनाम् । यावद्धि तेषामपि व्रीहिगतं कार्यं न कल्प्यते न तावत् गुणभावः । तत्र कार्ये कल्पयितव्ये बहिःप्रयोगेऽभिधानानुपयोगाददृष्टमेव कार्यं कल्पयितव्यम् ।

**कल्पिते च तस्मिन् अन्तः प्रयोगेऽपि तदेव कार्यमवैलक्षण्यात् । तथाच सति पिष्टपेषणन्यायात् अप्रयोगस्साम्नः ।** यथा पिष्टस्य पेषणं न शक्यते तथा संस्कृतस्यापि संस्कार इति पुनरप्रयोगः । अस्ति च ऋचोऽसौ इति कर्मैव साम्न ऋचो वदामः ।

**ननु प्राधान्येऽपि साम्नः किमिति बहिः कर्मणि च प्रयोगः ।** उत्तर—**अधिकारान्तरान्न दोषः ।** बहिस्तावदधिकारान्तरसिद्ध्यर्थं प्रयोगः वचनान्तरेण प्रयाजादिवदङ्गत्वावगमात् श्रुतोपकाराय कर्मणि प्रयुज्यत इत्यविरुद्धमुभयम् ।

**यदि प्रधानं साम कथं तर्हि ऋगन्तरसम्बन्धः कवतीषु रथन्तरमिति ।** पृच्छति—**कं वाऽत्र दोषं मन्यते भवान् ? ।** उत्तरं—**अयमेव दोषो यदृगन्तरसम्बन्धो नाम ।** कुतोऽयं दोष इत्याह—**यथोत्पन्ना एव हि प्रत्यभिज्ञायन्ते संस्काराः नार्थान्तरयुक्ताः कृष्णलेष्विव पाकादयः ।** अस्यार्थः— योऽपि प्रधानकर्म सामेच्छति सोऽपि दृष्टेन रूपेण ऋक्संस्कारकत्वं साम्न इच्छत्येव । किन्तु संस्कारार्थता नास्तीत्युच्यते । ततश्च ऋगन्तरसम्बन्धेपि प्रत्यभिज्ञाया अभावः यथा कृष्णलेषु पाकस्य यस्मिन्नेव द्रव्ये प्रतीताः संस्काराः तद्गता एव प्रत्यभिज्ञायन्ते नार्थान्तरगताः । यद्यर्थान्तरे प्रत्यभिज्ञा नास्ति **कथं तर्हि श्रपणविधानं कृष्णलेषु प्रधानपदार्थस्वरूपाभावे विधिरपि नोपपद्यत इति भावः ।** उत्तरं—**इदं दशमे वक्ष्यामः,** यथा विधानं तं सप्रकारं दशमे

---

1. R अविवक्षितत्वात्

वक्ष्यामः। भवति च श्रपणशब्दाभिधेयता कृष्णलेष्वपि। श्रपणस्य प्राकृतस्य पाको न भवति कार्याभावेनाप्रत्यभिज्ञानात्। एतच्चोद्यं पक्षद्वयेपि।

**अत्रोच्यते—युक्तं तत्र प्रधानार्थस्य अनभिनिर्वृत्तिः। इह पुनः ऋगन्तरेणापि गीतिः अभिनिर्वर्तत एव।** अस्यार्थः—युक्तं [1]तत्र कृष्णलेषु अप्रत्यभिज्ञानं प्रधानस्यार्थस्य पाकजगुणस्य कृष्णलेष्वनिष्पत्तेः। कार्याभावेन [2]प्राकृतपाकप्रत्यभिज्ञा नास्ति इति मन्यते। इह पुनः ऋगन्तरेणापि गीतौ निर्वर्त्यमानायां प्रत्यभिज्ञाऽस्त्येव। तेन सैवेयं गीतिः। गीतिमात्रं च सामेत्यदोषः। ऋगन्तरसम्बन्धश्च। तदिदं पाकयज्ञवत्[3] द्रव्यान्तरेपि प्रत्यभिज्ञाऽस्तीत्युक्तम्।

**एवं प्राप्तेऽभिधीयते - गुणभूतं साम; कुतः?** यस्मादृगक्षराणामर्थाभिधानं नियोगसिद्धावनौपयिकं न शक्यते वक्तुम्। यदि हि अर्थाभिधानं नियोगसिद्धावनौपयिकं स्यात् तदा तदर्थमृगक्षरसंस्कारो न भवेत्[4] औपयिकन्तु तन्मात्रप्रामाण्याभिधानात्। उक्तं मन्त्राणामपि प्रामाण्यं प्रमाणलक्षणे। वस्तुस्वभावेन चाक्षराभिव्यक्तिः संस्कारोऽक्षराणां प्रतीयते। इदानीमाक्षेपहेतुदूषणायोपक्रमते—**या पुनर्द्वितीया सामविनियोगे वा रथन्तरं पृष्ठं कुर्यात् इत्येवमादिषु (अ)प्रैषे चालौकिके वैदिके च चन्द्रं गायेत्येवमादिषु दृश्यते। तत्र या तावत् रथन्तरं पृष्ठं कुर्यादिति सा गुणभूतसाम्न्युपपद्यते। अन्यथा हि पृष्ठसम्बन्धो न स्यादिति दर्शितं भाष्ये।** पृष्ठशब्देन स्तुतिरूपः क्रियाविशेषः उच्यते। यदि रथन्तरशब्दोऽपि प्रधानकालकर्मवचनः स्यात् तदा प्रधानकर्मणः कर्मान्तरेण साधयितुमशक्यत्वाद्रथन्तरादिभिः सम्बन्धो न स्यात्। संस्कारकर्मत्वे(हि)तु गुणाभिधानसमर्थाक्षरसंस्कारद्वारेण व्यक्तमेव साधनत्वं यथाऽभिक्रमणस्य प्रयाजहोमे।

यत्पुनश्चन्द्रं गायेति तद्विनियोगवशादविवक्षितमर्थाभिधानं प्रैषे हि सामप्रयोगार्थमेव पुरुषः प्रेष्यते तेन सामप्रयोगपरत्वात् प्रैषविनियोग(पर)स्य तद्वशादर्थाभिधानं अविवक्षितं तेन युक्तो द्वितीयानिर्देशः। **किण्वमत्रहन्तीतिवद्विकारः** यथा किण्व-

---

1. A. adds. न
2. R. प्रकृता एव
3. R. वदित्युक्तम्
4. R. औपाधिक

मवहन्तीत्यत्र विद्यमानोऽपि किण्वविकारो न विवक्षितः तथेहाप्यर्थाभिधानं; नचैतावता स्वभावहानं शक्यते वक्तुं प्रमाणान्तरावगम्यत्वादर्थस्य [1]सामप्राधान्यलक्षणस्य ।

यत्तु लोके माणके रथन्तरं गायेत्येवमादि तत्र गातृत्वपरीक्षया प्रधाननिर्देशः गातृत्वं माणवकस्य परिचिकीर्षितमित्यदोषः। परीक्षमाणस्यैव प्रैषः। तत्र चार्थाभिधानस्याविवक्षितत्वात् युक्त एव द्वितीयानिर्देशः। तस्मादस्यापि लौकिकस्य प्रैषस्यान्यपरत्वान्न सामस्वभावविघातिता। यत्पुनर्बहिरध्ययनं तदनूह्यानां साम्नां स्वाध्यायविधिकारितमेव। तस्य च स्वाध्यायविधेः पुरुषार्थत्वे सत्यपि नादृष्टार्थता, दृष्टो हि तस्यार्थः कर्मावबोधनं नामेति न्यायात्। तत्राक्षराणामर्थावबोधार्थमध्ययनं गीतेस्तु स्वरूपाभ्यासाय। न ह्यनभ्यस्तं साम कर्मणि प्रयोक्तुं शक्यते। **ऊह्यानां पुनर्वचनप्राप्तेर्न्यायप्राप्तेश्च सङ्कटावगमादनपेतशिष्याचार्यसम्बन्धस्यैव दृष्टार्थस्यैवाभ्यासस्य नैत्राधिकारान्तरमस्तीत्यदोषः**—अस्यार्थः - ऊह्यानां तु यद्यप्यनपेतः [1]शिष्याचार्यसम्बन्धः तथाप्यभ्यासो दृष्टार्थ एव। वचननिबन्धना हि या प्राप्तिः न्यायनिबन्धना च सा सङ्कटावगमेति। न्यायवचनविदा ऊहितानां साम्नामभ्यासः। अतो न तत्रापि कर्मकाले पुनः प्रयोगेप्यधिकारान्तरकल्पना। तेन गुणकर्मत्वेन(पि) युक्त एव बहिः प्रयोगः। तस्माद्गुणभूतं सामेति सिद्धम्।

नन्वेवमभ्यासार्थेपि संस्कारे कृते पुनस्संस्कारो नोपपद्यत इत्यत्राह--**पिष्टपेषणन्यायस्तु विनियोगान्तरादभ्यासाच्च परिहृतः**। कर्मकाले पुनः प्रयोगः कर्मणि विनियोगान्तरस्याविद्यमानत्वात् बहिश्च प्रयोगाभ्यासाय। तदिदमुक्तं तावत्कालमनवस्थानाच्छक्यत्वाच्चेति। यदि बहिः प्रयोगे(कु)कृतः संस्कारः कर्मकालं यावदवतिष्ठते तदा पुनरन्तःकर्मणि प्रयोगो न स्यात् अशक्यो वा यदि भवेत्संस्कारः न चैतदुभयमप्यस्ति इति।

## ॥ ३ ॥ तृचे स्याच्छ्रुतिसंयोगात् ॥ १४ ॥

**ननु प्रधानभूतासु ऋक्षु श्रूयमाणा सङ्ख्या कथं सामसाधनतया शक्यतेऽवगन्तुम्। यतो ग्रहे प्रधानभूते श्रूयमाणा न संमार्गं प्रति प्रधानभूता तथा त्रिसङ्ख्यापि प्रधानभूतास्वृक्षु श्रूयमाणा न सामसाधनतया**

---

1. A अनपेक्षितः

शङ्कितुं युक्ता । उत्तरं—**अन्यथा हि विधानानुपपत्तेः** यदि हि सामनिर्वृत्तौ सङ्ख्या साधनत्वेन नोपदिश्यते तदा विधानमेव न स्यात् । तेनार्थसाधनभावमृचामाश्रित्य साम्नि सङ्ख्याविधानमाशङ्कि(श्रि)तम् । तदाह—**न हि असाधनभूतासु ऋक्षु श्रूयमाणा सङ्ख्या नियन्तुं शक्यते ।** ननु किं तया नियतयेत्यत्राह—**अनियम्यमाना च कार्येऽनन्वयिनी स्यात्** गुणवचनेन स्मृतौ साम्नामेवैकासमाप्तिपक्षः । ननु ग्रहैकत्ववत् भवतु कार्यानन्वितेति परमतमाशङ्कयति—**भवत्विति ।** दूषणमाह—**प्रतीतावप्यनन्वितता प्राप्नोति ।** यथैकत्वं कार्येऽनन्वितमपि प्रतीतावन्वयि(य)तथा त्रिसंख्या न स्यात् बहुष्वपि क्रियमाणसम्मार्गः एकस्मिन्नपि क्रियते । साम्नस्तु एकैकर्क्समाप्तिपक्षे नास्त्येव त्रिसङ्ख्यासम्बन्धः । इममेवाभिप्रायं विवरीतुं चोद्यं तावदाह—**ननु समासात्प्रतीतावन्वयं को वारयति समासपदत्वादस्य तृचशब्दस्य** । त्रिङ्ख्याया ऋक्सम्बन्धोऽवगम्यत एव । ग्रहस्य चैकत्वसङ्ख्यया समन्वयो विभक्तियोगात् यथा ग्रहं सम्मार्ष्टीति विभक्तियोगेनैकत्वं ग्रहसम्बन्धि प्रतीयते । तथा त्रित्वमपि ऋक्सम्बन्धि समासादिति । परिहरति—**युक्तं तत्रोद्देश्यो हि स न क्लृप्तकार्यापेक्षः ।** अस्यार्थः—न ग्रहमात्रसम्बन्धेन प्रतीत्यन्वयित्वं किं तर्हि सम्मार्गसम्बद्धावस्थासम्बन्धित्वेन । अस्ति च तत्र सम्मार्गसम्बद्धस्यापि ग्रहस्यैकत्वेन सम्बन्धः । सम्मार्गविधौ ग्रहस्योद्दिश्यमानत्वात् प्रत्युद्देश्यं च विधेयसम्बन्धात् । यदि सम्मार्गस्य क्लृप्तं कार्यं स्यात् अनेकग्रहवर्त्येव तदपेक्षोऽयमुपदेशः[1] स्यात् तदा प्रत्येकं सम्मार्गसम्बन्धो नास्तीत्येकत्वं प्रतीताव(य)नन्वितं स्यात् । न च सम्मार्गस्यानेकवर्ति कार्यं क्लृप्तमपेक्ष्यायमुपदेशः, **अयं पुनः क्लृप्तकार्यापेक्षो विनियोगः**

अस्यार्थः—स्तुतिः साम्नः कार्यमवगतं एकैव च ऋक् गुणाभिधानलक्षणां स्तुतिं करोति नर्क्समुदायः । ततश्चार्थात् स्तुतिसाधनभूतसामनिर्वृत्तिरेकैककार्यैव (च)तथाभूतर्क्सम्बन्धिनी च सङ्ख्या समासात् प्रतीयते । न च क्लृप्तमृचः कार्यमपेक्ष्यायं त्रिसङ्ख्याविनियोगः त्रिसङ्ख्यासम्बन्धः ततश्च (अ)प्रतीतावप्यनन्वितत्वं तदाह—**न चेत् कार्येण सङ्ख्या सम्बध्यते कथमस्यासम्बद्धमन्वयं प्रतीमः** विधीयमाना हि सङ्ख्या कार्यान्वयिनी भवति । यद्यपि ऋच एकैकस्याः स्तुतिसाधनता तथा च सति त्रित्वसङ्ख्याविनियोगवशेन साम्ना स्तुवीतेति सामशब्दः सामावयवलक्षणार्थो विज्ञायते । यदि पुनरेवं नाश्रीयते तदा त्रिसङ्ख्यानन्वयः ।

---

1. यमुद्देशः

एवं च शाब्दप्रत्याय्यमेकत्वमाश्रित्योक्तम् । **तत्र पुनः न विभक्तेर्वचनमेवैकं प्रयोजनमिति नान्तरीयकः सङ्ख्यासम्बन्धो दर्शितः।** अस्यार्थः—यत्परो हि शब्दः स शब्दार्थः। ग्रहं सम्मार्ष्टीति नैकत्वपरा द्वितीया किन्तु कर्मत्वपरा तेनाविवक्षितो नान्तरीयक एकत्वसम्बन्धः । **इह तु निर्निमित्तत्वादशब्दार्थः प्राप्नोति ।** इह तु त्रिशब्दप्रयोगे निमित्तान्तरं नास्तीति त्रिसङ्ख्यासम्बन्ध एव विवक्षितः। स चानन्वित इत्यशब्दार्थ एव स्यात् अन्विताभिधायित्वाच्छब्दस्य । अशब्दार्थत्वे च प्रमादनिमित्तकस्त्रिशब्देन[1] सह समभिव्याहारः स्यात् प्रमादश्च पुरुषाश्रय इति पौरुषेयत्वापत्तेः स्थितस्य प्रामाण्यस्योद्धारप्रसङ्गः। तस्मात् सत्यप्यृचां प्राधान्ये (न) सङ्ख्यानुरोधेनार्थलक्षणः साधनभावो वर्णनीयः। दर्शितं च प्रधानभूतानामपि अर्थनिष्पादकत्वं, प्रधानमपि ग्रहादि सम्मार्गं साधयत्येवेति वदता। तदाह—**तस्मात् सङ्ख्यानियममपरित्यजता प्राधान्यमृचामभ्युपगमनीयम्।** एकेन साम्ना तिस्र ऋचः संस्कार्या इत्यभ्युपगमनीयम्। यत एवमतः सामावयवाभिव्यङ्ग्यं स्तुतिवाक्यं मन्वानो रथन्तरं पृष्ठं भवति इति रथन्तरशब्देन रथन्तरावयवलक्षणया अविरुद्धं मन्यते पूर्वपक्षवादी । आख्यातसम्बन्धि विधेयमभ्युपगतं भवति तृचे साम क्रियत इति सामकृतावेव त्रिसङ्ख्योपदेशात्। सिद्धान्ते(हि)तु स्तुतौ सङ्ख्योपदेष्टव्या, साम क्रियत इति सामशब्दश्च लक्षणया वर्णितो भवति। सामशब्देन हि सिद्धान्ते सामाभ्यासो लक्षणीयः। तत्र कृतं भवति ।

**एवं प्राप्तेऽभिधीयते—नैतदुपपद्यते सामनिर्वृत्तिरेव त्रिसङ्ख्यायाः कार्यमिति।** कुतः? उपदेशपूर्वकं हि कार्यावधारणम् । भवत्वेवं तथापि किमिति सामनिष्पत्तिः कार्या न भवतीत्यत्राह—**मुख्यश्चायमुपदेशो रथन्तरं पृष्ठं भवति बृहत् पृष्ठं भवति इति।** मुख्यशब्देन प्रथमभाव्युक्तं स्तुतिर्हि साम्नः कार्यमवगम्यते पश्चादेकं साम तृचे क्रियत इति वर्णनीयः। भवतु मुख्यस्तथापि किमित्याह—**प्रत्यृचं स्तुतिः परिसमाप्यते प्रायशः ।** प्रायेणैकर्ग्गुणाभिधानं करोति, नर्क्समुदायः। प्रायग्रहणं क्वचिदर्धेन क्वचित्पादेन स्तुतिः परिसमाप्यत इति दर्शयितुम्। भवत्वेवं तथापि किमित्याह—**एवं सति स्तोत्रसाधनत्वेऽवगते साम्न उपदेशान्नावयवस्य तत्कार्यमिति शक्यते कल्पयितुम्।** अस्यार्थः—यदि हि प्रत्यृचं स्तुतिः परिसमाप्यते व्यासज्य च गानं क्रियते तदा रथन्तरं पृष्ठं

1. तृचशब्देन A.

भवतीति रथन्तरावयवो रथन्तरशब्देन लक्षयित्वा पृष्ठसंज्ञके स्तोत्रे विनियोक्तव्यः। न चैतच्छक्यते उपदेशतः सामकार्यतया स्तुतेः अवगतत्वात् तत्पूर्वकत्वाच्च त्रिसङ्ख्योपदेशस्य। कथं तत्पूर्वकत्वमित्यत्राह—**कार्यापेक्षश्चायमुपदेशः एकं साम तृचे क्रियत इति।** योऽपि सामनिर्वृत्तावेव त्रित्वसङ्ख्योपदेशमिच्छति तेनापि साम्नः कार्यावगम्योऽयं त्रिसङ्ख्योपदेशो वक्तव्यः [1]मानान्तरावगतकार्यस्य शेषित्वात्।

ननु च यद्यप्ययं तत्पूर्वकस्त्रित्वसङ्ख्यानियमः[2] तथापि निर्विषयोऽयमिति वरं रथन्तरावयवलक्षणा। तदाह—**ननु च निर्विषयोऽयं नियम इत्युक्तं** साधनत्वेनाचोदनादृचः। यदि ऋक् स्तुतिं प्रति साधनत्वेन चोदिता स्यात्[3] तदाश्रया त्रिसङ्ख्या स्तुतौ विधीयेत। न चैतदस्ति। परिहरति—

**अत्राभिधीयते—ननु च भवतापि पूर्वपक्षिणाऽर्थ एव सामनिष्पत्तावृचः साधनभावः त्रिसङ्ख्यानियमहेतुरुपन्यस्तः, ममापि असावेव भविष्यतीति** स्तुतावपि एवमस्त्येव चर्चः साधनत्वं, यद्येवं कस्तर्हि राद्धान्तस्य विशेषः इत्याह—**अयं तु विशेषः उपदेशानुरोधिनी कार्यकल्पना कृता भवति। रथन्तरं पृष्ठं भवतीत्युपदेशानुरोधेन** साम्न एव कृत्स्नस्य स्तुतिः कार्यमिति कल्पितं भवति। स्तुतिनिष्पन्नश्चार्थसाधनभावः सिद्धान्तिनोक्त इति। पृच्छति—**क्व पुनरसावार्थसाधनभावः ? उत्तरं—स्तुताविति ब्रूमः।** स्तुतौ हि सामनियमः स्तोत्रनियमश्च पठितः। सामनियमो रथन्तरं पृष्ठं भवतीत्यादिषु ऋङ्नियमः कवतीषु रथन्तरमिति। स्तोत्रनियमः पञ्चदश आर्भवः पवमान इति पठितः। तत्र यथाकथञ्चिदनियमात् स्तोत्रपूरणे प्राप्ते तदर्थमिदं नियमवचनमित्येकं साम तृचे क्रियत इति प्रत्यृचं गानमिति सिद्धम्।

ननु साम क्रियत इति सामशब्दोऽभ्यासलक्षणार्थः स्यादश्रुतस्तुतिसम्बन्धश्च त्रिशब्दस्येत्यत्राह—**मुख्योपदेशानुरोधेन च कार्यनियमनियोगानां स्वार्थसिद्धेर्न लक्षणा पदार्थसम्बन्धो वा (न) दोषः।** कार्ये ये नियमनियोगास्तेषां मुख्योपदेशानुगुण्येनार्थो वर्णनीय इति पूर्वमुक्तम्। तेन लक्षणा पदान्तरसम्बन्धश्च न दोषः। **सनिदर्शनं प्रयोजनमुक्तम्।**

---

1. R. शास्त्रावगत.
2. A. विनियोगः
3. तदाऽप्राप्ता A.

॥ ४ ॥ तदभ्यासः समासु स्यात् ॥ २१ ॥

तृचे गानं कर्तव्यमित्येतावत्समधिगतं, समासु गेयं विषमासु वा गेयमिति न शास्त्रं भवति। विषमत्वेपि त्रिसङ्ख्योपपत्तेः। तस्मादनियमं पूर्वपक्षवादी मन्यते।

एवं प्राप्तेऽभिधीयते—सत्यं वचनस्यायमगोचरः समास्वेव गेयमिति। तथापि समास्वेव गानं कर्तव्यम्। कुतः? उत्तरं—(विषमा) असमास्वेव गाने क्रियमाणे अश्रुतो विकारः कृतो भवति साम्नः। न च वचनादृते अश्रुतकरणं युक्तम्। यावानेव श्रुतस्योत्सर्गे दोषः तावानश्रुतकल्पनायामिति समास्वेव गानं कर्तव्यम्। विकारस्तु भाष्यकारेण प्रदर्शितो लघीयस्यामृचि गीतेः संशरणम्। बृहत्यां विलेश इति। निदर्शनमुक्तम्।

॥ ५ ॥ नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥ २३ ॥

ननूत्तरयोर्गायतीत्ययमुपदेशः किमर्थमिह चिन्त्यते? उत्तरं—ऊहसिद्ध्यर्थं चिन्त्यते। एतदेव विवृणोति—उत्तरापठितेषु ऋगर्धपादेषु उत्तरयोरित्यनेन गृह्यमाणेषु, प्रागाधादिकार्यं कर्तव्यं योन्युत्तरासु नैवं स्यात् योन्यपेक्षया उत्तराणां व्यवहितानामव्यवहितानां वा यथोत्पन्नानामेव सम्भवात्। तस्मादयमुपदेशो विचारयितुं युक्तः। तत्र पूर्वपक्षवादी उत्तराभिधानमविशिष्टं मन्यते यथा रूढियौगिकयोरभिधाने विशेषः तथात्र न भवति। उभयोरुत्तराशब्दस्य रूढत्वात्। सत्यमविशिष्टः पदार्थः, [1]अभिधेयस्यार्थान्तरापेक्षित्वं तु विशेषः। योन्यपेक्षमुत्तरात्वं योन्यवधिकग्रहणं उत्तरासंज्ञिकास्तु निरपेक्षा इति।

राद्धान्तवादी तु मन्यत इति सम्बन्धः। सापेक्षनिरपेक्षयोश्च निरपेक्षं बलीयः शीघ्रावगमात् यतस्तस्मादुत्तरास्वेव गानं कर्तव्यमिति। शेषमुक्तम्।

एवं वा

यद्योन्यां तदुत्तरयोरित्यत्रोत्तरासंज्ञिता एव ग्राह्या इति स्थितम्। तथा समासु गेयमित्यपि स्थितम्। अत्रेदानीं किं समासु इत्येतदादरणीयमुत उत्तरयोरिति। अनेनाक्षेप्तुं संशयोऽनुभाषितः। आक्षिपति—ननु चैतदयुक्तं

---

1. R अभिधानस्य

**चिन्तयितुम् । यथाहि—उत्तरयोर्गेयमिति वचनं, समास्विति न्यायः न च न्यायो वचनमतिक्रामति ।** अश्रुतादिकल्पनं हि न्यायो निरुणद्धि न वचनम् । तेन वचनात् विषमास्वप्युत्तरासु गातव्यम् । तस्मान्नात्र पूर्वपक्षः सम्भवतीति ।

समाधत्ते—**अस्त्यत्र पूर्वपक्षाशङ्का अतिजगतीषु स्तुवत इति वचनं मन्यते पूर्वपक्षवादी ।** कुतः? **न ह्यप्राप्तानुवादः सम्भवति ।** यदि हि उत्तरादरणं तदा जगतीबहुत्वमप्राप्तमित्यनुवादो न घटते । तेन वचनानि त्वपूर्वत्वादिति वचनमेवेदम् । तथापि उभयथा वचनसम्भवे केन विशेषेण समास्वित्याद्रियते । तत्राह—**सामान्यं च यद्योन्यां तदुत्तरयोरिति वचनमतिजगतीष्विति विशेषदर्शनम् तेन यदाहवनीयन्यायेन समास्वेव गातव्यम्** । तस्मान्निराकरणीया पूर्वपक्षाशङ्का । राद्धान्तमाह—**सेयं निराक्रियते पूर्वपक्षाशङ्काव्चनमिदं** यद्योन्यां तदुत्तरयोर्गायतीति । उत्तरासंस्थिताश्च गृह्यन्त इत्युक्तं तेन तत्रैव गेयम् । यत्त्वतिजगतीष्विति तदावृत्त्यापि बहुवचनमवकल्पत इति न वचनकल्पनामर्हति । एकविंशः षोडशी तृचे सप्तकृत्वोऽभ्यस्यमाने सप्तधा अतिजगत्यामावर्त्यमानायां बहुवचनं घटत एव । क्लृप्तवचनानुरोधेन ह्येषापि कल्पना नानुपपन्ना । तेन वचनमेव न भवति अतिजगतीषु स्तुवत इति ।

॥ ६ ॥ प्रागाथिकन्तु ॥ २५ ॥

ननु प्रागाथिके निर्देशे सति चिन्तेयमनुचितेत्याह—**किमत्र चिन्त्यते?** उत्तरं—**इदमत्र चिन्त्यते । किं ककुभावुत्तर इति पृथक्त्वनिवेशित्वं सङ्ख्याया आदरणीयम्** उत प्रागाथिकमिति निर्देशः इति ककुभावुत्तर इति द्विसङ्ख्या पृथक्त्वनिवेशिनी । तेनोत्पत्तिककुभोरागमः प्रतिभाति । प्रागाथिकनिर्देशाच्च प्रगाथ इति ।

तत्र पूर्वपक्षवादी पृथक्त्वनिवेशित्वं न्याय्यम् मन्यते । तेनोत्पत्तिककुभोरागमः निर्देशस्तु लौकिकः निर्देश एव केवलो, न वस्तु व्यवस्थापनायालम् ।

राद्धान्तस्तु ककुभावुत्तराकारं सामगानं कर्तव्यमिति कर्तव्यतामनुष्ठानमेवावगच्छामः । अपरककुभमेव उत्तरां ककुभं कृत्वा गातव्यमिति प्रतीयते । ककुभावुत्तराकारं गानं कर्तव्यमित्यव्यये यथाभिप्रेताख्यान इति णमुल् कार्ये विधिः । **पृथक्त्वनिवेशित्वमुपपद्यते ।** प्रगाथेन कृते ऋग्द्वये पृथक्त्वनिवेशित्वमुपपद्यते । **उत्तरयोरिति वचनात्तु उत्तरासंज्ञिताः शक्यन्ते ग्रहीतु एकत्वादस्य शास्त्रस्य ।**

उत्तरयोर्गायतीत्येकमिदं शास्त्रम् । एकस्मिंश्च यथा सङ्ख्यावगमः तथोत्तरावगमेपि इति नोभयावगमे कार्यतैवावगम्यते । एवं च प्रागाथिकमिति निर्देश उपपन्नो भवति । तस्मादेष पक्षः श्रेयान् । सनिदर्शनं शेषमुक्तम् ।

**एवं वा**

**कः पुनरत्र पूर्वेण विशेषः ? उत्तरं—त्रिच्छन्दा आवापो माध्यन्दिनः पवमान इति वचनातिक्रम मन्यते** (उत्पत्ति बृहत्योस्त्वा) पूर्वपक्षवादी । यदि यासौ रौरवे यौधाजये च विष्टारपङ्क्तिः तां स्वीकृत्य प्रागाथिकं क्रियते । तदा गायत्री बृहती त्रिष्टुप् पङ्क्तिभिः त्रिच्छन्दस्त्वं श्रुतमतिक्रम्य(ते) उत्पत्तिबृहत्योस्त्वा-नय पनेङ्क्तिपरित्यागादुपपद्यत एव त्रिच्छन्दस्त्वमिति पूर्वपक्षः ।

राद्धान्तस्तु पङ्क्त्या बृहतीकारं गानं कर्तव्यमिति कार्यत्वेनापि बृहत्याः त्रिच्छन्दस्त्वमुपपन्नं भवतीति । यदि हि पङ्क्तिरूपत्वेनासौ स्तोत्रे व्याप्रियते ततो भवेत् त्रिच्छन्दस्त्वविरोधः । नचैतदस्ति । तामादाय प्रगाथेन बृहतीद्वयं सम्पाद्य सामप्रयोगात् । शेषं पूर्ववत् । ननु षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति लिङ्गं पूर्वपक्षेऽप्युपपन्नं त्रिछन्दस्त्ववत पठितपंक्तिपरित्यागात् । यदि हि ऋगन्तरागमनेन त्रिछन्दस्त्वं लब्धं तदा नास्ति पङ्क्तिप्रगाणमित्याशङ्क्याह—**नास्यास्त्वानीयमानासु प्रकरणपठिताः शक्यन्तेऽप्रयोज्यत्वेन वक्तुं, अप्रगीतत्वमेव केवलमासां स्यात् न पुनरप्रयोगः** । अस्यार्थः—प्रकरणपठितानां ग्राहकगृहीतानां यद्यपि गानं नास्ति तथापि लैङ्गिकः क्वापि विनियोगो भवति । तेन नाप्रयोगः सवनगतर्क् परिगणना । न स्तोत्रपरिगणनानि न पूर्वपक्षे लिङ्गानुपपत्तिः अप्रगीतत्वे त्रिच्छन्द-स्त्वोपपत्तिः स्तोत्रगतछन्दोगणना नेयं, तेन कार्यान्तरप्रयोगेऽपि त्रिछन्दस्त्वाविरोधः इति उपपन्नं लिङ्गं पूर्वाधिकरणेऽपि तुल्यम् ।

**एवं वा**

**अत्रेदानीं को विशेषः ? उत्तरं—अयमस्ति विशेषः** यद्योन्यां तदुत्त-रयोरिति गायत्रीभ्यां शास्त्रं सम्पन्नमिति नानुष्टुप्कारं गानकर्तव्यताऽवगम्यत इति पूर्वपक्षवादी मन्यते ।

एकं साम तृचे क्रियत इति यद्योन्यां तदुत्तरयोरिति च गायत्रीभ्यामेव शास्त्रं सम्पन्नम् । किमर्थं प्रग्रथनेनानुष्टुभं कृत्वा गातव्यमिति पूर्वः पक्षः ? ननु चानुष्टुभे तृचे भवतः इत्यस्य विरोधः एकयाप्यनुष्टुभा तस्योपपत्तेः ।

राद्धान्तवादी तु मन्यते—कार्यत्वेपि उत्तरयोरिति संज्ञित्वं द्वित्वं चाविरुद्धमिति न कार्यावगमः शक्यते बाधितुम् श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवत इति श्रुतेः तिस्रोऽनुष्टुभः प्रतीयन्ते सम्भवस्तु(सु)तासां प्रगाथे नास्त्येव । न च किञ्चिद्विरुद्ध्यते । तेनानुष्टुं कृत्वा गातव्यमिति प्रतीयते । तस्मादत्रापि प्रागाथिकं गानम् । शेषमुक्तम् ।

एवं वा

अत्राधिकरणे किं प्रगाथः कर्तव्यो नेति चिन्त्यते । न कर्तव्यो गायत्रीभ्यामेव तृच उत्तरयोरिति चोपपत्तेः इति पूर्वः पक्षः ।

आनुष्टुभे तृचे भवत इति श्रुतेः तिसृणामप्यनुष्टुप्त्वावगमात् कार्यः प्रगाथ इति राद्धान्तः । भाष्ये तु उत्पत्त्यनुष्टुबागमाभिधाने वरमागमो न तु प्रगाथ इति प्रदर्शयितुम् ।

एवं वा

ननु चात्रापि चतुश्शतमैन्द्रावार्हताः प्रगाथा इति चोदनायामेव श्रवणात् प्रगाथेनैव भवितव्यम् । कथमत्र पूर्वपक्षाशङ्का । अत्रोच्यते - ऋक् प्रग्रथनेनापि प्रगाथशब्द उपपद्यत एव तृच उत्तरयोरिति च सर्वमुपपन्नं भवतीति पूर्वः पक्षः ।

द्व्यृचानां हि तच्चतुरुत्तरं शतं तेनान्यस्मात् द्व्यृचादेकामृचमादाय तृचं सम्पाद्य गानं करिष्यति तेन प्रगाथशब्दस्तृचशब्द उत्तरयोरिति चोपपद्यते । किमपरं पादप्रग्रथनेन ।

राद्धान्तस्तु अन्या अन्या ऋचो भवन्ति तदेव सामेत्यूहस्य च दर्शनात् पादप्रग्रथनेनैव गानं कर्तव्यम् । प्रगाथत्वसिद्धये हि तादृशं प्रग्रथनं युक्तमाश्रयितुं येन दर्शनविरोधोन भवति इति पादप्रग्रथनेनैव गानं न्याय्यम् । तृच उत्तरयोरिति च कार्येप्यार्थ उपपद्यत एवेत्युक्तम् । शेषमुक्तम् ।

॥ ७ ॥ अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥

कथं पुनर्गीतेर्विनियुक्तत्वादुपायाः समुच्चीयन्ते इत्याशङ्कते । यदि हि तेऽपि विनियुक्ता भवेयुः तदा समुच्चीयन्त इति यावत् । न च ते विनियुक्ताः गीतेरेव

विनियुक्तत्वात्। उत्तरं—**न हि उपायाननुपादाय गीतिः शक्यते उपादातुं इत्युपादानतः प्राप्तिं मन्वानो गृह्यमाणविशेषतया समुच्चयमाह पूर्वपक्षी।**

राद्धान्तस्तु— अयमेव विशेषः यदुत एक एवाभ्युपाय उपायान्तरनिरपेक्षो गीत्युपादानं निर्वर्तयति। नचोपायानुग्रहाय सामोपादानाभ्यासे प्रमाणमस्ति। सकृदुपात्तेनापि साम्ना कार्यसिद्धेः। कार्यं च धर्माणां प्रयोजनं नोपायाः। तस्माद-गृह्यमाणविशेषत्वं विकल्पहेतुः न समुच्चये इति सिद्धो विकल्पः॥

## एवं वा

ननु चेदमधिकरणमनुपपन्नार्थमिति वक्ष्यते। यदि तावदिदं वचनं तदोप-देशचिन्तेयम् नास्मिन् लक्षणेऽस्यावतारः। अथ विकृताविदं वचनं ततोऽनर्थकं प्रकृतौ स्तुतेः सामसाधनत्वावगमात् प्रकृतिवदेव साम्ना स्तुतिः प्राप्नोति। प्रत्युत ऋग्विधानार्थमेवेदं युक्तं साम्नः प्राप्तत्वात् ऋचोऽप्राप्तत्वात्।

अत्रोच्यते - प्रकृतौ विकृतौ वा भवतु परस्परनिरपेक्षकार्यनिर्वृत्त्यर्थमिदमधि-करणं यदि ऋचामपि स्तुतौ विनियोगः स्यात् तदा सामनिरपेक्षमेव कार्यमृचां स्यात् सामविनियोगपक्षे च ऋङ्निरपेक्षसाम्न एव कार्यमिति यदेतदाप्यते तन्निकरणार्थमिद-मधिकरणम्।

ननु च यद्येतद्विकृतौ वचनं तदाऽनर्थकं ऋग्विधानार्थं च स्यादिति पूर्वमुक्तं तत्राह—**न च प्रकृतिविकृत्योर्नियमः**। अस्यार्थः—विकृतावपि यदि (विकृतौ) स्तुतौ सामविधानार्थमेतत्स्यात् तदा प्रकृतिगतास्वपि स्तुतिषु चोदकतः सामप्राप्ति-रविरुद्धा। विकृतिर्हि प्रधानभूतात्कर्मणो धर्मान् गृह्णाति प्रकृत्यज्ञापूर्वं तु स्तुति-विषयं वैकृतस्तुतेर्धर्मग्राहीति न कुतश्चिद्विशेषः। तेन प्रकृतावपि यत्साम्नः स्तुति-दर्शनं तदेतद्वचनपूर्वकमेवेति नानर्थकं वचनम्। न च ऋग्विधानार्थं वचनम्। कस्मात् प्रकृतिविकृत्योर्नियमो नास्तीत्याह—**यदेव यत्राभ्यधिकं तदि-तरेणाकाङ्क्ष्यते। प्रकृतिलिङ्गविशेषाद्विशेषोऽवगम्यते। नैव तस्याः प्रकृतिरस्ति**। प्रकृतिगतस्यापि स्तोत्रापूर्वस्य साधनाकाङ्क्षा वैकृतापूर्वस्य सामसाधनं विहितम्। स्तुतित्वं च चोदनालिङ्गम्। तेन युक्तोऽतिदेशः। यत एव परस्पर-निरपेक्षकार्यनिर्वृत्त्यर्थमिदमधिकरणं अत एवेदमस्मिन् लक्षणे चिन्त्यते उपदेशे विशेषाभावात्। पूर्वपक्षावस्थायां हि उपदेशतो विकल्पो नास्ति। श्रुतितो विशेषा-

भावात् नास्यां श्रुतौ समुच्चये विकल्पे वा विशेषः, अर्थतश्च विशेषाभावादुभयोः साधनभावस्य समुच्चयेनापि घटनात् अरुणैकहायनीन्यायतो वा द्वारभेदेन समुच्चयाविरोधात्। कार्यतस्तु विकल्प एव प्राप्नोति। एकैकस्य विनियोगेनाङ्गत्वादेकैकोपादानेऽपि तत्सिद्धेः। तेन कार्ये विकल्पोऽयमिति अस्मिन् लक्षणे सङ्गतिः। कार्यचिन्तारूपत्वात्। ऊहसिद्धयर्थं हि अवान्तरकार्यचिन्ता प्रस्तुतेयम्।

अपि च अवान्तरकार्यचिन्ता तन्निराकरणार्थं विकल्पनिराकरणार्थं इहैव चिन्तनीयम्। तत्रैव पूर्वपक्षवादिना अवश्यं निन्दयैवासुरान्ववायस्य निमित्तभाव इति किं पदान्तरापेक्षयेति भवतु वाक्यभेदः। तस्मात् पूर्वपक्षवादी विकल्पं मन्यत इति सम्बन्धः। यदि निन्दयैवासुरान्ववायस्य वाक्यार्थावगमे निमित्तभाव इति निश्चयः स्यात् तदैकवाक्यतैव भवेत्। यदि तु अनिन्दया स्तुत्या चोपपद्यते तदा नास्तिः पदान्तरापेक्षायां प्रमाणमिति वाक्यभेदात् ऋचामपि स्तुतौ विनियोगः तथा साम्नोऽपि। तत्र कार्यस्यैकैकस्य साध्यत्वाद्विकल्पः। विकृतावपि चोपपन्नार्थमेवेदं विकल्पपक्षे वचनं, ऋचोऽप्राप्ताया एव विधानात्। तद्विधाने च साम्न एकान्तेन निवृत्तिर्माभूदिति तस्यापि विधानं युक्तं तदाह—ऋग्विधाने हि साम्ना स्तुतिर्न प्राप्नोति प्रकृतितः प्राप्तेरुपदेशेन बाधितत्वात्। तस्मादुभयं विधातव्यम्।

**राद्धान्तस्तु स्यादेतदेवं यद्यविशिष्टो निमित्तभावः स्यात्** [1]**अयं तु गम्यते विशेषः। कोऽसौ?** उत्तरं—**इति वक्ष्यमाणः।** कः? पदार्थान्तरेण साम्ना स्तुवीतेत्यनेन हि सम्बन्धित्वेन विकल्पेनासाक्षात्कृतत्वादस्य तदसंबन्धित्वम्। ऋचा स्तुवीतेति कल्पना। न चाकल्पनायां सम्भवन्त्यां कल्पना सम्भवतीति हेतोः साम्नैव स्तुतिः। **यदि साममात्रविधानमेतत् विकृताविदानीं किं प्रयोजनमस्य वाक्यस्य?** पूर्वपक्षे तु पूर्वोक्तप्रकारेण विकृतावप्येतद्वचनमर्थवत्। उत्तरं— **नावश्यं प्रकृतिविकारभावे नियम इत्युक्तः परिहारः पूर्वमेव।**

**एवं वा**

**अभिधाने विशेषानवगमात् प्रगीताप्रगीतयोर्मन्त्रयोः प्रतीकेन च विधानात् अविशेषं मन्यते पूर्वपक्षवादी।** अस्यार्थः—यथा स्तुतौ विशेषः प्रगीतेनैव स्तुतेः साध्यत्वात् [2]तस्याभिधानं तु नाप्रगीतेनैवोपस्थानात्मकत्वाभिधानात्

---

1. इदं-मा 2. तस्या अभिधाने प्रगीते तुल्यं

प्रगीतेन चाप्रगीतेन च तुल्यम् । अयं सहस्रमानव इति (प्रगीतेन)प्रतीकेन ऋचो विनियोगात् तस्याश्चोभयावस्थत्वादनियमः । यदि हि एतयेति सर्वनाम्ना विनियोगस्तदा तस्य प्रकृतपरत्वात् प्रगीतायाश्च सामवेदे प्रकृतत्वात् नाप्रगीतयोपस्थातव्यमिति गम्यते। प्रतीकेन चायं विनियोगः। एतच्छब्दस्तु प्रतीकोपात्ताया ऋच एव परामर्शकः। यस्त्वत्र स्तुतिशब्दः सोऽभिधानोपलक्षणयैव, अन्यथा साम्नैव स्यात् ऋचां स्तुतावचोदितत्वात् ।

**राद्धान्तस्तु एतयेति विशेषावगमात् प्रगीतयोपस्थातव्यमिति युक्तम् ।** —अस्यार्थः - एतयोपतिष्ठत इति विनियोगार्थः एतच्छब्दश्च प्रकृतपरः सामवेदे च प्रगीतैव सा प्रकृता। पश्चात् कयेत्यपेक्षायां अयं सहस्रमानव इति विशेषसमर्पणं प्रतीकेनैव। एवं व्याख्यायमाने एतयेति प्रवृत्तिविशेषकरं भवति ।

ननु प्रतीकग्रहणात् पुनरप्यविशेष इत्यत्राह—**प्रतीकग्रहणं त्वविशिष्टमेतयेति या प्रकृता प्रगीतोपस्थापिता तस्या अपि विनियोगे प्रतीकग्रहणस्याविशेषः ।**

**ननु च सामवेदे अप्रगीतापि पठ्यत इति। ऋक्पाठचोदनासुपन्यस्यार्थतया प्रगाणार्थतया न स्वरूपग्रहणार्थमृक्पाठ इति नाप्रगीता प्रकृता,** किन्तु प्रगीतेति। आहवनीयोपस्थाने प्रगीताप्रगीतयोः अविकल्पमुक्तवान्। कुतः पुनः अप्रगीतायाः प्रगाणार्थमेवात्र पाठः इत्यत्राह—**दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः।** प्रगाणनिर्वृत्तिर्हि दृष्टं प्रयोजनम्। न ह्यगृहीतान्यक्षराणि सुखं प्रगीयन्ते। तस्माद्युक्तमन्यार्थत्वम्। अतः प्रगीतयोपस्थातव्यमिति स्थितम्।

**एवं वा**

**कःपुनः गीत्युपायैः सह स्वराणां विशेषः? उत्तरं—अयमस्ति विशेषः स्वराणां विनियोगशेषत्वम् ।** मन्त्रो विनियुज्यमानः सस्वर एव विनियुज्यते जपे न्यूङ्खे च स्वरनियमदर्शनात्। येनैव हि स्वरेण मन्त्राः पठिताः तेनैव स्वरेण जपे न्यूङ्खे च प्रयुज्यन्ते। अन्यथाहि नियमो न स्यात्। न्यूङ्खशब्देन च निरन्तरपठिताः षडोङ्कारा उच्यन्ते। यज्ञकर्मणि जपन्यूङ्खयोरैकश्रुत्यं नास्ति यज्ञकर्मण्यजपन्यूङ्खसामस्विति पर्युदासात्।

केन पुनर्विशेषेण जपन्यूङ्खयोरुपादानं ये[न]तान्यपि मन्त्रस्वरविशेषेण पठ्यन्ते तेषामपि तर्हि स्वरविशेषेणैव प्रयोगः स्यात्। अन्यथा स्वरानर्थक्यादिति तत्राह—येषां तु नानेनैव प्रयोगः तेषामुदात्तादयोऽर्थनिश्चयार्थैव। तानो यज्ञकर्मणि इति जपन्यूङ्खातिरेकिणां येषामैकश्रुत्येन विनियोगः। तान ऐकश्रुत्यम्। तेषामुदात्तादयोऽर्थनिश्चयार्थैव स्वाध्यायकाले। एतच्च न [1]पूर्वपक्षवादिना उक्तम् किन्तु सुहृद्भावेन ग्रन्थकारेण।

**ननु विनियोगे सति सुतरां नात्र पूर्वपक्षाशङ्का ऐकैकश्येन विनियोगावगमात् समुच्चयाशङ्का मन्दैव।** परिहरति—न चात्रा[ना]शङ्का। किन्त्वाशङ्कैव कार्येऽभिधानलक्षणे स्वराणां अवश्यं व्यापारदर्शनात्। अभिधानमात्रात् वर्णविशेषेणावधानसिद्धेः। तेनादृष्टार्थतया समुच्चय एव युक्तः। **स्वरतोऽप्यर्थनिर्णयमभियुक्ता वर्णयन्तीति[2] राद्धान्तः।** अस्यार्थः—यद्यप्यनभियुक्ता लोकाः स्वरविशेषेणार्थविशेषं नावधारयन्ति, तथापि पणिनिप्रभृतयोऽभियुक्ताः स्वरविशेषेणार्थविशेषं वर्णयन्त्येव। अर्थविशेषे स्वरविशेषानुशासनात् "पदेऽपदेशे" "निवाते वातत्राणे" इत्यादौ। (पा. सू ६-२-७, ८)

**॥ ८ ॥ सामप्रदेशे विकारस्तदपेक्षः स्यात् शास्त्रकृतत्वात् ॥ ३२ ॥**

अत्रेदानीं चिन्त्यते—किं गीतिवत् गीत्युपाया अक्षराभिव्यक्त्यर्था उत गीतिनिष्पत्त्यर्था एवेति। तत्र यदि गीतिनिष्पत्त्यर्थास्तदा यथायोन्युत्तरयोरपि प्रयोगः। तत्र यदि गीतिनिष्पत्त्यर्था गीत्युपायाः तदा यस्मिन् गीतिभागे विष्पादकत्वेन आईभावः कृतो योनौ उत्तरायामपि तस्मिन्नेव भागे प्रयोक्तव्य इति यथायोन्युत्तरयोः गीत्युपायानां प्रयोगः। अथाक्षराभिव्यक्त्यर्था गीत्युपायाः तदा यथाभिव्यङ्ग्यं प्रयोगः योनौ वृद्धं तालव्यं आईभावेनाभिव्यक्तमित्युत्तरयोरपि तदेवाभिव्यज्यते न यथायोनि प्रयोगः।

एतदुक्तं भवति—किं गीतिभागवशेन गीत्युपायानां प्रयोग उत वर्णवशेनेति। तत्र पूर्वपक्षवादी गीत्युत्पत्त्यर्था उपाया इति मन्यते। कुतः? गीतेर्ह्यक्षराभिव्यक्तिः

---

1. R. पूर्वपक्षकालेनोक्तम्
2. उपदिशन्तीति।

प्रयोजनं नोपायानाम्। एतदेव कुत इत्यत्राह—**यद्यक्षराभिव्यक्त्यर्था एवोपाया भवेयुः केनेदानीं गीतिर्निष्पाद्यते अनिष्पन्नायाश्च गीतेः अक्षराभिव्यक्त्यर्थतैव हीयते।** तेनोपाया गीतिनिष्पत्त्यर्थाः, गीतिरक्षराभिव्यक्त्यर्था। अतो गीत्यर्था एवोपाया इति युक्तम्। तेन गीतिभागवशेन प्रयोगः।

**अत्राभिधीयते—यद्युपाया अक्षराभिव्यक्त्यर्था न भवन्ति तदा गीतेरक्षराभिव्यक्त्यर्थतैव न प्राप्नोति।** कुत इत्यत्राह—**न ह्यक्षराश्रिता उपाया न सन्ति। यद्यक्षराश्रिता उपाया न भवेयुः तदा[किं]गीतिनिष्पादिताक्षराण्यभिव्यञ्ज्यात्।** आईभावादयस्तु अक्षराश्रिताः। तत्र यद्येते अभिव्यक्त्यर्था न भवन्ति तदाऽपरोऽभिव्यञ्जको भविष्यति।

**ननु यद्युपाया अक्षराभिव्यक्त्यर्थाः तदा गीतेरनुत्पत्तिः प्राप्नोतीत्युक्तम्।** परिहरति—**इयमेवोत्पत्तिरस्य यदुताक्षराणां अभिव्यक्तिः स्वराणां** चानेकोपायसमाहारात्मिका गीतिः सोपायैरनवयवभूतैर्निष्पाद्यते। अतोऽत्र दृष्टेऽर्थे सम्भवति नादृष्टार्थकल्पना न्याय्येत्यक्षराभिव्यक्तिरेवोपायैः। दर्शिता चाक्षराभिव्यक्त्यर्थता आईभावेन। तालव्यमेवाईभावेन निष्कृष्याभिव्यज्यते इत्यन्येष्वपि भागविकारेषु अनेकधाऽक्षराभिव्यक्त्यर्थता। **कथं तर्हि लोपागमस्तोभादिषु।** लोपो हि अनुच्चारणात्मकः स कथमक्षराभिव्यक्त्यर्थः। तथा आगमस्तोभावप्यक्षरान्तरानुप्रवेशात्मकत्वात् अक्षराणामनभिव्यञ्जकौ। उत्तरं—**तत्राप्यभिधानात्मतैवादृष्टार्थैतैव दृष्टार्थत्वे न विशेषः।** अस्यार्थः—यद्यपि लोपादयो नाभिव्यञ्जकाः तथाप्यक्षराभिव्यक्त्यर्था एव अक्षराभिव्यञ्जिकाया गीतेः विशेषापादकत्वात्। **स च** तदाहितो विशेषो गीतेरदृष्टार्थः। तदाह—**तेषामप्यभिधानव्यक्तावेवादृष्टार्थत्वं कल्पयितव्यम् स्विष्टकृदादीनामिव द्रव्यदेवतागतम्।** तस्माद्वर्णवशेन गानं कर्तव्यम्, न भाग[1] वशेनेति सिद्धम्।

**॥ ९ ॥ स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥**

ननु स्तोभस्य लक्षणमुक्त्वा स्तोभप्रदेशाप्रदेशचिन्ता युक्तेत्यत्राह—**इदानीं स्तोभश्चिन्त्यते—प्रदिश्यन्ते नेति। अस्या एव चिन्ताया लक्षणसङ्गत-**

---

1. A. गीनिवशेन.

त्वात् । यद्योन्यां तदुत्तरयोर्गायतीत्यनेन वचनेन योनिसाध्यस्तुतिकार्ये उत्तरयोर्विनियोगः । तच्च स्तुत्याख्यं कार्यं सामसाध्यमिति कार्येण सामप्रदेशः ऊहात्मकस्तद्विशेषश्च स्तोभप्रदेशो इति स्तोभप्रसङ्गेन । स्तोभशब्देन यदुच्यते तदुपरिष्टाद्वक्ष्यामः ।

तत्र पूर्वः पक्षः— गीतिशब्देन स्तोभानामनभिधानात् ऋगक्षरैश्च सह स्तुतावसम्बन्धात् कार्यार्थत्वाच्चातिदेशवाक्यस्य न प्रदेशः स्तोभानामिति । यद्योन्यां तदुत्तरयोरिति यदिदं अतिदेशवाक्यं तत्कार्यार्थम् । योनिकार्यं स्तुत्याख्यमुत्तराभ्यामपि कर्तव्यमिति । तत्कार्यं योन्यापि गीतियुक्तया कृतमित्युत्तरयोरपि तत्सिद्धये गीतिराक्षिप्यते । तत्र यदि स्तोभा गीतिशब्दाभिधेया भवेयुः तदा स्तुतिसाधनत्वेनोपदेशात् स्तुतिसिद्ध्यर्थमाक्षिप्येरन्, यदि वा स्तोभैः विना ऋगक्षराणि न स्तुतिं कुर्युः; न चैतदुभयमस्तीति न प्रदेशःस्तोभानाम् ।

अत्रोच्यते—गीत्यतिदेशादेव स्तोभानामप्यतिदेशः स्वराणामिव । यथा स्वराणां गीत्यतिदेशे गीति[1]बाह्यानामतिदेशस्तथा स्तोभानामपि । ननु च स्तुत्यर्थत्वानभिधानान्निष्प्रयोजनता स्तोभातिदेशस्य । स्वराणां त्वर्थप्रतीतावुपयोगात् सप्रयोजन एवातिदेशः । उत्तरं—सत्यमभिधाने निष्प्रयोजनता गीतिनिष्पत्तिरेव प्रयोजनं स्तोभानां तेनाभिधाने नास्ति प्रयोजनम् ।

ननु चाक्षराभिव्यक्तिरेव गीतिरित्युक्तम् । अभिधानार्थं चाक्षराण्यभिव्यज्यन्ते । न च तैः स्तुत्यभिधानं साध्यत इत्युक्तम् । तस्मात् निष्प्रयोजना गीतिरपि न निष्पाद्या । अस्यार्थः-स्तोभा न स्तुतिं साधयन्ति किन्तु ऋगक्षराण्येव । गीतिश्चाक्षराभिव्यक्तिरूपा स्तुतौ विनियुक्ता । तत्र यान्यक्षराणि स्तुतिं कुर्वन्ति तद्द्वारेण तस्याः स्तुतिसाधनत्वम् । साच गीतिः ऋगक्षरैः व्यञ्जैः सम्पादितेति स्तोभसम्पाद्यो गीतिभागः निष्प्रयोजनो नैवोत्तरयोः कर्तव्यः। उच्यते । सत्यमेवं यदि तावदभिधानाक्षराभिव्यक्त्यैव साम्नो गुणभावः यद्यर्थाभिधानाक्षराभिव्यक्त्यात्मकस्यैव साम्नो गुणभावःस्यात् तदा गीतिभागस्य स्यान्निष्प्रयोजनता, किन्तु स्वाध्याय एव संस्कारकर्मता साम्नो विज्ञाता । भवत्वेवं तथापि किमित्याह—अतस्तथाभूतस्यैव कर्मणि विनियुक्तस्य साम्नः

1. R बाच्याना

संस्क्रियमाणद्वारेणैव कार्यं लब्ध(मपि)मिति कर्मण्यपि नादृष्टकल्पना। यावति पुनर्भागे दृष्टं न सम्भवति तस्य तस्मिन्नेवादृष्टोपकारः कल्पयितव्यः स्विष्टकृदादीनामिव द्रव्यदेवतागत इत्युक्तम्। तस्माद(त)दृष्टार्थत्वात् कार्याभावान्न गीत्यंशावलोपः शक्यते वक्तुम्। अनवलुप्ते च गीत्यंशे तन्निष्पादकतया स्तोभानामपि प्रदेशो युक्तः।

ननु यावतैव भागेन कार्यनिष्पत्तिः तावत एव प्रदेशो युक्त इत्यत्राह— **प्रदेशोत्तरकालं हि कार्यं, साम्नि च प्रदिष्टे सति यावतो भागस्य दृष्टं कार्यं नास्ति तावतोऽदृष्टं कल्प्यते।**

ननु स्तुतिकार्याक्षेपेण सामप्रदेश इति यावत एव भागस्य स्तुतिकार्यता[1] तावत एवाक्षेपो युक्त इत्यत्राह— **प्रकृत्यर्थ एवायं प्रदेशो न कृतकार्यस्य प्रकृतौ विकृतौ।** अस्यार्थः—यत्रैव कर्मणि सामोपदिष्टं तस्मिन्नेवायं कार्येणाक्षेपः। तत्र यत्साम तस्यैवाक्षेपो युक्तः तथाभूतस्यैवोपदिष्टत्वादिति ततः स्तोभनिवृत्त्यभावात् स्तोभनिर्वृत्त्यर्थसामभागस्याप्यतिदेशे च कार्यकल्पनेत्यत उपादानं स्तोभाक्षराणां सामपदार्थसिद्ध्यर्थं न शक्यं वारयितुम्। तस्मात् स्तोभप्रदेशसिद्धिः। शेषमुक्तम्।

## ॥ ११ ॥ अधिकं च विवर्णं च जैमिनिः स्तोभ-शब्दत्वात् ॥ ३९ ॥

स्तोभप्रदेशप्रसङ्गेनेदं लक्षणमुच्यते अधिकं च विवर्णं च जैमिनिरिति। तेनासङ्गतिर्नास्ति। उभयोपादानप्रयोजनं भाष्योक्तमनुभाषते—**भवति किञ्चिदधिकं**—न विवर्णं यथाश्वाद्रिरिति। तस्य स्तोभता माभूदिति विवर्णग्रहणम्। भवति किञ्चित् विवर्णं नाभ्यधिकं, यथा ओग्राई इति तन्निवृत्त्यर्थमधिकग्रहणम्। इदमाक्षिपाति— **ननु चर्गक्षरेभ्योऽधिकं अधिकमित्युक्तम्। नचाभ्यासस्य ऋगक्षरेभ्योऽधिकतास्तीति।** तेनात्रिकमित्येतावत्यपि कृतेऽभ्यासस्य स्तोभत्वाप्रसक्तेः तन्निवृत्त्यर्थत्वाभावात् विवर्णता कोपयुज्यते? अधिकत्वादेव हि तत् लभ्यते [2]यावद्विवर्णग्रहणेन साध्यम्। अथ विवर्णग्रहणस्य ह्यभ्यासस्य स्तोभत्वं माभूदिति प्रयोजनम्। तच्चाधिकग्रहणादेव लभ्यते अभ्यासस्य ऋगनधिकत्वात्।

---

1. R स्तुतिकारिता
2. R यद्विवर्णग्रहणं साध्यं

नतु भवत्यधिकं श्वाद्रिःश्वाद्रिरिति। नैतदधिकम्। न ह्यभ्यासादक्षराधिक्यं भवति। तेनाधिकस्य स्तोभत्वमित्येतावत्यप्युक्ते न;स्त्यभ्यासस्य स्तोभत्वप्रसक्तिः। समाधत्ते–एवं तर्ह्यभिधानाधिक्यमात्रमभिप्रेतं नाक्षराधिक्यम्। अभ्यासरहित-स्याभिधायकत्वात् (अस्यापि चाभिधानाधिक्यमस्ति) अभ्यासस्यानभिधानानुप्रवेशात्।

ननु किमित्यभिधानाधिक्यमेवाश्रीयत इत्यत्राह— युक्तं चैदेवं यदभिधा नाधिक्यमिति गृह्यते। कस्माद्युक्तमित्याह—अभिधानादेवाधिक्यं शक्यते वक्तुम् नाभिधाननिरपेक्षादक्षराणां परिगणनात्। न हि स्वरूपेणाधिक्यमवगन्तुं शक्यते। अभिधानवशेन तु अभिधानानुपयोगिनोऽधिकत्वमिति शक्यावगमम्।

ननु छन्दस्तोऽप्याधिक्यं विज्ञायत एव। सत्यमेवं, छन्दःपरिज्ञान-नमप्यभिधानादृते न शक्यते विज्ञातुम्। अर्थावच्छेदेन हि वर्णान् गृहीत्वा छन्दःपरिज्ञानं शक्यते कर्तुं नान्यथा। तेनाभिधानव्यतिरेकेण आधिक्यज्ञानं नास्ति अभिधानाधिकमेवाधिकम्। तस्मात् सुष्ठूच्यते यदभिधानाक्षरेभ्योऽधिकवर्णास्ते स्तोभा इति। एवं चोच्यमानेऽभ्यासस्यापि स्तोभत्वप्रसक्तिरस्तीति तन्निवृत्त्यर्थं विवर्णग्रहणम्।

॥ १२ ॥ धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

ननु चेदं स्थितं कार्यापत्त्या धर्मलाभ इति। तेन पूर्वपक्षाभावादनार-भ्यमिदमधिकरणम्। परिहरति—बाढम्। आक्षेप्ता पृच्छति—किमर्थं तर्हीदमधिकरणमारभ्यते? उत्तरं—कार्यापत्तिरेव नीवारादीनामस्ति नास्तीति चिन्त्यते। ननु कथं पुनरत्र कार्यापत्तावेव संशयः। उत्तरं—नैवारश्चरु-रिति श्रूयते न पुनः व्रीहीणां [1]स्थाने नीवारा इति। पुनराक्षिपति —यदि व्रीहीणां स्थाने नीवारा न भवन्ति कथं पुनरन्यथा नैवारश्चरुर्भवतीति। यथा व्रीहीणां तण्डलनिर्वृत्त्यर्थता तथा नीवाराणामपि तण्डुलनिष्पत्तिद्वारेणैव नीवाराणां चरुर्भवति। समाधत्ते—अर्थात्तर्हीदमापद्यते न पुनः कार्ये विधिस्सम्भवति नान्यथा नीवारसम्बन्धश्चरोर्भवति इत्यर्थात् व्रीहिकार्ये पातो नीवाराणां[2] न पुनःसाक्षा-

1. R अन्यथा—

2. R कार्ये आपत्तिः

च्छब्देनैव तत्कार्ये विधानं यथा परिधौ पशुं नियुञ्जन्तीति । राद्धान्तसम्मत्या वैधर्म्यदृष्टान्तोऽयम् । न चार्थप्राप्तं तत्कार्यमिति शक्यते वक्तुम् । अन्येनापि प्रकारेण चरोर्नीवारसम्बन्धसम्भवात् नीवारक्रीतव्रीहिसाध्यत्वेपि हि तत्सम्बन्धसम्भवात् । यथा पणसहस्रक्रीतहेमनिर्मिते कटके सम्भवन्ति वक्तारः पणसहस्रस्यायं कटक इति । तस्मात् कार्यापत्त्यसम्भवान्न तद्धर्मा भवितुमर्हन्तीति पूर्वपक्षवादिनो ऽभिप्रायः ।

ननु मध्वशनघृताशने षडहाङ्गमेव न षडहनिवृत्तौ विधीयेते कथमियं चिन्ता ? यदि षडहप्रवृत्तौ तयोर्विधानं स्यात् तदाऽत्र युक्तेयं चिन्ता किं षडहकार्ये विधिर्नेति तयोस्तु षडहा[न]ङ्गत्वेन कथमियं चिन्ता । परिहरति—**किमनयाऽस्माकं निर्णीतया लक्ष्याविषयया चिन्तया ।** लक्षणान्वाख्यानं त्वत्रैव षडहनिवृत्तौ तयोर्विधानमिति कृत्वा चिन्त्यते तेन नास्ति दोषः ।

**कथं पुनरत्र मध्वशनघृताशनयोः पूर्वपक्षः** यावता षडहनिवृत्तौ तयोर्विधानमिति कृत्वा यद्येषा चिन्ता तदा तत्कार्य एव विधानं प्रतिभाति । उत्तरं—**संस्थिते षडहे निवृत्ते षडहे मध्वशनं घृताशनं चेति श्रूयते । नतु तत्कार्य इत्येवम् ।** नखावपूतानामित्यार्थं तुषकणविमोकं कार्ये नखानां मन्यते । नचार्थात्तदेव कार्यमिति शक्यते वक्तुम् । अन्येनापि प्रकारेण नखानामवपूते व्यापारसम्भवात् नखैर्गृहीत्वोलूखलेऽवहन्तुं निक्षेपात् । परिधौ पशुं नियुञ्जन्तीत्यत्र कथं पूर्वःपक्ष ? साक्षाद्यूपकार्ये विधानात् । उत्तरं—**अत्रापि यन्नियोजनं यूपे तत्परिधौ कर्तव्यमित्यश्रवणं मन्यते ।** नियोजनान्तरमेवेदं कस्मान्न भवतीत्यर्थः । ऐरं कृत्वोद्गेयमिति न गिरापदकार्यमुखेनेति श्रुतिरस्ति इति अक्षरान्तरस्थाननिपातेनाप्युद्गानसम्बन्धसंम्भवान्न पारिशेष्यादपि गिरापदस्थाने निपातः शक्यतेऽवगन्तुमिति पूर्वपक्षः ।

**राद्धान्तस्तु नैवारश्चरुरिति नैवारसम्बन्धे तद्धित उपपद्यतेऽन्यत्र प्रकृतिविकृतिभावात् ।** अस्यार्थः—वैकृतोऽयमुपदेशः स चरुस्थाने नियतः क्लृप्तकार्याश्रयः[1] । क्लृप्तं च प्रकृतौ व्रीहिकार्यमिति न पुनरिदं(परं)कार्यान्तरं, तेन तत्रैवायं नीवाराणां विधिरिति प्रकृतिविकारलक्षण एवायं नीवाराणां चरोश्च सम्बन्धस्तद्धितेनोच्यते । तस्मात् व्रीहिकार्यापत्तिर्नीवाराणां तदापत्तौ च तद्धर्मप्राप्तिः । तथा

---

1. कार्यापेक्षः

मध्वशनघृताशने न[1] नैमित्तिकतया संस्थानस्य सम्भवतोऽन्यत्राधिकारान्वयात् । यावदधिकारान्वयिता षडहसंस्थानस्य सम्भवति तावन्नैव निमित्ततोपपत्तिरधिकारिविशेषणस्यैव निमित्तत्वसम्भवात् । अधिकारश्चेह षडह(हा)करणवतः सत्रिणः तदारब्धकार्यान्तरेपि । विनियोगान्तरे [न]विषयभेदभिन्नषडहकार्यापत्तिरधिकारनियोगलक्षण एव कार्यापत्तिः । ततश्च प्रयोजनशून्यानां धर्माणां परमापूर्वप्रयुक्तानां प्राप्तिः । एवं नखावपूतेपि कार्यापत्तिः? कुत इत्याह—**अवपूतता च फलेन सह सम्बन्धः उपपद्यतेऽन्यत्र क्रियाकरणात्** । तस्मादत्रापि कृष्णकार्याश्रितत्वात् वैकृतानामुपदेशानां नखानामपि तुषकणविमोक एव सम्बन्धहेतुरिति कार्यापत्तिः । परिधौ पशुं नियुञ्जन्तीति नियोजनस्याविधानात् किमन्यदतो यूपकार्यादवगम्यते । यदि नियोजनं विधीयेत तदा न स्यादपि कार्यापत्तिः । न चेह नियोजनं विधीयते प्रकृतितः प्राप्तत्वात् । ततश्च यूपकार्यापत्तिरिति तद्धर्मप्राप्तिः ।

**एवं न गिरागिरेत्यनेनैकवाक्यत्वात् गिरणस्य चासम्भवात् न गिरापदकार्यादृते द्वयमुपपद्यत इति कार्यापत्तिः ।** अस्यार्थः—न गिरेत्यनेन सह ऐरं कृत्वेत्यस्यैकवाक्यत्वं प्रतीयते । तच्चैवमुपपद्यते यदि गिरापदकार्य एवेरापदं विधीयते तदा हि कृतकार्यतया गिरापदनिवृत्तिः । सा प्राप्ता सती अनूद्यते अन्यथा सापि विधेयैव स्यादिति वाक्यभेदप्रसङ्गः । तेनैकवाक्यत्वबलेन गिरापदकार्य एवेरापदं कथं नाम प्रतीयतामित्येवमर्थमेव न गिरागिरेति ब्रूयादित्युच्यते । न च शक्यमात्मगिरणलक्षणदोषोऽभिधीयत इति, असम्भवात् । यदि आत्मशब्देन शरीरमेवात्मसम्बन्धाल्लक्षणयोच्यते, यदि वा आत्मैव श्रुत्या उभयथापि गिरणासम्भवात् । तस्मात् गिरापदकार्य एवेरापदस्य विधाने द्वयमिदमेकस्मिन् वाक्ये उपपद्यते । न गिरा गिरेति ब्रूयात् ऐरं कृत्वोद्गायमिति कार्यापत्तेस्तद्धर्मलाभः ।

**॥ १३ ॥ तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ४१ ॥**

परिधौ पुनराक्षेपः अन्यार्थस्य सतः यत्कार्यान्तरकरणं न तत् धर्मप्राप्तौ हेतुः । यद्यपि यूपकार्ये परिधेर्विधानं तथापि विनियुक्तविनियोगविरोधात् परिधेर्नियोजनं प्रति अङ्गभावो नास्ति, नापि नियोजनद्वारेण पशुयागापूर्वं प्रति ।

---

1. R omits न

ननु [1]पुरोडाशकपालन्यायेन किमिति अधिष्ठानलक्षणया विनियुक्तावस्था-परिहारेणाङ्गत्वेनैवाभिधानं नाश्रीयते। अथ श्रुत्यनुग्रहाय कारकतामात्रेण विधानं पुरोडाशकपालेऽपि किमिति न स्यात्।

अत्र प्राभाकरप्रवराः प्र(त्या)चक्षते - परिधौ पशुं नियुञ्जन्तीति विकृताविदं विधानं नाश्रीयते। अथ श्रुत्यनुग्रहाय कृते च कार्ये वैकृतो विधिः। कृप्तं पूर्वसम्ब-न्ध्येव नियोजनं कार्यमिति तत्रैव तथाभूते साधनत्वमात्रेणापि परिधेर्विधानमुपपद्यते। तथाभूते हि तस्मिन् साधनता परिधे[2]र्न प्रमाणान्तरेण समधिगम्यते इति तत्र वचनं भवति प्रमाणम्। अपूर्वस्य च प्रयुक्तिः तेन कारकत्वमात्रेणैव अपूर्वसम्बन्धि-नियोजने परिधेर्विधानं(साधन)विशेषणविशिष्टतया च नियोजनस्य वाक्येनैव प्रतिपाद्य-त्वात् विशेषणविशेष्यभावेन गुणप्रधानभावमाश्रित्यैकवाक्यतोपपत्तिः। अधिष्ठान-लक्षणादोषेणाङ्गत्वेन विधानं नाश्रीयते। पुरोडाशकपालविधानं तु प्रकृताविति न क्लृप्तकार्याश्रयोऽसौ व्यपदेशः, किन्तु पदार्थापेक्षः तत्र पुरोडाशकपालो यद्यपूर्वं प्रति प्रथममेवैदमर्थ्येनान्वयं न यायात् तदा पदार्थस्वरूपमात्रसम्बन्ध्येव स्यात्। तथा च वाक्यस्याप्रामाण्यं प्रयुक्त्यभावश्च। न च तस्यैदमर्थ्यं तदीयैदमर्थ्यमन्तरेण प्रमातुं शक्यते। न च लक्षणामन्तरेणार्थान्तरं प्रत्यैदमर्थ्येन विनियोगो घटत इति बलादधिष्ठानलक्षणा आश्रीयते। तत्र तेन सिद्धं साधनमात्रेण विधानं अनङ्गत्वं च परिधेः। यच्च तदनङ्गस्य सतः कार्यकरणत्वं न तत् धर्मप्रयुक्तौ हेतुर्भवतीति परिधौ पुनराक्षेपः।

**कस्मात्? उत्तरं—ऐदमर्थ्यनिबन्धनं हि धर्मजातं** प्रकृतावुपलब्धम् य एव हि नियोगं प्रत्यैदमर्थ्यापन्नः तस्यैव धर्मसम्बन्धः प्रकृतौ दृष्ट इति विकृतावपि तथैव भवितव्यम्। **तेन नाङ्गे यूपकार्यापन्नेऽपि धर्मसम्बन्धानुपपत्तिः।**

राद्धान्तच्छायया चोदयति - **ननु चैदमर्थ्यमत्र कार्यार्थं नैदमर्थ्यार्थं**— अस्यार्थः - प्रकृतावैदमर्थ्यं विना कार्यकारितैव नावगम्यत इति ऐदमर्थ्यं धर्मसम्बन्धं प्रत्याश्रितम्। न पुनरैदमर्थ्यमेव धर्मसम्बन्धनिमित्तम्। इह च कार्यकारितां विनापि ऐदमर्थ्यमवगम्यत इति किमैदमर्थ्येन। परिहरति—**सत्यमेवं तथापि नैदमर्थ्यमन्त-रेण कार्यसंस्पर्शिनो धर्मा भवितुमर्हन्ति इति नियोगविभागान्नैदमर्थ्यापन्ने**

---

1. पुरोडाशकपालेन तुषानुपवपतीतिवत्　　2. R omits न

**धर्मा भवेयुः** तदा यं प्रत्यनैदमर्थ्यं तस्य(वि)नियोगान्तरार्थत्वात् **नियोजनैदमर्थ्यं विना पशुनियोजनलक्षणकार्यसंस्पर्शिनो धर्मा न भवेयुः नियोगैक्यनिबन्धनश्च धर्मनियम इति सिद्धम् ।** अस्यार्थः—यदि धर्माणां प्रधानानां च एक एव नियोगः साध्यो भवेत् तदा धर्मनियमो भवति । अन्यथा हि अनियोगार्थत्वे धर्माणामनियमः स्यात् । नियोगार्थान्हि धर्मान्नियोगः प्रयुङ्क्ते । यदि च नियोगसंस्पर्शिनो धर्मा न भवेयुः तदा तेषामनियोगार्थत्वे प्रयुक्त्यभावः प्रसज्येत । यत एव नियोगसंस्पर्शिनां धर्माणां प्रयुक्तिनियमः अनियोगार्थानां चाप्रयुक्तिः अत एव परिधिधर्मविरुद्धानां यूपधर्माणां तक्षणादीनामनवकाशः । इतरथा विरोधिनो यूपधर्माः पशुयागेन किमिति न प्रयुज्यन्ते प्रयुक्तौ विशेषाभावादित्यनेनाभिप्रायेणाह—**अन्यथा हि कोऽयं विरोधो नाम यूपधर्माणामननुष्ठानहेतुः । कथं वा परिध्यैदमर्थ्यस्य बलीयस्त्वं येन यूपधर्माणां बाधः परिधर्मैः ।** परिध्यर्थाः परिधेर्धर्माः । यूपधर्मास्तु परिधौ क्रियमाणा अपि न परिध्यैदमर्थ्यापन्ना इति परिधिधर्माणां बलीयस्त्वम् तच्चोभयेषामपि स्वनियोगप्रयुक्तत्वे सति नोपपद्यते । एवं च सति यूपायाज्यमानायेत्यत्रोहो न भवति इति भाष्यानुभाषणं आक्षेप्तुम् ।

**ननु चेदमयुक्तम् ।** कथमित्याह—**ऊहः प्रतिपाद्यते राद्धान्तिना । तदभावश्च पूर्वपक्षिणो युक्तिरिति ।** समाधत्ते—**अन्याय्य ऊहो न भवतीति** [1]**परिहारः । कथमन्याय्यत्वं ।** उत्तरं—**साधनभावेन हि अभिधानं मन्त्राणां प्रतिपादितम् । न च परिधौ नियोजनसाधनताऽस्तीति परिहृतमन्याय्यमभिधानमिति अयुक्तम् ।** अस्यार्थः—राद्धान्तिना तूहमिच्छता धर्मोहवत् मन्त्रोहोऽपि वदितव्यः । तत्र यूपायाज्यमानायेति परिधौ मन्त्रे प्रयुज्यमाने यूपाभावात् यूपशब्दस्तावन्न प्रयोज्यः । यदि परं परिधिशब्दः स च प्रयोक्तुमनुचितः परिधिशब्देन नियोजनसाधनभूतस्यानभिधानात् । साधनभूतश्चार्थो मन्त्रेणाभिधीयते । तदेतद्दूषणं परिधौ यूपधर्माणामनूहे परिहृतं भवति ।

**एवं प्राप्तेऽभिधीयते—अत्राप्यूहेन भवितव्यम् नियोगैक्ये, नियोगैक्यं हि भवति सम्बन्धहेतुः । उपदेशेन पुनः कार्यप्रयुक्ततां वारयति नियोगभेदः ।** अस्यार्थः - उपदेशेन हि धर्माणां नियोगैक्यं शेषिणो नियोगैदमर्थ्यसिद्धौ

---

1. R अभिप्रायः

हेतुः । अतदर्थतापन्ने हि धर्माः सम्बध्यमानाः न नियोगैदमर्थ्यं लभन्ते, नियोगैदमर्थ्यापन्नेषु सम्बध्यमानास्तु लभन्ते । कार्यतस्तु धर्माणां प्राप्तौ नियोगैदमर्थ्यं तावत् प्रमितम् । प्रमिते तु तस्मिन्ननुष्ठानाय केवलमाश्रयापेक्षा साध्यं चाश्रयो धर्माणामिति कार्यप्रयुक्तता न शक्यते वारयितुम् । तत्कार्यता च परिधेरुपपादिता । तस्मान्न धर्माः कर्तव्यतया शक्या वारयितुम् ।

इदं चाधिकरणं यूपकार्यप्रयुक्ता यूपधर्मा न यूपोत्पत्त्यर्था इति कृत्वा चिन्तितम् । यत्त्वनभिधानो(नाय)मन्त्रः इति तत्रोच्यते । कार्यप्रयुक्तत्वे सति साधनान्तरस्याविवक्षितत्वात् तथैवाभिधानमिति नोहो विरुध्यते,[1] तथैवाभिधानसिद्धेः परिधानसाधनस्याविवक्षितत्वात् नियोजनसाधनस्य विवक्षितत्वात् यूपशब्देन तस्याभिधातुं शक्तेः नोहः कर्तव्यः । यदि पशुनियोगो यूपधर्मान् प्रयुङ्क्ते कथं तर्हि सत्त्ववक्तृवादीनामनुग्रहः? उत्तरं—तथाभूतस्य परिधि[2]भूतस्य यूपकार्य उपदेशात् न स्वरूपविघाते तत्कार्यसमर्थमिति तदविरोधिधर्मावेश इति युक्तम् ।

॥ १४ ॥ परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥

इह पुनः कार्यचोदनापि नास्तीति[3] पूर्वपक्षवादी परिधिनान्यत्वं मत्वा धर्मा न भवन्तीत्याह । एतदेव विवृणोति—तत्र हि परिधौ पशुं नियुञ्जन्तीत्यत्र परिधेःकार्यं चोदितम् । इह पुनः न दधनि चरुश्चोद्यते किं तर्हि उभयं दधितण्डुले प्रदात्रे । अतो न केवलमैदमर्थ्यमेव नास्ति अपि तु कार्यमपि न चोद्यत इति वैषम्यम् परिधानात् । अत्रोच्यते । कार्यं हि धर्माणां प्रयोजकं न चोदना, तदेव हि कार्यं क्वचित् चोदनात् यथा परिधौ पशुं नियुञ्जीतेति । क्वचिदैदमर्थ्याद्यथा प्रकरणाधीतेषु मन्त्रेषु लिङ्गविनियोज्येषु शेषिणामैदमर्थ्यं, क्वचिदर्थाद्यथाऽत्रैवेति न कश्चित् कार्यकारित्वे विशेषः । कार्यतश्चात्र प्राप्तिरुदिता नाभिधानविनियोगाभ्यामिति कार्येऽभिधानविनियोगाभ्यां धर्माश्रयस्य न धर्मसम्बन्धः. किन्तु कार्ययोगमात्रेणेति नात्र प्रणीताधर्मप्राप्तिरवैदिकीति शक्यते वक्तुम् । तस्मात् कर्तव्याः प्रणीताधर्माः दधिपयसोः ।

1. R युज्यते
2. R परिधिरूपस्य
3. R नाप्यस्तीति

## ॥ १५ ॥ एकार्थत्वादविभागः स्यात् ॥ ४६ ॥

स्थितं कार्यप्रयुक्ता धर्मा इति। बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीत्यत्र कार्यभेदोऽस्ति नास्तीति विचार्यते। तत्र पूर्वपक्षवादी पृष्ठशब्दवाच्यं द्वयोरप्येककार्यं मन्वान उभयत्रोभयविहितधर्मावेशं मन्यते व्रीहियवयोरिव। यथा व्रीहियवयोरेककार्यकत्वात् कार्यप्रयुक्तत्वाच्च धर्माणां एकत्रापि श्रुता धर्मा उभयत्र भवन्ति तथा अत्रापि पृष्ठशब्दवाच्यस्य द्वयोर्बृहद्रथन्तरयोरेकत्वात् तत्प्रयुक्तैर्धर्मैः एकैकत्र श्रुतैः उभयत्र भवितव्यम्।

**राद्धान्तस्तु उपदेशे तावच्छब्दभेदो विद्यते बृहद्रथन्तरमिति।** धर्मोपदेशे बृहद्रन्तरशब्दोपादानात् शब्दभेदस्तावदस्ति। शब्दभेदाच्च व्यवस्थाऽवसीयते धर्माणाम्। **कार्यमेकमिति चेत्।** परिहरति—**दृश्यते च कार्यभेदः अन्यथा कवतीषु स्तुतिर्गम्यते अन्यथा बृहद्दक्षु।** गुणाभिधानलक्षणा स्तुतिः सा कवतीष्वन्येन प्रकारेण। अन्येन बृहद्दक्षु। तेन व्यापारभेदस्तावदवगम्यते। **पृष्ठशब्दाभिधेयत्वमेकमिति चेत्।** परिहरति—**नाभिधानतो धर्मप्राप्तिरित्युक्तम्।** तेनाभिधानैक्येपि न धर्मव्यतिकरः। किं तर्हि? कार्यत एव धर्मप्राप्तिः कार्यतश्चोभयभेद उपलभ्यते बृहद्रथन्तरयोरित्युक्तम्। कर्षणछेदनयोरिव पर्वविभागफलयोः। न च फलतो धर्मा भवन्तीति नीवारादिषु दर्शितम्। किन्तु कार्यतः। तस्मात सर्वकार्यभेदे सम्भवति बृहद्रथन्तरयोः लक्षणा अयुक्ता। अतो व्यवस्थयैव धर्माः कर्तव्याः व्रीहियवयोः पुरोडाशनिष्पत्तौ न कार्यभेद उपपद्यते उभयोः पुरोडाशनिर्वर्तकत्वात् **अन्यथा यवमयः पुरोडाशोऽन्यथा व्रीहिमय इति तत्रापि कार्यभेद इति चेत्।** उत्तरं—**न स्वभावप्रयुक्ता धर्माः किन्तु कार्यप्रयुक्ता इत्युक्तम्।** स्वभावश्चात्र भिद्यते न निष्पत्तौ व्यापारः व्यापारप्रयुक्ता धर्माः अभिधानव्यापारान्यत्वं च बृहद्रथन्तरयोः प्रदर्शितम्। अन्यथा कवतीषु स्तुतिः अन्यथा बृहद्दक्ष्विति। अतो व्रीहियवाभ्यां वैषम्यं बृहद्रथन्तरयोः।

## ॥ १६ ॥ अप्राकृते तद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥

**सामान्तरसाधने विकृतिषु पृष्ठे चिन्ता। किमेकस्य धर्माः कार्येण कर्तव्या उतोभयधर्मा इति।** किं विकल्पेन धर्माः कर्तव्याः उत समुच्चयेनेति सन्देहः। **अत्र पूर्वपक्षवादी प्रकृतौ कार्यभेदात् इहापि तद्वदिति न प्राप्तिभेदं**

**मन्वानः कार्येणेच्छति ।** अस्यार्थः—प्रकृतौ कार्यभेदात् भेदेन प्राप्तिं मन्वानः पूर्वपक्षी इहापि कार्येण प्राप्तिं तद्वति नेच्छति । अन्यथा तद्वद्भाव एव न स्यात् ।

**राद्धान्तस्तु—तद्वति कार्यं प्राप्यते नोपायाः ।** अस्यार्थः—प्रकृतिवद्विकृतिरप्युपकारवती न पुनः पदार्थवती उपकारसादृश्यं ह्येतत् तद्वदिति । न पदार्थसादृश्यमिति । एतद्दशमाद्ये दर्शितम् । भवत्वेवं तथापि कथं समावेशो धर्माणामित्यत आह—**उपायतश्च प्रकृतौ कार्यान्यत्वमवगतम् ।** ऋग्भेदात् प्रकृतौ स्तुतिव्यापारलक्षणकार्यभेदोऽवगतः । न चेहोपायभेदोऽस्ति उपायान्तरविधानात् । स्तुतौ सामान्तरविधानेन प्राकृतर्ङ्निवृत्तेः ऋगन्तरापेक्षत्वात् तस्य चैकत्वात् । तस्मान्न कार्यान्यत्वं शक्यतेऽवगन्तुम् । अनन्यत्वे च कार्यप्रयुक्ताः केन वार्यन्ते नख इवोलूखलमुसलधर्माः अन्यत्र विरोधात् । यदि परं विरोधादेव धर्माणामकरणम् । अतोऽविरुद्धानां समावेश इति स्थितम् ।

**॥ १७ ॥ उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥**

**अत्रापि कण्वरथन्तरवत् उभयमुभयत्र योज्यत इति पूर्वपक्षवादी मन्यते ।** एतदुक्तं भवति—**यत् प्रकृतावुपायद्वयं विज्ञातं तस्य कार्ये इहोपायद्वयं विधीयते ।** एतदेव विवृणोति—**बृहत्कार्ये बृहद्रथन्तरे, रथन्तर कार्येपि बृहद्रथन्तरे । तस्मात् समावेशो धर्माणाम् ।**

**राद्धान्तस्तु उपायसमावेशः प्रत्यभिज्ञानात् ।** अस्यार्थः-यौ तौ व्यापारौ स्तुतिं प्रति बृहद्रथन्तरयोरवगतौ तावेवेह समाविष्टौ प्रत्यभिज्ञायेते । तेनोपाययोरेव समावेशो न कार्ययोः । न च समावेशप्रयुक्ता धर्माः किं तर्हि कार्यप्रयुक्ता इत्युक्तम् । तेन कार्यभेदात् यथायथमेव धर्मैर्व्यवस्थितैर्भवितव्यम् । तदिदमुक्तं भाष्ये "साम्नापि दृष्टमदृष्टं वा क्रियत" इति । **उपायार्थसमाप्तिर्दृष्टकार्यं** स्तुतिर्व्यापारविशेषलक्षणा उपायार्थसमाप्तिर्दृष्टं कार्यम् । समावेशतः किमप्यदृष्टम् । न च प्राकृते कार्यसम्बन्धेऽवगम्यमाने कार्यान्तरसम्बन्धो धर्माणामुपपद्यत इति व्यवस्थैव न्याय्या ।

**॥ १८ ॥ पार्वणहोमयोस्त्वप्रवृत्तिस्समुदायार्थसंयोगात् तदभीज्या हि ॥ ५१ ॥**

अत्र सूत्रे प्रवृत्तिशब्दश्रवणाद्भ्रान्तश्चोदयति । **ननु चेयमतिदेशचिन्ता । कःप्रसङ्गोऽस्याः ?** । किमनेन निष्फलेनोक्तेन । बाधोऽयं नातिदेश इति मत्वाऽऽह **—अस्त्यत्र प्रसङ्गः कार्यप्रधानत्वादतिदेशानतिदेशयोः** । एतदेव विवृणोति— **यदि हि प्राकृतदेवतार्थता होमयोः तदा सौर्यादिष्वप्रवृत्तिः । अथारादुपकारकत्वं तदा प्रवृत्तिः** । अस्यार्थः - प्रकृतानि यानि कर्माण्याग्नेयादीनि देवताभूतानि पर्वशब्दाभिधेयानि तदर्थता तत्स्मरणार्थता पार्वणहोमयोः स्याद् तदा विकृतिषु अप्रवृत्तिः, अथारादुपकारकत्वं तदा प्रवृत्तिः प्रयाजादिवदिति कार्यनिबन्धने प्रवृत्त्यप्रवृत्ती विचार्येते इति तदर्थं होमयोः द्वारकार्यं चिन्त्यते—**किं देवतासंस्कारः कार्यं उत करणोपकार एव प्रयाजादिवदिति । इह चाध्याये द्वारकार्यचिन्तैव क्रियते तन्निबन्धनत्वादूहस्येत्यस्ति प्रसङ्गः** । कश्चित्तत्त्वविच्चोदयति **—नन्वेवं सति बाधचिन्तैवेयं प्राप्नोति कार्याभावान्निवृत्तिरिति । किमिति भवान् समाधाताऽनतिदेशमाह** । परिहरति—**सत्यमेवमेतत् तथापि कार्यस्वरूपमेवात्र निर्णीयतेऽर्थाद्बाध इत्यूहान्तः पातिन्येवेयं चिन्ता** । अनास्थया मया निर्बन्धो न कृत इति समाधाता दर्शयति—**सर्वथा कार्यचिन्तारूपत्वात् सङ्गतिः । अर्थाद्बाधो भवतु अनतिदेशो वा इति नास्माकमास्था ।**

अत्र केचिन्मीमांसकाः तन्त्रे स्वातन्त्र्यमिच्छन्तः स्वबुद्धिलाघवमनाकलयन्तः भङ्गमापादयांबभूवुः । ननु कर्मसंस्कारकत्वेपि होमयोः किमिति बाधो यावता देवतान्तरेपि पशुपुरोडाशवदूहेन पार्वणहोमौ कर्तव्यावेवेति ।

अत्र **प्रभाकरपादसेवानिरस्तसमस्तजाड्याः** समर्थनमाहुः—**कार्यप्रयुक्ता धर्मा इत्युक्तम् । यच्चाग्नेयादीनामवान्तरकार्यं परमापूर्वनिष्पत्तिं प्रति न तत् सौर्यादीनाम्** । अत एव च प्रकृतावाग्नेयादीनां नान्योन्यधर्मसङ्कर इति ।

अत्र पूर्वपक्षवादी कालवचनत्वेपि पर्वशब्दस्य कालयोगात् कर्मणि प्रयोग उपपद्यत इति कालवचनत्वं मन्यते ।

**राद्धान्तस्तु नियोगैक्यं न सिद्ध्यतीति समुदायवचनतैव न्याय्या । कर्मवचनत्वे हि पर्वशब्दस्य तत्संस्कारकत्वाद्धोमयोः तन्नियोगैक्यं सिद्ध्यति । इतरथा तु न सिद्धिः** । **नियोगैक्यं च गम्यते प्रकृतत्वात् । शक्यते च समुदायार्थत्वेपि कर्मवचनत्वेपि काले प्रयोगो वक्तुं कर्मयोगात्** । **यदि वा पर्वशब्दोऽयं यौगिकः पृणाते**

र्दानार्थत्वात् तत्र भावसाधनत्वे कर्मवचनता । अधिकरणसाधनत्वे कालवचनता । तत्र प्रकृतत्वात्कर्माणामिह कर्मण्येव पर्वशब्दः प्रयुक्त इति निश्चीयते । तदाह—**योगाद्वोभयत्र पर्वशब्दः । विध्यनुप्रवेशस्तु विशेषहेतुः ।**

ननु कर्मवचनत्वेपि किमित्यारादुपकारकत्वं न भवतीत्याह—**प्रकृतत्वाच्चारादुपकारकत्वनिराकृतिः ।** प्रकृतकर्मणां संस्कारार्हत्वात् आरादुपकारकत्वनिराकृतिः । **शेषमुक्तम् ।**

॥ १९ ॥ **उभयोरविशेषात्** ॥ ५७ ॥

**प्रसक्तानुप्रसक्तमिदं कार्यचिन्ताप्रसङ्गेन ।** पूर्वाधिकरणे होमयोः कर्मार्थत्वं प्रसक्तम् । तदनुप्रसक्तं चेदं भेदेन पार्वणहोमौ कर्तव्याविति ।

**कः पुनः पूर्वपक्षवादिनोऽभिप्रायः ?** उत्तरं—**प्रकृतार्थत्वे सति एकनियोगकत्वादुभयमुभयत्रेति मन्यते ।** उभयत्राधिकारनियोगैक्यात् तदर्थत्वाच्चोभयोः उभयत्रोभाभ्यां भवितव्यम् ।

**राद्धान्तस्तु व्यवस्थायामप्येकनियोगाविरोधात् न कार्यशून्यस्यानुष्ठानं युक्तम् ।** अमावास्यादेवताकस्य हि अमावास्यासंस्कारकत्वं पौर्णमासीदेवताकस्य तत्संस्कारकत्वम् । यत्रैव तत्संस्कार्यं तत्रैव संस्कारेणापि भवितव्यम् । नान्यत्र । तस्माद्व्यवस्थैव न्याय्या । न च दृष्टे सम्भवत्यदृष्टकल्पनैव न्याय्येति कार्यान्तरविरोधः । न ह्येकस्यैव क्वचिद्दृष्टार्थत्वं क्वचिददृष्टार्थत्वं युक्तं, येनामावास्यायां दृष्टार्थस्य होमस्य पौर्णमास्यामदृष्टार्थः प्रयोगः स्यात् । तथेतरस्यापीतरत्रेति ।

॥ २० ॥ **प्रयाजेऽपीति चेत्** ॥ ५८ ॥

**नामधेयाक्षेपमात्रमिदं प्रकृतप्रसङ्गेन ।** अस्यार्थः—यथा पार्वणहोमयोः प्रकृतदेवतार्थत्वे विकृतिष्वप्रवृत्तिः तथेह प्रकृतार्थत्वेपि नास्ति विकृतावपि कार्यसम्भवात् । तेन नामधेयमात्रमिहाक्षिप्यते प्रसङ्गेन प्रकृतत्वात् । यथा पार्वणहोमयोः कर्मदेवतार्थत्वं तथेहापि समिदादीनां देवतार्थत्वं संस्कार्यत्वं च ।

राद्धान्तस्तु इह न तथा कल्पनामर्हति समिदादीनां देवतार्थत्वे प्रमाणाभावात्। कर्मवचनत्वेपि द्वितीयाया उपपत्तेः मन्त्रवर्णस्यायथार्थत्वे प्रमाणाभावात्। तस्मादुपादेयैवात्र मान्त्रवर्णिकी देवतेति सिद्धमारादुपकारकत्वम्।

॥ इति श्रीमहामहोपाध्यायशालिकनाथमिश्रकृतौ ऋजुविमलायां
पञ्जिकायां नवमस्याध्यायस्य
द्वितीयः पादः

—: * :—

# नवमाध्याये तृतीयः पादः

॥ १ ॥ प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥

ननु च आकृत्यधिकरणे आकृतिः शब्दार्थ इति दर्शितम्। राद्धान्तितम्। तस्य चैतदेव प्रयोजनम्।

तज्जातिविशिष्टे संस्काराभिधानं यथा स्यादिति। संस्कारश्चाभिधान चतज्जातिविशिष्ट एव यथा स्यात्। व्यक्तिपक्षे हि साधनमात्रवचनता। प्रकृतौ विकृतौ च साधनभावाविशेषादनूहः तस्मादाकृतिवचनत्वस्यैतदेव प्रयोजनम्—किमत्र पूर्वपक्षेऽस्त्यधिकं क्रियते? व्रीहिशब्देन नीवाराणामभिधानाशक्तेः तच्छब्द एव प्रयोक्तव्यः।

ननु चैवं सति यदि व्रीहिशब्देनाव्रीहिजातीयस्याभिधानं नास्ति तेषामर्थेनेत्यत्रापि पूर्वपक्षो न युक्तः। यदि व्रीहिशब्देनाज्यसान्नाय्ययोरप्यभिधानं स्यात् तदा आज्यसान्नाय्ययोरपि औषधधर्मैर्भवितव्यमिति पूर्वपक्षः सम्भाव्येत। केवलम् व्रीहिजातीयाभिधाने तु न सम्भवतीति। परिहरति—अन्यदेव हि तत्र निराकृतं अन्यस्तत्र पूर्वः पक्षः। किं निराकृतमित्याह—धात्वर्थकर्मविवक्षायां प्रयोगाङ्गता न प्राप्नोतीत्याशङ्क्य तत्र निराकृतम्। विवक्षिते धात्वर्थस्यैव कर्मणि व्रीह्यादौ प्रयोजनत्वेन स्वीकृते अधिकारविध्यर्थता न स्यादवघातादीनाम्। अतो धात्वर्थकर्म न विवक्षितं किन्त्वारादुपकारकत्वमेवेत्याशङ्क्य तत्र निराकृतम्। इह पुनः न कार्यान्तरमुपलभामहे प्राकृतान्मन्त्रकार्यात्। प्रकृतौ हि हविः प्रकृतिद्रव्याभिधानं मन्त्रकार्यम्। इहापि तदेव, तच्चोहमन्तरेणाशक्यमित्यूहेन भाव्यम्। न चासमवेतार्थत्वं येन मन्त्रार्थस्य विवक्षितत्वेपि असमवेतार्थत्वमग्नि-व्रीहिशब्दयोर्गम्येत। तदपि नास्ति। यतः समवेतार्थत्वं अग्निव्रीहिशब्दयोः स्थितमेव। अतः वक्तव्यमत्र निराकरणीयम्।

तदिदमभिधीयते। सत्यमाकृतिवचनत्वं शब्दानां स्थितं, तथाप्यत्र साधनभावेनाभिधानात प्रकृतिविकृत्योश्चाविशिष्टत्वात तद्भाव७१

साधनभावस्य **नोहेन भवितव्यम्** । **शब्दार्थत्वेऽप्याकृतिस्तदवस्थैव भवति साधनत्वलक्षकत्वात्** । अस्यार्थः—प्रकृतावपि व्रीहिशब्देन न स्वरूपं प्रकाशितं, किं तर्हि साधनविशेषः स च विकृतावप्यविशिष्टः । अन्यथा हि ऊहोऽपि न स्यात् । ततश्च प्रकृतावप्याकृतेरप्रकाश्यत्वं साधनलक्षणोपलक्षणत्वात् । विकृतावपि न नीवारजातिः प्रकाश्येति नोहो युक्तः । ननूपलक्षणत्वेऽपि व्रीह्याकृतेर्विकृतौ तदभावादुपलक्षणत्वानुपपत्तेरुपलक्षणसमर्थनीवारादिजातिपर्युपस्थापनाय जात्यन्तरवचनमेव न्याय्यमिति वक्तव्यं, यज्जातीयं हि चोदितं तज्जातीयमेवोपलक्षणक्षमं व्रीहिजातिः नीवारव्यक्तिं न लक्षयितुं क्षमेत्यन्यत्प्रयोक्तव्यम् । न व्रीहिजातिवचनं प्रयोक्तव्यमिति ।

पूर्वपक्षी समाधत्ते—**अत्रोच्यते - स्यादेवं यदि नान्तरीयकस्य विवक्षा स्यात् स्वजात्यभिधानेनोपलक्षणीयं साधनमिति** । प्रकृताविदं नान्तरीयकं, प्रकृतौ हि तज्जातेश्चोदितत्वात् सन्निकृष्टमुपलक्षणमिति नान्तरीयकभावः । यदि पुनः जात्यन्तरचोदना स्यात् न तदोपलक्षणं नान्तरीयकतयापि स्यात् । प्रकृतौ हि व्रीहिजातीयं चोदितं व्रीहिभिर्यजेतेति । मन्त्रेऽपि तज्जातिवाचक एव व्रीहिशब्दः प्रयुक्त इति सन्निकृष्टजातिरुपलक्षणम् । यदि पुनः तत्राप्यन्यजातीयं चोदितं भवेत् मन्त्रे(वा)च अन्यजातिवाचकः शब्दः तदा न सन्निकृष्टस्योपलक्षणं भवेदिति । तदेवं सम्पन्नं सन्निकृष्टस्योपलक्षणत्वम् । न च तद्विवक्षितुं न्याय्यम् । तेन सन्निकृष्टस्योपलक्षणत्वसिद्धये न स्वजातिवाचकशब्दोहो युक्तः ।

**कथं तर्हि व्रीहिशब्देन नीवारजातीयस्याभिधानं ?** उत्तरं—**यथाकथंचित्** अभिधानकल्पना ऐन्द्रीवत् । तस्मान्नान्तरीयकमभिधानमविवक्षितम् । अतः प्राकृतयोरेव शब्दयोः प्रकृतौ प्रयोगदर्शनात् विकृतावप्यभिधानं कल्पनीयम् तयोः कार्यतः प्राप्तेः । शब्दान्तरस्य न पुनः कार्यतः(या)प्राप्तिः नापि प्रयोगत इत्यनूहं मन्यते । समवेतार्थत्वं पुनः उपोद्बलकमेवास्य पक्षस्य यस्मात्साधनं कर्मणि समवेतं व्यक्तेश्च साक्षात् साधनभाव इति लक्षणार्थैव जातिः तेन नान्तरीयकत्वाज्जातेः अविवक्षितत्वान्न नीवारशब्दः प्रयोक्तव्य इति ।

युक्त्यन्तरं चानूहे दर्शयति—**विनियोगेऽपि च शब्दानामेवोपदेशः** । अस्यार्थः - मन्त्रस्य विनियोगो वर्णपर्यवसायी वर्णातिरिक्तस्य तस्याभावात् यथैवासौ कार्यार्थत्वेऽपि प्रकृतौ न पीडितः एवं विकृतावप्यसौ न पीडनीय एवेति पूर्वः पक्षः ।

प्रकृतावपि कार्यार्थमेव मन्त्रः प्रयुज्यते। तत्र यथा स एव शब्दः प्रयुज्यते तथा विकृतावपि स एव प्रयोक्तव्यः अङ्गभूतत्वात्।

अत्रोच्यते—भवितव्यमूहेन। कस्मात्? कार्यान्तरे शक्त्यन्तर-कल्पनायामग्न्यादीनामैन्द्रीवन्न्यायो न विद्यते। कार्यान्तरे अभिधेयान्तरे शक्त्यन्तरकल्पनायां अग्न्यादिशब्दानां न्यायो नास्ति यथेन्द्रशब्दे। कथं न्यायो नास्ति? उत्तरं—प्रकृतावित्रात मन्त्रेणात्र साधनप्रकाशनं कर्तव्यमिपि प्राप्तम्। तदिदानीमभिधानान्तरकल्पनया, उत शक्त्यन्तरकल्पनयेति विचारणीयम्। तत्र शक्त्यन्तरकल्पना न न्याय्या क्लृप्तशक्तेः शब्दस्य, प्रयोगान्तरे पुनः शक्त्यन्तरकल्पना अग्न्यादिशब्दः क्लृप्तशक्तिः तस्य मन्त्रप्रयोगान्तरे पुनः शक्त्य-न्तरकल्पना न युक्ता। कुतः? तावन्मात्रस्याप्रयोगात्। यदि तावत् तावन्मात्रस्य प्रयोगो(न)भवेत् तदा बलाच्छक्त्यन्तरकल्पना स्यात्। न च तावन्मात्रस्य प्रयोगः किन्तु मन्त्रस्य। तथापि किमित्याह—मन्त्रस्य पुन-रभिधानान्तरप्रक्षेपेऽपि न किञ्चित् दृष्टादधिकं कल्पितं भवति। नाभिधा-नान्तरप्रक्षेपे हि किञ्चित कल्पितं भवति। शक्त्यन्तरकल्पनापक्षे तु स एव दोषः। तस्मात् गौरवाच्छक्त्यन्तरकल्पनापरिहारेण शब्दान्तरप्रक्षेप एव न्याय्यः।

ननु च मन्त्रत्वमेव हीयते। ऊहप्रवरनामधेयानाममन्त्रत्वमुक्तं यतः। परिहरति—न मन्त्रत्वं हीयते। निमित्ताभिप्रायं हि तदमन्त्रत्वं नाभिधानाभि-प्रायं प्रक्षेप्यस्य शब्दस्य तदमन्त्रत्वमुक्तं न पुनरभिधायकस्य वाक्यस्य अभिधायक-त्वमौत्पत्तिक इत्यत्रोक्तम्। क्लृप्तकार्यतया प्राप्तिः कार्यवशेन मन्त्रस्यार्थवत्त्वमेव युक्तं समुदायापन्नस्य प्रत्यभिज्ञायमानत्वात्। यत एव च निमित्तमात्रनाशे मन्त्रनाशो नास्ति अत एव च प्रतिनिधेरभावः सकलमन्त्रनाशे हि प्रतिनिधेः आत्मलाभो न निमित्त-मात्रविनाशे सकलमन्त्रविस्मृतेः न शक्यते तत्सदृशो ज्ञातुमिति। निमित्तमात्रविनाशे तु तत्त्वमेव मन्त्रस्य। तस्मात् अभिधानान्तरप्रक्षेपो न्याय्यः न शक्त्यन्तरकल्पना। कुतः? अभ्यासापेक्षत्वात् शक्त्यन्तरकल्पना अभ्यासापेक्षा। यदि हि अग्न्यादिपद-स्याभ्यासो(न) भवेत् मन्त्रान्तर्गतं तावत्प्रयुज्येत तथा केवलमिति। तथा केवलवचन-प्रयोगे शक्त्यन्तरकल्पना अवश्यं कर्तव्या। अन्यथाऽभिधानाशक्तेः। नचाचोदिता-भ्यासः कारयितुं शक्यते यत्र शब्दस्योपदेश इति। सत्यं, स तु कार्यार्थ इत्युक्तम्। कार्यतश्चात्र प्राप्तिर्नोपदेशतः। तस्माद्यथाकार्यमभिधानम् कार्यानतिक्रमेणाभिधानं

आश्रयणीयम्। कार्यतश्चात्र प्राप्तिः, कार्यं चात्र नीवारप्रकाशनम्। न च तच्छक्त्य-न्तरकल्पनया युक्तम्। अन्यथापि तत्सिद्धेरित्यूह एव न्याय्यः।

यत्पुनरिदं अन्तरागर्भिणीव्याख्यानं कृत्वा पुनराक्षेपोऽन्यथा च व्याख्यानं तत्र यद्याक्षेपणीय एवायमर्थः किमित्युपन्यस्तः। किमिति तत्परत्वेन सूत्रव्याख्यानं कृतम्।

उत्तरं—उपन्यस्तस्तावत् उपन्यसनीयत्वादेव न्याय्यत्वादेव। यदि न्याय्यः, आक्षेपस्तर्हि कस्मात्? उत्तरसूत्रासम्बन्धपरिहाराय। [1]उत्तरसूत्रमसम्बद्धं स्यादित्येतावता दोषेणाक्षेपः न पुनरन्याय्यतया। यद्यस्मिन् व्याख्याने उत्तरसूत्रसम्बन्धो न स्यात् असूत्रितं तर्हि पूर्वव्याख्यानम्। परिहरति—न चासूत्रितं अनेकार्थसूचनात् सूत्रस्य। तस्मात्कौशलप्रदर्शनमिदं आक्षेपद्वारेण सूत्रकारेण (स्य)क्रियते। सूत्रकारेणात्रैवाधिकरणान्तरमपि सूत्रितमित्येकेनैव सूत्रेणानेकार्थसूचनात् महत्कौशलं सूत्रकारस्य प्रदर्श्यते। शेषं सलिङ्गमुक्तम्।

॥ ३ ॥ लौकिके दोषसंयोगादपवृक्ते हि चोद्यते ॥ ९ ॥

प्रासङ्गिकमिदमधिकरणम्। यद्येकं यूपमित्यादि व्यवस्थार्थं वचनमिति पूर्वमुक्तम्। इदानीं प्रसङ्गेनेदमधिकरणमायातम्। तत्राविशेषात् यद्येकं यूपमुप-स्पृशेदिति अविशेषश्रवणात्। उभयार्थतां मन्यते पूर्वपक्षवादी। पुरुषार्थतां क्रत्वर्थतां च मन्यते। अस्ति त्वयं विशेषः लौकिकेऽधिकारान्तरकल्पना। [2]तस्मा-द्वैदिक एवास्तु इति पक्षान्तरम्।

राद्धान्तमाह—क्लृप्त एवात्राधिकारो दोषश्रवणात्। अर्थवादाभि-हितोऽपि दोषः पुरुषार्थत्वे आञ्जस्येनोपपद्यते। युक्त्यन्तरं चाह—इष्टशब्दसंयोगाच्च इष्टोत्तरकालस्पर्शविषयमेव प्रायश्चित्तं मन्यते। उच्छ्रयणादयश्च नेष्टोत्तरकालाः अपरामपि युक्तिमाह—अपरिहार्यत्वाच्चोच्छ्रयणादेर्न विनापीति शक्यते कल्प-यितुम्। अस्यार्थः—तस्माद्यूपो नोपस्पृश्य इति प्रतिषेधोऽयं पुरुषार्थ एवोपपद्यते।

---

1. A उत्तरसूत्रसम्बन्धो न स्यादि।
2. A अलौकिकवैदिके

क्रत्वर्थपक्षे विकल्पप्रसङ्गात् । न च विकल्पो युक्तः उच्छ्रयणादेः अपरिहार्यत्वात् । पुरुषार्थश्चेत् प्रतिषेधः तदतिक्रमप्रायश्चित्तमपि पुरुषार्थमेव । तस्माल्लौकिक एव स्पर्शनेऽयं मन्त्रः । **यत्तर्हीदमुक्तं प्रहरानेनेति पुनर्गण्य[पुनर्दण्ड]शब्दः संबध्यत इति तत्कथं ?** उत्तरं—**इत्थमेव यथा श्रूयते तथैवाभिप्रायः ।**

प्रष्टा विवृणेति—**ननु च स्योनं त इत्यत्रापि एकवाक्यतापरिहारः प्राप्नोति ।** परिहरति—**भवत्येव वाक्यार्थावगमे ।** अर्थप्रतीतिकाले तदपेक्षकत्वात् । प्रयोगे तु प्रयोगावस्थायां तु स मन्त्रान्त(त्य)[रम्] ।

**॥ ४ ॥ अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥**

द्वितीयतृतीयपक्षयोस्साम्यं मन्वानो भेदप्रदर्शनायाह—**पक्षचतुष्टयमत्रोपन्यस्तम् । आद्यस्त्वयं पक्षो, बहुवचनान्त एवाविकारेण प्रवर्ततां** एकवचनान्तो निवर्तत एव । द्वितीयस्तु बहुवचनान्तो निवर्तते एकवचनान्तः प्रवर्तते । स चोहितव्यः । तृतीयस्तूभयोरपि प्रवृत्तिः बहुवचनान्तस्याविकारः एकवचनान्तो विकृतः । चतुर्थस्तु उभयोरपि प्रवृत्तिः विकारश्चेति । **का युक्तिश्चतुष्टये ? उत्तरं—प्रथमस्य तावत् पक्षस्येयं युक्तिः विकृतावभिधानाकाङ्क्षायां** यद्यविकृतमपि अभिधानं न शक्नोत्यभिधातुं तदा धिकारनियोगो नियुङ्क्ते । सम्भवति त्वविकारेणैव बहुवचनान्तस्याभिधानं, प्रकृतौ पाशमात्रविवक्षया बहुवचनान्तस्य प्रयोगात् साधुदृष्टिः[ष्टम्] प्रकृतिवच्च द्विपाशकायामपि विकृतौ तेनैवाविकृतेनाभिधानं सम्भवति । एकवचनान्तस्तु एकसङ्ख्याकपाशाभिधायित्वात् विकृतावपि सङ्ख्याभिधानायोहितव्यः प्राप्नोति । न च तद्युक्त अविकृतेनैवाभिधानसिद्धेर्न विकारं प्रयुङ्क्ते ।

द्वितीयस्येयं युक्तिः तामाह—**ऊहवाद्याह**—अनूहवादिना नाप्राप्तिरेकवचनान्तस्य शक्यते वक्तुम् । पाशमात्रस्य विवक्षितत्वादिति त्वयैवोक्तम् । ततश्च प्रातिपदिकार्थ(म)स्य सम्भवात् भवितव्यमेकवचनान्तेन मन्त्रेण । न च तस्याविकृतस्य प्रयोगस्सम्भवति, अन्वितस्वार्थत्वात् । प्रकृतौ समवेतार्थत्वात् स चेदेकवचनान्तो विकृतः तदा सम्पन्नमन्विताभिधानम् । एतदेव विवृणोति—**समवेतप्रकाशनमिति हेतोः किमनन्विताभिधानेन ।** बहुवचनान्तेनेति वर्तते ।

तृतीये त्वियं युक्तिः । तामाह—**अयमभिप्रायः । त्वयैवोक्त पाशमात्रसमवायान्न शक्यते मन्त्रो** विनिवर्तयितुमिति तेन बहुवचनान्तेनापि मन्त्रेण भवितव्यम् । **ननु चानन्विताभिधानान्न तेन प्रयोजनमस्तीत्युक्तम् ।** परिहरति—**नान्विताभिधानन्यायप्राप्तिः** अन्वितार्थाभिधाय्ययमित्यनेन रूपेण न प्राप्तिर्येन तदभावादप्राप्तिः स्यात् ।

**कथं** तर्हि ? **समवेताभिधानेन प्राप्तिकमित्युक्तम् ।** तुल्यश्चायमर्थ-समवायः एकवचनान्तश्च बहुवचनान्तश्च मन्त्रः प्रतीयते । न प्राप्तिर्वारयितुं **शक्यते ।** अनन्वितस्य प्रकृताविवात्रापि साधुता भविष्यति । एकवचनान्तस्य पुनः **स्वार्थेनैकत्वेनान्वितो यः** समवेतः पाशः **तदभिधानात्तदधायकत्वात्** तथैवात्रापि **साधुत्वम**भिधाने साधुतेति हेतोर्नो(नू)हः ।

**राद्धान्तस्तु मन्त्रद्वयं विकृतं प्रयोक्तव्यम् । ननु चासमवेताभिधायि बहुवचनान्तमन्त्र** [इत्युक्तम्] । [तस्य कथं]साधुता भविष्यतीति भावः । परिहरति —**सत्यं शक्यत इह द्विपाशके कर्मणि नोक्तम् । ननु च प्रकृतिवत्कुर्यादिति इहापि तद्वदेव प्राप्नोति ।** प्रकृतौ विवक्षितं समवेतार्थं स्यात् । न चैतत्तत्र विवक्षितम् । कुत इत्याह—**सत्यं शक्यत इह द्विपाशके कर्मणि नोक्तम् । ननु च प्रकृतिवत्कुर्यादिति इहापि तद्वदेव प्राप्नोति ।** प्रकृतौ विवक्षितं समवेतार्थं स्यात् नचैतत्तत्र विवक्षितम् । कुत इत्याह— **तत्र हि पाशमन्त्रान्वयादेव पाशार्थो विवक्षितः वचनयोगस्तु प्रयोगसाधुतासम्पत्त्यर्थः । नाभिधाना-न्वयः । ( न च ) यदि च प्रयोगोऽयं साधुः तदा साधुत्वे सति अत्रापि केन प्रयोगो वार्यते ।** परिहरति – **नात्र शक्यते साधुतां वक्तुम् ।** कुत इत्याह—**साधुता हि प्रयोगाद्भवति । अप्रयुक्तेऽपि लक्षणाद्वा ।** तत्र प्रयोग-स्तावत् बहुवचनान्तस्य पाशयोर्नास्ति । (पेदिकं)[वचन]लक्षणापि छन्दसि विद्यते सुपां सुपो भवन्तीति । नचोहः च्छन्द इत्युक्तम् । तस्मादपभ्रंश एवात्र बहुवचनान्तः । तेन साधुत्वाय द्विवचनान्त ऊहितव्यः । अत्र पूर्वप्रयोगात् भिन्नलक्षणमुक्तमिति मत्वा चोदयति—**कथमप्रयुक्तस्य लक्षणमिति ।** अप्रत्यक्षप्रयोगस्येत्यभिप्रायः यस्यापि प्रकृतौ प्रत्यक्षेण प्रयोगो न दृश्यते तस्यापि लक्षणदर्शनात् साधुत्वमवगम्यत इत्यर्थः । **अतः प्रकृतौ प्रयुक्तस्य पाशद्वयमात्रे विवक्षिते मन्त्रार्थे किमिति वचनार्थ आद्रियते ।** उत्तरं—**साधुत्वायेति** ब्रूमः । विभक्तिं विना न केवलस्य

साधुत्वम् । तथापि किमित्याह—**असाधोः प्रतिषेधात्** । तथा गतार्थानामपि साधुत्वाय लौकिका वचनमाद्रियमाणा दृश्यन्ते देवदत्तयज्ञदत्ताभ्यामिदं कार्यं इदं कृतमित्येवमादिषु । तस्मात् सूक्तं विकृतयोरपि मन्त्रयोः प्रयोग इति ।

**॥ ५ ॥ विप्रतिपत्तौ विकल्पः स्यात् समत्वात् गुणे त्वन्याय्य-कल्पनैकदेशत्वात् ॥ १ ॥**

**पाशमन्त्रद्वयमुदाहरणम्** । अनेन पाशमन्त्रसमाख्यामुत्कर्षोपयोगिनीमाह । **ननु चोदकप्राप्तं बहुवचनान्तपाशमन्त्रमाश्रित्य विचारः कृतः । ननु प्रकृतावननुप्रविष्टस्य कथं चोदकतः प्राप्तिः** । अतः कथं पुनरुत्कर्षाशङ्केत्यत्राह—**अर्थाच्चेदमधिकरणं** आधस्त्यात् पूर्वं द्रष्टव्यम् । एतदधिकरणसिद्धमेवानुप्रवेशं गृहीत्वा सा चिन्तेत्यभिप्रायः । साक्षादसङ्गतत्वाच्च पूर्वमियं चिन्ता न कृता । इदानीं पूर्वाधिकरणप्रसङ्गेन सङ्गतिः । **अत्र पूर्वपक्षवादी सकलवाक्यान्वयाभावात् बहुवचनयुक्तस्य मन्त्रस्योत्कर्षं मन्यते** । अस्यार्थः - लिङ्गविनियोज्योऽयं मन्त्रः तेन यत्रैव पाशबहुत्वान्वितं पाशोन्मोचनं प्रकाश्यते तत्रैव पाशमन्त्रसमाख्यया लब्धसामान्यसम्बन्धो विनियुज्यते इति उत्कृष्यःतव बहुवचनान्तः । ननु पाशविमुक्त्यर्थत्वान्मन्त्रयोः बहुवचनविनियुक्तेपि तस्यार्थस्य सम्भवे नोत्कर्षो न्याय्यः । **पाशविमोकोऽयं मन्त्राभ्यां प्रकाश्यः । बहुवचनान्तेनापि मन्त्रेण शक्यत एवासौ प्रकाशयितुमिति कथमुत्कर्षः** । परिहरति—**सत्यं पाशविमोकार्थः स भवति बहुवचनत्यागेन तु** सःप्रकृतिगतेन । न चा (वाऽ)न्वितार्थस्य बहुवचनस्य त्यागे प्रमाणमस्ति । तस्माद्यत्र कर्मणि सहान्वयस्समवेतार्थोऽयं मन्त्रः तत्रानेन मन्त्रेण भवितव्यम् । अथाप्यवान्तरवाक्याश्रयणं स्यात् । न च महावाक्ये तदपाश्रयणमस्तीति हेतोरुत्कर्ष एव न्याय्यः ।

**एवं प्राप्तेऽभिधीयते—प्रातिपदिकाश्रितं ह्यत्र बहुत्वं प्रतीयते विभक्तितोऽवगमात् न यथा सङ्ख्याशब्दादिवत् स्वतन्त्रम्** । यथा सङ्ख्याशब्देन चतुरो मुष्टीन्निर्वपतीत्येवमादिषु प्रातिपदिकसम्बन्धनिरपेक्षा सङ्ख्या विधीयते न तथा विभक्ति[तः]प्रतीयते । विभक्ति[श्रुतयः]श्रुत्याऽभिहितं प्रातिपदिकाश्रितमेव स्वार्थमाहुः । **ततः किं ?** उत्तरं —**इदं ततो भवति** पाशार्थाश्रयि[यी] बहुत्वस्यान्वयः प्रतीयते । तथापि किमित्याह—**पाशार्थश्च विमोकसम्बन्धितया प्रतीय-**

**मानोऽनेन मन्त्रेण नाभिधीयत इति[न]शक्यते वक्तुम् । अभिधीयते चेत् सोऽर्थः तदा तदर्थत्वान्मन्त्रस्य तदभि(धायकत्वा)हितो मन्त्रार्थः यदि विनियोगापेक्षो मन्त्रार्थो भवेत् ।** यदि विनियोगानपेक्षो मन्त्रार्थः, प्रातिपदिकस्थलिङ्गस्य प्रथमोपनिपातात् प्राधान्यात् प्रातिपदिकार्थविषयस्य विभक्तिलिङ्गात् बलीयस्त्वात् एकस्मिन्नपि पाशे मन्त्रस्य विनियोगात् बहुवचनमविवक्षितार्थमन्त्रफलमिति निश्चीयते । विनियोगतश्च मन्त्रार्थावगम इत्युक्तम् । अन्यथाहि कार्यार्थिता मन्त्रस्य स्यात् । एवमेव यस्य कस्यचित् अनुवादः प्राप्नोति । ततश्च सापेक्षत्वप्रसङ्गादप्रामाण्यम् । विनियोगायत्ते तु मन्त्रार्थे यावत्येव विनियोगः तावदेव प्रकाश्यम् । अर्थान्तरस्योल्लापस्तु विषभक्षणवन्नान्तरीयकः इत्यनेन न्यायेन अविवक्षित एवेति नाप्रामाण्यम् । तेन विनियोगापन्नमेव मन्त्रार्थावधारणम् । यत एव प्रातिपदिकलिङ्गन्यायेनानुत्कर्षः **अत एव प्रकरणमभ्युच्चययुक्तितयोपन्यस्तं भाष्यकारेण ।** यदि मूलयुक्त्यन्तरं न स्यात् तदा प्रकरणमेव मूलयुक्तिर्भवेत् । न च तस्य मूलयुक्तित्वसम्भवः । श्रुतिलिङ्गवाक्येभ्यः अप्रबलत्वात्तस्य । वाक्यबलेनोत्कर्षो न्याय्यो यतः । कथं पुनः प्रकरणस्याभ्युच्चययुक्तिताप्यस्तीत्याह—**प्रत्यक्षे हि कर्तव्यतावचनसम्बन्धेऽधिकारविधिसम्बन्धे सम्भवति नाप्रत्यक्षेणाधिकारविधिना सम्बन्धो न्याय्य इत्यभिप्रायः ।**

उपसंहरति—**अत आश्रयवशादनुगुणविभक्त्यर्थः प्रतिपत्तव्यः** सङ्ख्याश्रयभूतैकपाशानुगुणो विभक्त्यर्थो विज्ञेयः । **स च कर्ममात्रप्रतिपत्तिपरो भवति ।** सहैकत्वेन एकसङ्ख्याया अविवक्षितत्वात् कर्ममात्रप्रतीतिपरो मन्त्रः । यदि वा सङ्ख्या विवक्षिता तेनैवैकत्वेन सह मन्त्रार्थः ।

**ननु सहपक्षेऽर्थान्तरवचनतापि कल्पिता भविष्यति बहुवचनस्यैकत्वमपि । बहुवचनस्य वाच्याभाव इति कल्पितम् ।** ततश्चैकार्थत्वप्रसङ्गो बहुवचनेऽपि सम्भवति । ततश्च स्वायत्तेपि प्रयोगे एकस्मिन् बहुवचनप्रसङ्गः । परिहरति—**न स्वायत्ते प्रयोगे प्रसङ्गः अनियोगे लोकतोऽवगमात् ।** एकत्वादिनियमेनैकवचनताद्यवगमात् । तस्मात् प्रयोगसाधुतैवात्रानभिधानसाधुत्वम् । कथं तर्हि एकत्वावगतिः तत्राह—**कर्ममात्रवचनत्वादपि एकत्वसिद्धेः** कर्ममात्रेऽवगते निरपेक्षतया एकत्वमवगम्यते । द्वित्वादिका हि सङ्ख्या अपेक्षाबुद्धिनिबन्धना । यत एकस्मिन् बहुवचनमवाचकम् अत एव च लक्षणकारा अपि एकस्मिन् बहुवचनमिति

यत्नान्तरमारभन्ते । अन्यथा हि स्वभावसिद्धत्वादवाच्यं स्यादिति । स्वभावसिद्धत्वान्न न वाच्यत्वम् । कथं तर्हि बहुषु वचनाप्राप्तौ एकस्मिन् बहुवचनमिति स्मरणं? प्राप्त्यर्थमेव । तस्मात् प्रयोगसाधुतैवेति अर्थे समन्वयाभावात् ।

॥ ६ ॥ अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ २० ॥

इह पुनरेकपत्नीके प्रयोगे स्वार्थसम्बन्धसम्भवान्न द्वयोर्बहुषु वा साधुता शक्यते वक्तुम् । पाशे ह्यनन्यगतितया तथात्वाश्रयणम् । इह तु गतिरस्तीति न प्रयोगसाधुत्वाश्रयणम् ।

ननु चात्रापि प्रयोगसाधुत्वाय भविष्यति । परिहरति—न एकस्मिन् स्वार्थसम्भवात् न [स्वार्थे] सम्भवति प्रयोगसाधुता । तस्मात् साधुत्वायैव द्वयोः बहुषु चोहः कर्तव्यः ।

अथ कस्मादेकपत्नीक एवास्य प्रयोगो न भवति । यथा व्रीहिपक्षे स्योनं ते इति मन्त्रः । ततश्चोक्तोहो न युक्तः । परिहरति—नैवमुपपद्यते सर्वत्र प्रातिपदिकार्थसम्भवात् पाशवत् सर्वत्रैव विनियोगः । तत्र हि यवेषु समवेतार्थतैव नास्ति । इह पुनः द्वयोः बहुषु च पत्नीप्रातिपदिकस्य समवेतत्वमस्ति इति न वचनान्तरानुरोधेन नियमश्शक्यते वक्तुम् । न च समवेतार्थसम्भवे प्रयोगसाधुता वचनस्येति ऊहेन भवितव्यम् । अत्राभिधीयते—न तावदेकवचनकार्ये द्वित्वं बहुत्वं वा श्रूयते नीवारवत् । यथा नीवारा व्रीहीणां कार्ये विधीयन्ते तथा एकत्वकार्ये द्वित्वं बहुत्वं वा न श्रूयते । ततः किम् । उत्तरं-इदं ततो भवति । तद्वत्समवेतार्थमिति न शक्यते वक्तुम् । यथा प्रकृतौ व्रीहिशब्दः समवेतार्थः तथैकवचनमपीति न शक्यते वक्तुं सर्वेषामेकद्वित्वबहुत्वानां समन्वितत्वात् । ननु च प्रयोगसाधुतापि न शक्यते वक्तुम् । परिहरति—न शक्यत एव वक्तुं प्रातिपदिकार्थमात्रस्य सन्नहनयोगात् द्वयोः बहुषु च समवेतार्थानवगमात् । अस्यार्थः—पत्नीप्रातिपदिकमात्रस्यापेक्षितसङ्ख्याविशेषस्य मन्त्रेण सन्नहनेन योगात् । द्वयोः पत्न्योः बहुषु वा एकत्वाभावात् एकवचनस्य समवेतार्थत्वानवगमात् । अविशेषेणैकस्मिन्नपि समन्वयश्शक्यते वक्तुम् ।

एकत्वप्रतिपत्त्यर्थमिदमेकवचनं न भवति द्वयोः बहुषु च तदभावात् । किन्तु सर्वस्यापि सव्यापारतया कर्मत्वसम्बन्धार्थमिति । अतः प्रयोगसाधुतैवात्रापि इति न

योप्रगविरोधः । **ननु चैकस्मिन् समन्वयो न शक्यते परिहर्तुम्** । परिहरति—**न शक्यं नाम प्रयोगविशेषात् द्वयोः बहुषु चार्थसमन्वयात् प्रयोगसाधुतैवेत्यदोषः** ।

**॥ ७ ॥ विकृतौ चापि तद्वचनात् ॥ २१ ॥**

**अत्र स्वायत्तं प्रयोगं मन्वानस्य पूर्वपक्षः** । यथा स्वायत्ते कर्मणि स्वायत्तः प्रयोग इति मत्वा द्विवचनमूहितव्यम् तथेहापि विकृतौ द्विपत्न्यामपि पत्नीशब्दे द्विचनस्योह एव युक्तः स्वायत्तत्वात्प्रयोगस्येति पूर्वः पक्षः ।

राद्धान्तस्तु प्रकृतिवत् साधुत्वसम्भवात् [न]स्वायत्ते प्रयोगे प्रमाणमस्तीति । यदि वैदिकेन प्रयोगेण कार्यं न सिद्ध्यति तत्र स्वायत्तः प्रयोग आश्रीयते । पत्नीशब्दश्चैकवचनान्तो द्वित्वे बहुत्वे च सिद्धप्रयोग इति न स्वायत्तप्रयोगावकाशः । पाशे तु द्वित्वे बहुवचनान्तस्य प्रयोगादर्शनादस्ति स्वायत्तप्रयोगावकाशः । यत्पुनः भाष्ये तथैव च नाविवक्षा तद्वचनेनेत्युक्तम् । तदयुक्तम् । पाशाधिकरणविरोधात् अविवक्षितेपि विभक्त्यर्थे यथार्थमेव विभक्तिः प्रयोक्तव्येति । तेनात्रापि द्विवचनबहुवचनयोरेव प्रयोगः प्राप्नोतीति परिहरति—**यत एवायं पक्षो दुष्टः अत एवाथवेत्युक्त्वा** पक्षान्तरमुक्तम् पूर्व[ा]परितोषेण । तद्व्याचष्टे—**तद्वदेव साधुत्वसम्भवात्** । यथा प्रकृतौ द्वित्वबहुत्वयोरपि प्रयोगात् एकवचनस्य साधुता पत्नीशब्दे तथा विकृतावप्यनूहः ।

**॥ ८ ॥ अध्रिगौ सवनीयेषु तद्वत् समानविधानाश्चेत् ॥ २२ ॥**

**समानविधानमिति कृत्वा चिन्तेयम्** । **अनेन विशेषेण तद्वदतिदेशोऽयं न विशेषान्तरं वक्तव्यम्** । समानविधानप्रयोजनमेतदित्यर्थः ।

**॥ ९ ॥ प्रतिनिधौ चाविकारात् ॥ २३ ॥**

**प्रतिनिधौ व्रीहिकार्यापत्तेः मुख्ये च व्रीहिशब्दस्य समवेतार्थत्वात् ऊहं मन्यते पूर्वपक्षवादी** । यदि प्रतिनिधिः व्रीहयश्च स्वातन्त्र्येणोपदिष्टा भवेयुः तदा मन्त्रो न भवेदेव । व्रीहिकार्यापन्नश्च प्रतिनिधिः व्रीहिशब्दश्च समवेतार्थ इति युक्त एवोहः ।

**राद्धान्तस्तु न व्रीहिकार्ये नीवारा उपदिश्यन्ते । किन्तु व्रीह्युपदेशोप-**पत्त्यर्थं किञ्चिद्विकलं व्रीह्युद्देशं सम्पादयन् नीवाराणामुपादानम् । न चोपदेशोपपत्तौ कार्यापत्तिः तस्या एवेति तदभिधान एव भवितुमर्हतीति । तस्मात् प्रतिनिधावपि व्रीहय एवेतीह व्रीहिशब्देनैवाभिधानं युक्तम् ।

सम्यञ्चमर्थं बुद्ध्या चोदिति (?) तदेवेदमुत्पतितम् । यदि प्रतिपाद्यमप्रतिपादितं निराकृतं च । **अध्यासिततद्भावोऽध्यारोपिततद्भावो वा गौणार्थ इति ।** अध्यासो भेदाग्रहणम् । अध्यारोपो विपरीतख्यातिः । उभयं चैतदयुक्तं भेदेन नीवाराणामवगतेरित्युक्तम् ।

स्वाभिप्रायं राद्धान्ती विवृणोति—**नायं दोषः भूयोऽवयवसामान्येनैव व्रीहीणामेवोपपादनं शक्तितः कृतमिति** तदभिधानमेव व्रीहिशब्देन क्रियत इति [न]शब्दान्तरापत्तिः । अवयवपर्यन्तत्वादाकृतेः साधनभावस्य । व्रीह्यभावेऽविकलावयवोपसंहाराभावेपि कतिपयव्रीह्यवयवस्वीकाराय प्रतिनिधेरुपादानमिति व्रीहितयोपात्तानां व्रीहिशब्देनैवाभिधानं युक्तम् । न चाध्यारोपाध्यासौ, तत्प्रत्ययादवयवान्तरप्रतीतेः । यदि तथैवावयवो(पायोः)पादानं किमिति तस्मिन्नीवारोपादानमिति तत्राह—**तद्व्यतिरिक्तस्य व्रीह्यवयवव्यतिरिक्तस्यात्रोपादानं** नान्तरीयकम् । **तैर्विना** व्रीहीणामेवोपादानाशक्तेः इत्यदोषः । तस्मान्नायमूहस्य विषयः तत्स्थानापत्त्यभावादिति ।

अत्र पूर्वपक्षवादी ब्रूते—व्रीह्युपचारेऽवश्यं (अ)मुख्ये कर्मणि द्रव्यान्तरोपादानेऽवश्यंभाविनि सादृश्येन तद्द्रव्योपादित्सानियम इति । राद्धान्ती तु उपदेशेनैव केवलं सम्पादयितुं सदृशमुपादीयत इति ।

**॥ १० ॥ संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥**

अत्र भाष्यकारेणैवमुक्तम्—"ननु प्रकृतावप्यन्यायनिगद एवायम् । द्वयोश्चक्षुषोरेकवचनान्तो यतः तेनोहो न युक्त" इति तदाक्षिपति—**येयं समवेतार्थपरिचोदना नैवासावनूहायालम् । कथं ?—**उत्तरं—**द्वयोरेकवचनं दृष्टं द्विपशुकेषु कर्मसु अधिष्ठानबहुत्वे असाधुतैव प्राप्नोति पाशानितिवत् ।** द्वयोः पाशयोः पाशानित्यसाधु एकस्मिन् दर्शनात् । तथाऽत्र द्वयोर्दर्शनादेकववचनस्य बहुष्वसाधुता । **तस्मान्निष्प्रयोजनैवेयं परिचोदना ।** समाधत्ते—**अयमभिप्राय-**

**श्चोदकस्य । समवेतत्वे पुनरूहः कथं स्यादिति ।** अस्यार्थः—चोदकस्यायमाशयः—अधिष्ठानभेदेनासमवेतार्थत्वं मया चोदितं, समवेतार्थसिद्धये पूर्वपक्षवादी तेजस एकत्वं नासमवेतार्थत्वमिति परिहारं वक्ष्यति । तथापि द्विपशुष्वपि तेजस एकत्वात् समवेतार्थत्वेपि अनूहो भवेदिति । एवं चोदनां समर्थ्य परिहारभाष्यं व्याचष्टे—**तदिदमयुक्तम् । यद्भवता चोदितमन्यायनिगदोऽयमिति संसर्गित्वात्तेजसः सत्यप्यधिष्ठानभेदे तत्समवेतार्थत्वं मन्यते ।**

परिहृते चोदकः स्वाभिप्रायमाह—**अयमभिप्रायः—एषामनयोरिति वा कृते मन्त्रे असाधुता न शक्यते वक्तुं पाशानितिवत् इति ।** वैधर्म्यदृष्टान्तोऽयम् । यथा पाशानित्यसाधुता द्वयोः तथात्रासाधुता नास्ति एकवचनान्तस्यापि मन्त्रस्येति चोदना । अत्र पूर्ववादी सम्बन्धिभेदात् पशुभेदात्तेजसो भेदं मन्वानः ऊहं वदति । तेजोद्वये तेजोबहुत्वे च एकवचनान्तस्यासाधुत्वादूहो युक्तः तेजोभेदश्च पशुभेदात् । एवं पूर्वपक्षिते राद्धान्तच्छायया परिचोदयति—**अधिष्ठानतो वा किमिति भेदो न विवक्षितः** यदि सम्बन्धिभेदाद्भेदः तदा अधिष्ठानभेदादपि भेदः स्यात् । ततश्च प्रकृतावपि कथमेकवचनम् । अन्यस्य भेदेप्यन्यस्य भेदो नास्तीत्यष्ठानभेदो न विवक्षितः । ततश्च पशुभेदादपि भेदो न विवक्षणीय इति परिहारभाष्यं व्याचष्टे—**अनुपादानाधिष्ठानयोरिति परिहृतम् । अस्येति पुनः पशोः रुपादानमस्तीति ।** अस्यार्थः—अधिष्ठाननिबन्धनो भेदो नाश्रीयते तदवच्छेदेन तेजसोऽनभिधानात् अस्येत्यन्येन तु शब्देन पशोरुपादानात् पश्ववच्छेदेन तेजसोऽभिधानात् तन्निबन्धनो युक्त एव भेदो विवक्षितुम् । तस्मादूहः ।

राद्धान्तस्तु न शब्दाभेदादूहो युक्तः । चक्षुश्शब्दस्य योऽर्थस्तेजोलक्षणतस्याभेदादेकत्वादूहो न युक्तः । भवतु सम्बन्धिनः पशोर्भेदः तथापि न शब्दान्तरार्थस्य चक्षुरादेः भेदो युक्तः । **शब्दान्तरार्थस्य पशोर्भेदे यदि तेजसो नास्ति[भेदः] कथं तस्मिन् चक्षुः** [पदप्रयोगः] उत्तरं—**अधिष्ठानभेदे लक्षणयैव ।** भिन्नेऽस्मिन्नधिष्ठानत्वमेव विवक्षित्वा लोक एवं प्रयुङ्क्ते । चक्षुश्शब्दस्याधिष्ठानपरत्वात् तत्र तदभिधित्सावगमात् । इह पुनः सूर्यमस्य चक्षुर्गमयतादिति नाधिष्ठानाभिधित्साऽवगम्यते प्रकृतिगामित्वादधिष्ठानकमेव हि तद्वचनम् । नाधिष्ठानस्य सूर्यप्रकृतिता. किन्तु तेजस इति तत्पुन[त्पर]श्चक्षुश्शब्द इत्यनूहः । **लिङ्गमुक्तम् ।**

**॥ ११ ॥ एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् ॥ २९ ॥**

इदानीं चिन्त्यते—किं यथा प्रकृतौ मन्त्रार्थो वर्णितः तथैव विकृतावपि उत प्रकारान्तरेणापि समवेतार्थान्वयोपपत्तेः वर्णनीय इति। तत्र [यदि]तथैव विकृतावपि तदा एकधास्य त्वचमाच्छ्यतादिति प्रकृतौ सकृत्त्वाभिधानात् विकृतावपि तदेव कर्तव्यं इत्यभ्यासः स्यात् एकधैकधा इति। अन्यथापि यदि मन्त्रार्थवर्णना ततः सहायार्थ-तयाऽनूह इति। तत्र पूर्वपक्षवादी विनियोगान्तर[वत्] प्रयोगान्तरेपि मन्त्रस्यार्थान्तरं न दोषायेति मन्वानः प्रकारान्तरेणाप्यनूहमुक्तवान्। **ननु च प्रकृतिवदित्यस्यार्थान्तरकल्पनायां प्रमाणं नास्ति** [शक्त्यै] वोपपत्तेः उपदेशान्तरे तु पूर्वस्यानुपपत्तिकारणमर्थान्तरवर्णनेन अन्यत्राप्यनूहो [भविता] तथाऽनूह एव स्यादिति। परिहरति—**कोऽयमनूहो नाम अर्थान्तरवर्णनहेतुः ?** उत्तरं—**आर्षानुग्रहः।** पुनः पृच्छति—**अर्षो नाम कः ?** उत्तरं—**स्वाध्यायकाले यत्स्वरूपम्।** राद्धान्त्याह—**अनुगृहीतं स्वरूपं प्रकृतौ विकृतौ च गौणं नास्ति कार्यतस्तु तत्प्राप्त्यवगमात् यथाकार्यमेव वर्णनं न्याय्यम्।** क्लृप्तं च सकृत्त्वप्रतिपादनं प्रकृतौ कार्यमिति विकृतावपि तत्सिद्ध्यर्थं ऊह एव युक्तः। उपदेशे तु स्वरूपत एव प्राप्तिरिति तदनुरूपं कार्यम्। भवतु कार्यतः प्राप्तिः तथापि किमित्याह—**कार्ये चार्थान्तरक्लृप्तौ प्रमाणं नास्ति प्रकृतिक्लृप्त्यैवोपपत्तेः।** तस्मादूह एवात्र न्याय्य इति न्यायविदो मन्यन्ते नार्थान्तरानुग्रहम्।

**॥ १२ ॥ मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात् ॥ ३२ ॥**

अत्रोभयस्य स्वामिदेवतस्य निमित्तत्वोपपत्तेः पदार्थत्वे उभयं स्वामिदेवतं मन्त्रार्थ इति मन्वानः पूर्वपक्षवादी प्रकृतावेव बहुषु द्विवचनैक[वचन]दर्शनात् विकृतावपि प्रयोगसम्भवादनूहं मन्यते। **ननु चैकेनैव पदार्थेन मेधपतिशब्दस्य निमित्तभावस्य चरितार्थत्वात् कथं द्व्यर्थता मन्त्रस्य ?** यमेव हि पदार्थं उपस्थापयति मेधपतिशब्दः स एवैको मन्त्रार्थो युक्तः कथं द्व्यर्थता मन्त्रस्य गृह्यमाणविशेषत्वात्। **द्वयमपि मेधपतिशब्देनोपस्थाप्यते** द्विष्ठान्यपि वाक्यानि भवन्तीत्यभिप्रायः। पक्षान्तरं तु सत्यं द्वयमुपन्यस्तम्। यदि न गृह्यते विशेषः तत्रोभयस्य निमित्तत्वं भवद्भवेत्। गृह्यते तु विशेषः। स्वामिपरत्वे द्विवचनैकवचनयोरुपपत्त्याऽर्थौ भवतः। स्वामिन्येकवचनस्य दम्पत्योर्द्विवचनस्योपपत्तेः। न देवतापरत्वे, एकत्वाद्देवतायाः। तस्मात् स्वामिपरोऽयं मन्त्रः तदनुसारेण चोहितव्यः। देवता-

परत्वं तु राद्धान्ती मन्यते। एवं प्रातिपदिकार्थो न भूतपूर्ववृत्त्या व्याख्यातो भवति। स्वामिनो हि तद्देयं प्रत्यायितम्। न च भूतपूर्वः सम्बन्धः[युक्तः]। न च भवत्यर्थे भूतपूर्वाश्रयणं युक्तम्। यत्पुनरिदं गणाभिप्रायमेकवचनं वर्णितं गणस्यैव देवतात्वमिति सारितं एकवचनान्तस्यानुत्कर्षार्थं तत् पाशबहुवचनन्यायेनानुत्कर्षहेतौ सम्भवति एकस्य हेतोः केन हेतुना अयं सम्भवति। अभिधानसाधुत्वे प्रयोगसाधुतैवा· श्रयितुं न युक्तम् इति। पाशमन्त्रे हि बहुवचनस्य प्रयोगे साधुता अभिधानसाधुत्वा[त्]सम्भवति। अगतिका गतिः। तेनाभिधानसाधुत्वप्रदर्शनात् गणाभिप्रायमेकवचनं वर्णितं, किं प्रयोजनमित्याह—**ऊहे च विशेषोपपत्तिः प्रयोगसाधुत्वप्रदर्शनार्थत्वे बहिष्ठदेवतासु प्राप्नोति**। गणाभिप्रायत्वेऽभिधानसाधुत्वे सति स नेति।

**ननु द्व्यधिष्ठानाया देवताया एकत्वेपि वचनमनुपपन्नं भवति।** परिहरति—**नानुपपन्नं एकेन हेतुना समवेतार्थत्वेन**। कुतः पुनस्समवेतार्थमित्याह—**द्विष्ठस्याप्यधिष्ठानगतैक्योपपत्तेः**।

ननु च यद्यप्यधिष्ठानगतद्वित्वं समवेतं तथापि कारकं न भवति तत्प्रकाशने मन्त्रस्यानर्थक्यं इत्यत्राह—**समवेतार्था**भिधाने च मन्त्रस्यार्थवत्तोक्ता अधिष्ठानमपि सारितं कारकं सारयत्येवेति भावः। तस्माद्देवतावशादूहः द्विवचनान्तस्य अधिष्ठानबहुत्वे एकत्वे चोहः एकबहुत्वयोरिति स्थितम्।

**॥ १३ ॥ नियमो वा बहुदेवते विकारः स्यात् ॥ ४१ ॥**

**अत्रैकवचनान्तमन्त्रस्य निवृत्तिं मन्यते। एकवचनान्ततया ऊहेन न तु प्रवर्तत एव। कथं मन्यते? उत्तरं—द्वित्वे हि एकवचनान्तस्यायं प्रयोग इति भ्राम्यतो बहुषु अपभ्रंशः साध्वेकवचनमिति बहुष्वसाधुत्वादूहो युक्तः।**

**ननु संसर्गिदेवगणो देवतेत्युक्तम्**। तेनात्रापि तदभिधायकमुपपद्यत एवैकवचनम्। परिहरति—**स्यात् द्वित्व एव तदिति मन्यते**। अस्यार्थः—द्वित्वे प्रयोगः स्थितः संसर्गोक्तेरित्युक्तम्। तेनात्रापि द्वित्वे वा संसर्गे वा तत्रैकवचनम् न बहुत्व इति मन्यते। तस्मात् बहुष्वपभ्रंश एवेति। निवृत्तिः भ्रमः यथा पाशानिति द्वयोः।

राद्धान्तमाह—**प्रवर्तेत वा एकवचनान्तमेव**। कुत इत्याह—**संसर्गो ह्यत्र विवक्षितः (न च) द्वयोः बहुषु वा सः** संसर्गमात्रं ह्यत्राविशिष्टम्। सर्वो हि संसर्ग एक एव। तेन तत्र युक्तमेकवचनम्। अभिधानविप्रतिपत्तौ हि प्रयोगनियमो भवति। न पुनस्सम्प्रतिपत्तावपि अदर्शनमात्रात् अन्याभिधायिनोऽन्यत्र प्रयोगायोगात् न विप्रतिपत्तिर्भवति। तत्र यत्रैकवचनप्रयोगस्तत्रैव साधुत्वम् यस्य पुनरभिधानसम्प्रतिपत्तिः यत्रैवाभिधायकत्वं तत्रैव प्रयोगः तत्र तद्विध एवान्यत्र प्रयोगदर्शनमात्रेण नियमः। कुत इत्याह—**अद्य जातायां गवि गोशब्दस्यासाधुताप्रसङ्गात्**। न चासाधुता तस्मात् प्रकृतिवदत्राप्येकवचनं साधु।

**॥ १४ ॥ अर्थान्तरे विकारः स्याद्देवतापृथक्त्वात् एकाभिसमवायात् स्यात् ॥ ४२ ॥**

अत्र संसर्गमात्राविशेषात् साधुत्वं मन्यते पूर्वपक्षवादी। अधिष्ठानसंसर्गो वा भवतु, देवतासंसर्गो वा। सर्वथा तावत् संसर्गस्यैकत्वादेकवचनं साधु इति।

**राद्धान्तस्तु देवतासंसर्गः [मन्त्रार्थः] न संसर्गमात्रम्**। अङ्गत्वाद्देवतागतसंसर्गो मन्त्रार्थः न संसर्गमात्रम्। तस्यानङ्गत्वात्। ननु अनङ्गस्यापि समवेतत्वादभिधानं युक्तमित्यत्राह—**अङ्गे हि समवेतार्थाभिधानं मन्त्राणामुक्तम्**। न सम्भवमात्रेण। अङ्गे हीति 'निमित्तात्कर्मयोगे' इति सप्तमी। तेनायमर्थः - अङ्गार्थमङ्गं प्रत्याययितुं समवेतार्थाभिधानं मन्त्रैः क्रियते। न पुनस्सम्भवन्मात्रसंसर्गः यागभेदात् भिन्नेषु यागेषु या देवताः तासां संसर्गो न कचित् अङ्गम्। अङ्गभूतदेवतारूपप्रकाशकश्चैकवचनान्तो मन्त्रः। तस्माद्देवताबहुत्वादसाध्वेकवचनम्। अत ऊह एवेति सिद्धम्।

**ननु चैवं सति आकृत्यधिकरणाक्षेपः प्राप्नोति। क्रियाविशेषाणां चाभिधानदर्शनात् न तावन्मन्त्रार्थता सिद्ध्यति**। अस्यार्थः—तथा क्रियाविशेषणतयैवाभिधानं दर्शितम्। एवं च दर्शयता आकृत्यधिकरणमाक्षिप्तं भवति। आकृतेः क्रियाविशेषणत्वासम्भवात् अनभिधानप्रसङ्गात्। समाधत्ते—**अस्त्यत्र विशेषः देवताभिधानत्वे प्रातिपदिकस्य सिद्ध एव च नोपपत्त्यर्थं संसर्गस्य देवतात्वाश्रयणम्**। तेन भिन्नानां यागानां या एव देवताः तासां संसर्गो न

देवतेति[न]मन्त्रस्याभिधेयः । तदभिधाने मन्त्रस्या[न]न्वयप्रसङ्गात् । तत्र पुनराकृतिप्रतिपत्तिरेवान्वयहेतुः सामान्यरूपेणान्वयावगमादिति तत्रैव प्रपञ्चेनोक्तम् । तस्मान्नागृहीतविशेषणेति वा इतो वा आकृत्या समानावेवान्विता क्रियायां न संसर्ग इति सिद्धं देवताभिधानमसंसर्गाभिधानम् । तस्मान्नाक्षेप आकृत्यधिकरणस्य ।

इति महोपाध्यायशालिकनाथमिश्रकृतायां
ऋजुविमलायां पञ्जिकायां नवमस्य
तृतीयः पादः

—: * :—

# नवमस्याध्यायस्य चतुर्थः पादः

॥ १ ॥ षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्त-त्वादविकारे हि तासामकात्स्न्येंनाभिसम्बन्धो विकाराच्च समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

अत्र पञ्चपक्षा उपन्यस्यन्ते । पञ्चधा मन्त्रार्थप्रतिभानात् । तत्र पशुप्रधानो मन्त्रार्थ इत्येकः पक्षः । सङ्ख्याप्रधान इति द्वितीयः । वङ्क्रीप्रधान इति तृतीयः । अविवक्षित एवेत्यपरः, षड्विंशतिसम्बन्धितापरः पञ्चमः । अस्मिंश्च पञ्चमे पक्षे एवं सति सम्बन्धितोक्ता भवति षड्विंशतिष्षड्विंशतिरनयोरेषां वङ्क्रय इति षड्विंशति-पदेऽभ्यस्ते पशुभ्यां पशुभि[र्वा]प्रत्येकं सम्बन्धिता प्रतिपादिता भवति । वीप्सा तु व्याप्तुमिच्छा तेन द्विर्वचनदर्शनात् षड्विंशतिसङ्ख्यैव पशुसम्बन्धितया प्रतिपादयितु-मिष्टेति गम्यते । यथा "पुरुषः पुरुषो निधनमुपैति" इति पुरुषे एकवचनोहः स्थित इति प्रतीकानुवादोऽयम् ।

षड्विंशतय इति वचनोहेन सङ्ख्यास्वरूपस्य गणनावगमात । सङ्ख्या-प्राधान्ये[1] प्रतीतिकरणत्वेनाविनियोगादविवक्षैव प्राप्नोति मन्त्रार्थस्येति [अ]विकारेणैव प्रयोगः । येन हि मन्त्रेण स्मृतं क्रियते[स करणमन्त्रः] नयनकालत्वादध्रिगुवचनस्य तेनाकरणत्वादर्थस्मरणेऽविनियोगादविवक्षितार्थमुच्चारणमदृष्टार्थमित्यनूहः । वङ्क्रीप्राधान्ये समस्य वचनम् । समस्य वचने हि वङ्क्रीगणना प्रतीयते । तेन तासां प्राधान्यावगतिः ।

**कथं पुनर्विनियोगवशात् स्वीकृते मन्त्रार्थे पञ्चधा प्रतिभायात् ।** यावता यत्रैव विनियोगस्स एव मन्त्रार्थो युक्तः । उत्तरं—**प्रकरणमात्रेण विनियोग ममन्वानस्य पञ्चधा प्रतिभाति मन्त्रार्थः ।** प्रकरणमात्रेणैव मन्त्रस्य विनियोगः । न च श्रुत्या, नापि वाक्येन, समाख्यया, स्थानेन वा ।

**ननु चैतदयुक्तम्—प्रकरणविनियोज्यत्वे पञ्चधा प्रतिभानं उच्चारण-मात्रेणैवाङ्गतासिद्धेरविवक्षैव न्याय्या । क्वोपयुज्यन्तेऽर्थविकल्पाः ?** परिहरति

1. न्य - मा

**—सत्यमाह भवान् आचार्यवानसि ! यद्यपि प्रकरणविनियोज्यता तथा प्यर्थालोचनं युक्तमेव ।** कदाचिदालोक्यमाने मन्त्रार्थे कस्मिंश्चिदर्थे दृष्टार्थता भवतीति न लिङ्गं प्रकरणेन विरुद्ध्यते । प्रकरणस्य सामान्यसम्बन्धापादकत्वात् । लिङ्गस्य च विशेषसम्बन्धापादकत्वात् । लिङ्गेन च दृष्टार्थे सम्भवति नादृष्टार्थं [प्र]त्यर्थि(नी)भवितुमर्हति मन्त्रपदार्थालोचनेन लिङ्गात् क्वचिल्लिङ्गविनियोगो लभ्यो न विनियोगादित्यनेकधा मन्त्रार्थालोचना, तत्र पशुप्राधान्ये सङ्ख्याप्राधान्यसम्बन्धिनि च प्राधान्येऽन्यानुष्ठाने किञ्चिददृष्टेनोपकृतम् । यदि पशवः प्रधानं यदि वा सङ्ख्या स्वरूपेण पशुविशिष्टतया वा प्रतिपद्यमाना प्रधानं तत्प्रकाशनस्यानुपयोगित्वात् (अ)दृष्टोपकारिता मन्त्रार्थस्य न भवतीति वङ्क्रीयप्रधानतैवोपकारिणी । 'ता अनुष्ठ्यो च्यावयतात्' इति सकलोद्धारणावगमात् वङ्क्रीः अनुष्ठ्य प्रयत्नेन शमितार उच्यावयतेति । अनेन सकलोद्धरणं वङ्क्रीणां प्र(ा)तिपद्यते । अनष्ठानं अनुष्ठ्या प्रयत्नः परस्यास्तृतीयाया भावः अतस्समस्यमेव वचनं न्याय्यम् । एतावतीर्वङ्क्रीरुद्धरतेति प्रतिपादयितुम् ।

ननु अत्रापि युगपदुद्धरणाशक्तेश्च बहुधा वाऽनुपक्लृप्तमेव समस्यवचनम् । यदि हि ताः समस्य युगपदुद्ध्रियेरन् तदा समस्यवचनमुप(वृत)पद्यत इति सूक्तं समस्यवचनमेव कार्यमिति ।

**॥ २ ॥ अश्वस्य चतुस्त्रिंशत् तस्य वचनाद्वैशेषिकम् ॥ १७ ॥**

**अत्र पूर्वपक्षशङ्का - केवलपदप्रतिषेधबलेन ।** [न]चतुस्त्रिंशदिति ब्रूयादिति केवलं चतुस्त्रिंशत्पदं प्रतिषिध्यते । **न वैशेषिकमेवास्य वचनं कर्तव्यम् । कथं पुनरस्मिन् पक्षे न वाक्यभेदः ? चतुस्त्रिंशत्पदप्रतिषेधात् षड्विंशतिपदविधानाच्च वाक्यभेदः प्राप्नोति ।** ऋक्प्रतिषेधे तु चोदकप्राप्तमन्त्रानुवादोऽयम् षड्विंशतिरित्येव ब्रूयादिति । तेन[न]वाक्यभेदः । उत्तरं—**इरापदवद्भविष्यति इत्यभिप्रायः ।** अस्यार्थः - यथैवेरापदे विधीयमाने वाक्यभेदो न भवति तथाऽत्रापि नास्ति षड्विंशतिपदविधाने प्राप्त एव चतुस्त्रिंशत्पदाभावोऽनूद्यते ।

**राद्धान्तस्तु न केवल[पद]प्रतिषेधोऽयम् । कुतः ? ब्रूयादिति श्रवणात् ।** अस्यार्थः—प्रसक्तस्य हि प्रतिषेधो भवति ऋचश्च वचनं प्रसक्तम् । न तु पदमात्रस्य तस्यार्थप्रतिपादकत्वाभावात् । तदाह — **न केवलं पदवचने**

अर्थप्रतिपादने व्याप्रियेते। वाक्यं हि वचः कारणमित्युक्तम्। तेन प्रसक्त एव निषिध्यते ननु पदमात्रम्।

ननु चेरापदवद्भविष्यति पदस्यापि प्रतिषेधः। परिहरति—[न]तथाऽत्र सम्भवः। कस्मादित्याह— षड्विंशतिरित्येव प्रतीयात् इत्युक्ते न चतुस्त्रिंशत्पदप्रतिषेधं प्रतीमः। अस्यार्थः - न गिरागिरेति ब्रूयादित्यनुवादोऽयम्। अनुवादश्च प्रमाणान्तरेण वर्ण्यमानो न दोषमावहति। तेन युक्तं तत्र पदमात्रोच्चारणानुवादः। इह षड्विंशतिपदे विहितेपि न चतुस्त्रिंशत्पदनिवृत्तिः प्राप्ता तुल्यकार्यत्वाभावात्— तत्रापि उद्गानपदसमभिव्याहारात्। तत्कार्यानुप्रवेशेन ऐरं कृत्वोद्गेयमिति उद्गानेन गानावयवेनेराप[दस्य]सम्बन्धः। तेनोद्गानकारकं गिरापदं निवर्तते। इह पुनः वाक्यभेदादृते नैककार्यावगतिरिति वैषम्यम्। तेन प्रतिषेधो युक्तः नानुवादः। पदप्रतिषेधो नावगम्यते।

युक्त्यन्तराण्याह— वाक्यभेदश्चायुक्तः इत्युत्तराभिधायि। वङ्क्रि(वि)प्रतिपत्तेश्चादृष्टार्थत्वप्रसङ्गः। यावत्यश्च वङ्क्रयः तावतीः अनुष्ठ्यादिति षड्विंशतिशब्दो न शक्नोति। तस्माद्दच एव प्रतिषेध इति स्थितम्।

॥ ३ ॥ वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ २२ ॥

अत्रापि विशेषविनियोगाभावात् मन्त्रार्थ एव दोषो लभ्यत इति तदर्थो विकल्प्यते। सैव दृष्टार्थत्वाश्रयणहेतुः गृद्ध्रं वपां मन्यमाना वनिष्ठुं माऽऽविक्षदित्युच्यमानेऽदृष्टार्थता मन्त्रस्य। उलूकवचने हि अदृष्टार्थता। वपोद्धरणकाले विरुद्धता च वनिष्ठोः लिपितुल्यत्वात्। यद्युलूकं ध्यात्वा वनिष्ठुर्लवितव्येत्युच्यते तदाऽदृष्टार्थता। अथ उलूकसदृशो वनिष्ठुर्न लवितव्य इत्युच्यते तदा विरुद्धार्थत्वाद्वनिष्ठोः लवितव्यत्वात्। तस्मात्पदभेदमात्र एव न्यायः। उरुपदं विस्तीर्णवचनं कपदं च समुदायलक्षणया भेदोवचनं कशब्दोपस्थापनमुखेन मेदस्त्विवपालक्षणा। पदभेदे च समासो भवतु मा वा न कश्चित्प्रयोजने विशेष इति। निर्णयहेत्वभावादनिर्णय इति। यदि पुनः स्वरादिभिः कश्चिद्विशेषार्थोऽविरोधेन स आश्रयणीय एव। तदभावे पुनः न किञ्चिद्वैयर्थ्यम्। इच्छातो नियमः। तथा चोभयं प्रदर्शितं भाष्यकारेण।

॥ ४ ॥ प्रशसास्यभिधानम् ॥ २३ ॥

**अत्रापि सैव वार्ता मन्त्रालोचनेन निर्णीयत इति ।** पूर्वस्मिन् या वार्ता सैवात्रापि प्रयोगकल्पिका भवतु [1]प्रयोगकल्पनाभयात्तु पूर्वोत्थिता निरस्यते । असिवाचकत्वे हि असिना बाहूद्धारणप्रयोगः कल्पयितव्यः नान्यथा समवेतार्थप्रकाशनमुपपद्यते । न च प्रयोगान्तरं कल्पयितुं शक्यते स्वधितिसाधनस्य प्रयोगस्य कृतत्वात् । ननु च प्राशस्त्ये बाह्वोर्वाक्येनाभिधीयमाने सूक्तभाक्त्वेन तयोः देवतात्वं प्राप्नोति । अत्राह **प्राशस्त्यं न पुनर्बाह्वोर्देवतात्वं प्रकल्पयति । कृत्स्नोद्धरणतयाप्युपपत्तेः** कृत्स्न उद्ध्रियते न सकृत् स्वोद्धारणो मन्त्रः तस्य भावस्तत्ता । यद्यपि मन्त्रार्थोपपत्तेर्न देवतापादकत्वं सम्भवाच्च कृत्स्नयोर्बाह्वोः प्रशस्तताया: अयमेवार्थतो न्यायः । कथं पुनरस्यभिधानपक्षे ऊहो भाष्यकारेणोच्यते । उच्यते । मान्त्रवर्णिकादुपपन्नम् । मान्त्रवर्णिकोऽसिः । तेनैकस्मिन्नसौ प्रशसेत्येकवचनान्तं द्वयोः बहुषु च द्विवचनान्तं बहुवचनान्तं च ।

**॥ ५ ॥ श्येनशलाकश्यपकवषस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २५ ॥**

**अत्रापि दृष्टार्थे सम्भवति नादृष्टार्थकल्पना प्रत्यर्थिनी युक्तेति कृत्स्नोद्धारण**तैव[2]न्या[(ख्या)]श्येनाकृतिः [1]अस्य वक्षो यथा भवति तथा कुरुतेति मन्त्रार्थो भवेत् । कृत्स्नोद्धरणार्थतया दृष्टार्थता भवति । कृत्स्नोद्धारणे हि तथारूपता वक्षसः । ननु कृत्स्नोद्धारणे कथं दृष्टार्थतेत्यत आह—**अन्यत्र न्यूनावदानप्राप्तेः** । होमार्थं हि यदवदानं कृत्स्नोद्धारणे सति अन्यूनेभ्यो भवति । ननु[मा]भूदन्यूनावदानाकाङ्क्षेत्यत्राह—**अत्राभिधानाच्च[2] अवदानश्रुतेः श्येनादिशब्दानामुभयत्र [प्रयोगो] न सम्भवति** । आकारमात्रोपलक्षणमितरस्मिन् पक्षे यतः । **"पक्षोक्तं प्रयोजनं" इत्युक्तं भाष्ये । विशसने च तत्प्रयोजनं कथितं, नोहे ।** ऊहे च कथयितुमुचितम्, अन्यथा लक्षणासङ्गतेरिति परिचोदना । परिहारस्तु **अयमभिप्रायः ईदृशार्थे यथाभिधानमुपपद्यते** । तथा (ता)एवं चोदितान्यूनाकारेणाध्रिगुरुपवर्णितो भवति सर्वस्याध्रिगुमन्त्रस्यावैगुण्यं भवति कृत्स्नोद्धारणपरत्वात् ।

---

1. प्रयोगकल्पिकामवतु-मा
2. न्यायादिति ।

## ॥ ६ ॥ प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात् तदर्थे हि विधीयते ॥ २८ ॥

**ननु चेयमधिकारचिन्ता । तस्याः कः प्रसङ्ग ऊहलक्षणे ?** परिहरति — **कार्यतस्त्वधिकारनिर्णयो नोपदेश[त]इतीहैव चिन्त्यते ।** यदा ज्योतिष्मत्या अग्निरेव कार्यं तदा अग्निहोत्रार्थमुद्धृताग्न्युद्वानवत एवाधिकारः । यदा तु नैमित्तिकमिदं कर्मानुष्ठानं तदा प्रासङ्गिकोऽग्न्युद्वानवतोऽप्यधिकारः । तेन कार्यत एवाधिकारनिर्णयो नोपदेशादिति कार्यचिन्तायामूहचिन्ता । **पूर्वपक्षवादी आर्त्यधिकरणन्यायं मन्वान ऐदमर्थ्यमुद्धरणेन विवक्षितमिति पूर्वपक्षितवान् ।** यथा आर्त्यधिकरण उभयत्वमविवक्षितं तथेहाप्यैदमर्थ्यमुद्वानस्याविवक्षितम् । तेन प्रासङ्गिकोद्वानेपि नैमित्तिकमेवेति पूर्वपक्षितम् ।

**राद्धान्तस्तु कार्ययोगोऽन्यथाऽग्निहोत्रे न स्यात यद्यैदमर्थ्यं नाद्रियते ।** अस्यार्थः—उद्वाताग्निर्निमित्तं नोद्वानमात्रं उद्वाताग्नेश्च पुरुषस्याग्निसमाधानमेव कार्यम् । तत्र यदि प्रासङ्गिकेपि अग्नावुद्वाते प्रायश्चित्तं स्यात् तदा तस्याग्निहोत्रासम्बन्धात् अग्निहोत्रसम्बन्धो ज्योतिष्मत्या न स्यात तस्मादग्निहोत्रार्थमुद्धृताग्न्युद्वान एव च तत्र नैमित्तिकमिति ।

नन्वधिकारिणो विशेषणमविवक्षितमित्युक्तमार्त्यधिकरणे इत्यत आह— **विशेषणाविवक्षा च उपदेश उक्तो न कार्ये । तस्माद्वैषम्यमार्त्यधिकरणेन ।** वाक्यभेदादविवक्षिततोक्ता । कार्यतश्चात्रानुप्रवेशः । अतो वाक्यभेदो नास्ति । अतोऽन्यार्थे(व्याभा)प्रायश्चित्तम् । नन्वग्नेरुद्वानं निमित्तं नोद्वानवानित्यत्राह—**अग्निविशिष्टोद्वाननिमित्तता** यथानिरस्ता तथा प्रदर्शितं भाष्ये यस्याग्निरुद्वात इति श्रवणादग्निरेव निमित्तमिति । तस्मादुद्वानपरीतोऽग्निर्निमित्तमिति स्थिते युक्तो राद्धान्त इति स्थितम् ।

## ॥ ७ ॥ धारणे च परार्थत्वात् ॥ २९ ॥

पूर्वोक्तं सर्वमुपपद्यते निमित्ततया[प्रो]क्तम् । तादृशं नास्ति । कुत इत्याह— **कृतार्थस्य ह्यत्र धारणं अकृतार्थं च निमित्तमित्युक्तम् ।** अकृतार्थस्य समाधानमपेक्षितम् अपेक्षितार्थसमाधानार्थमिदम् । (अ)कृतार्थश्चाग्निरत्र यदर्थमसौ उद्धृतः धार्यते तदनुष्ठितमेव । अतः परार्थवदस्तु । परिसमूहनपरिहारस्तूक्तः प्रयोगाङ्गत्वेन । प्रयोगः परिसमूहनादीनामङ्गत्वात् ।

॥ ८ ॥ न तूत्पन्ने चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥

**कालोऽङ्गं, न चाङ्गाभावे प्रधानशास्त्रार्थान्यत्वं तस्मान्नाङ्गान्तर-निवृत्तिः ।** अस्यार्थः - यद्यपि दर्शार्थोद्धरणे अग्निहोत्रार्थोद्धरणकालो न लभ्यते तथापि मन्त्रः प्रयोक्तुमुचित एव । अङ्गाभावेपि प्रधानानुष्ठानदर्शनात् आग्नेयवत् यथा व्रीह्यभावेपि आग्नेयशास्त्रार्थो न विद्यत[लुप्यत]इति तदनुष्ठानं तथेहापि युक्तम् ।

**राद्धान्तस्तु सत्यमङ्ग(क)लोपस्तथापि निमित्तेन तुल्यम् ।** कुत इत्याह—**काले हि सति कर्म चोद्यते न पुनः कर्मणि सति कालः** उपादाना-शक्तेः । तेन तदभावे अधिकाराभावान्नेदमग्निहोत्रार्थमेव ।

॥ ९ ॥ प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥ ३२ ॥

**पयो न पाकार्थमिति ।** अत्र पुनर्भेदे[र्वेदे]शब्दप्रमाणका वयं शब्दतश्च वाक्यार्थतां पयसो विद्मः न धात्वर्थताम् । चरुरादित्य इति आदित्यसम्बन्धश्चरोर-वगम्यते न पयसः, तस्य च पाकार्थतैव युक्ता । न च पक्वा आमाश्शक्यते वक्तुं येन शब्दो विहन्येत । भोजनार्थस्यापि(स्ता)पाकसाधकत्वस्य लोके दर्शनात् । अथापि नान्तरीयक्यपि पाकासिद्धिर्न स्यात् सामान्यतो दृष्टं च वेदे न क्रमत इति तत्र तत्रोक्तं नियोगार्थस्त्वनन्यः ।

॥ १० ॥ अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ॥ ४१ ॥

॥ ११ ॥ अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ॥ ४६ ॥

श्रृतशब्दश्रवणात् प्रायणीयेन वैषम्यम् श्रुतिसामान्यत्वं मन्यते पूर्वपक्षवादी । श्रपणं हि हविस्संस्कारः प्रतिपन्नः तद्दर्शनात् । पयसो हविष्ट्वं मन्यमानः प्रायणीय-पयसा वैषम्यं मन्यते पूर्वपक्षवादी । अभ्युदयेष्टितुल्यत्वाच्च वाक्यानाम् ।

राद्धान्तस्तु नासति प्रदेयार्थत्वे सप्तम्यर्थोऽपह्नोतुं शक्यते इति यथाश्रुत एव वाक्यार्थः अभ्युदयेष्टौ पूर्वावगतत्वात् प्रदेयतायास्सप्तम्यर्थापह्नवः कृतः । इह तु तद-भावान्न युक्तः । [श्रृत] शब्दोऽपि लक्षणयाप्यन्वित एव सप्तम्यर्थः पयोमात्र-लक्षणतः शब्दः स हि पयसि हविः श्रपणान्न[भ]वति । वृत्त इत्यर्थः ।

॥ १२ ॥ श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् ॥ ४५ ॥

पयसा मैत्रावरुणं श्रीणातीति दृष्टार्थालाभेन पूर्वपक्षवादी प्रदेयार्थतां पयश्शब्दस्य मन्यते। अवरुध्यः तृतीयान्तस्यापि देवतासम्बन्धः। सप्तम्यन्तस्येव पयसः प्रायणीये।

राद्धान्तस्तु न ब्रूमस्तृतीयया देवतात्वस्यावरुद्धतया देयत्वेन न सम्बध्यत इति। किन्तु नित्यदेयसम्बद्धेन सोमेन संयोगश्रवणात् तदर्थतैवावसीयते। मैत्रावरुणं गृह्णातीत्येतच्चोदनानुसारेण सोममात्रस्यैव देवतासम्बन्धः प्रतीयते। स प्रतीतदेवतासम्बद्धः सोमः श्रयणार्थमिहानूद्यते तेन सोमार्थं पयो न प्रदानार्थम्। कुतः? श्रुत्यन्तरे हि देयद्रव्योपलक्षणायैव देवतारीतिर्विधीयेत। यो वा दीयते विधेयान्तरस्य संयोगात् त[स्य] विधाने चावश्योपलक्षणीयत्वात्। द्वि....शे हि शेषिसमर्पकं मैत्रावरुणपदम्। तस्मात् सोमस्य द्वितीयासंयोगात् सोमार्थतैव पयस इति न्याय्यम्। शेषमुक्तम्।

॥ १३ ॥ पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥

**कथं पुनरत्र पूर्वपक्षो देवताश्रवणे शक्यते वक्तुम्।** ईशानाय परस्वत आलभत इति देवताश्रवणाद्यागः विधिनैवाधिगम्यते। कथं पूर्वपक्षाशङ्का? **देवताश्रवणस्य च समाधिलेशं** कं पुनरसौ [मन्यते?] उत्तरं – **त्यागादृते नान्यद्विधातुं शक्यत इति। राद्धान्ते राद्धान्तस्थापनमध्ये भाष्यकारेण शङ्कितव्यो विकल्पो द्रष्टव्यः।** अस्यार्थः - तान् पर्यग्निकृतानुत्सृजतीत्यत्र त्याग एव विधेयः पर्यग्निकरणविशिष्टः विधेयान्तरस्यासम्भवात्। यदि हि ईशानाय परस्वत आलभत इत्यनेन यागो विधीयते तान् पर्यग्निकृतानुत्सृजतीत्यत्र न किञ्चिद्विधेयं गम्यते। पर्यग्निकरणस्य चोदकप्राप्तत्वादिति भाष्यकारेणोक्तम्। तस्मादीशानायेति शब्दमुच्चार्यालम्भः कर्तव्य इति विधीयते। तदाह—**देवताश्रवणं पुनः स्वरूपान्वयि भविष्यति मन्त्रवदित्यभिप्रायः।**

**एवं प्राप्तेऽभिधीयते—यागविधिरेवायम्। कुतः? न हि अर्थान्वये सम्भवति स्वरूपान्वयश्शक्यते वक्तुम्।** ननु च शब्दे कार्यस्यासम्भवात् अर्थे सम्प्रत्ययो युक्तः। तत्रार्थे कार्यं विज्ञायते। इह तु शब्दोऽस्तीति तत्रैव कार्यं भवितुं युक्तम्।

राद्धान्तवादी वदति-केन वोक्तं यत्र शब्दे सम्प्रत्ययोऽस्ति तत्र न युक्तमिति किन्त्विह शब्द एव सम्प्रत्ययो नास्ति। न ह्यर्थाविवक्षायां प्रमाणं शक्यतेऽवगन्तुम्। यत्रोत्सर्गमृते विधानं न सम्भवति तत्र तत्र दर्शितः सम्भवः तदन्ताङ्गरीतिविधानेन। **शेषं सनिदर्शनमुक्तम्।**

**॥ १४ ॥ आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ ५६ ॥**

स्पष्टेऽपि तदनेनोत्सर्गविधाने शेषसंस्थापनशब्दात् भ्रान्तिरुपजायते तदन्तं कर्म न भवतीति। ततश्च पक्षद्वयसम्भवात् तस्या भ्रान्तेरपनयायेदमधिकरणमारभ्यते। न चैवमपि सन्देह एव युक्तः। कथं पूर्वपक्षाध्यवसानमित्यत्राह—**पूर्वपक्षो हि शेषसंस्थान [श्रवणात्]** एतद्बलेन तदन्ताङ्गरीतिविधानमेव न सम्भवति इति कल्पनीया।

राद्धान्तस्तु परिसमापनीयमेवैतदित्युक्त्वा पुनस्तच्छेषाभिधानं विरुद्ध्यते। तेन शेषाभिधाने गौणसमन्वयः। न च परिसमाप्तिः असमाप्तावपि शक्यते वक्तुम्। शब्दाभिधेयस्य पक्षान्तरेऽप्यव्याघातात। पूर्वपक्ष्याह—**युक्तं संस्थानं कर्मान्तरपक्षे। शेषशब्दस्तु कथं?** राद्धान्त्याह—**ननु सादृश्यादेवेत्युक्तं भाष्ये शेषवच्छेष इत्यर्थेन।** पूर्वपक्ष्याह—**सत्यमुक्तं भाष्ये तदयुक्तमभिहितम्। शेषशब्दश्रुतिभानात्।** एकग्रन्थेनाह—**उत्सर्गे वा कः पक्षपातः।** स एव किमित्यन्यथा वर्णितः इति भावः। राद्धान्ती उत्तरमाह—**अयमस्ति पक्षपातः पूर्वोक्तापेक्षोन्यः शेषशब्दः।** न पुनः पूर्वोक्तं शेषमपेक्षते। शेषो ह्यवयवः पूर्वमवयविनमपेक्षते न पुनः पूर्वोक्तं शेषम्। तस्मान्निरपेक्षत्वात् उत्सर्गः श्रौतः। तदपेक्षया तु शेषशब्दो गौण इति न्याय्यम्। **सनिदर्शनं शेषमुक्तम्।**

**॥ इति महोपाध्यायशालिकनाथमिश्रकृतौ**

**पञ्चिकायां नवमस्य चतुर्थः पादः ॥**

—:*:—

# दशमाध्यायस्य प्रथमः पादः

॥ १ ॥ विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

**ननु च बाधे सत्यूहेन भवितव्यम्** । अनेन भाष्योक्तमूहबाधलक्षणयोर्हेतुहेतुमद्भावमाक्षिपति । यदि हि ऊहे सति बाधः स्यात् तर्हि ऊहस्य बाधं प्रति हेतुता स्यात् विपरीतं तु विद्यते बाधे सत्यूहेन भवितव्यम् ।

पृच्छति—**क्व एवमाह** - उत्तरं—**एवं ह्युपलभ्यते । निवृत्तेऽग्निशब्दे सूर्यपदप्रक्षेपः** । अग्निपदस्थाने सूर्यपदप्रक्षेपो यः सोऽग्निशब्दस्यानिवृत्तौ नोपपद्यते । तस्मादग्निशब्दबाधे सत्यूहो भवतीत्युपलभ्यते । समाधाता आह—**उपलब्धिश्चेत् साम्नि संस्कारे वा किमुपलभ्यते कस्य निवृत्तौ कस्य प्रक्षेपः ?** साम्नि संस्कारे च कस्यचिद्बाधो न दृश्यते । तेन सामसंस्कारोहस्तावत् बाधहेतुको न भवति । अतो विभीषिकामात्रमेव बाधपूर्वक ऊह इति ।

आक्षेप्तारमाशङ्कयति—**मन्त्रे कथमिति चेत्** । परिहारमाह—**तत्रापि प्रकृतिवदभिधानं कुर्यात् इत्यनेन हेतुना यः सूर्यपदप्रक्षेपः सोऽग्निशब्दस्य निवृत्तिं नापेक्षते** । कस्मादित्याह—**अभिधानसम्पत्त्यर्थो हि[सूर्यपद]प्रक्षेपः नाग्निशब्दाभावनिमित्तकः** । अस्यार्थः—यथा प्रकृतौ मन्त्रेणाभिधानं कृतं विकृतावपि तथैव कर्तव्यमित्येवमर्थं सूर्यपदप्रक्षेपः । नहि सूर्यपदमन्तरेण प्रकृतिवदभिधानं सम्पद्यते । प्रकृतौ प्रधानदेवताभिधानं मन्त्रेण कृतम् । विकृतौ सूर्यः प्रधानदेवता, नासौ सूर्यपदमन्तरेण शक्यते बोधयितुं इत्येवं सूर्यपदप्रक्षेपो मन्त्रे न पुनरग्निशब्दाभावनिमित्तकः तस्य प्रक्षेपः । यदि हि अग्निशब्दाभवनिमित्तकः स्यात् तदा बाधहेतुक ऊहो भवेत् न चैतदेवम् । तस्मान्न विपरीतो हेतुहेतुमद्भावः । **यद्येवं बाधोऽपि तर्हि नोहनिमित्तकः तथाभिधान[1]निर्वृत्त्यर्थः [2]प्रक्षेपः । तथा सौर्ये कर्मण्यग्नेरनभिधेयत्वादग्निशब्दस्य निवृत्तिः न पुनरूहहेतुको बाधः**

---

1. R सम्पत्त्यर्थः
2. A प्रक्षेपात्

उत्तरं—**मा भूदूहपूर्वको बाधः का नो बाधा?** न किञ्चिदस्माकं बाध्यत इत्यभिप्रायः । आक्षेप्ता—**कस्तर्हि लक्षणसम्बन्धः यदि हेतुहेतुमद्भावो नास्ति ।** समाधाता आह—**कार्येणोहः प्राप्तः कार्यशून्यमभिघातं किमनुष्ठातव्यं नेति भवति सम्बन्धः ।**

अस्यार्थः—यत्प्रकृतौ पदार्थानां कार्यं विकृतावपि तदेव कार्यमिति कार्येण हविः प्रकृतिद्रव्येण संस्कार्येण हविः प्रकृतिभूतेषु कृष्णलेष्वेवावघातस्योहप्रयोजनः प्राप्तः । इदानीं कृष्णलसंस्कारत्वेनावघातस्य प्रयोगे निश्चिते कर्तव्योऽवघातः कार्यहविश्शून्यो भवति । तुषविमोचनकार्याभावात् अतश्चिन्ता भवति किं कार्यशून्यस्यावघातस्यानुष्ठानं क्रियतां नेति । तत्र द्वाराभावात् अननुष्ठानमवघातस्येति बाधो भवति । एष ऊहलक्षणबाधलक्षणयोः सम्बन्धः । एतदुक्तं भवति - द्वारलोपनिबन्धनो बाधः तेन साक्षादूहस्य हेतुभावो नास्ति, किन्तु कृष्णलसंस्कारत्वेनावघातस्य प्रयोगः कर्तव्य इत्यूहे निश्चिते सति कृष्णले तुषकणविमोचनकार्याभावादवघातस्य द्वारलोपनिश्चयः । ततश्च बाध इति बाधहेतुभूतद्वारलोपनिश्चयहेतुत्वादस्त्यूहस्य बाधं प्रति हेतुभाव इति । तथा च स्वयमेव सूत्रकारः आग्रयणे प्राकृतान्वाहार्यस्थानपतितयोर्वासोवत्सयोः अन्वाहार्यधर्मोहं दर्शयित्वा द्वाराभावेन पाकस्य बाधं दर्शयिष्यति । **भवन्ति चात्र श्लोकाः ।**

विकृत्यपूर्वतादर्थ्ये क्रतुशेषत्वसीमनि ।
प्राकृतानां पदार्थानामतिदेशात्मके स्थिते ॥

प्राकृतस्थानपतितवस्त्वन्तरचिकीर्षया ।
प्रयोगे विदिते द्वारलोपः शक्यविनिश्चयः ॥

द्वारलोपनिमित्तश्च बाधोऽतो हेतुसिद्धये ।
ऊहापेक्षेति सम्बन्धो व्यक्त एवोहबाधोः ॥

बाधो नामेति भाष्यमर्थतोऽनुभाष्य आक्षिपति—**बाधो नामेत्युक्त्वा यन्निश्चितं कार्यविज्ञानं तस्य कारणान्तरेण** मिथ्याभावो बाध इति बाधस्वरूपमुपवर्णितम् । तच्चेदं विप्रतिषिद्धं प्रमाणविदो मन्यन्ते । न हि निश्चितज्ञानं मिथ्या भवति । मिथ्याभावोऽपि ज्ञानस्यार्थशून्यत्वम् । न च यद्विज्ञानं निश्चितं तदर्थशून्यं भवति । विज्ञानस्य स्वमहिम्नैवार्थोपस्थापकत्वात् । विशेषेण तु मीमांसकानां

मते न हि विज्ञानं मिथ्या भवति येषामग्रहणनिबन्धनमेव मिथ्यात्वम् । मीमांसका हि भेदाग्रहणरूपतया विज्ञानस्य मिथ्याभावं वदन्ति, न ज्ञानरूपतया । विवेकाग्रहणाद्धि स्मृतिज्ञानं प्रत्यक्षव्यवहारप्रवर्तकतया पुरुषं व्यवहारे विसंवादमापादयत् विज्ञानं मिथ्याभूतमित्युच्यते । तेनाग्रहणनिबन्धनमेव मिथ्यात्वम् ।

येषामपि मीमांसकैकदेशिनां ख्यातिरेव विपरीता ज्ञानमेवायथाभूतं तेऽपि नैव निश्चितत्वं विपरीतत्वे हेतुरिति ब्रुवते । तेषामपि शुक्तिकास्वरूपनिश्चयो न रजतत्वग्रहणे हेतुः किन्तु शुक्तिकास्वरूपानिश्चय एव । तदेतदाह—**तेषामपि अज्ञानवासना विपरीतत्वे हेतुः** । अज्ञानेन वासना संस्कारोऽज्ञानवासना । शुक्तिकास्वरूपाज्ञानेन संस्कृतस्य रजतविज्ञानं भवति ।

युक्तं [1]चाज्ञानस्यैव मिथ्यात्वं, तस्यैव ज्ञानेनापनीयमानस्य बाध्यत्वात् । ज्ञानं तु न ज्ञानेनापनेतुं [2]शक्यते । तेन बाधकाभावान्न ज्ञानं मिथ्येति युक्तम् । तदाह—**ज्ञानेन चाऽज्ञानं निवर्त्यत इति अज्ञानस्यैव युक्तो मिथ्याभावः । अतो निश्चितं ज्ञानं मिथ्येति विप्रतिषिद्धम्** । किञ्च प्रामाण्ये च सुपरिनिश्चितत्वमेव हेतुत्वेन प्रमाणलक्षणे स्वयमुदितम् । "जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यती"ति । तेन **यद्विज्ञानं निश्चितं तन्मिथ्येत्यभिधीयमाने स्ववचनविरोधः** । तस्मात् कथमिदमेवंस्वभावं बाधं वदतो भाष्यमुन्नेयमित्याप, संहारः ।

समाधाता आह—**अत्रोच्यते । कथमिदं प्रमाणविदो मन्यन्ते । निश्चितं मिथ्या चेति विप्रतिषिद्धमिति** । नेदं विप्रतिषिद्धमिति भावः । कुतः इत्याह—**शब्दोऽपि नः प्रमाणमित्युक्तम्** । तथापि किमित्याह—**तस्य च शब्दस्य प्रामाण्यं यैर्मीमांसकैः विदितं न तेऽन्यथा वदन्ति** । यस्माच्छब्देन निश्चितस्यैवेदं मिथ्यात्वम् । तेन निश्चितं मिथ्येत्येव युक्तम् । **कथं शब्देन निश्चितं** ? उत्तरं—**प्रकृतौ हि कथं कर्तव्यमित्यस्यामाकाङ्क्षायां इत्थं कर्तव्यमित्युपदेशेन इतिकर्तव्यता समर्पिता । यथाऽनया भवति तथेत्थमिति कल्प्यते** । अस्यार्थः—प्रकृतौ नियोगे कार्यभूते प्रतीते कथं कर्तव्यमिति करणोपकाराकाङ्क्षायां उपदेशेनेतिकर्तव्यता पदार्थस्य संहतिः समर्पिता । ततश्च तां

---

1. R चैव
2. R अपह्नो तुं

गृहीत्वैवमुपकारः कल्प्यते - यथा येन प्रकारेण अनया पदार्थसंहत्योपकारोभवति । तथा तेन द्वारेणेत्थमिति कल्प्यते । क्लृप्ते [1]चेत्थंभावे करणोपकारे तद्वदिति विकृतावतिदेशः प्रकृतिवद्विकृतिः कर्तव्येति करणोपकारस्य पदार्थसंहतेश्चातिदेशः । तथापि किमित्याह—**न चाप्राप्तौ तद्वदिति शक्यते वक्तुम् ।** यद्युपकारस्य पदार्थसंहतेश्च विकृत्यपूर्वं प्रत्यैदमर्थ्येनाप्राप्तिः स्यात् तदा प्रकृतिवद्विकृतिः कर्तव्येति वक्तुं न शक्यते । तस्मात् विकृत्यपूर्वं प्रति प्राप्तिरस्ति सोपकारायाः पदार्थसंहतेः । तस्मात् प्राकृतं पदार्थजातं विकृत्यपूर्वे प्राप्तमङ्गत्वेन सम्बद्धमित्यर्थः । यच्च प्राप्तं तन्निश्चितम् । तेन निश्चितत्वं प्रसिद्धम् । अनिश्चितत्वं प्रसाध्य मिथ्यात्वमिदानीमाह—**यस्य तु तथा येन प्रकारेण प्राकृतेन द्वारविशेषेणेत्थंभावः करणोपकारो न सम्भवति तद्द्वाराभावेनाकर्तव्यतया मिथ्येत्यवगम्यते ।** कथं द्वाराभावे करणोपकारासम्भव इत्यात्राह—**प्रकृतावपि च द्वारनिबन्धन एव इत्थंभावः न तादर्थ्यतः ।** चशब्दो यस्मादर्थे । यस्मात् प्रकृतावपि द्वारनिबन्धन एव करणोपकारः न तु तादर्थ्यमात्रनिबन्धनः प्रकृतिवच्च विकृतावप्युपकारः तस्मात् द्वारबाधे करणोपकारासम्भवः । करणोपकारासम्भवे चाकिञ्चित्करत्वादननुष्ठानम् । यदि द्वारबाधेन करणोपकारं न जनयति कथं तर्हि विकृतौ तस्य निश्चय इत्याह—**तादर्थ्ये(ना)चायं निश्चयः उक्तः यावदुक्तं तावति शब्दस्य प्रामाण्यात् ।**

अस्यार्थः—यद्यपि [2]द्वारबाधेन करणोपकारं न जनयति तथापि विकृत्यपूर्वं प्रति तस्यैदमर्थ्यं शेषत्वं निश्चितम् । तेन शाब्दो निश्चयोऽस्ति । ऐदमर्थ्यमात्रे शब्दस्य प्रामाण्यात् । द्वारं पुनः प्रमाणान्तरसिद्धमेव तुषकणविमोचनादिकमवघातादीनाम् । शाब्द च प्रमाणमङ्गीकृत्यायं निश्चय उक्तः । यतो द्वारं प्रमाणान्तरवेद्यमत इदमुक्तं कारणान्तरेण मिथ्येति कल्प्यत इति । कारणान्तरशब्दं विवृणोति--**प्रमाणान्तरवशेनेत्यर्थः ।** अयमाशयः—शाब्देन प्रमाणान्तरेण तादर्थ्यं निश्चितं प्रमाणान्तरेणद्वाराभावेन करणोपकारजनकतया मिथ्येति परिकल्प्यते । अनुपकारकस्यातादर्थ्यात् इति निश्चितं मिथ्येति परिक(ल्पितं)ल्प्यत इति सिद्धम् । कथं पुनः प्रमाणान्तरवशेन शाब्दस्य तादर्थ्यस्य मिथ्यात्वं? शाब्दज्ञानेन गृहीतं तादर्थ्यं सत्यभूतमेव न तस्य मिथ्यात्वं शक्यते वक्तुम् । यद्यपि तदानीमुपकारं द्वाराभावेन स

---

1. R कल्पिते
2. A द्वारभावेन

पदार्थो न जनयति, तथापि प्राकृतत्वादुपकारस्य भवत्येवासौ तज्जन्यः, प्रकृतौ तेन तस्य जन्यमानत्वात्। तेना(।)तज्जन्योपकारसम्बन्धो विकृत्यपूर्वस्य। तस्मात्प्राकृतस्य पदार्थस्य लुप्तद्वारस्यापि अविहतमेव तादर्थ्यम्। **कथं पुनः प्रमाणान्तरवशेन शाब्दस्य मिथ्यात्वं? उत्तरं—यत एव मिथ्यात्वं नास्ति अत एव कारणान्तरेण मिथ्यात्वं न स्वत इत्युक्तम्।** कारणान्तरेण द्वार(।)निश्चयात्। तदभावे तदानीं करणोपकाराजनकत्वात् तादर्थ्ये सत्यपि अतादर्थ्यसाधारणीं करणोपकाराजनकतां प्रतियतोऽन्यत्र दृष्टया तादर्थ्यस्मरणमुपजायते तेन लुप्तद्वारं अतदर्थमिति मन्यते। तेन प्रमाणान्तरेण द्वारस्य ग्राह्यत्वात् तदभावेऽतादर्थ्यज्ञानमिव भवति न पुनः शाब्देनैव ज्ञानेनातादर्थ्यमवगम्यते। तदेव स्पष्टयति—**परोपाधिकं मिथ्यात्वं स्वतस्तु निश्चयःकेन वार्यते द्रष्टृत्वमिवात्मनः।** दृष्टान्तं विवृणोति—**नोपधानादृते न पश्यतीति न द्रष्टृत्वं हीयते।** उपधानादिन्द्रियादिव्यापाराद्विना सुषुप्त्यादौ विषयं न पश्यतीत्येतावता आत्मनो द्रष्टृत्वं दृक्शक्तियोगित्वं न हीयते। अस्त्येव दृक्शक्तिः स्वाभाविकी अपश्यतोऽपि। तथा कार्यमुपकुर्वतोऽपि उपकारजननशक्तिरस्त्येव लुप्तद्वारस्यापि प्रकृतौ दर्शनात् जाग्रद्दशायामिवात्मनो विषयदर्शनात्। ततश्च तावन्मात्रमेव बाध इति।

यद्येवं तदेव वक्तव्यं द्वाराभावाद्बाध इति तदाह—**अथ कस्मादेवमेव नोक्तं द्वाराभावो बाध इति। उत्तरं—नैवं, प्रमाणस्य बाध इत्युक्तं भवति। ननु च नैव प्रमाणस्य स्वतो बाध इत्युक्तम्।** तेन प्रमाणस्य बाधाभावात् प्रमाणबाधो वक्तुमेव न युक्तः। तेन तस्यानभिधानं न दोष इत्यर्थः। परिहरति—**उपाधितोऽपि बाधो बाध एव सुगन्धितेव कामिनीनाम्।** अस्यार्थः—द्वाराभावावगमे तादर्थ्ये सत्यपि यदिदमतादर्थ्यस्मरणमुपाधिः ततोऽपि योबाधः सोऽपि बाध एव। यथा कामिनीनां सुगन्धिद्रव्याङ्गरागवतीनां शरीरसमवायिगन्धाग्रहणे स्मर्यते यथा अङ्गरागगतगन्धग्रहणे च सुगन्धितेव भवति। यदि सुगन्धितेव कामिनीनां प्रमाणस्य बाधः उपचारस्तर्हि? उपचारस्तु न पारमार्थिक इति तत्त्वे ज्ञानेन[2] पारमार्थिको बाधो न भवति। अन्यदीयमतादर्थ्यं स्मर्यते यथाऽङ्गरागगतं सौगन्ध्यमनुभूयते। तदेव तु संयुक्तसमवायात् कामिनीष्विव भासते।

---

1. R: उक्तो
2. A. तत्वे ज्ञाने

परिहरति—**न कार्ये उपकारः शक्यते वक्तुम्।** बाधकार्ये उपचारो नास्ति। बाधकार्यं पारमार्थिकमननुष्ठानात्मकम्। तत्परमार्थतो भवत्येव द्वाराभावेऽनुपकारकस्याननुष्ठानात्। अतोऽपारमार्थिकेपि बाधे कार्यं पारमार्थिकमेव। यथा सौरभे कामिनीनामपारमार्थिकेपि सौरभकार्यं कामुकप्रीतिरूपं पारमार्थिकमेव।

[1]नन्वेवमपि बाधकार्यमेव पारमार्थिकं न बाध इति प्रमाणस्य मिथ्याभावो बाध इति न वक्तव्यमित्यत्राह—**कार्यार्थं च स्वरूपवर्णनम्।** यदिदं बाधस्वरूपवर्णनं तत् बाधकार्याननुष्ठानसिद्ध्यर्थं तद्बाधकार्यं प्रमाणस्य मिथ्याभावे दर्शिते सतीति तदर्थमौपाधिकोऽपि प्रमाणस्य बाध उक्तः। **तस्मात्सुष्ठूच्यते निश्चितं मिथ्येति च कार्ये विभागादर्शनात्** बाधकार्येऽननुष्ठाने विभागो विशेषो न दृश्यते। पारमार्थिकौपाधिकबाधयोर्यतः। ततो निश्चितं मिथ्येति च सुष्ठूक्तम्[2]।

**नन्वङ्गभूते[3]ऽननुष्ठिते किमिति वैगुण्यं न भवति? बाधकार्यस्यापि शाब्दत्वात्।** उपकारकं कर्तव्यमिति बोधयता शास्त्रेणैवानुपकारकमकर्तव्यमिति कार्यंत उक्तं यतः। तदयमत्र सङ्क्षेपार्थः—प्राकृतस्यापि पदार्थजातस्य विकृत्यपूर्वं प्रति तादर्थ्ये निश्चितेऽपि यदिदमौपाधिकमपारमार्थिकमपि अतादर्थ्यज्ञानमुत्पद्यते तत्फलतो बाधकं, तादर्थ्यज्ञानं फलतो बाध्यं अनुष्ठानाभावादिति।

भाष्यनुभाषते—"**तथास्युच्चयः यदिदमिह भवतीति विज्ञानेऽपरमपि भवतीति विज्ञानं**" इति। आक्षिपति—**यत इदमिह भवतीति विज्ञान इति।** कुतः? उत्तरं—प्रथमं प्राकृतानामेवोपकारसम्बन्धोऽतिदेशतः। अपरमपि भवतीत्युपदेशतो वैकृतानाम्। एतच्च विकृतिषु। प्रकृतौ पुनः नैवायं विभागःसम्भवति, अगृह्यमाणविशेषत्वात् औपदेशिकस्य सम्बन्धस्य। सर्वेषामेवौपदेशिकानामङ्गानां युगपदेवोपकारसम्बन्धात्।

**ननु यदि प्रथममातिदेशिकं तदा आतिदेशिकेन निराकाङ्क्षायां विकृतौ कथं पश्चादौपदेशिकाङ्गसम्बन्धो भवति।** यासौ विकृत्यपूर्वस्योपकारजनकपदार्थाकाङ्क्षा साप्यतिदेशलब्धैः प्राकृतैरेवाङ्गैः पूरितेति निराकाङ्क्षतया साक्षादुपदिष्टाङ्गसम्बन्ध उपकारे न स्यादित्यर्थः।

---

1. R ननु चैवमपि
2. R सुष्ठूच्यते
3. अङ्गान्तरे A

परिहरति—**प्रकृतौ वा कथमौपदेशिकाङ्गसम्बन्धः ।** एकग्रन्थेनाह—**नाकाङ्क्षात एव केवलायाः सम्बन्धः शक्यते वक्तुम् ।** स कुत इत्याह—**नियोगैक्यं हि तत्राङ्गसम्बन्धहेतुः ।** प्रधाननियोगपरिगृहीतत्वं अङ्गसम्बन्धहेतुः । आकाङ्क्षातो हि सम्बन्धे क्रियद्भिरप्याकाङ्क्षा पूरितेति सर्वसम्बन्धो न स्यात् । **इह च विकृतौ तन्नियोगैक्यमविशिष्टम् यतः ।** अतः **कार्ये** कार्यदशायां नियोगैक्यदर्शनात् द्वयं प्राकृतं वैकृतं **चाविरुद्धम् ।** एतच्च विकृतावित्यत्राभ्युच्चयाधिकरणे वक्ष्यामः । तदिदमुच्यते—**अन्यदपि भवतीति ।**

**इदानीं लक्षणार्थो बाधश्चिन्त्यते किं लुप्तकार्यमपि प्राकृतं विकृतौ कर्तव्यं उत निवर्तत इति । ननु च कार्यप्रयुक्ता धर्मा इत्यूहं वर्णयता** स्थापितं कथं तदभावे कर्तव्यता शङ्क्यते । उत्तरं—**सत्यमेवं कार्यप्रयुक्ता धर्मा इति । अतिदेशवाक्यस्यार्थभेदं मन्वानस्य भवति संशयः ।** अयमाशयः—कार्यसद्भाव एव संशयः । यदि प्राकृतमेव द्वारं तदा कार्यबाधः । अथ द्वारान्तरं तदा कार्यसद्भावः द्वारसंशयश्च अतिदेशवाक्यस्यार्थभेदात् ।

किं पुनस्तदतिदेशवाक्यं कश्च तस्यार्थभेद इत्यत्राह—**तद्वदिति । किमङ्गापेक्षं सादृश्यं उतानुष्ठानापेक्षमिति ।** प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशवाक्यं व्याख्यातॄणाम् । तेन च प्रकृतिसादृश्यं विकृतीनामुच्यते । तत्सादृश्यं किमङ्गापेक्षमुत करणोपकारापेक्षमिति ।

एतदुक्तं भवति—किं पदार्थवत्तया सादृश्यं उत करणोपकारवत्तयेति । तत्र यदि पदार्थवत्तया सादृश्यं तदा कार्यानपेक्षाः प्राकृताः पदार्था एव विकृतावतिदिश्यन्ते तदा तेषु करणोपकारान्तरं कल्प्यम् । तज्जननार्थं च पदार्थानां द्वारमाश्रयणीयम् । तत्र यस्य दृष्टं द्वारं न सम्भवति तस्यादृष्टं कल्प्यते । ततश्च कार्याभावो न शक्यते वदितुम् । अथ तु करणोपकार एव प्रथममतिदिश्यते पश्चात्तज्जनकाकाङ्क्षायां पदार्था अतिदिश्यन्ते तदा येनैव द्वारेण तेषां प्रकृतावुपकारसम्बन्धः विकृतावपि तेनैव द्वारेण । तदभावात्कार्याभावः । ततश्च बाध इति । तत्र च पूर्वपक्षवादी अङ्गापेक्षं सादृश्यमिति मन्यते ।

**कोऽभिप्रायः ?** अभिप्रायं पृच्छतश्चायमाशयः—अपूर्वं हि वैकृतं करणोपकारमेव प्रथममाकाङ्क्षति न केवलान् पदार्थान् । ततश्चोपकारमेव तद्भावेन गृह्णातीति युक्तम् । उत्तरं—**नह्यङ्गावमर्शादृते तदनुष्ठानावमर्श उपपद्यत इति**

**नागृहीतविशेषणान्यायेन पूर्वपक्षितम्** । अस्यार्थः—सत्यं प्रथममुपकारापेक्षा, किन्तु प्रकृतावपि उपकारस्य कल्प्यत्वात् यः प्रयाजादिभिरुपकारो भवति सोऽत्रोपकार इति पदार्थपुरस्सर एवोपकारावमर्शः विकृतावप्युपकाराकाङ्क्षायां पदार्थपुरस्सरस्य तस्यैव बुद्धौ सन्निधानम् । तत्र प्रथमोपनिपातिनः पदार्थानेव विधिः गृह्णाति । यथा आकृतिविशिष्टपदार्थाभिधानाश्रयणपक्षे प्रथमोपनिपतितामाकृतिमेव शब्दोऽभिदधाति । नागृहीतविशेषणा विशेष्ये बुद्धिरिति आकृतेः प्रथमावगमादिति । एवं चेत् पदार्थानेव चेद्विधिर्गृह्णाति तदाऽप्राकृतकार्यस्याप्यनुष्ठानं पूर्वोक्तया नीत्या कार्यं कल्प्यं कृष्णलेष्विव पाकस्येति ।

**एवं प्राप्तेऽभिधीयते....नाङ्गापेक्षोऽयमतिदेशः तद्भावेन विकृतौ नाङ्गान्यतिदिश्यन्ते, किन्तूपकार एव** । पश्चात्तु तज्जनकाकाङ्क्षायां अङ्गानामतिदेशः । कुतस्तद्भावेन नाङ्गानामतिदेश इत्यत्राह—**प्रकृतावप्यनुष्ठानापेक्ष एवाङ्गैः सम्बन्धः । अन्यथा सम्बन्ध एव न स्यात्** । अस्यार्थः—साध्यभूतस्य विध्यर्थानुष्ठानापेक्षैव प्रथममुपजायते न पुनस्तदनपेक्षयाऽङ्गानामपेक्षा । ततश्च यद्यप्यङ्गानि प्रथममवमृश्यन्ते तथापि तेषां तदानीमनपेक्षितत्वादुपेक्षणमेव । पश्चादुपस्थितमपि अनुष्ठानमेव स्वीकरणीयम् । तस्मिन् स्वीकृते पश्चात् तज्जनकाकाङ्क्षायां अनुष्ठानजनकतया प्रकृतौ प्रतिपन्नसम्बन्धानां अनुष्ठानेनैवोपस्थापितानां पदार्थानां स्वीकरणम् न केवलं विकृतौ, प्रकृतावप्यनुष्ठानापेक्ष एवाङ्गैः सम्बन्धः । यद्यपि नियोगं प्रति प्रथममनपेक्षितानुष्ठाना एव पदार्था ऐदमर्थ्यमात्रेण सम्बद्धाः तथापि तेषां प्रतिपन्नोऽप्यसौ सम्बन्धः उपकाराकाङ्क्षया विना नावकल्पेतेत्यप्रतीतावेव सम्बन्धप्रतीतिरिति कल्प्यते, नियोगैक्यावगमाद्वा सर्वस्य करणभावः[1] । करणोपकाराकाङ्क्षां विना नियोगैक्येन सम्बन्धः कल्प्यमानः करणभावेनैव स्यात् । करणोपकारलक्षणकार्यापेक्षत्वे तु विध्यर्थस्य तज्जनकतयैव सम्बन्धान्नायमसम्बन्धलक्षणो दोषः । यदि प्रकृतावप्युपकाराकाङ्क्षयैवाङ्गैः सम्बन्धः कस्तर्हि प्रकृतिविकृत्योर्विशेष इत्याह **इयांस्तु विशेषः । तादर्थ्यमात्रेणान्विताभिधानात्** प्रथमं पदार्थसम्बन्धे सति प्रकृतौ पश्चात् करणोपकारलक्षणकार्यविशेषावगमः । विकृतौ तस्योपकारविशेषस्यावगमादङ्गानां सम्बन्धः । उपसंहरति—**अतस्तद्भावे गम्यमाने पूर्वावगतमप्यङ्गजातं अपूर्वसम्बन्धे स्वहेतुं करणोपकार-**

1. R णाभावः

**मपेक्षत इति स्वहेत्वपेक्ष एवायमर्थो ग्रहीतव्यः। योऽसौ करणोपकार-लक्षणोऽङ्गसम्बन्धहेतुः तदपेक्ष एवायं प्रकृतिवद्विकृतिः कर्तव्येत्ययमर्थो ग्रहीतव्यः** । उपकारसादृश्यमेव तद्वद्भावेनोच्यत[1] इत्यर्थः । **पदार्थापेक्षितत्वे पुनः पदार्थान्तराणामपि अनवस्थैवेतिकर्तव्यताकाङ्क्षायाः ।**

अस्यार्थः—यदि पदार्था एवाकाङ्क्ष्यन्ते तदा कार्यस्य अकार्यस्य चाविशेषेणाकाङ्क्षेति सर्वपदार्थानां पदार्थान्तरापेक्षायां अनवस्थैवेतिकर्तव्यताङ्क्षायाः । यदा तु करणोपकार आकाङ्क्ष्यते तदा कार्यस्यैवाकाङ्क्षा नान्यस्येति युक्ता व्यवस्था । तदाह—**न कार्यात् करणोपकारादृते व्यवस्थोपपद्यते ।** तस्मिन्नपेक्ष्यमाणे व्यवस्थोपपद्यत इत्यर्थः ।

किञ्च विकृतिषु चोपदेशाभावात् सम्बन्धानवगतिः । यदि तु करणोपकाराकाङ्क्षा नास्ति कथं विकृतिषु प्राकृतानां पदार्थानां सम्बन्धः पूर्वपक्षेपि हि करणोपकारापेक्षायामेव पदार्थाः करणोपकारविशेषणत्वेनावतिष्ठन्ते । तदभावे तु तेषामुपस्थानमेव नास्तीति कथं सम्बन्धः ? तस्माद्विकृतिषु सम्बन्धः प्राकृतानां पदार्थानां न स्यादित्यत्राह—**प्रकृतौ हि नियोगैक्यनिबन्धनः पदार्थानामुपदेश इति सप्तमाद्ये स्थिते** अधिकारभेदाद्विकृतिषु दुर्लभः सम्बन्ध इति । तस्माद्विकृत्यपूर्वाणां उपकाराकाङ्क्षा आश्रयणीया । तस्यां चाश्रितायां उपकार एव प्रथमं सम्बध्यते । अतः उपकारलक्षणकार्यानुसार्येव विकृतिषु पदार्थानां सम्बन्धः । तस्मात् तद्वद्भावोऽप्यनुष्ठानापेक्ष इति सिद्धम् । सर्वत्र करणोपकारनिबन्धनमेव तादर्थ्यमिति दर्शयितुमाह—**यत्रापि श्रुतिलिङ्गवाक्यानि पदार्थान्वयहेतवः सन्ति तत्राप्यनपेक्षे शब्दे कार्यलक्षण एव सम्बन्धः किं पुनः प्रकरणादीनाम् येषां कार्यनिबन्धन एवात्मलाभः** । अस्यार्थः—यत्रापि पदार्थान्वयरूपो यः सम्बन्धः तस्य हेतवः प्रतिपादकानि श्रुतिलिङ्गवाक्यानि सन्ति तत्राप्युपकारलक्षण एव पदार्थानामैदमर्थ्येन सम्बन्धः ।

कथं पुनः पदार्थान्वयव्यतिरिक्तः कार्यलक्षणोऽपरः सम्बन्धोऽभ्युपगम्यत इति ? अत्रोच्यते—अनपेक्षः शब्द इति यद्यपि प्रमाणान्तरान्न प्रमीयते तथापि शब्देनावगम्यत एव । येषां पुनः प्रकरणस्थानसमाख्यानां कार्यनिबन्धन एवात्मलाभः

---

1. R नावगम्यते

तेषां सुतरां कार्यनिबन्धन एव सम्बन्धः । करणोपकारनिबन्धन एव पदार्थान्वयोऽपि । प्रकरणादिषु पदार्थान्वय[1] एव श्रुत्यादीनां व्यवहार इति तृतीये दर्शितम् ।

तस्मान्न कार्यशून्यं प्रयोक्तव्यमिति निवृत्तिस्तस्येति बाधविदः । कृष्णलेषु तु उपदेशाद्वैषम्यम् । उपदेशबलेनादृष्टार्थोऽपि कृष्णलेषु पाकः क्रियत इति ।

अत्र चायं संक्षेपार्थः—आकाङ्क्षासन्निधियोग्यता अन्विताभिधानहेतवः । तत्र प्रथमं कथमिति विधेः करणोपकाराकाङ्क्षा । प्राकृतश्चोपकारः प्रत्यक्षवचनेन नाम्ना चोदनालिङ्गेन च सन्निधाप्यते । योग्यश्चासाविति तदन्वितो विध्यर्थः स्वशब्देनाभिधीयते । सा चेयमुपकारप्राप्तिरतिदेशोऽन्यदीयस्यान्यत्र सम्बन्धात् । औपदेशिकी च उपदेशप्रमेयत्वात् । यच्च साक्षाच्छब्देन विध्यर्थं प्रत्युपादीयते यच्च विध्यर्थेन वाक्यप्रमेयेन[2] तत्सर्वमौपदेशिकमेव । उपकारश्च विध्यर्थेनोपस्थापनीय एव प्रकृतिवत् । प्रकृतौ विध्यर्थ एवोपकारं कल्पयित्वोपस्थापयति । विकृतौ तु प्रकृतिक्लृप्तमेव परं विध्यर्थान्वितोपकारं विध्यर्थः सन्निधापयतीति । विशेषनियमे चोदनालिङ्गादीनां व्यापारः ।

किञ्च प्रत्यक्षवचनोपनेयो नाम्नोपनेयश्च सुतरामौपदेशिकः, पठ्यमानाक्षर-समर्पितत्वात् । चोदनालिङ्गोपनेयः सत्यां विधेराकाङ्क्षायां बुद्धिस्थो भवति नान्यथेति सोऽपि विध्यर्थोपनेय इति । एवं चोपदिष्टत्वमतिदिष्टत्वं च विरुद्धम् उपदेशप्रमेयतयो-पदिष्टत्वं, अन्यदीयस्यान्यत्र सम्बन्धादतिदिष्टत्वम् । पुनश्च विधेरुपकारे लब्धे तज्जनकाकाङ्क्षायां प्रकृताविव पदार्थास्तेनैवोपकारेण तज्जन्येनोपस्थापिता अन्वयं गच्छन्ति आकाङ्क्षासन्निधियोग्यतानामन्वयहेतूनां विद्यमानत्वात् । अन्वयश्च गुणप्रधानभावमन्तरेण न सम्भवतीति विध्यर्थः प्रधानभूतः पदार्थाश्च गुणभूताः प्रतीयन्ते । तेन गुणभूतप्राकृतपदार्थान्वितो विध्यर्थः स्वशब्देनाभिधीयते । तथा च सति पदार्थानामप्यतिदेशः सिद्धो भवति ।

यदि हि पदार्थानामपि विकृत्यपूर्वसम्बन्धो न भवेत् तदा तेषां प्रकृतेरन्यत्र सम्बन्धाभावात् अतिदेशो न स्यात् । दर्शितस्तेषामपि विकृत्यपूर्वं प्रति ऐदमर्थ्यलक्षणः सम्बन्धः । यस्तु तेषां विकृतावङ्गतां नेच्छति तस्य द्वादशाहिकविध्यन्तग्राहिषु सत्रेषु

---

1. R न्वये च
2. R वाक्यमयेन

ज्यौतिष्टोमिकाङ्गप्राप्तिर्न स्यात् । द्वादशाहे तेषामनङ्गत्वात् अनङ्गस्य बाधानवगमात् । अनङ्गस्य च आधानपवमानेष्टिगोदोहनादेरिव प्राप्त्यभावात् । न च प्रधानचोदनया प्राकृतानां प्राप्तिरस्ति । किन्त्वनुष्ठानज्ञापनमात्रमेव । तच्चाविशेषेणौपदेशिकानां प्राकृतानां च । ततश्च प्राकृतेभ्यः परतो वैकृतानामनुष्ठानं न स्यात् । यदि प्रधानचोदनया पठिता एव प्राकृता भवेयुः तदा प्रधानानन्तरं तेषामनुष्ठानं (अ)पाठतः स्यात् । तथा प्रसज्यप्रतिषेधाभ्युपगमेन यः प्राकृतेन सह विकृतौ विधीयते स न स्यात् । यदि हि अङ्गं प्राकृतः पदार्थः स्यात् तदा तुल्यबलत्वाद्विकल्पो भवेत् । अनङ्गत्वे तु अनृतवदनप्रतिषेधवत् एकान्ततः प्रतिषेध एव स्यात् प्रतिषेधस्याङ्गत्वेन शीघ्रप्रयुक्तेः । अङ्गे ह्याशुप्रयुक्तिः । अनङ्गे तु अङ्गप्रयुक्तिद्वारेण विलम्बितेति । ग्रन्थश्च सर्वत्र पदार्थातिदेशमनभ्युपगच्छतो विरुद्धयत[1] इत्यलमतिप्रसङ्गेन ।

न च वाच्यं कथमन्यदीयाः पदार्था अन्यत्र सम्बध्यन्ते विनियुक्तविनियोगविरोधादिति च, यतो विनियुक्तविनियोगे हि प्रतीतिविरोधः । यदि तुल्यवत् विकृतावपि सम्बन्धोऽभ्युपगतः स्यात् तदा स्यात् प्रतीतिविरोधः । यथा यद्देवदत्तीयं तद्यज्ञदत्तीयमिति । यदा तु तद्भावेनोपकारसम्बन्धः पश्चात् तज्जनकत्वात् पदार्थाः सम्बध्यन्ते तदा न कश्चिद्दोषः । यथा उपकारे तद्भावेन सम्बध्यमाने न प्रतीतिविरोधः अन्यथा ह्युपकारोऽपि कथमन्यदीयोऽन्यत्र सम्बध्येत । न च वाच्यमुपकारः प्रकृतावङ्गभूत एव न भवतीति, असम्बन्धप्रसङ्गात् । न ह्यन्यथा तस्यापूर्वसम्बन्धो घटते । असति च सम्बन्धेऽन्यदीयस्यान्यत्र सम्बन्ध इत्येतदेव न स्यात् । यश्चायं पदार्थातिदेशः स कार्यप्रमाणको नोपदेशप्रमेयः । पाठेन वा विध्यर्थेन वाऽनुपस्थापितत्वात् । न हि विध्यर्थेन पदार्था उपस्थाप्यन्ते किन्तु कार्येण उपकाराख्येन उपदेशकार्यप्रमाणकेन अध्यायषट्केण । यथोक्तं औपदेशिकी प्रतीतिर्विचारिता, इदानीं कार्यतोऽधिगतिश्चिन्त्यत इति । कार्यं च करणोपकारादिकमभिप्रेतं, न नियोगः । [2]नियोगकार्ये गृह्यमाणे चतुर्थाध्यायचिन्तापि द्वितीयषट्के स्यादिति ।

ननूपकारस्यौपदेशिकत्वात्तदुपनेयाः पदार्थाः अपि किमित्यौपदेशिका न भवन्ति । उच्यते । उपदेशो हि विध्यर्थप्रतिपादको ग्रन्थसन्दर्भः न विध्यर्थसापेक्षः

---

1. विरुध्यत
2. R नियोगेकार्ये

उपदेशो भवति। तेन विध्यर्थसापेक्षाच्छब्दाद्यदेवावगम्यते तदेवौपदेशिकम्। यच्च कार्येणावगम्यते यच्चोपदेशेन तदुभयमपि शाब्दमेव। शाब्दत्वे त्वयं विभागः—किञ्चिचौपदेशिकं, किञ्चिच्च कार्यगम्यमिति कृतमतिबहुना।

**किं भवति प्रयोजनं कथं वा वैकृतमुदाह्रियत इति कोऽभिप्रायः?** एकग्रन्थेनाह—**लुप्तकार्यं निवर्तत इति प्रयोजनमुदितं, तेन प्रयोजनं तावत्सिद्धम्। सर्वासु च विकृतिषु कार्याभावान्निवृत्तिरिति।** उदाहरणमपि (न)स्पष्टम्। अतः केनाभिप्रायेण प्रयोजनोदाहरणप्रश्नः। उत्तरं—**अयमभिप्रायः यत्र तावत्स्वतन्त्रं कार्योद्देशेन वा अन्यस्य विधानं तत एव तत्र निवृत्तिः सामान्यस्य को विषय इति।** अस्यार्थः—यत्र न विधानं यथा षोडशिनं न गृह्णातीति, तथा कार्योद्देशेनान्यस्य विधानं यथा शरमयं बर्हिर्भवतीति तत्र तत एव निवृत्तिः, न तत्कार्याभावेन। या पुनरियं कार्याभावेन सामान्येन निवृत्तिः तस्याः को विषय इति। विषयाज्ञानादुक्तामपि निवृत्तिं अविषयज्ञतया प्रयोजनत्वेन अमन्यमानो द्वयं [1]तत्र पृष्टवान्। एवं पृष्टे अयं विषय इति प्रदर्शितम् विषयप्रयोजनद्वयम्।

एवं वा

**केन पुनर्विशेषेणेदमधिकरणमारभ्यते?** उत्तरं—**एवं तावत् सामान्यविषयं सूत्रमुपवर्णितम्। इदानीं तु विशेषेण वर्ण्यते।** सामान्यविशेषविषयतयाऽपौनरुक्त्यमिति भावः। आक्षिपति—**ननु सामान्येनैव चिन्तितम्। अतोऽभिमतसर्वविशेषा उदाहरणं भवन्ति किं विशेषचिन्तया?** समाधत्ते **अस्त्यस्मिन् विषये विशेषः। किं पुनरसौ?** उत्तरं—**पाकवदप्राकृतकार्यमपि भवत्येवावघातादि कोऽभिप्रायः?** उत्तरं—**चरुशब्दश्रवणात् पाकस्यैवात्रापि प्राप्तिं मन्यते पूर्वपक्षवादी।** अस्यार्थः—अचरौ चरुशब्दप्रयोगोऽयं चरुधर्माः कार्यानपेक्षाः कथं स्युरिति। कार्यं हि आग्नेयस्य लब्धमेव। तदर्थः चरुशब्दो भवति। किन्तु कार्यानपेक्षोऽचरौ चरुधर्मातिदेशार्थः। ततश्च पाकोऽपि चरुशब्दश्रवणादेव। पाकवच्चावघातादयोऽपि भवितुमर्हन्ति। येनाभिप्रायेणापूर्व

---

1. adds बर्हिर्भवतीति

पृष्टवान् इदानीं राद्धान्ती तमभिप्रायमाह—**ननु च घृते श्रपयतीति वचनादेव पाकप्राप्तिः**। परिहरति—**घृतार्थं तद्वचनं न पाकविधानार्थमिति मन्यते पूर्वपक्षवादी**। तस्माच्चरुशब्दनिबन्धनैवात्रापि प्राप्तिरिति पूर्वः पक्षः।

राद्धान्ती पृच्छति—**किं चरुशब्दः कार्यप्रयुक्ततां करणोपकारप्रयुक्ततां विहन्ति धर्माणाम्**। कार्यप्रयुक्तत्वाविधाने हि कार्यमेव प्रयोजकमिति भावः। पूर्वपक्ष्याह—**विहन्ति कार्यप्रयुक्ततामस्मिन्नुदाहरणे। कथं विहन्ति ? उत्तरं—चरुशब्दोऽयं विशदसिद्धौदने प्रयुक्तः, न चात्र कृष्णलेषु विक्लित्तिफलः पचेरर्थः पाकोऽस्ति कृष्णलेषु**। तेन विशदसिद्धमदनीयमेतद्धविर्भवति। तस्मादचरौ चरुशब्दोऽयं चरुवदित्येवं गौणो द्रष्टव्यः। ततः चरुशब्देनैतदुक्तं भवति - अचरौ चरुधर्माः कर्तव्या इति। धर्मनिबन्धनं सादृश्यम्। कस्मात्पुनर्गौण इत्यत्राह—**अनाञ्जसत्वाच्छ्रपणस्य**। तेन विशदसिद्धिर्नास्तीति परशब्दः परत्र प्रयुज्यमानो गौणः। वाचनिक एव किमिति न भवतीत्याह—**न वचनशतेनापि शब्दस्य शक्त्यन्तरकल्पना भवतीति तत्र तत्र दर्शितम्**। तेन तत्र मुख्यो न भवति प्रवृत्तिविशेषकरतया धर्मसादृश्यादनुष्ठानपरोऽयं चरुशब्दोऽग्निहोत्रवदिति।

**राद्धान्तवादी तु हविस्सामान्यादपि चरुशब्दोपपत्तेः श्रपणयोगाद्वा यावद्वचनं वाचनिकमिति मन्यते**। अस्यार्थः—सिद्धसादृश्येनापि चरुशब्दोपपत्तिः। सिद्धं च सादृश्यं हविष्ट्वेन श्रप्यमाणत्वेन च। प्रवृत्तिविशेषकरता च प्रयोजनमात्रम्। अग्निहोत्रादिषु तूपकारापेक्षायां अपेक्षितसमर्पकतया कार्यसादृश्याश्रयणम्। इह तूपकाराकाङ्क्षा पूरितैव[1] प्रत्युतानपेक्षिताऽवघातादिषु अनुष्ठानार्थत्वेनानपेक्षितविधित्वम्। तस्मात् य एव साक्षात्पाको विहितो वचनेन स एव कर्तव्यो नावघातादि।

**ननु वचनमेवेदं श्रपणविधानाय नोपपद्यते। विक्लित्तेरभावात्**। तस्य पच्यर्थत्वादिति चोद्यमात्रम्। उत्तरं—**यथोपपद्यते वचनं तथोपरिष्टाद्वक्ष्यामः**।

---

1. A त्वरितैव

एवं वा।

**अत्र को विशेषः ? उत्तरं—अनिश्चिते बाधप्रमाणासम्भवः।** अस्यार्थः—कार्याभावे हि (ह्य)निश्चिते बाधः प्रमाणवान्। यत्र तु कार्याभावः सन्दिग्धः तत्र निष्प्रमाणको बाधः। आक्षिपति—**अनुष्ठानं वा कथं ?** यथा कार्याभावानिश्चयाद्बाधो नोपपद्यते तथा **कार्यसद्भावानिश्चयादनुष्ठानमपि। कथं ? उत्तरं—नातिदेशो निश्चयमपेक्षते प्रयोगस्य।** अस्यार्थः—यद्यपि प्रयोगो न निश्चितः प्रतिपत्तित्वादुरुक्रमेज्यायाः। प्रतिपत्तिर्हि द्रव्यं न प्रयुङ्क्ते। किन्तु द्रव्येणैव प्रयुज्यते। कादाचित्कं च द्रव्यं यत् स्फ्याश्लिष्टं अवमृदितं च। तेना-निश्चितप्रयोगेयं प्रतिपत्तिः। तथापि चास्यां प्राकृतानामङ्गानामतिदेशो निश्चित एव। तत्र यदि विष्णोरावाहनं क्रियते तदा यद्युपनिपतेत् उरुक्रमेज्या तदा सगुणा भवति। अन्यथा ह्युपनिपतिता सती विगुणा स्यात्।

अथ नोपनिपतेत् तदा कृतेपि आवाहने न काचित् क्षतिरित्यर्थः। सन्देहे-प्यावाहनं कर्तव्यम्। आर्थसन्देहोऽपि प्रवृत्त्यङ्गम्। यद्यतिदेशः प्रयोगनिश्चयं नापेक्षते किं तर्ह्यपेक्षत इत्यत्राह—**शास्त्रनिश्चयानुसारी हि सः निश्चितश्च "यदघोऽवमृद्येत्"** इति शास्त्रम्। तेन शास्त्रानुसारेण तावदिदमेकं कर्म निश्चितम् तत्र चातिदेशोऽपि निश्चितः। तस्मात्प्रयोगानिश्चयो नातिदेशं बाधितुं क्षमते, अतिदिष्टं चाङ्गमिति कर्तव्यमेवावाहनम्। न चात्र राजामात्यामन्त्रणादिवत् दृष्टं किञ्चिद्विरुद्ध्यत इत्यप्रतिपक्षोऽयमतिदेशः।

एवं प्राप्तेऽभिधीयते—**सत्यमाह भवान् यद्यत्र शास्त्रार्थाधिकारोऽपि निश्चितः स्यात्। यथाशास्त्रं निश्चितं नैमित्तिकस्वरूपं शास्त्रार्थः प्रतिपाद्य-द्रव्यनिमित्तकोऽयं प्रतिपत्तावधिकारः अनिश्चितं चैतन्निमित्तं प्रतिपाद्यद्रव्यं तदनुसारि च शास्त्रं तथैव।** यद्यपि स्वरूपतः शास्त्रं निश्चितं, (न)तथापि क्रत्वधिकारप्रतिपादकतया त्वनिश्चितमित्युक्तम्। **तस्माद्बाधवदतिदेशोऽपि न निश्चयादृते शक्यते वक्तुम्।** यथा बाधः [1]कार्यविलोपनिश्चयं विना न शक्यते वक्तुं तथाऽतिदेशोऽपि अधिकारनिश्चयं विना न शक्यते। तस्मादननुष्ठानमेवात्र ज्यायः तदिदमुक्तम्—**न चानारब्धे प्रयोगेऽङ्गं कृतमुपकारकं भवतीति।**

---

1. R कार्याभाव

प्रयोगानारम्भेणानधिकारं दर्शयति—**अनधिकारे चानतिदेशः ततश्चानङ्गस्यानुपकारकत्वम् ।**

ननु नात्र निश्चितस्य बाधः, अनिश्चितमेवेदं शास्त्रमित्युक्तं त्वया । ततश्च निश्चितमिथ्यात्वलक्षणोऽत्र प्रतिज्ञातो बाधो न शक्यते वक्तुम् । उच्यते । न । शास्त्रं निश्चिते, कारणान्तरेणानिचय उक्तो मिथ्याभाव एव । यद्यप्येतत्स्वरूपतः शास्त्रं निश्चितं तथापि निमित्तानिश्चयादनिश्चितं कारणान्तरवशेन । निमित्तस्य प्रमाणान्तरवेद्यत्वात् द्वारवत् । यथा द्वारं प्रमाणान्तरवेद्यं तदभा(वो)वे मिथ्यात्वं तथा निमित्तमपि प्रमाणान्तरवेद्यं तदनिश्चये शास्त्रस्यापि अधिकारहेतुतयाऽनिश्चितत्वम् ।

**ननु मिथ्याभावो बाध इत्युक्तम् नानिश्चयः** ततश्च प्रतिज्ञातबाधस्वरूपबाह्यत्वादिहासङ्गतिरिति भावः । उत्तरं—**अनिश्चयोऽपि मिथ्याभाव एव** । कुत इत्याह—**अध्यवसायहेतुः प्रमाणं तदभावो मिथ्यात्वं, अभावे च कार्यानिश्चये च तुल्यमनध्यवसानमिति मिथ्यात्वाविशेषाद्बाध एव । न चानिश्चितेऽनुष्ठानं सम्भवति इति ।** अस्यार्थः—यदेव निश्चितं सन्नानुष्ठीयेत तदननुष्ठाने वैगुण्यं प्रमाणायत्तत्वात् विगुणभावस्य । अनिश्चिते चाननुष्ठीयमाने वैगुण्यं नास्तीति अननुष्ठानमेवात्रावाहनस्य युक्तम् । तस्मान्निश्चित एव शास्त्रार्थः स्वरूपतः । उपाधिनिबन्धन एवात्रापि मिथ्याभाव इति निमित्तानुत्पत्तेरनारम्भः उरुक्रमेज्यायाः न पुनरनिश्चयाच्छास्त्रार्थस्य । ततः किमित्याह—**आरम्भप्रयुक्तं चाङ्गानामनुष्ठानम् ।** तस्मान्निश्चितमेवाङ्गानुष्ठानम् प्रधानारम्भेणाङ्गानामनुष्ठानम् । प्रधानं चाधिकाराभावान्नारब्धम् । अतोऽङ्गानुष्ठाने प्रयोजको नास्तीति अननुष्ठानमेवावाहनस्येति हेतोः सूक्तम्—"न चानारब्धे प्रयोगे अङ्गकृतमुपकारकं भवति" इति ।

**॥ २ ॥ इष्टिरारम्भसंयोगादङ्गभूतत्वान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥**

**अत्रारमारम्भापरित्यागेन दीक्षणीयादेरङ्गत्वमिति पूर्वः पक्षः ।** यद्यपि ज्योतिष्टोमाङ्गभूता दीक्षणीयादयः तथापि तेषामारम्भोऽस्त्येवेति आरम्भावैगुण्याय आरम्भणीया कर्तव्या ।

राद्धान्तस्तु प्रयोगान्तरचोदनैवेयम् । येयं ज्योतिष्टोमेन स्वर्गकामो यजेतेति चोदना सा प्रयोगान्तरस्य चोदना सौमिकस्य नैष्टिकस्य । प्रयोगापेक्षश्चारम्भ उक्तः । स पदार्थः आद्यो वा भवतु औदासीन्याद्वा प्रच्युतिः उभयथापि न दीक्षणीयाप्रयोगापेक्षः । कथ तेषां प्रयोगो नास्तीत्यत्राह—**ज्योतिष्टोमप्रयोगचोदनैषा न दीक्षणीयादेर्यतः ।** तस्माल्लुप्तनिमित्तमारम्भणीयादि न क्रियेत दीक्षणीयाद्यर्थम् । अपि चेत्यभ्युच्चयमात्रम् न्यायव्युत्पत्तिपरत्वादधिकरणस्य । अतः प्रभृति च स्थिते निमित्तद्वारके बाधे तद्भावमात्रपरीक्षणं द्रष्टव्यम् । निमित्ताभावनिबन्धनत्वात् निमित्तद्वारको बाध इत्युक्तम् ।

**॥ ३ ॥ प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥**

**अत्राङ्गप्रधानसाधारणप्रयोगचोदनेति** मत्वा पूर्वपक्षवादी **अन्वारम्भणीयां मन्यते ।** पूर्वत्र हि प्रधानस्यैव प्रयोगो नाङ्गानामिति अङ्गानामारम्भाभावात् तन्निमित्तमारम्भणीया न कर्तव्या । इह त्वैष्टिकानामपि प्रधानत्वात् कर्तव्याऽऽरम्भणीया । न च ज्योतिष्टोमस्यैव प्रयोगचोदना । एतदेव विवृणोति—**नायमनिष्टेरेव प्रयोगः ज्योतिष्टोमस्यैव । किं तर्हि ? साधारणः प्रयोगः । तेनारम्भोऽपि साधारणः तेनारम्भस्य भावात् कर्तव्याऽऽरम्भणीया ।** (न)[स]च ज्योतिष्टोमादीनामविरोधमावहति, कांस्यभोजिवदमुख्येपीति न्यायात् । सौमिकदार्विहोमिकानां हि क्रियमाणायामारम्भणीयायां न कश्चिद्विरोधः । अक्रियमाणायां वा ऐष्टिकानां वैगुण्यम् । यथा कांस्यभोजिनः शिष्यस्य कांस्येऽनुपाचे ।

राद्धान्तैकदेशी पूर्वपक्षमाक्षिपति—**किमिदं वचनं न पश्यति अग्निष्टोमं प्रथममाहरतीति ।** अनेन किल वचनेन अन्वारम्भणीयाकार्येऽग्निष्टोमविधानात शरविधानादिव बर्हिरारम्भणीया निवर्तत इति मन्यते । समाधत्ते—**बाढं पश्यति वचनं, किन्तु फलार्थस्यैवाग्निष्टोमस्यायं प्रथमप्रयोगो अभिधीयते । नारम्भणीयार्थेन विधानमिति पश्यति** क्रममात्रविधानपरमिदं वचनं नारम्भणीयाप्रत्याम्नायार्थम् ।

**एवं प्राप्तेऽभिधीयते—नारम्भणीया** कर्तव्या **यस्मादग्निष्टोमारम्भोऽयं प्रयोग उक्तः ।** अस्य ग्रन्थस्यार्थमबुद्ध्वा आरम्भणीयाकार्ये विधानाभिप्रायमेतदिति

मत्वा चोदयति—**सत्यमुक्तं नान्वारम्भणीयार्थेनाग्निष्टोमविधानमिति**[1]। राद्धान्ती परिहरति—**केन चोक्तमन्वारम्भणीयार्थेनाग्निष्टोमविधानमिति**। एवमप्याशयमजानानश्चोदयति—**यद्यारम्भणीयार्थेन विधानं न सम्भवति किमिति तर्हि अलुप्तार्था आरम्भणीया न क्रियते**। परिहरति–**इष्टीनामग्निष्टोमारम्भेणारम्भावलोपात्**। अस्यार्थः—अग्निष्टोमस्य [2]प्रथमानुष्ठानात् गृह्यमाणविशेषतया तस्यैवारम्भः। तदारम्भेणैवैष्टिकानामपि कर्मणामनुष्ठानमिति तेषामारम्भावलोपात् आरम्भणीया न कर्तव्या। न चाग्निष्टोमारम्भोऽन्वारम्भणीयां प्रयोजयति। न चासौ कृतारम्भणीयस्य भवतीत्युक्तं कारणान्तरस्यारम्भणीयां प्रति अप्रयोजकत्वेन। तस्मादत्राप्यनन्वारम्भणीयक एव प्रयोग इति सिद्धम्।

॥ ४ ॥ **तस्यां तु स्यात् प्रयाजवत्** ॥ ६ ॥

अत्र पूर्वपक्षमाक्षिपति—**ननु चारम्भणीयाशास्त्रे प्रकृतिवद्विधानं नान्वारम्भणीयाकार्यमतिदेष्टुं क्षमम्। कुतः? अनेनैवारम्भणीयाकार्यविधानशास्त्रेणैव कार्यमवगच्छामोऽत्रैवातिदिशाम इति**। बालक्रीडितमेतत्। आत्माश्रयदोषप्रसङ्गात्। तस्मान्नात्र निराकरणीयमिव किञ्चित्पश्यामः।

समाधातैकदेश्याह—**अत्रोच्यते अपरिसमाप्तधर्मकं वा दर्शपूर्णमासानुष्ठानं, कथं तद्वदित्यतिदेष्टुं शक्यते**। अस्यार्थः - आरम्भणीययैव सह दर्शपूर्णमासयोः इतिकर्तव्यता कल्प्यते[3]। ततश्चारम्भणीयां परित्यज्य दर्शपूर्णमासयोरुपकारो नातिदेष्टुं शक्यते। तेन प्रयाजाद्यतिदेशाभ्युपगमे आरम्भणीयाप्यतिदेष्टव्येति भावः।

आक्षेप्ता आह—**कथं वा दर्शपूमासोपकारमपेक्षते। अन्वारम्भणीयाङ्गकार्यं दर्शपूर्णमासोपकारमपेक्षते। आत्माश्रयदोषप्रसङ्गात्**। न्यायस्तावदयं न कश्चिद्दोष इति। स एवाह—**किं वा [4]आत्मप्रत्यक्षस्य हानम्? यद्यपि**

---

1. R नारम्भणीयार्थेनेत्युक्तम्
2. A प्रधानानु
3. A वकल्प्यते
4. R अस्म प्र

अपरिसमाप्तधर्मकं दर्शपूर्णमासानुष्ठानं नातिदिश्यते तथापि अस्माकं न किञ्चिद्धीयते। समाधातैकदेश्याह—**यद्यारम्भणीया नातिदिश्यते** तदा प्रयाजादेरप्यनतिदेशः। असम्पूर्णेतिकर्तव्यतातिदेशायोगात्। इष्यते च भवद्भिः प्रयाजादेरतिदेशः। तेन स एव हीयते। एकग्रन्थेनाह—**तस्मादन्वारम्भणीयापि कर्तव्या। यदि प्रयाजादेरतिदेशः आरम्भणीया नातिदिश्यते तदा प्रयाजादेर्वाऽनतिदेशः।** आक्षेप्ता आह—**वरमनतिदेशो न्यायोपपन्नः प्रयाजादीनां न पुनरक्लृप्त-स्योपकारस्यातिदेशः।** आरम्भणीयायां तु आरम्भणीयाकार्येऽतिदिश्यमाने अक्लृप्तस्यैवोपकारस्यातिदेश आपतति यथैतद्वचनं; स चायुक्त इति। परम-समाधाता आह—**सोऽयं 'आम्रान् पृष्टः कोविदारानाचष्टे' इत्यापतितम्।** यथा कश्चिच्छून्यमनाः[1] के आम्रा इति पृष्टः तद्वचनार्थमबुद्ध्वा आह—इमे कोविदारा इति, तथैतत्सकलमस्मद्वचनमबुद्ध्वा चोदितं भवतेति।

समाधाता स्वाभिप्रायं प्रकटयति—**कृतारम्भणीयस्य हि दर्शपूर्णमासौ चोद्यते, न पुनः दर्शपूर्णमासाङ्गत्वेन चोदना।** अस्यार्थः - नारम्भणीया दर्शपूर्णमासाङ्गत्वेन चोद्यते। कुतः? (ततः)कृतारम्भणीयस्यैव हि पुरुषस्य दर्शपूर्ण-मासौ चोद्येते। तेन नारम्भणीयायाः दर्शपूर्णमासाधिकाराङ्गत्वम्। ततः किं? **इदं ततो भवति। न दर्शपूर्णमासविध्यन्तातिदेशः आरम्भणीयायां शक्यते वारयितुम्। कुतः? विनाप्यारम्भणीयया निर्ज्ञातोपकारो दर्शपूर्णमास-प्रयोगो यतः।** अस्यार्थः—अङ्गान्येव गृहीत्वा करणोपकारः परिकल्प्यते। तेषामेव तज्जनकत्वात् ग्राहकैदमर्थ्यवशेनादृष्टमपि करणोपकारकत्वं कल्प्यते। तच्चाङ्गानामेव ग्राहकैदमर्थ्यम् तेनानङ्गभूतान्वारम्भणीयाव्यतिरेकेण निर्ज्ञातोपकारात् दर्शपूर्णमासप्रयोगादारम्भणीयायामतिदेशो न विरुद्ध्यते प्रयाजादीनाम्। **ननु चारम्भणीयाप्येवमेव भवितुमर्हति।** अस्यार्थः - यथा प्रकृतौ कृतारम्भ-णीयकेन कृतोपकारक आरम्भः इति आरम्भणीया प्रसज्यते तथा आरम्भणीया-यामप्यारम्भणीया प्राप्नोति। ततश्चाव्यवस्थादोषेण व्यवस्थासिद्ध्यर्थं अतिदेशत्याग एव युक्त इति भावः। परिहरति—**सत्यमेतत् अत एवानधिकारमाशङ्कते पूर्वपक्षवादी।** यत एवान्वारम्भणीयासंस्कृतेन पुरुषेण कृत आरम्भ उपकारकोऽत

1. R अन्यमनाः

एव द्वितीयामारम्भणीयां आरम्भणीयायां अनधिकारमाशङ्कते पूर्वपक्षवादी, न चानवस्थेत्युपसंहारव्याजेन दर्शयति—**तस्मात् सामर्थ्यतो ज्यायसीं व्यवस्थां मन्यते ।** सर्वास्ववस्थासु शक्तिरेव नियामिका । तेन यावच्छक्त्यतिदेशो भवति ।

राद्धान्तस्तु—**दर्शपूर्णमासावारभमाण इत्यारम्भणीयायामारभमाणोऽधिकृतः ।** अस्यार्थः—दर्शपूर्णमासारम्भप्रवृत्तस्यारम्भणीयायामधिकारात् पृथगारम्भणीयायामारम्भो नास्ति । तदाह—**अतोऽनन्वारम्भमारम्भणीयां प्रयोक्तुमर्हति । तस्मान्नाधिकारमपेक्षते** इत्याम्भणीयत्वं नापेक्षत इत्यर्थः । तदिदं कृतारम्भणीयत्वं निश्चिमप्यारम्भणीयायामधिकारे निमित्तनिबन्धनं मिथ्यात्वं गतम् । आरम्भरूपनिमित्ताभावे हि मिथ्याभाव इत्यर्थः ।

यः पुनरयं द्वितीयः परिहारः न तदेव शास्त्रमर्थद्वयाय प्रभवति आरम्भणीयाकार्यमवगमयितुं तत्र चातिदेष्टुमिति । अङ्गत्वाभ्युपगमे न सः ; अङ्गत्वे ह्यारम्भणीयाशास्त्रमप्यङ्गत्वकल्पनायां व्याप्रियते । **ननु चायमङ्गत्वाभ्युपगमः प्रयाजादेरप्यतिदेशं वारयति अपरिपूर्णधर्मकस्योपकारकस्य अनतिदेशात् ।** परिहरति —**न, अभावप्रदर्शनमात्रपरत्वात् ।** आरम्भणीयायामारम्भणीया नास्ति इत्येतावन्मात्रपरमेतत् । न चाभ्युपगमे दोषान्तरापत्तिः । तस्मात्सूक्तम् ।

**॥ ५ ॥ कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥**

यूपोत्पत्त्यर्थता अस्या यूपाहुतेर्न त्रियत इति पूर्वपक्षवादिनः खलेवाल्यामपि यूपाहुतिः कर्तव्येति वदतोऽभिप्रायः । **का युक्तिः यूपानुत्पत्त्यर्थत्वे ?** उत्तरं—**तक्षणादीनामिवोत्पत्तौ न कश्चिद्व्यापार उपलभ्यते । तस्माददृष्टार्थतया परिव्याणादिवत् खलेवाल्यामपि यूपाहुतिः कर्तव्या ।** खदिरादयो हि यूपीभवन्ति । तत्र च यत् खदिरादिषु व्याप्रियते कर्म तस्यैव खदिरसंस्कारेण यूपोत्पत्त्यर्थत्वं युक्तम् । न च यूपाहुतेः खदिरादौ कश्चिद्व्यापार उपलभ्यते । तस्माददृष्टार्थतया परिव्याणादिवत् खलेवाल्यामपि यूपाहुतिः कर्तव्या ।

**राद्धान्तस्तु सत्यं न कश्चित् दृष्ट उपकारः उत्पत्तावुपलभ्यते तक्षणादिशब्देन तूत्पत्त्यर्थतामवगच्छामः यूपमच्छेष्यता होतव्यमिति ।**

कथं ? अच्छशब्दो हि आतुमित्यस्मिन्नर्थे प्रसिद्ध इत्यभियुक्ता उपदिशन्ति । भवत्वा-प्त्यर्थता । तथापि कथमुत्पत्त्यर्थतेत्याह—**उत्पत्तिश्चाप्तिर्यूपस्य** । उत्पादयन्नेव यूपमाप्नोति यतः नान्येन प्रकारेण । यतो यूपोत्पत्त्यर्थताऽतो न खल्वेवाल्यां कर्तव्या । अयूपे हि पशुर्बध्यत इति सिद्धम् । तेन यूपे नैव प्रयोजनमिति यूपार्था सती न क्रियते ।

॥ ६ ॥ स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥

**ननु यूपस्योत्पाद्यत्वेन सर्वयूपसम्बद्धं तदुत्पत्त्यर्थमित्युक्तम्** । यस्य यूपमच्छेष्यतेति यूपसम्बन्धोऽवगम्यते तद्यूपोत्पत्त्यर्थं यूपस्योत्पाद्यत्वादित्युक्तम् । तेन स्थाण्वाहुतिर्यूपोत्पत्त्यर्था । समाधत्ते—**सत्यमुक्तम् तदेवेदमाक्षिप्यते** । कथमा-क्षेपः ? **स्थाणुमात्रसम्बन्धात् स्थाण्वाहुतेः न यूपीयस्थाणुसम्बन्धोऽव-गम्यते** । किं तर्हि ? स्थाणुमात्रसम्बन्धः ततश्च न यूपसम्बन्धोऽवगम्यते । असंयुक्तश्च प्रकरणेन गृह्यत इत्यारादुपकारकत्वम् । इदमत्राकूतं—संस्कारवशेन खदिरादयो यूपीभवन्ति । संस्कारश्चायं लौकिकः पदार्थः संस्कारसम्बन्धिनि वा क्रियमाणेन कर्मणा जन्यते । न च स्थाण्वाहुतिर्यूपे यूपसम्बन्धिनि वा क्रियत इति असंस्कारिका । अच्छशब्दश्च कथञ्चिद्व्याख्येय इति । एवं च यूपाहुतिरप्यारादुपकारिका । सापि हि न यूपसम्बन्धिनी । अथ यूपसमीपे क्रियमाणा यूपार्था । तत्राह—**किञ्च अवश्यमेवमभ्युपगमनीयम् यूपाहुतिर्यूपसमीपे क्रियमाणतया यूपसम्ब-न्धिनी न भवतीति । अन्यथा यूपाहुतेरेकादशिन्यां तन्त्रता न स्यात्** । यदि यूपसमीपे क्रियमाणा यूपसम्बन्धिनी तदा समीपदेशभेदात् तन्त्रता यूपाहुतेर्न स्यात् ।

**ननु च यूपाहुतिर्यूपार्थेत्युक्तम् । सत्यमुक्तं तदेवायुक्तं मन्यते** । तन्त्रता वा हातव्या । यूपोत्पत्त्यर्थता वा इत्यभिप्रायः ।

**राद्धान्तस्तु—अच्छेष्यतेति वचनात् यूपार्थैवावगम्यते स्थाण्वाहुति-रिति च यूपसम्बन्धिन्येव स्थाणौ प्रतीयते** । न हि प्रकृतविशेषणहाने प्रमाण-मस्ति । स्थाणुशब्दोऽयं यौगिको व्यक्तिवचनः । व्यक्तिवचनाश्च सन्निहितां व्यक्तिं नातिक्रामन्तीति यूपसम्बन्ध्येव स्थाणुः । ननु च यद्यप्यसौ(दाय) [न यूप] सम्बन्धी तथापि ततोऽपि युक्तः कथं तत्सम्बन्धेन यूपसंस्कारः इत्यत्राह—**तरुवियुक्तसंस्कारेऽपि**

**तद्वतः संस्कारमिच्छन्ति लौकिकाः** यथा देवदत्तशिरसोऽवतारितायाः स्रजः शुचिदेशनिधानेन संस्कृतायाः देवदत्तस्य संस्कारः। लौकिकश्चायं संस्कारपदार्थो ऽभ्युपगतोऽवहन्त्यादिवत्। शब्दात्तु नियममात्रम्। तेन यूपसम्बन्धिस्थाणुसम्बन्धात् स्थाण्वाहुतेर्यूपोत्पत्त्यर्थता। यूपाहुतेस्तु अन्तिकदेशस्याविवक्षा। आपेक्षिकत्वा-दन्तिकदेशस्येत्युक्तम्। तेनैकत्र क्रियमाणा यूपाहुतिः सकलयूपान्तिकेषु कृता भवति आपेक्षिकत्वादन्तिकदेशस्य। तस्मान्न दोषस्तन्त्रतायाः। यूपान्तिकेष्वपि क्रियमाणायाः यूपाहुतेः तन्त्रतोपपत्तेः तन्त्रता यूपार्थतां न दूषयतीत्यर्थः। **दर्शनमुक्तम्।**

**॥ ७ ॥ प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥**

स्वाहाकारं यजतीति द्वितीयानिर्देशात् देवताभिधानं पूर्वपक्षवादी मन्यते। यथा विष्णुं यजतीति द्वितीयानिर्देशात् विष्णोर्देवतात्वम् तथा स्वाहाकारं यजतीति स्वाहाकारस्यापि। युक्त्यन्तरं चाह—**कर्माभिधानपक्षेपि चारादुपकारकमेव कर्मणः प्राधान्यात्।** यद्यपि स्वाहाकारशब्दः कर्मनामधेयं तथापि द्वितीयानिर्देशात् प्रधानकर्मावगतेः तद्देवतास्मरणार्थत्वम्। तस्माद्व्यतिरिक्तार्थतैव वरम्। यदि हि सन्निपत्योपकारकता कर्मणः स्यात् तदा तल्लोभेनाव्यतिरिक्तार्थता यजतिशब्दात स्वाहाकारशब्दस्याङ्गीक्रियते। यदा तु कर्मनामधेयत्वेप्यारादुपकारकता तदा किमर्थं तद्व्यतिरिक्तार्थता नाश्री(ऽङ्गीक्रि)यते। वरं व्यतिरिक्तार्थतैव भवतु। तथा सति को गुण इत्याह–**पदभेदश्चास्मिन् पक्षे न्याय्यो भवति अर्थभेदात्।** अन्यथा हि अर्थाभेदेऽपि पदभेदाभ्युपगमः कार्यः। न चैतदुचितम्। अन्यायश्चानेकशब्द-त्वमिति।

नन्वेवं कथं स्वाहाकारस्य शब्दमात्रस्याग्न्यादिशब्दैः मन्त्रगतैरभिधानं इत्य-त्राह—**अग्न्यादीनां च शब्दानां गुणादप्यभिधानसिद्धिरिति समञ्जसम्।** गुणयोगे न मुख्या वृत्तिर्भविष्यति यदि वा गौणीवृत्तिः शक्त्यन्तरकल्पना वा ज्योतिरादिपदानामिव। यथा ज्योतिरादयः कर्मण्यपि वर्तन्ते तथाऽग्न्यादयोऽपि स्वाहाकारे तथा दर्शितं भाष्ये। मातेति शब्दो मातरमपि वक्ति मातारमपि धान्यादीनां इति। यदि पुनरग्न्यादयो देवताः तदा[1]देवतानामग्न्यादीनामपि

---

1. A देवतानामपिकल्पनात्

विकल्पः स्यात् मन्त्रस्य विभागः स्यात्। तत्तद्देवताप्रकाशकभागकल्पनया तदाह—**अन्यथा हि देवताविकल्पः स्यात्**[1] **मन्त्रविभागश्चेति**। तस्मादेतदितर-प्रयाजवदयमप्यारादुपकारक इति साहचर्यमप्युपन्यस्तम्। एवं पूर्वपक्षितम्। सम्प्रति चोदयति—ननु गौणे सम्भवति शक्त्यन्तरकल्पना न न्याय्या। यत्र हि क्लृप्तशक्त्यनुसारेणार्थान्तरप्रतीत्युपपत्तिः तत्र शक्त्यन्तरकल्पना न युक्ता कार्यस्या-न्यथाप्युपपत्तेः। परिहरति—**सत्यं यत्रान्वय्यवयवार्थः अर्थान्तरसम्बन्धस्य वाऽन्यत्र विधानम्। इहतु उभयं नास्तीति मतेत्येवमुक्तम्**[2]। द्विधा हि गौणा भवन्ति ये गुणयोगाद्वर्तन्ते यथा गार्हपत्ये [3]विनियोगादिन्द्रशब्दः। स च यत्रावयवार्थोऽन्वयी तत्र भवति। तथा सादृश्यवशेन वर्तमानो गौणः यथाऽग्निहोत्र-शब्दः कौण्डपायिनामयनीये होमे। स चार्थान्तरभूतनैयमिकाग्निहोत्रसम्बद्धस्य विध्यन्तस्यान्यत्र कौण्डपायिनामयनीये होमे विधानाद्भवति। इह तु तदुभयं नास्तीति गौणत्वासम्भवात् शक्त्यन्तरकल्पनायां मातेति मातारमपीति यदुक्तं भाष्ये तदेव युक्तम्।

एवं प्राप्तेऽभिधीयते—**कर्ममात्रविधानमिदं स्वाहाकारं यजनीति न देवताविशिष्टकर्मविधानम् लाघवात्**। **ननु च देवताविधानमिदं स्वाहाकारं यजतीत्युक्तम्**। परिहरति—**न हि अज्ञातदेवताज्ञापनेऽत्र प्रमाणमस्ति। न द्वितीया देवतात्वे**[4] **स्मर्यते**। ननु पदयोर्व्यतिरिक्तार्थतैव देवतार्थत्वे प्रमाणम्; तत्राह—**ज्ञाते हि देवतात्वे व्यतिरेकः व्यतिरेके च देवतात्वमिति इतरेतराश्रयता भवति**। **विष्णुं यजतीति चोदनान्तरेण देवता-वावगमान्न दोषः**। **तस्मात्कर्माभिधानमेवैतद्युक्तं सामानाधिकरण्यात्**। **ननु च कर्मविधानेपि प्राधान्यमेव कर्मणोऽवगम्यत इत्युक्तम्**। परिहरति—**केन वा विधाने** विधानावस्थायां **प्राधान्यं नेष्यते यागो ह्यकर्मकतया स्वप्रधान एवोत्पत्तिदशायाम् प्रयोजने तु** प्रयोजनकल्पनायां तु **गुणभावो न अवहन्त्यादि-वत् स्वत एव गुणभाव इति। न च विधाने** प्राधान्यं प्रमाणान्तरेणावगम्यं **गुणभावं निरुणद्धि**। तस्मात् देवतासंस्कारतयाऽत्र दृष्टार्थतैव यागस्येति युक्तम्।

---

1. R मन्त्रविकल्पवि
2. मातेतिवद्युक्तम् A
3. अवयवयोगात् R
4. देवतार्थे R

ननु च देवताविकल्पो मन्त्रविभागश्चेति प्राप्नोतीति चोदितम् । उत्तरं— न प्राप्नोति संस्कारविशेषात् । एतदेव विवृणोति—न गृह्यते हि संस्कारे विशेषः । अस्या देवतायाः संस्कारोऽस्या नेति । अतस्सर्वदेवता-संस्कारेऽपेक्षितत्वात् प्रयोगस्य तथैव देवताभावोऽपि इति न्याय्यम् । अस्यार्थः—सर्वासां देवतानां संस्कारस्यापेक्षितत्वात् प्रयोगविधिना सर्वदेवतासंस्कारो देवतात्वं च कल्प्यते (न) सर्वसंस्कारानुगुणं मिलितानामेव स्वाहाकारे देवतात्वं कल्प्यते । लिङ्गमुक्तम् ।

॥ ८ ॥ तथाऽऽज्यभागाग्निरपीति चेत् ॥ १६ ॥

पूर्ववदत्रापि दृष्टार्थतैव देवतासंस्कारत्वेनाज्यभागस्य न्याय्या इत्याशङ्क्य, न दृष्टार्थता देवताया अप्रत्यभिज्ञानादिति राद्धान्तितम् । यदि हि आग्नेये या च देवताग्निः सैवाज्यभागेऽपीति प्रत्यभिज्ञानं स्यात् तदा स्यात् संस्कारत्वम् । न चात्र प्रत्यभिज्ञानम् । दर्शिता चाप्रत्यभिज्ञा आवाहननिगदे । 'अग्निमावह' सोममावह' 'अग्निमावह' इति पठितम् । तत्र यद्याग्नेयस्य अग्निराज्यभागेऽपि देवतेति स्यात् तदा प्रथमेन अग्निमित्यनेन आग्नेयस्य प्रधानस्य देवता प्रकाश्या । सोममग्निमित्यनेन उपांशुयाजदेवता अग्नीषोमौ प्रकाश्यौ तत्र च क्रमविपर्ययः । देवतान्तरीये त्वाज्यभागीये अग्निं सोमं इत्याज्यभागयोः देवते प्रकाश्ये तदनन्तरं च प्रधानदेवता अग्निरिति युक्तम् । कथं तर्हि देवताया गुणभावः ? उत्तरं— भूतत्वात् देवताया भव्यत्वाच्च कर्मण इति न्याय्यता गुणभावस्योक्ता । न्याय्यां गुणभावो न वाचनिक इत्यर्थः ।

॥ ९ ॥ पशावपीति चेत् ॥ १९ ॥

अत्र पूर्वपक्षवादी लतासोमे प्रणीयमानाग्न्यभिधानं मन्वानः अर्थ-वादादप्रत्यभिज्ञां मन्यते । आसोमं वहन्तीत्यर्थवादात् लतासोमप्रणीयमानाग्न्य-भिधानं अग्निसोमशब्दयोः पशौ मन्यमानः पुरोडाशे च नियोग[त]स्तद्वचनता नास्तीति प्रत्यभिज्ञाया अभावं मन्यमानः पूर्वपक्षवादी आरादुपकारकः पशुपुरोडाश इति वदति । संस्कारकर्मपक्षे उत्कर्षाशङ्काऽत्र सौत्रामण्यां विप्रतिपन्नदेवतात्त्वात् पशूनां पुरोडाशानां च । यत्र सम्प्रतिपन्ना देवता तत्र पुरोडाशानामुत्कर्षः स्यात् । आरादुपकारकत्वे त्वनुत्कर्षः गुणाभिधानं च तुल्यम् । यथा पशौ गुणत्वेनाभि-

धानं तथा पुरोडाशेऽपीति। कथं तस्याः प्राधान्यं मुख्या च धर्मप्राप्तिः अन्यथा वक्तव्येति गुणभावेऽग्नीषोमयोः मुख्या च धर्मप्राप्तिः। गुणभूतयोरेव ह्यग्नीषोमयोः प्रकृतौ धर्म उपदिष्टः स गुणमात्रे मुख्यो भवति। प्राधान्ये तु सति गुणकार्यकरत्वेन धर्मप्राप्तिर्वक्तव्या। सा क्लेशसाध्या परिहृता भवति। पुरोडाशेपि देवताया [1]गुणभावाङ्गीकरणेन।

तदिदमुक्तं भाष्ये—"पराजितेऽपि हेतुः केनचिद्विशेषेणानुप्राण्यत" इति। सोऽयं विशेषः।

सिद्धान्तस्तु—नाज्यभागवद्प्रत्यभिज्ञाकारणमत्रास्ति। प्रत्यभिज्ञा चेन्न दृष्टार्थताहानं सम्भवतीत्युक्तम्। विशेषे तु पूर्वपक्षानुप्राणनहेतौ तूक्तः परिहारोऽर्थवादेन। ननु [2]चार्थवादोऽभिधानान्यत्वे हेतुरुक्तः परिहृतोऽर्थवादान्तरेण यद्दैवत्यः पशुः तद्दैवत्यः पुरोडाश इत्यनेन।

ननु च प्रकरणवशादृते संस्कारकर्मता न सम्भवति। अस्यार्थः—[3]प्रकरणनियोगेनावमर्शे संस्पर्शे सति संस्कारकर्मता अन्यथा स्वतन्त्रकर्म किमिति न भवति। प्रकरणावमर्शश्चेत तदा साक्षादेवोपकारकत्वम्। ततश्चारादुपकारकतेति गूढाभिप्रायः।

परिहरति—केन चोक्तं सम्भवतीति वयमपि प्रकरणावमर्शादृते संस्कारकर्मता न भवतीति ब्रूमः। पुनश्चोदयति—एवं तर्हि प्रकरणादारादुपकारकतैव भवतु। परिहरति—किं न दृष्टेऽर्थे प्रकरणोपकारः। एकग्रन्थेनाह—दृष्टेचादृष्टे च प्रकरणसम्बन्धस्याविशेषात न दृष्टार्थः शक्यते बाधितुमित्युक्तो हेतुः स्वाहाकारे। तेन दृष्टप्रयोजनानुसारेण परम्परया प्रकरणोपकारकत्वाश्रयणम्। शेषमुक्तम्।

॥ १० ॥ चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥

स्थाल्या मुख्यार्थतां मन्वानोऽनदनीयेन द्रव्येण यागविरोधात् कपालविकारश्चरुरिति मन्यते। अस्यार्थः—स्थाल्याः पूर्वसिद्धत्वात् तद्वचन एव

---

1. A अंशे निर करणे गुणभ वः स्य त्
2. R अर्थवादाभिधानत्वे हेतु
3. प्रकरणेन

चरुशब्दः। तद्योगादोदने वर्तते। तत्रापि स्थाली न हविष्ट्वेन विधेया अनदनीयत्वात्। अनदनीयेन च यागे क्रियमाणे शिष्टाचारविरोधात्। पाकाधारत्वेन कपालस्थाने स्थाली विधेया। दर्शनं च दर्शितमस्य पक्षस्य। उपरितनपक्षान्तरमाह—**तद्धितार्थानुपपत्तेः हविर्विकार इति स्थितम्।** सौर्य इति तद्धितेन देवता हविषा सम्बध्यते न पाकाधारेणेति हविष्ट्वेनैव स्थाल्या विधानम्।

राद्धान्तमाह—**ओदनेऽपि च मुख्यार्थे सम्भवात् तद्योगाच्च स्थाल्यां प्रयोगोपपत्तेः अदनीयश्रुतिविरोधाच्च। क्वचित् श्रपयतीति चरौ श्रवणात् ओदनेन हविर्विक्रियत इति स्थितम्।** अस्यार्थः - यदि स्थालीवचनः चरुशब्दः स्यात् तदा हविष्ट्वं तस्या वाच्यम्। ततश्चानदनीयेन यागः क्रियेत इति शिष्टाचारो बाधनीयः। ओदनवचनत्वे तु नास्ति शिष्टाचारविरोधः इति तद्वचन एव चरुशब्द इति निर्णीयते। सम्भवति तद्वचनता। तद्योगेन च स्थाल्यामपि प्रयोगो घटते। आधारवचनता शिष्टाचारविरोधेन त्यज्यते। क्वचिच्चरोः श्रपणं विधीयत इत्योदन एव हविरिति स्थितम्। **शेषमुक्तम्।**

॥ ११ ॥ स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥

अत्र यावद्भिरुद्धचते तावन्निवर्तते। न च कपालस्य कश्चिद्विरोधः। किन्तु सङ्ख्यायाः। तस्मादष्टसङ्ख्यां परित्यज्य कपाल एव चरुः श्रपणीय इति पूर्वः पक्षः।

न कपालः प्रकृतिवदुपकर्तुं शक्नोति। तद्धि पाकहेतुः, पाकाधारत्वेन प्रकृतावुपकारकम्। ओदनश्च उदकगतेनोष्मणा पच्यत इत्यर्थलोपादप्राप्तिः कपालस्यापि सङ्ख्याया इव। इदानीं पात्रनियमे प्राप्ते यासु स्थालीषु सोमाः स्युः ते चरव इति लिङ्गदर्शनात् चरुशब्दाभिधेयायाश्च पक्तेः स्थाल्यामेवाभिनिर्वृत्तेः सौकर्यात् स्थाल्यामेव पक्तव्य इति स्थितम्। एतच्च सुहृद्भावकथनमात्रम्, न तु स्थाली विनियुक्तेत्येवंपरं तत्। **शेषमुक्तम्।**

किं भवति प्रयोजनम्? यदि कपालविकारश्चरुः यदि वौदनेन हविर्विक्रियत इति। अत्र स्थाल्याः पुनर्हविर्विकारे को विशेष इति न चिन्तितम्। सुज्ञानत्वादवघातादिबाधस्य।

॥ एवं वा ॥

अत्र पुनरधिकरणे प्रयोजनत्वे पेषणादिलोपं व्याख्याय पुनरधिकरणान्तरकरणात् क्वचित् किञ्चिदपनेयमस्तीत्यभिप्रायः ।

ननु च मन्दशङ्का नापनेयेत्यत्राह **मन्दविषेणापीति दर्शितम्** । यो मन्दविषेण वृश्चिकेन दष्टो न मुमूर्षति सः नाचिकित्स्यो यथा तथा मन्दाशङ्काव्याकुलितः शिष्योऽपीति दर्शितं भाष्ये । तत्र बहुषु अनुष्ठानसम्भवं अनर्थलोपं च मन्वानेन पूर्वपक्षितम् । क्वचिदविरोधेन।निवृत्तिः क्वचिदार्थस्यैव चोदनार्थितां मन्यते । संवप(चय)नादीनां शक्यतयाऽनुष्ठानसम्भवमात्रेणोपकारकत्वम् । अस्ति चात्रानुष्ठानसम्भवलक्षणोऽनर्थलोप इत्यभिमानवान् पेषणादीनां दृष्टार्थानां अविरोधात् पिष्टकमयस्यापि चरोः दर्शनात् व्युद्धरणस्य चार्थस्य विधेयत्वबुद्धया पूर्वपक्षितम् ।

**राद्धान्तस्तु—न शक्यतयाऽनुष्ठानम् नाप्यविरोधात्** । नाप्यर्थोऽतिदिश्यते किं तर्हि ? कार्यतोऽनुष्ठानं धर्माणां तदभावाच्च निवृत्तिः । वचनाच्च कार्यकल्पना । तेनार्थस्य कार्ये करणोपकारेऽननुप्रवेशान्नातिदेश इति सूक्तम् ।

॥ इति श्रीशालिकमिश्रविरचितायां ऋजुविमलायां

पञ्चिकायां दशमस्य प्रथमःपादः ॥

—:*:—

ऋजुविमलायां

# दशमाध्यायस्य द्वितीयः पादः

॥ १ ॥ कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

कथं पुनरत्र पूर्वःपक्षः ? पूर्वपक्षेऽपि हि वचनमपि विद्यत एव । समाधत्ते—न वचनशतेनापि अशक्नीयोऽर्थः शक्यते विधातुम् । कथमशक्यतेत्यत्राह—पचेर्हि विक्लित्तिः प्रधानोऽर्थः । न चासौ कृष्णलेषु विद्यत इति किमत्र वचनं करिष्यति । अस्यार्थः - महाभाष्यकारेणोक्तं - पचेर्हि विक्लित्तिः प्रधानोऽर्थ इति । प्रधानो मुख्य इत्यर्थः । दृश्यते च लोकेऽपि पच्यन्ते तण्डुला इति विक्लित्तिवचनता पक्तेः । देवदत्तः पचतीत्यादावपि तण्डुलसमवायिन्यामेव विक्लित्तौ देवदत्तः कर्ता, तदधीनत्वात्तस्याः । विक्लित्तिश्च गन्धरूपस्पर्शरसादिविशेषात्मिका । तेन पुरोडाशादीनामपि पाकस्सिद्धो भवति । न च तैजसानां कृष्णलादीनां रूपादिविशेषेऽस्तीति पाकस्याशक्यत्वान्न वचनशतेनापि विधानमुपपद्यते । एकग्रन्थेनाह—अथ तु सन्तापजननमात्रं पाकः तथापि चोदकेनैव प्राप्नोतीति वचनेन किं ? विक्लित्तिफलको यो व्यापारः स एव यदि पचेरर्थः ततः प्रकृतावपि स एव विधीयते ततश्चोदकेनैव कृष्णलेष्वपि प्राप्नोतीति विधानमनर्थकम् । दोषान्तरं चाह—अवघातादि च दुर्निवारं तदा भवति । यदा व्यापारवचनता धातूनां तदा हन्तेरपि उद्यमननिपतनमात्रार्थत्वात् कर्तव्यतैव प्रतीयते ।

अथोच्यते तुषकणविमोचनात्मकफलाभावात् अकरणं पाके तुल्यं उपदिष्टेपि पाके तुल्यं फलाभावादकरणम् । तस्मादकर्तव्यतामेव मन्यमानस्य पूर्वःपक्षः । वचनमिदानीं किमर्थं यदि पाकस्याकर्तव्यता । उत्तरं—अनर्थकं च । अवगम्यमानार्थतया हि वचनमर्थवत्, न वचनेनार्थवता भवितव्यमिति प्रमाणमस्ति ।

राद्धान्तस्तु सत्यमाह भवान् फलाभावात् न कार्यतः प्राप्तिरस्तीति । वचनं पुनः न निवारयितुं शक्यते । तेन वाचनिकः पाको भविष्यति ।

**ननु वचनशतेनाप्यशकनीयोऽर्थो न विधातुं शक्यत इत्युक्तम्।** परिहरति—**एतदपि सत्यम् अशकनीयोऽर्थो न विधातुं शक्यत इति।** पुनः पूर्वपक्षी पृच्छति—**कथं तर्हि पाकस्य कर्तव्यता अशकनीयतया विधानासम्भवात्।** सिद्धान्तीत्वाह—**शब्दार्थस्य सम्भवात्।** योऽसौ विक्लित्तिफलको व्यापारः स एव पचिनोच्यते पूर्वभावित्वात्। तत्कार्यतया लक्षणया विक्लित्तौ पचेः प्रयोगः पच्यन्ते तण्डुला इति। एवं च देवदत्तः पचतीति स्वसमवायिन्येव व्यापारे देवदत्तस्य कर्तृत्वम्। यश्चासौ गन्धादिवरावृत्तिहेतुभूतोऽन्यवयवसंयोगफलको व्यापारः स एव यदि शब्दार्थः कृष्णलेष्वपि सम्भवति। तेषामप्यवयवसंयोगोपलब्धेः। उष्णस्पर्शानुमेयो हि तेष्वन्यवयवसञ्चारः। तेन शब्दार्थसम्भवात् पाकस्तत्र विधातुं शक्यते।

ननु विहितस्यापि फलाभावादननुष्ठानं कार्यप्रयुक्तत्वाद्धर्माणामित्यत्राह—**विहिते शब्दार्थे दृष्टमदृष्टं वा प्रयोजनं भवति। यस्य दृष्टं प्रयोजनमस्ति तस्य दृष्टमेव प्रयोजनं** यथा प्रकृतौ पाकस्यावघातादीनां च। यस्य तु दृष्टं नास्ति तस्यादृष्टं कल्प्यते ग्राहकसम्बन्धनिर्वाहाय। द्वारेण विना तदनुपपत्तेः। यथा प्रकृतावेव प्रोक्षणस्य। तत्रापि द्वितीयाश्रवणात् तद्द्रव्यगतं तदिति कल्प्यते। तेनात्रापि कृष्णलेषु कोऽपि पाकजन्यः संस्कारः प्रयोजनमित्यध्यवसीयते न पुनः दृष्टं प्रयोजनं नास्तीति विधिनिवारणम्। सम्भवति च शब्दार्थः।

ननु विधाने सत्यदृष्टं प्रयोजनं विधानमेव प्राक् प्रयोजनावगमान्नोपपद्यते प्रयोजनपर्यन्ते व्यापारे पुरुषस्य नियोगादित्याशङ्क्याह—**यावत् पुरुषव्यापार एव हि विधेर्विषयः न फलोपपत्तिरपि।** स्वव्यापारे हि पुरुषो नियुज्यते तेन तावन्मात्रे विहिते अदृष्टफलकल्पना युक्तैव। विक्लित्तिश्च फलं पचेः पच्यर्थस्य न पुनः स एव पच्यर्थ इति पूर्वमुक्तम्। कथं तर्हि महाभाष्यकारस्य वचनमित्यत्राह—**फलेनापि च धात्वर्थकथनं धातुपाठे[1] दृष्टम् यथा गडिवदनैकदेशे इति।** क्रियावचनो हि धातुरिति गडिरपि क्रियावचन एव क्रियामेव वदनैकदेशारम्भलक्षणां वदति। तत्फलेन धात्वर्थकथनम् वदनैकदेशफलके व्यापारे गडिरित्यर्थः। एवं कः पचेः प्रधानार्थ इति फलत एव व्याख्यानं वक्तव्यम् विक्लित्तिफलो व्यापार एव पचेः प्रधानोऽर्थ इत्यर्थः।

---

1. A धात्वर्थपाठे

एतेनेदं निराकृतं यदाह कश्चित् विकल्पितिमात्रसङ्कल्पविशेषैकावलम्बिनौ ज्ञायमानतदर्थत्वात् [1]नेष्टावन्याभिधायिनाविति । तस्मात्सूक्तं वचनात् कृष्णलेषु पाक इति ।

यत्तु व्यापारमात्रे धात्वर्थे अवघाताद्यपि दुर्निवारमिति । अत्रोच्यते प्राकृतकार्याभावादवघातादीनां निवृत्तिः । अस्यार्थः व्यापारमात्रेऽपि धात्वर्थे तस्य प्रकृतौ दृष्टमेव द्वारं तुषकणविमोचनादि तत्कार्यस्यैव विकृतावपि प्राप्तिरिति प्राकृतकार्याभावात् अवघातादीनां निवृत्तिः । तथा पाकस्यापि प्राकृतकार्यपुरोडाशगन्धादिप्रावृत्तेरभावान्निवृत्तिः । पश्चात्तु वाचनिकः पाकोऽपरो विधीयते तस्यादृष्टं द्वारं कल्प्यते । तदुक्तं यथोपपद्यते तथोपरिष्टाद्वक्ष्याम इति तदिदमुक्तम् ।

॥ २ ॥ उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥

ननु च व्यक्त एव राद्धान्तः किमर्थमिदमधिकरणमित्यत्राह—अत्र निवृत्तिहेतवः परीक्ष्यन्ते । किमुपस्तरणाभिघारणयोरमृतार्थत्वं कृष्णलेषु निवृत्तौ हेतुः स्वादिम्नोऽसम्भवात् उत चतुरवत्तस्याप्त्या इति चतुरवत्ताप्तिवचन निवृत्तिहेतुः अथवा संसर्गाभावो निवृत्तौ हेतुरिति राद्धान्ताभासनिवृत्त्यर्थमिदमधिकरणमित्यर्थः ।

केचिद्धि मन्यन्ते स्वादिमप्रयोजनमुपस्तरणमभिघारणं च प्रकृतौ, कृष्णलेषु स्वादिम्नोऽभावान्निवर्तत इति ।

तथान्ये मन्यन्ते—चतुरवत्तप्रयोजनमुपस्तरणमभिघारणं च तच्चतुरवत्त कृष्णलचतुष्कावदानेनैव सम्पन्नमिति कार्याभावन्निवर्तते ।

तथान्यन्मतम् - उपस्तरणाभिघारणे स्रुचि हविस्संसर्गनिवृत्त्यर्थे । न च कृष्णलानां स्रुचि संसर्गोऽस्ति तेन तन्निवृत्त्यर्थं नोपस्तरणमभिघारणं च कार्यमिति । तत्रैकममृताहुतिसम्पादनं निवृत्तिकारणमर्थवादत्वेन परिहृतम् । न हि स्वादिमा परमार्थतः प्रयोजनं भवितुमर्हति । अनुपयोगित्वात् । अस्वादुनापि यागसिद्धेः । द्वितीयमपि निवृत्तिकारणं परिहृतमिति सम्बन्धः । केन हेतुनेत्यत्राह—

---

1. R नेष्टापत्त्या

**प्रधानावदेयविषयत्वाच्चतुस्सङ्ख्यायाः ।** चत्वारि कृष्णलान्यवद्यतीति येयं चतुस्सङ्ख्या सा यत्प्रधानं हविरवेदयं तद्विषया नावदानविषया तेन चतुरवत्तावाप्तिरेकेन अवदानेन नास्ति ।

ननु यद्यप्येकमवदानं तथापि तेन चतुरवत्तावाप्तिरर्थवादादवगम्यत इत्यत्राह —**आप्त्यर्थवादस्य चत्वारि कृष्णलान्यवद्यति तदेकमवदानं इत्यनेन निराकरणमिति** सम्बन्धः । तथा भिन्नविषयावगमात् सङ्ख्याया निराकरणम् । चतुस्सङ्ख्या भिन्नविषयाऽवगम्यते कृष्णलविषया, नावदानविषया । तेन [1]स्तुतिमात्रमेतत् । कृष्णलचतुष्कावदानाभ्यासश्रुतिविरोधाच्च निराकरणम् । चत्वारि चत्वारि कृष्णलान्यवद्यति इति । अवदानान्तरे सति अभ्यास उपपद्यते । यदि च कृष्णलचतुष्कावदानेनैव चतुरवत्तसम्पत्तिः तदाऽवान्तरप्रसङ्ग एव नास्ति इत्यभ्यासश्रुतिर्विरुद्ध्येत ।

ननु स्विष्टकृदवदानापेक्षयाऽभ्यासश्रुतेरुपपत्तिरित्यत्राह—**प्रधानस्य चाभ्यासः प्रकरणात् इति दर्शितम् ।** अतो निराकरणं प्रधानावदानविषय एवायमभ्यासः न स्विष्टकृदवदानापेक्षः प्रदानस्य प्रकरणं यत इति भाष्ये दर्शितम् । अतो हेतोराप्त्यर्थत्वादस्य निराकरणम् । तस्मात् कृष्णलानां स्रुच्यसंसर्ग एवोपस्तरणाभिघारणयोर्बाधे(रभावे)हेतुः । तयोस्संसर्गनिवृत्तिप्रयोजनत्वात् । कस्मात्तदेव प्रयोजनमित्यत्राह—**न च दृष्टे संसर्गनिराकरणे प्रयोजने सम्भवति प्रकृतावपि कार्यान्तरकल्पना शक्यते वक्तुमिति** युक्तमुक्तं असंसर्ग एव बाधहेतुरिति ।

ननु यद्युपस्तरणाभिघारणं नास्ति तदा प्रधानहविष्[2] द्व्यवदाने सति चतुरवत्तत्वं कथं सेत्स्यतीत्यत्राह—**यत्पुनश्चतुरवत्तं जुहोतीति तदाप्त्या सम्पादितमित्यदोषः ।** चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै इत्यनेनैव आप्तिवचनेन चतुरवत्तताया अनुग्रहाभिधानात् ।

**॥ ३ ॥ भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥**

**ननु भक्षणं द्रव्यप्रतिपत्त्यर्थं प्रकृतौ । कथं प्रीत्यर्थता बाधहेतुत्वेनाशङ्क्यते ।** समाधत्ते—**सत्यं द्रव्यप्रतिपत्त्यर्थं किन्तु भक्षणं सत्र प्रति-**

---

1. A स्तुतिप्रसङ्ग एव नास्ति   2. हविषो R

**पत्त्यर्थम्** । स्वरूपापरित्यागेन प्रतिपत्त्यर्थतेत्यर्थः । भक्षणं च प्रीत्यविनाभूतं, अभ्यवहार्यविषयं हि तल्लोके दृश्यते । यदेव पार्थिवं रसवद् द्रव्यं तद्विषयमेव लोके भक्षणमुच्यते । तच्च प्रीत्या तृप्तिरूपयाऽविनाभूतम् । तस्मात्तस्याः प्रीतेरभावात् पदार्थस्वरूपाभावादेव भक्षा निवर्तन्त इति युक्तमिति पूर्वपक्षः ।

राद्धान्तस्तु—वचनाद्भक्षो भवतीति । तदाक्षिपति—**नन्वेवं सति वचनमप्यनर्थकं प्राप्नोति अशक्यार्थविधानात्** । राद्धान्ती परिहरति—**नानर्थकं पदार्थमात्रस्य शक्यत्वात्** । प्रीत्यर्थेऽपि भक्षे योऽसौ व्यापारः स हि भक्षयतिना उच्यते । ततश्च तद्वचनेन विधानं भविष्यति । तस्य कृष्णलेष्वपि शक्यत्वात् । ननु चाभ्यवहार्यविषयं भक्षणं लोके दृष्टम् । तच्च प्रीत्यविनाभावि । न च कृष्णलेषु प्रीतिरस्तीत्युक्तम् । सत्यं दृष्टं न तु विधेः विषयतां प्रतिपद्यते । किन्तु व्यापारमात्रमेव । तच्च कृष्णलेष्वप्यस्ति । तदाह—**विधिविषयं च भक्षणं कृष्णलेष्वपि विद्यते** । विषयशब्देन भक्षणं परामृश्यमिति विषयमिति नपुंसकनिर्देश इति युक्तं वचनम् । तच्च कृष्णलविषयमेव । न घृतविषयं तस्य गुणत्वात् प्रधानत्वाच्च कृष्णलानामित्युक्तं भाष्ये ।

ननु च घृतविषयमेव भक्षणविधानमेतदिति युक्तम् । तस्मिन् भक्षणे चुच्छूषादीनामनुवादसम्भवात् । हिरण्ये तु भक्ष्यमाणे चुच्छूषादीनामप्राप्तेः तेपि विधातव्या इति विधिगौरवमित्यत्राह—**चुच्छूषादीनामनुवादासम्भवात्** । हिरण्ये अपणाधाराज्यसंसृष्टे भक्ष्यमाणे प्राप्तमेव चुच्छूषाकरणमिति न विशिष्टविधिगौरवापत्तिः ।

**॥ ४ ॥ एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥**

अत्र भाष्यकारः [1]सकृत्त्वपक्षे चोदकप्राप्ते भक्षान्तरबाधप्रसङ्गेन सहत्वपक्षमाश्रित्य चोदितवान् । "ननु वाचनिक एवायं भक्षो न चोदकप्राप्त" इति । तत्र पुनरेवमुक्तत्वात्—द्रव्यप्रतिपत्त्यर्थतया चोदकप्राप्त एवायं भक्षः । वचनं चुच्छूषादिविधानार्थमिति । तदाक्षिपति—**पूर्वाधिकरणे वाचनिकं भक्षमभिधाय कथं प्रतिपत्त्यर्थत्वेन पुनः प्राप्तिरुच्यते । कथं वा चुच्छूषादीनां अनुवाद-**

1. A. सकृद्भक्ष्ये

**मभिधाय पुनर्नियमोऽभिधीयते।** समाधत्ते—**नायं विरोधः सम्भवति प्रकृतौ यथा लौकिकस्य भक्षस्याभ्यवहार्यविषयस्य यत् कार्यं प्रीतिरूपं तस्य** दर्शनात् तदभावेन विकृतौ न विधेयप्राप्तिरित्यधस्तादुक्तम्। वचनं च विधेय-विषयतयोपपद्यते पाकवत्। इह पुनरिदमुच्यते यदि विकृतावेतदेव व्यापारमात्रं विधेयम्। विधेश्च कार्यकल्पना न पदार्थस्य। सम्भवति चात्रापि। प्रकृतावपि तद्विधेः कार्यं द्रव्यप्रतिरूपं तस्मान्न बाधः शक्यते वक्तुम्। तेन भक्षश्चोदकेनैव प्राप्तो [1]न विधेयः। चुच्छुषादीनामेव वचनविषयत्वम्। चुच्छुषादीनां चानि-त्यत्वात् नित्यार्थं वचनविषयतापि शक्यते वक्तुमिति सूक्तम्। एतदुक्तं भवति—यथा विकृतौ व्यापारमात्रस्य विधानं तथा प्रकृतावप्यस्तु। तस्य च द्रव्यप्रतिपत्तिः प्रधानं फलं आनुषङ्गिकी पुरुषप्रीतिरिति चोदकतोऽस्त्येव भक्षप्राप्तिः। वचनं तु प्रकारविशेषनियमार्थं वचनविशेषनियमार्थम्। कथं तर्हि प्राग्वाचनिकी प्राप्तिरुक्ता। अत आह—**आधस्त्यमधिकरणमिदानीं किमर्थं? उत्तरं—एतद्युक्ति-प्रसिद्ध्यर्थम्।** एतामेव युक्तिं प्रसाधयितुं तदित्यर्थः। व्यापारमात्रमेव विधिविषय इत्येतत्साधने तत्र तात्पर्यम् न पुनर्वाचनिको भक्ष इत्यत्र। तेन नास्ति दोषः। युक्तिसाधनं किमर्थमित्यत्राह—**न ह्यप्रसाधिता युक्तिर्युक्तिर्भवति कार्याकरणात्।**

**॥ ५ ॥ सर्वत्वं च तेषामधिकारात् स्यात् ॥ १८ ॥**

**कस्यचिदपरिहरणीयस्य परिहारविधानं सम्भवतीति पूर्वःपक्षः।** यद्येषा वचनव्यक्तिः यद्ब्रह्मणे परिहरति तत्सर्वमिति तथापि ब्रह्मभागभूतस्यापि यस्य परिहरणीयत्वं प्राप्तं तस्य परिहारार्थं सर्वमिति विधीयते[2]। योऽपि ब्रह्मभागः स न सर्वो नियमेन ब्रह्मणे देय इति न प्राप्त एव। एकदेशद्वारेणापि तादर्थ्योपपत्तेः। तथा यदि यद्ब्रह्मणे सर्वं तत्परिहरतीति वचनव्यक्तिः तथापि अपरिहरणीयपरि-हारार्थमेव परिहरतीति विधेयमित्यर्थः। यद्येक एवार्थो वचनव्यक्तिद्वयेपि किमर्थं तर्हि द्वयमुक्तमित्यत्राह—**वचनव्यक्तिप्रदर्शनं तु सम्भवमात्रकथनम्।**

**राद्धान्तस्तु—सर्वशब्दानुपपत्तेः नाप्राप्तविधानं सम्भवतीति भागाप-नय एव।** अस्यार्थः—यद्ब्रह्मणे परिहरति तत्सर्वमित्यस्यां वचनव्यक्तौ सर्वशब्दार्थो

1. R. न विधेयः
2. R. विधेयं

न विधेयः प्राप्तत्वात्, यत्खलु ब्रह्मणे परिहारार्थं तत्सर्वमेव परिहारार्थं प्राप्तं द्रव्यप्रतिपत्त्यर्थत्वात् परिहारस्य यावद्द्रव्यमेव परिहारो युक्तः यदि हि द्रव्यं गुणभूतं स्यात् तदा एकदेशेनापि व्यापारे कृतः शास्त्रार्थो भवेत्। प्राधान्ये तु द्रव्यस्य यावद्द्रव्यमेव परिहारो युक्तः। अन्यथाऽनेन संस्कारेण तस्य वर्जनं स्यात्। तथा यद्ब्रह्मणे तत्सर्वं परिहरति इत्यस्यामपि वचनव्यक्तौ सर्वपदार्थस्यानुपपत्तिरेव विशेष्यापरिज्ञानात्। तस्मात् सर्वं चरुं ब्रह्मणे परिहरति इति। यदि स्यात् यत्सर्वं परिहरति तद्ब्रह्मण इति अन्यतरवचनव्यक्त्याश्रयणेन पुरुषान्तरभागानामपनयोऽयं विधीयते असम्भवश्च सर्वशब्दार्थस्य सर्वासु वचनव्यक्तिष्विति दर्शितम्[1]।

॥ ६ ॥ पुरुषापनयात् स्वकालत्वम् ॥ २० ॥

कियदनेन बाध्यत इति चिन्त्यते। तत्र पूर्वपक्षवादी यावच्छ्रवणमबाधं मन्वानः पूर्वपक्षितवान्। सर्वं ब्रह्मणे परिहरतीति श्रुतेः एकस्मिन्नेव काले परिहरणं प्रतीयत इति कालोऽपि बाध्यत इति पूर्वपक्षितम्।

राद्धान्तस्तु—**एकार्थत्वान्नियोगस्य नार्थान्तरं सम्भवतीति अपनयमात्रेण पर्यवसानम् यदन्यत् तदबाधितत्वात् कर्तव्यम्**। अस्यार्थः—यद्यप्येककालता श्रूयते तथापि नियोगस्यानेकार्थविधायकत्वासम्भवात् भागापनयमात्रं विधीयते। न कालोऽपि। तेन कालान्तराविधानात् यथाप्राप्तस्य कालस्याबाधितत्वात् स्वकाल एव परिहरणं कर्तव्यम्।

कस्मात्पुनः श्रूयमाणाप्येककालता न विधीयत इत्यत्राह—**न यावदभिधानं यावद्विनियोगं वा नियोग इति स्थापितम्**। नियोगस्य प्रधानत्वान्नाभिधानविनियोगवशेन वर्णनम् किन्तु नियोगवशेनैव तयोर्वर्णनमिति।

॥ ७ ॥ एकार्थत्वादविभागःस्यात् ॥ २१ ॥

**अपनयमात्रस्य चोदितत्वात् यदन्यत् तदबाधितमिति पूर्वाधिकरणन्यायेन व्यादेशमपि प्रति अबाधबुद्धौ प्रसक्तायां न्यायोक्तिः।** कीदृशी

1. व्यक्तिषु दर्शितः

सेत्याह—[1]सत्येतस्मिन्नपनयवचने यस्यार्थादपि प्रयोजनमपैति तदपि न कर्तव्यमिति । प्रयोजनापनयेन ह्यकरणं तद्यस्य साक्षाद्विहिते नापैति । यस्य च तदाक्षेपलभ्येन तस्यापि बाधो न्याय्यः प्रयोजनापायस्य समत्वात् । तस्माद्व्यादेशस्य न प्रयोजनं पुरुषापनये सति येभ्यो यद्देयं तत्तेभ्यो व्यादिश्येत । न च ब्रह्मव्यतिरेकेणान्येभ्यो दानमस्तीति नास्ति व्यादेशस्य प्रयोजनम् ।

॥ ८ ॥ ऋत्विग्दानं धर्ममात्रं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥

अत्र पूर्वपक्षो[2]नियतपरिमाणतया, वचनाच्च । अस्यार्थः—पुरुषाणामानतेरनियतोपायत्वात नियतपरिमाणविधानं नोपपद्यते । अदृष्टार्थत्वे तूपपद्यते । तथा आनत्यर्थे दाने किं वचनेन । विनापि वचनेन दानं प्राप्तमेव । न च नियमार्थं वचनं नियमस्यैवाशक्यत्वात् पुरुषानतीनां अनियतत्वादेव । तदाह—नह्यानत्यर्थे वचने किञ्चित्प्रयोजनमस्तीति मन्यते ।

राद्धान्तस्तु नियमे सम्भवति नादृष्टार्थता शक्यते वदितुम् व्रतस्येव । यदि दृष्टं पुरुषानतिरेव प्रयोजनं दानस्य न स्यात् वचनानर्थक्यं इदं तावदवश्यं कर्तव्यमिति नियमार्थत्वाद्वचनस्य नानर्थक्यम् नियमार्थमपि वचनं भवत्येव । यथा पयो व्रतं ब्राह्मणस्येति । नियमार्थता वचनमात्रेण दृष्टान्तः । अन्यनिवृत्त्यर्थो व्रतनियमः । अयं तु अयोगनिवृत्त्यर्थः नियमेनापि नियोगानां अर्थवत्तोदिता चतुर्थे । तस्मात्परिक्रयार्थं दक्षिणादानमिति स्थितम् । लिङ्गमुक्तम् ।

कः इह पुनः प्रसङ्गोऽस्याधिकरणस्य बाधलक्षणे ? उत्तरं—अपरिक्रेतव्येषु पुरुषेषु सत्रे दक्षिणा बाध्यत इति प्रसङ्गः ।

॥ ९ ॥ शेषभक्षाश्च तद्वत् ॥ २९ ॥

कथं पुनरन्यार्थं द्रव्यं परिक्रयार्थं मन्यते ? विनियुक्तविनियोगविरोधादित्यत्राह—अत्रापि द्व्यवदानोपसंहारं सोमे च यावद्धोमं यागार्थमिति मन्वानः परिक्रयार्थतां मन्यते । यागं प्रति तादर्थ्यं न पुरोडाशमात्रे किन्तु द्व्यवदानमात्रे

---

1. A असत्ये....प्रयोजनमुदेति
2. अनियत A

(एवोपसंहृतम्)। सोमे तु यावदेव हूयते तावत्येव [1]परिशिष्टमानत्यर्थमिति विनियुक्तविनियोगविरोधाभावात् तेन परिक्रयो युक्त इति पूर्वः पक्षः।

कथं पुनस्तावता द्रव्येणाल्पीयसा परिक्रय इत्यत्राह—**भवति च या च यावतीव मात्रा प्रीतेः द्रव्येषु भक्ष्यमाणेषु** प्रीतये चानमन्ते। तस्मादानत्यर्था भक्षाः।

**एवं प्राप्तेऽभिधीयते—आनत्यर्थे हि द्रव्यमुपादेयं प्राप्नोति।** यद्यानत्यर्था भक्षाः भक्षणीयं द्रव्यं आनत्यर्थमुपादेयं प्राप्नोति। ततः किं उपात्तद्रव्यविषया भक्षाः श्रूयन्ते। यागार्थं च तदुपादानम्। कृत्स्नस्यैव यागार्थत्वात्। एकदेशेन तु व्यापारः। न चान्यार्थस्यान्यार्थतोपपद्यते। तस्माद्यागार्थस्यैवायं संस्कारः प्रतिपत्तिरूपः नानत्यर्थ इति सिद्धम्। **सनिदर्शनं शेषमुक्तम्।**

**॥ १० ॥ वरणमृत्विजामानमनार्थत्वात्सत्त्रे न स्यात् स्वकर्मत्वात् ॥ २४ ॥**

ननु वरणं प्रार्थनात्मकमानत्यर्थमेव कथमदृष्टार्थशङ्केत्यत्राह—**परिक्रयेणैवानतिः सिद्धेति वरणमदृष्टार्थं मन्यते ऋतुवरणवत्।**

एवं प्राप्तेऽभिधीयते—न हि प्रयोजनवतः सन्निधौ प्रार्थना दृष्टार्था शक्यते कल्पयितुम्। उत्तरकालभावित्वाच्च दक्षिणादानस्य न कृतार्थता। **यदि पूर्वकालभावि वरणं दक्षिणादानं तर्हि तेनैव कृतार्थम्।** परिहरति—**नानत्यर्थता वरणस्य दानं विहन्ति।** कुत इत्याह—**तदनुगृहीतैव ह्यानत्यर्थता सिद्ध्यति** प्रयोजनवती भवति **न केवला।** कुत इत्यत्राह—**सम्मानपूर्वकं हि सतां दानं प्रयोजनसिद्धौ लोके दृष्टम्।** यत्र हि लोके प्रयोजनसिद्ध्यर्थं सतां दानं तत् सम्मानपूर्वकं दृष्टम्। तेन[2]सम्मानं दानस्येतिकर्तव्यताभावेनोपकारकं न दानमेव निराकर्तुमर्हति। ऋतुवरणं तु कृतार्थतयाऽदृष्टार्थमिति प्रयुक्तम्। वरणभरणयोः कृतत्वान्न वरणान्तरं दृष्टार्थम्[3]।

---

1. तावत्येवोपरिशिष्टं
2. A तेनाभ्ययनात्मिका
3. R वरणान्तरमदृष्टार्थम्

॥ ११ ॥ परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥

ननु परिक्रय इत्युक्तम् परिक्रीयतेऽनेनेति व्युत्पत्त्या परिक्रयः। स चात्मनि न सम्भवतीति कथं पूर्वपक्षः। प्रतिषेधदर्शनाशङ्कया मन्दविषन्यायेन। "नक्षत्र गौर्दीयत" इति दृष्ट्वा मन्दाशङ्का भवति तया पूर्वःपक्षः। न ह्यसत्यां प्राप्तौ प्रतिषेधो भवतीति।

राद्धान्तस्तूक्तः। नायं प्रतिषेधः। किन्तर्हि? नित्यानुवादोऽयमिति।

॥ १२ ॥ उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात् तत्र दानधर्ममात्रं स्यात् ॥ ३९ ॥

सत्रसमभिव्याहारान्नाधिकारान्तर[1]कल्पना न्याय्या। फलवत्सन्निधावफलं तदङ्गमिति न्यायसिद्धेः। सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन् इति सत्रेण सहैकस्मिन् वाक्ये तावत्पृष्ठशमनीयः समभिव्याह्रियते। तेन सत्रसन्निधौ तस्य श्रवणं फलवत्सन्निधौ अफलं तेन सहैकाधिकारम्। एकाधिकारत्वे च फलवदङ्गता। सत्रं च फलवत्; अफलः उदवसानीयः। अतः सत्राङ्गम्। सत्राङ्गत्वे च स्वयं[2]कर्तृत्वेन अदृष्टार्थमेव सहस्रदक्षिणावचनम्[3]। कामेष्टौ सारस्वतसत्राङ्गभूतायां "अश्वां च पुरुषीं च धेनुके" इतिवत्। किञ्च यद्यधिकारान्तरमुदवसानीये स्यात् तदा सत्रादुदवसायेति काललक्षणा स्यात्। सा चायुक्ता। तस्मात् सत्राङ्गत्वे सति समानकर्तृकतैव क्त्वाप्रत्ययस्यार्थः।

एवं प्राप्तेऽभिधीयते - नैतद्युक्तं यददृष्टार्थं सहस्रदक्षिणावचनमिति। यस्मान्न सत्राङ्गमुदवसानीयः। नात्र सत्रसमभिव्याहारः किन्तु सत्रत्यागसमभिव्याहारोऽयम्। न हि यजेः क्तान्तता श्रूयते। किं तर्हि? अवस्यतेः उदवसायेति। न चावस्यतिर्यागमाचष्टे वाजपेयेनेष्ट्वेतिवत्। यदि चेदमङ्गं सत्रस्य स्यात् तदा सत्रत्याग एव न भवेत्। ततश्च त्यागश्रवणं बाध्येत। तेन

---

1. R नाधिकरणान्तर
2. R स्वयं कर्तृकत्वात्
3. R दक्षिणायनर्थं

त्यागश्रवणात् सत्रानुप्रवेश्येतत्कर्मेति ज्ञायते । **तस्मादुत्सृष्टसत्राणामधिकारान्तरमेतदिति सिद्धम् । दृष्टार्था च दक्षिणा भवति ।** तेन दक्षिणाशब्दो न पीड्यते । स्वतन्त्रकर्मपक्षे चोदकप्राप्तपरकर्तृकत्वाबाधात् [1]आनत्यर्थमेव सहस्रदक्षिणादानम्[2] ।

एवं स्थिते पृच्छति—**किमुत्सृष्टसत्रता निमित्तं तेन निमित्ताधिकारोऽयम्, किं वा विश्वजिद्वदधिकारान्तरकल्पना ।** यद्यधिकारान्तरकल्पना तदा काललक्षणेति मन्यते । उत्तरमाह—**नेदमत्र विचार्यते अनङ्गत्वं तावत्सिद्धम्** तत्र यदि निमित्ताधिकारो न्याय्यः तदा स एवाश्रीयताम् । अथान्याय्यस्तदा अधिकारान्तरं कल्प्यताम् । न च काललक्षणादोषः त्यागसमभिव्याहारेणानङ्गत्वादुदवसानीयस्येति ।

**॥ १३ ॥ तेषां तु वचनात् द्वियज्ञवत्सह प्रयोगः स्यात् ॥ ४१ ॥**

ननु कथमत्र बहुकर्तृकत्वमाशङ्क्यते यावतोत्सृष्टसत्राणामेतदधिकारान्तरम् । ते च बहव एवेति प्राप्तमेव बहुत्वमनूद्यते । न पुनर्बहुकर्तृके कर्मण्यधिकार इत्याशङ्क्याह—**अत्र यजेरन्निति बहुवचननिर्देशात् पदार्थस्य च पदार्थान्तरेण सम्बन्धात्[3] अवगताविव कार्येऽपि अन्वयं मन्यते पूर्वपक्षवादी बहुत्वस्य ।** अस्यार्थः - यजेरन्निति तावद्बहुवचननिर्देशेन[4] बहुकर्तृके विषयेऽधिकारः प्रतीयते । न चोदवसानीयेत्येतदपेक्षया तद्बहुत्वमनुवादभूतमिति शक्या कल्पना । परिपूर्णस्य पदार्थस्य बहुकर्तृकयागविषयविध्यर्थात्मकस्यावगतत्वात् । यस्मात् पदार्थान्तरेणोदवसानेन सम्बन्धः । यदि बहुत्वमनपेक्ष्यैव केवलयागमात्रविषयो विधिरुदवसानेन सम्बध्यते तदा बहुत्वमनूद्यत इत्युच्येत । यदा तु परिपूर्णस्य सतः पदार्थस्यान्येन सम्बन्धः तदापि बहुकर्तृकयागविषयस्य विध्यर्थस्यावगतत्वान्नानूद्यमानता बहुत्वस्य । अतो यथा प्रतीतौ बहुत्वस्यान्वयः तथा कार्येऽपीति बहूनामेवोदवसानीये कर्तृत्वम् । एवं बहुकर्तृकत्वे स्थिते स्वयंकर्तृकता शक्या चिन्तयितुम् । अन्यथा हि एककर्तृकत्वे शक्त्यभावादेव स्वयमृत्विक्कार्यत्वं न शक्येताशङ्कितुमित्यन्तरागर्भिण्युपन्यासः ।

---

1. दृष्टार्थमेव
2. णा वचनम्
3. R सम्बन्धावगताविव
4. R वचनश्रवणात्

तत्र स्थितं तावदपर्यवसितमित्युक्त्वा आत्मकर्तृकः प्रयोग इति पूर्वपक्षितम्। तदयुक्तमिव प्रतिभाति। यदि हि यजमानानामेवार्त्विज्ये विधानं स्यात् तदैतद्युक्तं पूर्वपक्षयितुम्। न च यजमानानामार्त्विज्यं श्रूयते। यदि हि उदवसातारो यजमानाः पुरुषान्तरप्रयोज्यतया श्रूयेरन् तदा आर्त्विज्ये तेषां श्रवणं स्यात्। न चैतदस्ति। तदाह—**न ह्युदवसानीये कर्तारस्ते परप्रयोज्यतया** पुरुषान्तरप्रयोज्यतया **प्रतीयन्ते** येन यागे तथाभूता भवितुमर्हन्ति। **ननु यजेरन्नित्यनेनार्त्विज्येऽपि कर्तृत्वमुच्यत** इत्यत्राह—**न हि ते यजन्ति। किं तर्हि? याजयन्ति।** ऋत्विजो न यजन्ते किं तर्हि याजयन्ति। यजेरन्निति च यजने कर्तृता प्रतीयते न याजने। **यदि यजने ऋत्विजां कर्तृता नास्ति कथं तर्हि यजन्ति याजका इति प्रत्युदाहरणम्।** उत्तरं—**प्रयोगे सति तद्द्रष्टव्यम्।** यदा प्रयोज्ययजमानव्यापार एव यजिः प्रयोजकऋत्विग्व्यापारे याजने लक्षणया प्रयुक्त इति गम्यते तदैतत्प्रत्युदाहरणम्। तत्र याजकशब्द एव प्रमाणम्। याजकशब्देनर्त्विजामभिधानम्। ण्यन्ताद्यजेः ण्वुलुत्पत्तेः।

अयं पुनर्यजेरन्निति प्रयोगः स्वतन्त्र एव कर्तर्युपपद्यते आत्मनेपदश्रवणादिति नर्त्विजामवगतिः। तेन कथमार्त्विज्ये यजमानकर्तृताशङ्का इति। समाधत्ते—**सत्यं यथा भवानाह। इह पुनः सत्रसमभिव्याहृतमुदवसाने बहुत्वमिति तथाभूताशङ्कोपपद्यत इति तन्निराकरणाय पूर्वपक्षितम्।** अस्यार्थः—सत्रे यथाभूताः कर्तारः तथाभूता उदवसानेऽपि प्रतीयन्ते। ये एवोदवसाने कर्तारः त एव पृष्ठशमनीयेऽपि। सत्रे च स्वयमार्त्विज्यकारिणः कर्तार इति इहापि तथाभूता एव ते कर्तार इति पूर्वपक्षाशङ्कानिराकरणाय पूर्वपक्षितम्।

राद्धान्तस्तु—**परिचोदनयैवोक्तः। येयं प्राक् परिचोदना कृता यजमानानामार्त्विज्ये विधानं नास्तीति तयैव हि राद्धान्त उक्तः।** न तेनापरकर्तृकता बाधिता इति प्रकृतिवदुवसानीयः कर्तव्य इति वचनं परकर्तृकताप्रापकमबाधितमेव द्रष्टव्यम्।

यदि हि सत्रप्रकृतित्वं स्यात् स्यादपि स्वयं कर्तृत्वं, न च सत्रप्रकृतित्वं पृष्ठशमनीयस्य। तस्मादृत्विजो वरितव्या इति स्थितम्।

**कथं पुनरवगम्यमाना तथाभूतता स्वयमार्त्विज्यकारिता निराकृता। उत्तरं—प्रकृतिवदित्युक्तम्।** यथा प्रकृतौ परकर्तृता तथा पृष्ठशमनीयेपि

इति यदिदं चोदकादवगम्यते तदेव तथाभूतत्वनिराकरणे कारणमित्युक्तम्। तस्माद्या-वच्छ्रुतमेवोत्सृष्टसत्रत्वमादरणीयं न पुनः स्वयमार्त्विज्यकारित्वमिति।

॥ स्थितादुत्तरम् ॥

**सत्यं परिपूर्णं पदं पदान्तरमाकाङ्क्षति। पूर्वावगतस्त्ववत प्रयोगः। स चेतरेतरनिरपेक्षाणां बहूनाम्।** अस्यार्थः—उदवसायेति क्त्वाप्रत्ययश्रवणात् उदवसानप्रयोगस्तावत् पूर्वमवगन्तव्यः पूर्वावगम्ये क्त्वाप्रत्ययप्रयोगात्। स च परस्परनिरपेक्षबहुकर्तृकः। आक्षिपति—**बहवश्चेतरेतरनिरपेक्षाश्चेति भवतो-च्यन्ते। किंनिबन्धनं तर्हि बहुत्वम्।** इतरेतरापेक्षत्वनिबन्धनं हि बहुत्वं नान्यथा बहुत्वोपपत्तिः। अपेक्षाबुद्धिनिबन्धनत्वात्। समाधाता आह—**सत्रनिबन्ध-नमिति ब्रूमः।** सत्रे परस्परापेक्षत्वात् बहुत्वमुपपन्नम्। निरपेक्षता तूदवसाने एकैकस्य तत्प्रयोगात्।

भवत्वेवं तथापि किमित्यात—**तथाभूतानां च पूर्वं प्रयोगावगमात् उत्तरत्रापि तथैवावसीयते।** अस्यार्थः—निरपेक्षा बहव उदवसानप्रयोगे पूर्वावगते तावत् कर्तारः प्रतीयन्ते। समानकर्तृकता च द्वितीयं प्रयोगमन्तरेण न स्यात्। योऽपि चासौ द्वितीयः प्रयोगः स पूर्वप्रयोगसमानकर्तृकः इति इतरेतरनिरपेक्ष-बहुकर्तृक एव प्रतीयते। तस्मादेककर्तृकतैवोदवसानीयस्य।

ननु यजेरन्निति श्रवणात द्वितीयप्रयोगो बहुकर्तृक एव विधीयत इत्यत्राह—**यजिमात्रं त्वनवगतमिति तदर्थविधानमवशिष्यत इति तत्रैव पर्यव-सानम्।** अस्यार्थ—समानकर्तृकतावगमात् तावत् पूर्वप्रयोगविलक्षणकर्तृकप्रयोग-समर्पणार्थं न विधानं, किन्तु अनवगतद्वितीयप्रयोगस्वरूपमात्रप्रतिपादनार्थमिति तत्रैव पर्यवसानम्। न कर्तृबहुत्वेऽपि व्यापारो विधेः। नन्वेवं राजपुरोहितादिष्वपि किमित्येवमेव न स्यात् इत्यत आह—**राजपुरोहितादिषु तु प्रयोगान्तरानवगमात् अगृह्यमाणविशेषतया यजिवद्वचनार्थोऽपि विधेय इति वैषम्यम्।** यथा यज्यर्थोऽन-वगतस्तत्र विधीयते तथा वचनार्थोऽपि। इह तु वचनार्थो न विधेयः। पूर्वप्रयोग-

समानकर्तृकत्वादेव तत्कर्तृसङ्ख्यावगमात् केवलं यागमात्रं विधेयम् । तस्मात् प्रकृतिवदेककर्तृत्वं विवक्षणीयमुदवसानीये । अतः प्रत्येकं प्रयोग इति सूक्तम् ।

॥ १५ ॥ कामेष्टौ च दानसंयोगात् ॥ ४४ ॥

**अत्र पूर्वपक्षवादी देयविशेषं मन्वानः अङ्गेषु परकर्तृकतां मन्यते ।** अस्यार्थः - सत्राङ्गभूतायामपि कामेष्टौ चोदकप्राप्तपरकर्तृकतैव । ततश्च दक्षिणादाने चोदकप्राप्ते देयविशेषविधानमेतत्[1] । न च ये यजमाना इति वचनं परकर्तृकतां बाधते समर्थं च ये यजमानास्त ऋत्विज इति प्रधाने वचनम् । प्रधानमात्रेऽपि स्वयं-कर्तृकत्वविधेर्बहुवचनमुपपन्नमेवेति नाङ्गेषु चोदकप्राप्तां परकर्तृकतां बाधते । तस्मात् परिक्रय एवायं " अश्वां च पुरुषीं च " इति ।

**अत्रोच्यते—प्रयोगाङ्गं हि आनमनम् ।** यदेतदानमनं तत्प्रयोगाङ्गम् । एकश्चायं सत्रप्रयोगः अङ्गविधिः पुनः पदार्थविषय एव न प्रयोगविषयः । न च पदार्थाङ्गं दक्षिणेत्युक्तम् । तस्माददृष्टार्थं वचनं न देयविशेषविधानार्थम् । एषोऽत्र तत्त्वार्थः—योऽयमङ्गविधिः स पदार्थमात्रसत्तां ज्ञापयति । न प्रयोगम् । प्रधान-विधिरेव प्रयोगज्ञापकः । स चाविशेषेणाङ्गप्रधानानामेकमेव प्रयोगं ज्ञापयति । प्रयोगाङ्गभूता च दक्षिणा । तत्र यद्येषा दक्षिणा स्यात् ततः प्रतिप्रयोगं भवेत् । न च प्रयोगाङ्गं भवितुमर्हति । प्रधाने स्वयंकर्तृकत्वाभिधानात् । तेन नेयं दक्षिणा युक्ता पदार्थमात्रानङ्गत्वात् । अतोऽदृष्टार्थं दानमिति निश्चीयते ।

॥ १६ ॥ द्वेष्ये च चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

ननु कथमन्वाहार्ये विहिते दक्षिणान्तराशङ्केत्यत्राह—**नैमित्तिकत्वात् दक्षिणाविकारो न्याय्य इति पूर्वः पक्षः ।** नित्यामन्वाहार्यदक्षिणां नैमित्तिकै-कहायनीविधिर्बाधते । दक्षिणाशब्दश्च समर्थितो भवति । दक्षकरी हि दक्षिणा । यदि द्वेष्योऽपि ऋत्विग्भवेत् तदा तस्मै दीयमाना दक्षकारिणी भवति अनृत्विजि तु दक्षिणात्वं नोपपद्यते । न चादृष्टपरिकल्पना । ऋत्विजे तु द्वेष्यायाभ्युपगम्यमाने दाने नैवादृष्टकल्पना ।

---

1. R विधिरयम्

**अत्रोच्यते—नर्त्विजे दानमेतत् । स्मृतिविरोधात् । यदि हि द्वेष्यो ऋत्विग्भवति तदा भवेदिदं ऋत्विग्दानं, न च ऋत्विक् द्वेष्यः न द्वेषणीय** इत्यर्थः । स्मृतिवचनात् ऋत्विगाचार्यौ नातिचरितव्यो इति । तेन द्वेष्यस्यर्त्विजोऽभावात् नेदमृत्विजे दानम् ।

**ननु लङ्घितशास्त्रार्थस्य कदाचित् ऋत्विगपि द्वेष्यः सम्भवति ।** यत एव द्वेष्यसम्भवः अत एव प्रतिषेधशास्त्रम् । अन्यथाऽप्रसक्तौ प्रतिषेधवचनं नावतरेत् । परिहरति—**शास्त्राच्च तद्विषयद्वेषनाशनं[1]यत्नतः प्राप्तम् ।** अस्यार्थः—शास्त्रस्थान् गृहीत्वा शास्त्रव्यापारः । न च शास्त्रस्थस्य ऋत्विग्द्वेषणीयः । यः पुनः शास्त्रं नाद्रियते तस्य वरणेऽप्यनधिकार एव [2]उच्छृङ्खलत्वात् । एतदेवाह—**न चेच्छास्त्रमनुवर्तते वृणोति वा किमिति ।** शास्त्राचेत् कृतनिश्चयः न तर्हि द्वेष्य ऋत्विक् । तस्मात् द्वेष्यस्यर्त्विजोऽसम्भवात् नेदं नैमित्तिकमानत्यर्थं दानमिति । शास्त्रान्तरमदृष्टायेति स्थितम् ।

**॥ १७ ॥ अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥**

कथं पुनरस्थ्नां यागाशङ्का अचेतनत्वात । न ह्यचेतनो यगं कर्तुं शक्रति । न चाधिकारोऽप्यचेतनानामुपपद्येत । बोद्धा ह्यधिक्रियते । नापि तानि नियुज्यन्ते । अत एव तिरश्चामनधिकार इत्यत्राह—**अत्र श्रुतिबलेन अभिधानविनियोगयोः नियोगस्य च शक्त्यपेक्षत्वात् श्रुतापरित्यागेन यथा शक्यते तथा नियोगार्थोऽनुष्ठातव्यः इति पूर्वपक्षवादिनोऽभिमानः ।**

अस्यार्थः—नास्थ्नामधिकारः शक्यते, अङ्गत्वादस्थियज्ञस्य । अस्थ्नां यागे कर्तृत्वाशङ्का अभिधानविनियोगयोः श्रुतिबलेन । अस्थीनि याजयेत् इत्यभिधानं तावदस्थिषु श्रौतम् । तथा याजनान्वयोऽप्यस्थ्नां श्रौत एव । तेन यागकर्तृता तावदस्थ्नां श्रौती । योऽपि चायं नियोगार्थोऽस्थिकर्तृके यागेऽभूतेन यथा शक्यते तथाऽनुष्ठातव्यः यस्मात् सत्रे नियोगः शक्त्यपेक्षः । प्रदर्शिता च यथाशक्ति

1. R. हानं
2. उल्लङ्घितशास्त्रत्वात्

शवद्रव्यं गृहीत्वा पुरुषान्तरेषु यागं कुर्वाणेषु भवति यागे अस्थीनि कर्तॄणीति पूर्वपक्षवादिनोऽभिमानः । लिङ्गं च दर्शितम् । यजमानभूतानां स्तोत्रान्तेऽस्थ्नामुपस्थितिः अस्थीनि यजमानानि दर्शयति ।

एवं प्राप्तेऽभिधीयते—सत्यं शक्त्यनुरोधी नियोगः । किन्तु अभिधानविनियोगयोरेव श्रौतार्थौ न सम्भवति अस्थ्नां यागे कर्तृत्वासम्भवात् । न च परिक्रयद्वारा कर्तृता परिक्रयाभावात् । यदि हि तानि याजयतः पुरुषान् परिक्रीणीत स तदा संभवेदपि परिक्रयः । नचैतदस्ति । न चास्थ्नां स्वमस्ति येन परिक्रयः स्यात् न च तद्विषया यथाशक्तिः । न ह्यशवत्यन्यः शास्त्रार्थो भवति ।

कथं तर्हि प्रतिनिधौ यथाशक्ति । उत्तरं—सा नियोगस्यैवेति वर्णिता । नियोगार्थ एव यथा शक्यते तथाऽनुष्ठीयते । सदृशग्रहणं तु अभिधानसम्पत्त्यर्थम् यथाभिहितार्थसम्पत्तये । न पुनरर्थान्तराभिधानस्य सम्पत्तये । तस्मादभिधानविनियोगयोरेव यथाश्रुतनिमित्तसामञ्जस्यं न सम्भवतीति गङ्गायां घोष इतिवत् लक्षणा आश्रयणीया । अस्थिशब्देन अस्थिमन्तः जीवन्तः सत्रिण एव लक्षणीयाः । अतो येन सह सत्रिणः प्रवृत्ताः तदङ्गवतां तदस्थिमतां कर्तृत्वमिति सामञ्जस्यम् । तस्मात् जीवतामेव यागं इति युक्तम् । लिङ्गं पुनः तत्सरूपं याजमानकुम्भोपस्थितिसरूपं वाचनिकमित्युक्तं भाष्ये ।

॥ १८ ॥ यदि तु वचनात् तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥

कृत्वाचिन्तोपन्यासोऽयम् पूर्वाधिकरणपूर्वपक्षप्रयोजनकथनाय । प्रयोजनकथने पुनः प्रयोजनं न वक्तव्यम्, स्वयं प्रयोजनरूपत्वात् । तत्र च जपसंस्कारेष्टीनां यथासङ्ख्यं बाधः । केशश्मश्रुणोऽभावात् वाचो मनसश्चाभावात् निवृत्तिः ।

॥ १९ ॥ क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

अत्रापि स्वातन्त्र्याभावादेवास्थ्नामौदुम्बरीसम्मानादावपि कर्तृता न सम्भवतीति पूर्वः पक्षः । न ह्यस्थीन्यचेतनानि स्वयं क्वचित् कर्तॄणि व्याप्रियन्ते इत्यभिप्रायः ।

**अभिधेयमम्भवात् स्वातन्त्र्योपपत्तिरिति राद्धान्तः ।** अस्यार्थः—धात्वभिधेयव्यापारयोगिता स्वातन्त्र्यम्, न पुनः स्वयं प्रवर्तमानता । एतदेव विवरीतुं पृच्छति—**किं क्रियासम्पादनमेव स्वातन्त्र्यम् ।** उत्तरं—**ओमित्युच्यते धात्ववच्छिन्नव्यापारव्याप्तिः कर्तृत्वे हेतुः ।** धातुना योऽवच्छिन्नः प्रतिपादितो व्यापारः तद्योगिता स्वातन्त्र्यमिति सैव कर्तृत्वे हेतुः तथा च स्वव्यापारापेक्षं काष्ठादिव्यापारभूतज्वलनाद्यपेक्षं काष्ठादीनि पचन्तीति वाक्यं प्रयुज्यते । तस्मादस्थ्नां कर्तृत्वसम्भवात् अबाधः सम्मानान्वारम्भयोः ।

**॥ २१ ॥ काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥**

**अत्र कामाभावेपि यजमानस्य वृष्टिर्भवतीति कोऽभिप्रायः ?** यावता सत्येव यजमानस्य **कामे काम्यमानेन फलेन भवितव्यम् ।** उत्तरं—**अयमभिप्रायः—न कामनायां यजमानोऽङ्गं फलं च पुरुषार्थत्वादिति प्राधान्यात् ।** अस्यार्थः—यत्र कामनायां सत्यां पुरुषस्याधिकारः तत्राधिकारिणोऽङ्गता नास्ति प्रधानत्वादधिकारिणः । कामना चाधिकारिविशेषणमिति सापि नाङ्गमिति । ततः किमित्याह—**अङ्गाभावेन फलानुत्पत्तिः । न पुनरनङ्गेऽप्युपादीयमाने ।** तेन कामनाया विनापि फलेन भाव्यम् । तस्मान् नीचैस्त्वादिगुणयुक्तात् सदोमानात् वृष्ट्यादिफलेन भवितव्यं असत्यामप्यस्यां कामनायामिति युक्तम् ।

**कथं तर्ह्यस्मिन् पक्षे आत्मनेपदम् ?** अस्यार्थः-आत्मनेपदं हि कर्तृगामितां फलस्यापादयति । यदि तु अकामेऽपि कर्तरि फलं भवति न तर्हि कर्तृगामिता फलस्य । भोग्यतया हि फलस्य सम्बन्धो नान्यथा । उत्तरं—**उक्तस्तावदयं न्यायः । स्थिते च न्याये यथासम्भवमात्मनेपदमेव कर्तृगामितां फलस्याह** किन्तु अधिकारप्राप्तां द्योतयति । तत्र यत्राधिकारतः प्राप्तिरस्ति तत्र भवति कर्तृगामिक्रियाफलद्योतकता । यत्र न सम्भवति तत्र माभूत् । [1]**प्रवृत्तत्वाच्चास्य जीवदवस्थायां इति सिद्धं साध्वभिधानं पाणिनेः ।** अस्यार्थः—**यदेतत् वृष्ट्यादि सदोमानफलमिहाश्रियते न तत् साक्षाच्छ्रुतम् । किन्तु**

1. A प्राप्तत्वा

आश्रयसद्भावेन ज्योतिष्टोमतः प्रवृत्तम् । ज्योतिष्टोमे च जीवदवस्थायां कर्तृगामि-क्रियाफलप्रतिपादकमात्मनेपदं प्रयुक्तम् । सम्भवति च तदिति साध्वभिधानं पाणिनेः ।

**एवं प्राप्तेऽभिधीयते—सत्यमनङ्गं यजमानः तथापि कामनायामसत्यामधिकृत एव ।** अधिकारे च सति साधनत्वमधिगम्यते कर्मणः, अधिकृतस्य फलं जनयितुं शक्नोति नानधिकृतस्य । **कथमनधिकारः ?** उत्तरम् **कामिता ह्यधिकारे हेतुः । तदभावे नाधिकारः । तस्मिंश्चासति असाधनं कर्म । साधनाभावाच्च फलाभाव किमत्रानङ्गचिन्तया ।** एतदुक्तं भवति—यद्यप्यधिकारी नाङ्गं तथापि प्रधानस्यापि फलोत्पत्तौ [1]साधनभावात् तदभावात् फलाभाव इति । तस्मात्फलाभावान्निवृत्तिः काम्यादीनां सदोमानादीनाम् ।

भाष्ये पुनरात्मनेपदोपन्यासोऽधिकारलक्षणार्थः । अधिकारवशेनैव फलाभावः[2] । आत्मनेपदं तु तदेव द्योतयतीत्यात्मनेपदोपन्यासः ।

**॥ २१ ॥ ईहार्थाश्चाभावात् सूक्तवाकवत् ॥ ५२ ॥**

**का पुनरत्र विशेषाशङ्का ।** अस्यार्थः—यथा फलाभावात् काम्यानां निवृत्तिः तथा सूक्तवाकस्य फलाभावात् निवृत्तिरेव युक्ता । समाधत्ते—**ननु चार्थवादत्वमुक्तम् नेदं फलमायुरादिकम् किन्तु अर्थवादोऽयम् ।** पुनराक्षिपति—**विध्युद्देशशेषत्वेनायुक्तं तदर्थवादत्वम् ।** अर्थवादो हि विध्युद्देशशेषो भवति । तदभावान्नायमर्थवादः । पुनस्समाधत्ते—अनुष्ठानेऽपि प्रोत्साहनमर्थवदित्युक्तं **चत्वारि शृङ्गेत्यत्र ।** तेनानुष्ठानावस्थायामर्थवादोऽस्त्विति पूर्वः पक्षः । राद्धान्तस्तु असमवायिन्यर्थे हि एवम् यथा चत्वारि शृङ्गेति । इह तु फलतया समवायोऽर्थस्योपपद्यत एव । तथा च भाष्यकारेण इ(द)रतिर्यजतिः मान्त्रवर्णिकी देवतादिका विधिः आयुरादीनि फलानीति दर्शितम् । तस्मात् सति फलत्वे फलाभावात् फलप्रतिपादकसूक्तवाकस्य पूर्ववदत्रापि बाधः ।

---

1. R साधनाभावात्
2. फलभावः

॥ १२ ॥ स्युर्वा होतृकामाः ॥ ५५ ॥

नात्राधिकारश्शक्यते वक्तुम् । आयुरादीनामिव कामानां विद्यमानत्वात् । ऋत्विजो ह्यर्ककामिनः । तस्माद्भवितव्यं होतृकामैः । यथा ह्यायुरादीनां यजमान एव काम्याधिकारी न तथा होतृकामानां ऋत्विजामप्यधिकारात् । तेन सन्त्येव कामिन इति भवितव्यं होतृकामैः ।

एवं प्राप्ते अत्राभिधीयते —सत्यमनधिकारो नास्ति । विषयाभावात्तु निवृत्तिः । यजमानो हि आशास्यफलस्य विषयः तद्विषयफलकामना होतॄणामधिकारे हेतुः । न चास्थनां फलविषयता सम्भवति, अचेतनत्वात् तेन निर्विषयकामिनां अधिकारनिमित्तभावं होतृकामाः प्रतिपद्यन्ते । तस्मादत्राप्यधिकाराभावाद्धोतृकामानामपि निवृत्तिः ।

अत्र चोदयति—विषयाधिकारयोः कःसम्बन्धः ? येन विषयाभावादधिकाराभावः । उत्तरं—बाढमस्ति सम्बन्धः । न निर्विषया कामिता अधिकारनिमित्तभावं प्रतिपद्यते । तस्मादत्राप्यनधिकार एव । किमर्थं तर्हि इदमुक्तं पूर्वं सत्यमनधिकारो नास्ति विषयाभावत्तु निवृत्तिः यजमानो हि विषय इति । उत्तरं— अधिकृतापेक्षमिदमुक्तम् । अधिकृतानां हि ऋत्विजां चेतनवतां कामनायोग्यानां विद्यमानत्वाभिप्रायेणानधिकारो नास्तीत्युक्तम् । परमार्थतस्तु सत्स्वपि कामयितृषु विषयाभावान्न कामना कामनाभावादनधिकार इति ।

॥ २३ ॥ सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५७ ॥

अत्र भाष्यकार एवं चिन्तयति — किं तद्दिष्टगत्यन्तं कर्मोत्स्रष्टव्यं उत समापनीयमेवेति । तत्र कारणसन्देहमाह—अथेदानीमिदं सन्दिह्यते किं यावद्दिष्टां गतिं न गच्छति तावदेवाधिकारः । गते त्वधिकारभावात् कर्मत्यागः उत मृतस्याप्यधिकारानुवृत्तिरिति मरणादप्युपरि[1] फलेष्वधिकारोऽस्तीति । तत्र पूर्वपक्षवादी पूर्वपक्षितवानिति सम्बन्धः । कथा युक्तयेत्यत्राह—न कश्चिदेवं शास्त्रादधिकारं प्रतिपद्यते मृतस्यापि ममात्राधिकार इति । तस्मात् यावद्दिष्टां

1. R उपरितनेष्वपि

गतिं न गच्छति तावदेवेदं मया कर्तव्यमिति शास्त्रादवगम्यते । अत **ऊर्ध्वं कर्मणो निवृत्तिः अधिकाराभावात् काम्यस्येव** (फलस्येव) यथाऽधिकाराभावात् काम्यं फलं न भवति तथा मरणादुपरितनेनापि कर्मणा न भवितव्यं यदैव तस्य जीवनं तदैव तस्य कर्मणि कर्तृत्वमुपपद्यते कर्तृत्वपर्यन्तश्चाधिकार इति मरणादुपरितनेष्वनधिकारः ।

**राद्धान्तस्तु आपरिसमाप्तेरधिकारावगमात् नाधिकारनिवृत्तिरवसीयते ।** साङ्गे प्रधानेऽधिकारः प्रतीयते । **ननु मृतेन कर्तव्यमिति प्रतीयते मृतस्य कर्तृत्वानुपपत्तिरित्युक्तम् ।** परिहरति—**केन वोक्तं प्रतीयत इति । कथं तर्हि कर्तव्यतोक्ता ।** उत्तरं—**जीवत एव सा कर्तव्यता जीवन्नेव मरणादुपरितनानपि पदार्थानधिकरोति । जीवतैव च तथा कर्तव्यं यथा दिष्टापन्नस्य [1]स्वाम्यं प्रति यत ऽधिकारो निवर्त्यते । कथं वा निवर्तते ? सम्भारविधानात् ।** जीवन्नेव सम्भारसामग्रीमुपदिशतीति शास्त्रादवगम्यते ।

यत्पुनर्न सम्भवति याजमानं बाधस्तस्यासम्भवादेव यथाऽन्येषामसम्भवतां जीवत्यपि यजमाने । यथा सत्रेषु परिक्रयादीनाम् । सम्भारसम्भरणेन च स्वामिनां कर्तृत्वमिति नाधिकारो निवर्तते । तदिदमुक्तम्—**असंशयं जीवतो मृतस्य च न कश्चिद्विशेष इति । सम्भारद्वारेण कर्तृत्वादुभयोः ।**

**यत्पुनरिदमुक्तं कथमविद्यमानस्य कर्तृत्वमिति । अत्रोच्यते । नाविद्यमानता । शाश्वतत्वादात्मनः तस्य च कर्तृत्वात् ।** (यदा)**परं मृते उपायासम्भवस्तुवोदितः स सम्भरणोपायेन परिहृतः ।** ब्राह्मणाः समापयत मे यज्ञं इति प्रैषस्य चैवं दृष्टार्थतोपपन्ना यदि समापनीयः क्रतुः । अन्यथाऽदृष्टार्थता स्यादिति समापनीयः क्रतुरिति स्थितम् ।

**॥ २४ ॥ गते कर्मास्थियज्ञवत् ॥ ५९ ॥**

**क्त्वाचिन्ताप्रयोजनमिहानुष्ठाने उपयुज्यत इति अतिदेशो विषयसम्भवप्रदर्शनार्थः ।** क्त्वाचिन्तया व्युत्पादितस्य न्यायस्यानुष्ठाने फलं दर्शयितुमिदमुक्तम् ।

---

1. R अयं प्रतीतोऽधिकारो

॥ २५ ॥ जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥

इदानीं यावदिष्टां गतिं न गच्छति तावन्मरणविरोधिनीषु चोदनासु अधिकारो विद्यते नेति चिन्त्यते। अनेन भाष्यकारसन्देहे कारणसन्देहः कृतः।

तत्र मरणनिमित्तत्वादधिकारस्य तद्विरोध्यधिकारो निवर्तत इति पूर्वः पक्षः।

राद्धान्तस्तु नियतकालत्वान्मरणेच्छायाः तत्पूर्वकालीनेषु नाधिकार विरोधोऽवगम्यत इति बाधाभावः। नियतकालमरणार्थमेव पूर्वमायुराशासितव्यमिति नास्ति विरोधः। अतो नायुराशिषो निवृत्तिः

॥ २६ ॥ क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥

आक्षेप्तुं सन्देहमनुभाषते तावत्—द्वादशाहमृद्धिकामा उपेयुरिति श्रूयते। तत्र ऋतुयाज्यावरणं आत्रेयहिरण्यदानं च भवति न भवतीति सन्दिह्यते। अक्षिति—ननु च सन्देह एवायमयुक्तः पूर्वपक्षाभावात्। नह्यदृष्टार्थस्यार्थलोपः शक्यते वक्तुम्। अस्यार्थः— अदृष्टार्थमृतुयाज्यावरणं आत्रेयदानं च न तयोस्सत्रेपि द्वारलोपः शक्यते वक्तुम्, तत्राप्यदृष्टसम्भवादिति पूर्वपक्षासम्भवात् सन्देहो न युक्तः। समाधत्ते—सत्यमेवं तथापि लौकिकन्यायानुसारेण यदप्यन्यस्मै दीयते साम वा प्रयुज्यते तत्रापि भृत्यानां भवत्येवानतिः साधुरुदारोऽयमिति मन्वानाः सुतरां तत्कार्ये यतन्त इति लोपं मन्यते पूर्वपक्षवादी। अस्यार्थः—लौकिकन्यायानुसारेणार्थस्य लोपं मन्यते पूर्वपक्षवादी। लोके हि यदन्यस्मै दीयते दानं सामप्रयोगश्च तत्रापि भृत्यानां भवत्येव दातारं प्रत्यानतिः। तथाहि—भृत्याः साधुरयं प्रियंवद उदारो दानशीलश्चेति मत्वा सुतरां तस्य दातुर्यजमानस्य कार्ये यतमाना दृश्यन्ते। ततश्च परपुरुषवर्तिनोरपि सामदानयोः ऋत्विगानतिरेव प्रयोजनम्। न च सत्रे सास्तीत्यर्थलोपान्निवृत्तिः सामदानयोः।

राद्धान्तस्तु—नानुषङ्गिकं शास्त्रप्रयोजनं भवितुमर्हतीति। अस्यार्थः—अनुषङ्गिकी ऋत्विगानतिः न शास्त्रप्रयोजनं भवितुमर्हतीति न सामदानयोः

प्रयोजिका भवितुमर्हतीति । किन्त्वदृष्टमेव प्रयोजनम् । तदाह—**मुख्यश्च शास्त्रार्थोऽदृष्टार्थैवेति प्रकृतौ निरूपितम् । तस्मान्न निवृत्तिरनयोः सामदानयोः ।**

**॥ २७ ॥ गुणलोपे च मुख्यस्य ॥ ६३ ॥**

**सहैवाग्निहोत्रहवण्या निर्वापशास्त्रं परिसमाप्यते ।** अस्यार्थः-अग्निहोत्रहवण्या हवींषि निर्वपतीति निर्वापशास्त्रं अग्निहोत्रहवण्या सह समाप्यते । तथापि किमित्याह—**न च शास्त्रार्थस्य विभागो विद्यते ।** शास्त्रैक्ये शास्त्रार्थोऽप्येकः । पदार्था हि विभक्ताः न तु शास्त्रार्थः । अग्निहोत्रहवण्या विना शास्त्रार्थ एव नास्तीति पवमानेष्टिषु निर्वापस्याकरणं मन्यते पूर्वपक्षवादी । केवलोऽपि निर्वापः कृतोऽप्यकृत एव अशास्त्रार्थत्वात् ।

**राद्धान्तस्तु सत्यं यद्युपदेशतोऽनुष्ठानं स्यात् । इह तु कार्यतोऽनुष्ठानं कार्यैकदेशस्य च सम्भवे तु तत्त्यागो निष्प्रमाणकः ।** अग्निहोत्रहवण्या अभावेऽपि तावत् निर्वापस्य कार्यं सम्भवति । न च सम्भवतः कार्यैकदेशस्य त्यागे प्रमाणमस्ति । तत्त्यागे च तज्जनकतया निर्वापोऽपि कर्तव्य एव कार्यप्रयुक्तत्वादनुष्ठानस्य । यद्युपदेशसम्पादनायानुष्ठानं स्यात् स्यादप्यननुष्ठानम् । इह तु कार्यसम्पादनायैवानुष्ठानमिति कर्तव्यो निर्वापः । यदि चाग्निहोत्रहवण्येव निर्वापेन संस्क्रियते तदा संस्कार्याभावे निर्वापस्याकरणं स्यात् न च तदस्तीत्याह—**न(नु) चाग्निहोत्रहवणी संस्कार्या येन** तदभावे कार्यविलोपः **स्यात् ।** निर्वापस्य तु निरुप्यमाणद्रव्यं संस्कार्यं[1] कार्यम् । **अलुप्ते च तस्मिन् कार्ये न बाधः शक्यते वक्तुमिति स्थितो निर्वापः ।**

**॥ २८ ॥ मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥ ६४ ॥**

**ननु चतुरो मुष्टीन् निर्वपतीति चतुस्सङ्ख्या मुष्टयश्च निर्वापे श्रूयन्ते । सप्तदशसङ्ख्याशरावद्रव्यन्त्वोदनपरिमाणे ।** ततश्च कथं भिन्नविषयतया विरोधाभावेन उभयमुभयस्य बाधकमित्याशङ्क्यत इत्यत्राह—**अत्र भिन्नविषयत्वेपि शास्त्रस्य कार्यत एकविषयतां मन्वानः उभयोर्लोपं वर्णितवान् अन्यथा हि**

---

1. A हविष्यद्रव्यजोषणं

अन्यतरस्यापि लोपः केन हेतुनेत्यभिप्रायः। अस्यार्थः—यद्यपि निर्वाप-विषयात् चतुरो मुष्टीन्निर्वपतीति शास्त्रात् सप्तदशशरावशास्त्रं ओदन[1] परिमाणवचनं भिन्नविषयं तथापि कार्यपर्यालोचनया भवत्येवैकविषयत्वम्। तावत्परिमाणनिर्वाप-मन्तरेण तावदोदनस्यानुपपत्तेः[2]। तेनार्थात् तुल्यार्थतां प्राप्य गोदोहनादिनेव पुरुषार्थेन क्रत्वर्थस्य चमसस्य सप्तदशसङ्ख्यायाः शरावद्रव्येण चतुस्सङ्ख्यायाः मुष्टिद्रव्यस्य च बाधो युक्तः। यदि पुनः कार्यतः समानविषयता नाश्रीयते तदा अन्यतरस्य बाधो राद्धान्ताभिमतो न सिद्ध्यतीति पूर्वपक्षवादिनोऽभिप्रायः।

राद्धान्तस्तु — श्रुतिस्तावद्भिन्नविषयिणी सप्तदशशरावपरिमाणश्चरुः श्रूयते। चतुर्मुष्टिपरिमाणश्च निर्वापः। तत्रैककार्यत्वे प्रमाणं नास्ति। अस्यार्थः—यदि सङ्ख्याद्रव्ययोर्वैकृतयोः प्राकृतसङ्ख्याद्रव्यकार्ये विधानं स्यात् तदा भवेदेव द्वाभ्यां द्वयोर्बाधः समानविषयत्वे च सति बाधेन भवितव्यम्। न च समानविषयतास्ति प्राकृतयोः सङ्ख्याद्रव्ययोः निर्वापविषयत्वेन वैकृतयोश्चरुविषयत्वेन श्रवणात्।

ननु तावत्परिमाणके निर्वापे सति सप्तदशशरावपरिमाणता चरोर्न-सिद्ध्यतीत्युक्तम्। परिहरति—एवं तर्ह्यार्थो बाधः न तु कृतकृत्यतया। तथापि किमित्यत्राह—आर्थश्चेदयं बाधः तदा यावदर्थं भवितुमर्हति। यावतैव बाधेन विना चरोः परिमाणं न सिद्ध्यति तावदेव बाधितव्यम्। सङ्ख्याद्रव्ययो-श्चान्यतरबाधेनाप्यर्थः सिद्ध्यतीति नोभयबाधो भवितुमर्हति। तावतैवेदमधिकरणं समाप्तम्। द्वयोर्बाध इति पूर्वपक्षः। अन्यतरस्य बाध इति राद्धान्तः।

स पुनः अन्यतरस्य किं मुष्टिद्रव्यस्य उत सङ्ख्याया इति न्यायान्तरमेतत्प्रति-पादितम्। तत्रापि ग्रहणमेव मुख्यस्येत्युक्तम्। यथा आद्यस्योपादानं अन्त्यस्य त्यागः तथाऽत्रापि पूर्वभाविन्या मुख्यभूतायास्सङ्ख्यायाः उपादानं जघन्यस्य द्रव्यस्य लोपः उभयोः सङ्ख्याद्रव्ययोः निर्वापगुणत्वात्। यदि सङ्ख्या द्रव्ये गुणभूता भवेत् ततो द्रव्यमेवानुरुद्ध्येत सङ्ख्या च लुप्येत। अत्र तु भिन्नप्रातिपदिकाभिधेया सङ्ख्या निर्वापमेव प्रति गुणभूता आरुण्यमिव क्रयं प्रति।

---

1. A परिमाणविषयं 2. A. स्यासिद्धेः

**॥ २९ ॥ औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ ६८ ॥**

**अत्रोपपदस्थानीयं चोदकं मन्वानः पूर्वपक्षवादी नाजद्रव्यस्य बाधं मन्यते ।** अस्यार्थः—यथा अज ऋषभ इत्यत्र उपपदभूताजशब्दश्रवणे अज एव ऋषभः परिगृह्यते तथेहापि अजोपस्थापिनि चोदके सति अजस्यैव ऋषभस्य ग्रहणमिति अजद्रव्यस्यानिवृत्तिः । ननु ऋषभादिशब्दश्रवणमात्रेण गौः प्रतीयत इति अजस्य चोदकप्राप्तस्य बाध एव न्याय्य इत्यत्राह—**यदि पदोच्चारणसमनन्तरमेव गोद्रव्यं प्रतीयत** इति मन्यते तदा अज ऋषभ इत्यपि प्रयोगो न स्यात् परस्परमनन्वयात् यथा अजो गौरिति ।

अथ श्रौतेऽर्थेऽनन्वयात् गौणोऽयमृषभशब्द इति घटत एव प्रयोगो अज एव ऋषभ इति तत्राह—**न चायं गौण इति शक्यते वक्तुम् । स्वार्थापरित्यागात् ।** यो हि स्वार्थपरित्यागेनान्यत्र वर्तते स गौणोऽग्निर्माणवक इति । ऋषभादयश्च शब्दाः अजेपि वर्तमाना न स्वार्थमुज्झन्ति येनैव च वयः प्रभृतिनार्थेनाभिधेयेन ऋषभादयः शब्दा गवि वर्तन्ते तेनैव अत्राप्यजे वर्तन्त इति न ऋषभादिशब्दश्रुतिविरोधः अजद्रव्येऽपि चोदकप्राप्तेऽनुगृह्यमाणे इत्यजस्याबाधः ।

**राद्धान्तस्तु उपदेशपरिसमाप्तौ सत्यां चोदकः** प्रवर्तते । **अवगते हि औपदेशिके शब्दार्थे पश्चात् चोदकस्य प्रवृत्तिः तेन चोदकानुसारेण शब्दार्थो न शक्योऽन्यथाकर्तुम् ।** धेन्वादयस्तु शब्दाः गोगतगुणवचनाः न गुणमात्रवचनाः । न चोपदेशकाले धेन्वादीनां गोरूपस्वाधिष्ठानप्रत्यर्थिभूतं किञ्चिदजादिद्रव्यमस्ति येनाधिष्ठानान्तरगतानां अनभिधेयानामपि गुणानां गौणमभिधानं कल्प्येत । चोदकस्तु पश्चाद्भावी न शब्दार्थं प्रथमभाविनमन्यथाकर्तुमुत्सहते । **यदि गवाधिष्ठानगुणवचना धेन्वादयश्शब्दाः कथं तर्हि अज ऋषभ** इति प्रयोगः? उत्तरं **—उपदेशापरिसमाप्तेर्गौणः प्रयोगो भविष्यति ।** द्वयोरपि पदयोः श्रुतत्वात् अन्वयं विना नोपदेशः समाप्यते । न च गौणत्वं विनान्वयोपपत्तिरस्तीति गौणत्वाध्यवसानम् ।

**कथं पुनस्तदर्थसम्भवे गौणत्वम्?** उत्तरं—**अभिधानादर्शनात् ।** यदि गुणमात्राभिधानं दृष्टं लोके स्यात् स्याद्गुणमात्रवाचित्वम् । न च तदस्ति ।

तस्मान्न[1]गुणमात्रं तस्य शब्दस्यार्थः। कथं पुनरभिधानादर्शनं? केवलपदश्रवणे तन्मात्रानवगमात् गवाधिष्ठानगुणावगमात्। तस्मात् वाक्यबलेन कथञ्चित् गौण्या वृत्त्या अजाधिष्ठानगुणप्रतिपत्तिः वक्तव्या। इह तु तथा गोगतप्रतिपत्तौ प्रत्यर्थिभूतं नास्तीति न श्रौतोऽर्थः परित्यक्तुं शक्यते। धेन्वादयश्चैते शब्दाः गोगततद्गुणं वदन्ति न गोत्वमपि।

ननु यदि गोत्वमेते शब्दा नाभिदधति कथं तर्हि विशिष्टगुणवचनाः। उच्यते। किञ्चिद्धि स्वत एव विशिष्टं वस्तु यदाश्रयभेदेन भिन्नं तत्स्वत एव विशिष्टत्वान्न विशेषणाभिधानमपेक्षते धानादयश्च प्रत्याश्रयं भिद्यन्ते। तत्र गवाश्रिता ये पयोधानादयस्ते धेन्वादिशब्दैरभिधीयन्त इति न विशेषणतया आश्रयाभिधानमपेक्षन्ते। किञ्चिद्वस्तु स्वतो न विशिष्टं केवलविशेषणबलेनैव विशिष्टतामापद्यते। तत्तु विशिष्टमभिधीयमानं न विशेषणाभिधानमन्तरेण तथाऽभिधातुं शक्यते यथा गोत्वादि। इह च धानाद्युपहितगोत्वादिवचना धेन्वादयः शब्दा न भवन्ति। धानाद्यभिधानमन्तरेण गोत्वस्य विशिष्टस्याभिधातुमशक्तेः स्वतो गोत्वस्याभेदात्। विशेषणविशेष्याभिधाने शक्तिकल्पनागौरवत्। गवापेक्षधानादिवचनत्वे तु तेषां स्वतोऽभिधानात् विशेषणाभिधानापेक्षा नास्तीति लाघवात् धानावाचित्वमेव धानादिशब्दानाम्। तत्र यद्यपि गुणवचनास्तथापि शास्त्रान्तरेण गोद्रव्यानुपादाने गुणवद्द्रव्यपरत्वेन प्रयुज्यन्ते। तस्मात् द्रव्यान्तरविधानात् बाधितमजद्रव्यम्।

**॥ ३० ॥ नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ ६९ ॥**

इह तु यदि गुणवचनः शब्द उपदेशे श्रूयमाणः पूर्वन्यायेन स्वाधिष्ठानपर्यन्त एव निमित्ततां प्रतिपद्यते। तद्वयमपि श्वेतशब्दो द्रव्यमात्रं अनपेक्षितजातिविशेषं यदधिष्ठानं तत्पर्यन्ततया स्वार्थं प्रत्याययतीति चोदकेन यद् द्रव्यं प्राप्यते तद्बाध एव। सामान्यं हि द्रव्यमात्रमुपदेशार्थ इति विशेषश्चोदकप्राप्तो बाध्यते।

**अत्रोच्यते। त्वयैवोक्तं द्रव्यमात्राधिष्ठानं स्वार्थं श्वेतशब्दः प्रत्याययतीति।** ततः किमित्याह—**तर्हि[न]विशेषमवगमयति, नाधिष्ठान-**

---

1. R गुणप्रतिपत्ति

विशेषमवगमयति । विशेषेऽनवगते विशेषान्तरनिवृत्तिर्दुर्भणा विरोधाभावात् । यदि भिन्नमधिष्ठानविशेषं श्वेतशब्दोऽवगमयेत् तदा चोदकप्राप्तेन सह विरोधः स्यात । न चैतदस्ति [1]तस्मादबाधः चोदकस्येति युक्तम् ।

॥ २१ ॥ विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात् तेन च कर्मसंयोगात् ॥ ७० ॥

अत्र भाष्यकारः खदिरादीनामेव बाधाबाधौ चिन्तयति । तत्र यावदुक्तग्राहिणः कस्यचित् तन्मात्रबुद्धिर्माभूदिति तुल्यन्यायतया सर्वेषामेव यूपोत्पत्त्यर्थानां[2] द्रव्याणां संस्काराणां चोदाहरणतामाह—खलेवाली यूपो भवतीत्यत्र संशयः—किं यूपोत्पत्त्यर्था धर्माः साद्यस्क्रे कर्तव्या नेति । कथं कर्तव्याः कथं वा न कर्तव्या इति ।

उत्तरं—यदि लुप्तार्थास्तदा न कर्तव्याः अथालुप्तार्थाः कर्तव्याः । यद्यत्र यूपो बाधितस्तदा न कर्तव्याः यूपोत्पत्त्यर्थत्वात् । अथ न बाधितस्तदा कर्तव्याः । कथं पुनर्लोपालोपावर्थस्य ? उत्तरं—यूपबाधाबाधसन्देहात् । यूपस्यैव बाधाबाधौ कथं सन्दिह्येते । उत्तरं–वचनव्यक्तिभेदात् सन्देहः यदाऽयं वचनव्यक्तिः या खलेवाली सा यूपो भवतीति तदाऽर्थलोपः । तदा खलेवाली यूपकार्ये विहिता भवति । ततश्च तयैव यूपकार्ये कृते यूपो लुप्येत । अथ यूपः खलेवाली भवतीत्युच्यते तदा अलुप्तार्थत्वात् प्रवृत्तिर्धर्माणां, तदाहि सतो यूपस्य खलेवालीत्वं विधीयते । किं पुनरत्र युक्तम् ? पूर्वपक्षं परिगृह्णाति–यूपः खलेवाली कर्तव्य इति वाक्यार्थो युक्तः । का पुनरत्र युक्तिः ? श्रौतो यूपशब्दः समर्थितो भवति चोदकश्च न पीडितः ।

नन्वस्मिन् पक्षे खलेवालीशब्दः श्रौतमर्थं त्याजितः । कुत इत्याह खलेवालीशब्दो हि काष्ठवचनः खलेवारयतीति व्युत्पत्त्या यौगिकः खलेवालीशब्दो मेधिकाष्ठमाह, न पुनः खलेवारणक्रियामात्रम् । तथापि किमित्याह—न च निर्ज्ञातकाष्ठे यूपे काष्ठान्तरं विधातुं शक्यते । अस्यार्थः—निर्ज्ञातं

---

1. R तस्मादपीडाचो
2. A अपूर्वोत्पत्त्यर्थानां

काष्ठं खदिरादि यस्य स निर्ज्ञातकाष्ठो यूपस्तत्र काष्ठान्तरं विधातुं न शक्यते । खदिरादिकाष्ठं[काष्ठा]न्तरं भवतीति विधातुं न शक्यते । तस्मात् काष्ठात्मके यूपे खले वारणक्रिया कर्तव्या । यूपः खलेवाली कर्तव्यः । यूपे खलेवारणक्रिया संस्कारार्था कर्तव्या इति । ततश्च श्रौतस्य द्रव्यस्य हानं क्रियायाश्च विधानं लक्षणया यथा पाचकशब्दे पचिक्रियामात्रपरे ।

**अथाऽयमभिप्रायः यदि स्वार्थेऽपि(यूपः) खलेवाली सम्भवति तस्मिन्नर्थे श्रौतविधानमुपपद्यत एवेति ।** अस्यार्थः—यदि काष्ठान्तरमयीं खलेवालीमाश्रित्य विधानमुच्यते तदा शक्यविधानं स्यात् । यदि तु खादिरीं खलेवालीमाश्रित्य यूपे खलेवाली विधिराश्रीयते तदा नास्ति विरोध इति श्रौतार्थविधानमेवेत्यभिप्रायः पूर्वपक्षिणः । आक्षेप्ता दूषयति —**सुतरां तर्हि विधानानुपपत्तिः । प्राप्तत्वात्खदिरस्य ।** खदिरता प्रागेव न विधेया । एकग्रन्थेन स एव पूर्वपक्षिणा शङ्कामाह—**अथ खलेवारणसंस्कृतं तद्विधीयत इत्युच्यते ।** **यद्यपि खदिरतः प्राप्तत्वान्न विधेया तथापि खलेवारणसंस्कृततया विधीयते ।** दूषयति —**सैव तर्हि लक्षणा खलेवालीशब्दस्य काष्ठवचनस्य खलेवारणसंस्कृतपरत्वात् ।** एवमाक्षिप्ते पूर्वपक्षे पूर्वपक्षी वदति—**एवं तर्हि यश्चोभयोस्समो दोषो न तमेकश्चोद्यो भवति ।** तथाहि—विपरीतायामपि सिद्धान्तवचनव्यक्तौ यूपशब्दो लक्षणया वर्णनीयः । पुनराक्षेप्ता आह —**कस्तर्हि तत्र पूर्वपक्षिणो विशेषहेतुः ।** पूर्वपक्षी वदति —**अयमस्ति विशेषहेतुः खलेवाली यूपो भवतीत्युच्यमाने**–यूपशब्दो धर्मान् लक्षयति, न कार्यं, कार्ये हि लक्ष्यमाणे खलेवाली विधेया । तस्यां च विधीयमानायां व्यवहितः सम्बन्धः स्यात् यूपकार्ये खलेवाली भवतीति यूपशब्दात् व्यवहितो भवति इतिशब्दः खलेवालीशब्देन सम्बन्धनीयः । भवतु धर्मलक्षणा तथापि किमित्यत्राह — **ते च धर्माः खलेवाल्यां विधीयमानाः तत्संस्कारका एव प्राप्नुवन्ति** खलेवालीसंस्कारका इत्यर्थः । ततश्च प्रकरणे खलेवाल्या असम्भवात् प्रकरणबाधः अधिकारान्तरकल्पना अदृष्टकल्पना चेत्ययमेव पक्षो न्याय्यः यूपः खलेवाली भवतीति ।

**एवं प्राप्तेऽभिधीयते**—अव्यवधानात् खलेवाली यूपो भवतीति वाक्यार्थः न पुनर्यूपः खलेवाली भवतीति ।

**नन्वेवं सति यूपशब्दो लक्षणयेत्युक्तम्** । परिहरति—**परिहृतमिदं चोद्यं पूर्वपक्षिणैव यश्चोभयोर्दोष इति वदता** । यस्मात् पूर्वपक्षेऽपि खलेवाली-शब्दो लक्षणया वर्णितः ।

**ननु चाधिकारान्तरकल्पनादयो दोषाः** । परिहरति—**धर्मलक्षणायां ह्यमी दोषाः । इह तु कार्यं लक्षयति यूपशब्दः** । किमिति धर्मानेव न लक्षयतीत्यत्राह—**दोषपरिहारायैवाधिकारान्तरादिदोषपरिहारार्थं कार्यलक्षणा न धर्मलक्षणा** ।

ननु चैवं सति खलेवाली भवतिना सम्बध्यते [विधे] यत्वात् । कार्ये हि खलेवाली विधेया न खलेवाल्यां कार्यं तदाह—**न यूपः खलेवाल्यां विधेयः लक्षणत्वात् उद्देश्यत्वात्** । ततश्च स एव व्यवहितसम्बन्धः । कथमव्यवधानादि-त्युक्तम् ? **उच्यते । कथं वा यूपो भवतीति** कार्ये हि लक्ष्यमाणे न प्रथमान्ततया सम्बन्धो घटते । न हि भवति खलेवाली यूपकार्यं भवतीति । किन्तु खलेवाली यूपकार्ये भवतीति ।

**अतोच्यते** खलेवालीविशिष्टो यूपार्थश्चोद्यते । **किमिदं खलेवाली विशिष्टो यूपार्थश्चोद्यत इति** । उक्तं—**इदमिदं**, यथा दध्ना जुहोतीति दध्यनु-रक्तहोमविधानं एवं खलेवाल्यनुरक्तयूपकार्यविधानं भावार्थविषयो विधिरिति भावार्था-त्मकं यूपकार्यमेव खलेवालीविशिष्टं विधीयत इति न व्यवहितान्वयः । खलेवाली यूपो भवतीत्यर्थोऽस्य वाक्यस्य । कुतोऽयमर्थोऽस्येत्यत्राह—**भवतियोगाद्यूपस्य** । कथं यूपतीति शब्द इत्यत्राह—यथा श्वतिगर्दभति इति सर्वप्रातिपदिकेभ्य इत्येके इत्याचारे क्विप् । एवं च प्रथमान्तशब्दोऽप्युपपन्नः । यूपशब्दोऽयं गौणो यूपसदृशे वर्तते । तेनायमर्थः—खले वाली यूपसदृशी भवतीति । कार्यनिबन्धनं च सादृश्य-मुच्यते । ततश्च खलेवाल्यनुरक्तः यूपः कार्यं यदि विधीयते तदा कथमिद-मुच्यते यूपकार्ये खलेवाली विधीयत इति । तत्राह—**यावदप्राप्तं च विहितं भवति** प्राप्ताप्राप्तविवेकेन खलेवालीविधिरुच्यत इति **न प्रकरणबाधादयो दोषाः । नापि व्यवधानम्** । अतो लुप्तद्वाराणां खदिरादीनां यूपोत्पत्त्यर्थानामप्राप्तिः ।

अथ कस्मात् यूप एव खलेवालीकृत्ये न व्यापार्यते । तथाहि न यूपार्थो बाधितो भवति खलेवाल्या च यूपकार्यं कृतं भविष्यतीति । कुतो यूपस्याप्राप्तिरित्यत्राह

**—आक्षिप्तविशेषाभिधानात् खलेवालीशब्दस्य धेनुवत्** । अस्यार्थः—यथा धेनुशब्दो द्रव्यपर्यन्तो न गुणमात्रपर्यवसायी तथा खलेवालीशब्दोऽप्याक्षिप्तद्रव्यविशेषवचनो न खलेवारणक्रियामात्रवचनः । तत्र यदि यूप एव खलेवालीकृत्ये व्यापार्यते तदा यूपसंस्काराय खलेवारणक्रियामात्रविधिरापद्यते तत्र च लक्षणादोषः । तस्माद्यूपबाधेनैव श्रौतार्थानुग्रह इति ।

**॥ ३१ ॥ परेषां प्रतिषेधः स्यात् ॥ ७१ ॥**

खदिरादयस्तावदाक्षिप्तविशेषवचनत्वान्निवृत्ता इत्युक्तम् द्रव्यान्तरविधाने द्रव्यान्तरनिवृत्तेः । **इदानीं तक्षणादयश्चिन्त्यन्ते किं खलेवाल्यां कर्तव्या नेति । तत्र पूर्वपक्षवादी उपदेशाविरोधात् कर्तव्या इति मन्यते** । खलेवाल्यां यूपकार्यं कर्तव्यमिति योऽयमुपदेशार्थः असौ तक्षणादिषु क्रियमाणेष्वपि न विरुद्ध्यत इति कर्तव्यास्तक्षणादयः न ह्यत्रोपदेशेन विरोधः खदिरादीनामिव ।

**ननु कार्यं नास्ति तक्षणादीनां किमत्राविरोधः करिष्यति** । जोषणछेदने तावत् जोषितायां छिन्नायां च खलेवाल्यां लुप्तकार्ये । तक्षणमपि खलेवालीविरोधादविद्यमानकार्यं किमत्राविरोधः करिष्यति । उत्तरं—**तदेव तु कार्यमविरोधे सति निवृत्तमिति न शक्यते वक्तुमित्यभिप्रायः** । अयमभिप्रायः—स्वरूपतस्तावद्विरोधो नास्ति । तेनाविरोधे सति कर्तव्यतया प्रतिभासमानानामेषां कार्यं कल्पयितव्यम् । तेनादृष्टार्थे न पुनरपि जोषणछेदने करिष्येते अदृष्टार्थं च तक्षणमिति । अत्रोच्यते । **दृष्टकार्यत्वात् तस्य खलेवाल्यां चाशक्यत्वात् न कार्यान्तराकाङ्क्षा** । अस्यार्थः—क्लृप्तकार्याणां प्रकृतितः प्राप्तानां तदेव कार्यं प्रतिभातीति न कार्यान्तराकाङ्क्षास्ति येनाविरोधेन कार्यान्तरं कल्प्येत । तस्मान्न कार्याविरोधमात्रेण कार्यास्तित्वं शक्यते वक्तुम् । प्राकृतं च कार्यं यत्तदेषां लुप्तम् । यदा चैषां प्राकृतमेव कार्यं तदा प्रकृतौ यूपोत्पत्त्यर्थत्वात् इहापि यूपोत्पत्त्यर्थैरेवैतैर्भवितव्यम् । न चात्र यूपेन प्रयोजनं अयूपस्य तत्कार्ये विधानात् खलेवाल्या यूपस्य च भिन्नत्वात् । ततश्च कार्याभावान्न कार्यास्तक्षणादयः । तदाह – **किञ्च यूपोत्पत्त्यर्थास्तक्षणादय इति प्रकृतावुक्तम् । अयूपश्चायं नियोजने विहित इति न तक्षणादयो भवितुमर्हन्ति जोषणादयश्च कृतत्वान्न कर्तव्या इति प्रदर्शितम्** ।

॥ ३२ ॥ अर्थाभावे संस्कारत्वं स्यात् ॥ ७३ ॥

कृतत्वात् कार्यस्य कार्यान्तराकाङ्क्षा नास्तीति पूर्वः पक्षः। अद्भिरव सेचनादिभिः कृतं तत्कार्यमिति पुनः कार्यमपरं नाकाङ्क्षते। तेन निवृत्तिरेषामिति पूर्वः पक्षः। सत्यं यदि दृष्टमेव कार्यं न स्यात्। दृष्टे पुनः कार्ये कृतमित्येव नास्ति खलेवारणशिथिलीकृतायां खलेवाल्याम्। [1]अस्ति च दार्ढ्यापादनं कार्यमिति कृतकार्यता नास्ति कृतस्याप्यनुवर्तनात्। तस्मादलुप्तार्थानां तेषामबाधः।

॥ ३३ ॥ अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् ॥ ७४ ॥

इह पूर्ववादी क्रमपदार्थोऽपि बाध्यत इति मन्यते। अस्यार्थः—प्रकृतौ पाकात्पूर्वमवघातः इह पाकोत्तरकालताऽवघातस्य स्यादिति क्रमबाधः। तेन क्रमे बाधितेऽवघातोऽपि बाध्यत इति मन्यते पूर्वपक्षवादी।

ननु चाग्निहोत्रहवण्या निर्वपतीति न गुणानुरोधेन प्रधानं बाध्यत इति स्थितमेव। गुणश्च क्रमः पदार्थाः प्रधानभूताः। तेन [2]गुणबाधेपि प्रधानं कर्तव्यमेव कार्यतश्चात्र प्राप्तिरित्युक्तम्। तस्य च तुषकणविमोकलक्षणस्य च कार्यस्य दर्शनादलोपोऽर्थस्येति युक्तमेवावघातानुष्ठानम्। तस्मात् गतार्थमेवेदं प्रतिभाति उक्तत्वान्न्यायस्य।

अत्रोच्यते—विधिवितानमात्रं क्रम इत्युक्तम्। न क्रमो नामाग्निहोत्रहवणीवत् कश्चिद्व्यतिरिक्तो यस्य पृथग्बाधं वर्णयामः। तस्माद्वितानान्यत्वे पदार्थबाध एवेति पूर्वपक्षः।

यदि हि स्वतन्त्रः पदार्थक्रमः स्यात् तदा तदभावे पदार्थस्वरूपानपायात् क्रियेतैवानुष्ठानम्। वितानस्तु पदार्थस्य स्वरूपानुप्रविष्टः पदार्था एव वितताः प्रतीयन्त इति तदभावे पदार्थस्वरूपस्याप्यभाव इति क्रमबाधे पदार्थोऽपि यथाचोदितो बाध्यते।

---

1. R. अस्त्येव
2. R. गुणाभावेपि

**राद्धान्तस्तु—कार्यदर्शने सति प्रयुक्तं बाधितुं[न]शक्यते ।** तुषकण-विमोचनस्य कार्यस्य सम्भवादवघातो न शक्यते बाधितुम् । यदि कार्यप्रयुक्तो-ऽवघातो न बाध्यते **कस्य तर्हि बाधः ? उत्तरं—अनुष्ठानाभ्यासस्येति वदामः ।** प्रकृतौ त्रिःफलीकरणविधानात् साभ्यासोऽवघातः । इह धानास्वभ्यासे तस्मिन् क्रियमाणे सक्तवो भवेयुः तेन स्वरूपविरोधादवघातस्याभ्यासो बाध्यते । सकृदवघातस्तु क्रियते तावन्मात्रेण यावत्तुषकणविमोचनं तावदेव कार्यं क्रियते । स चाभ्यासोऽर्थप्रयुक्तत्वात् गुण इति शक्यते वक्तुं अवघाताभ्यासमन्तरेण सम्यक् तण्डुलनिर्वृत्त्यभावात् अर्थाक्षिप्तोऽवघाताभ्यास इति गुणत्वाद्बाध्यते ।

**कः पुनरयं व्यतिक्रमो भाष्यकारेणोच्यते ?** यदि व्यतिक्रमः तदा पूर्वोक्तन्यायेनावघातस्यापि बाधः प्राप्नोति । **उत्तरं—श्रुतद्रव्याभिप्रायेण तदुच्यते ।** यच्छ्रुतं धानाद्रव्यं तदभिप्रायेणेदमुच्यते । प्रकृतौ पाकात्प्रागवघातः क्रियते । इह तु पाकोत्तरकालमिति व्यतिक्रमो भण्यते ।

परमार्थतस्तु व्यतिक्रम एवायं न भवति यदेव द्रव्यं श्रुतं तस्यैव निर्वाप-प्रोक्षणानन्तरमवघातः । इह च न पूर्वावस्था धानानां श्रुता किन्तु धानावस्थैव । तदाह—**अश्रुता तु पूर्वावस्था प्रधानानाम् । तस्मात्सूक्तं धानास्ववहन्तिः कर्तव्य इति ।**

इति ऋजुविमलायां पञ्चिकायां

दशमस्य द्वितीयः पादः ॥

—: * :—

# ॥ दशमाध्यायस्य तृतीयः पादः ॥

## ॥ १ ॥ विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

अत्र भाष्यकारेण यास्तु विकृतिषु प्राकृतेष्वङ्गेषु गुणविधयः ता उदाहृताः । तत्र यथाश्रुतमात्रग्राही कश्चित् तन्मात्रमेव माग्रहीत् इत्याह— **उपदेशविधान-युक्तानि सर्वाण्येव वैकृतान्युदाहरणानि ।** राद्धान्ते नाम्नोऽप्यनेकार्थकल्पना स्यादित्यभ्युच्चयोपपत्त्यर्थं भाष्यकारेणोदाहरणविशेषः परिगृहीतः ।

**कःपुनरत्र पूर्वपक्षवादिनोऽभिप्रायः ?** उत्तरं—**अयमभिप्रायः-कार्यतश्चोदकप्राप्तिः ।** तथापि किमित्याह—**कार्यतश्चेत् तदा तत्प्राप्त्यैव निराकाङ्क्षं प्रधानम् ।** कार्यतो हि करणोपकारलक्षणात् या प्राप्तिः सा उपकार-जनकतयैव । ततश्चोपकारजनकपदार्थप्राप्त्यैव निराकाङ्क्षं प्रधानं, निराकाङ्क्षे च तस्मिन् विहितस्यापि गुणस्य प्रधानविधिना सम्बन्धाभावात् अननुष्ठानापत्तिः[1], गुणविध्यभावे चानर्थकत्वं वाक्यस्य । न च गुणेऽधिकारान्तरकल्पना सम्भवति प्रकृताधिकारैक्यावगमात् । तस्मात् गुणविध्यसम्भवात् कर्मान्तराण्येवैतानीति युक्तम् ।

अत्र चोदयति—**कर्मान्तरकल्पनायां वा कथं चोदकस्य निरोधः असति च निरोधेऽर्थवत्ता दुर्भणैव । तस्मात् कर्मान्तरवादिनापि प्रधान-सम्बन्धे समाधिर्वक्तव्यः ।** उच्यते । **अयमस्ति समाधिः । प्रधानं हि वृत्त्यु-पायापेक्षम् । यावदुपदेशविधाननिवृत्तं प्राकृतमुपायमालोचयति तावद्-त्रापि प्रकृतिवदुपदेश एवास्तीति न परोपदेशनिबन्धनमुपायमपेक्षते ।** अस्यार्थः—कर्मान्तरविधिपक्षे नियोगैक्येन प्रतिपन्नकार्यानुप्रवेशानां प्राकृतेतिकर्त-व्यतास्वीकारेण निरपेक्षतया औपदेशिकानामनुप्रवेशबाधो माभूदिति चोदको नाङ्गीक्रियते । **किन्तु दर्विहोमन्यायेन यावच्छ्रुतैरुपकारः कल्प्यते ; गुण-विधौ पुनः कार्याभिनिर्वृत्तेर्नायं परिहारस्सम्भवति ।**

---

1. R आयते:

अस्यार्थः—गुणविधिपक्षे स्वाश्रयतया प्रकृतपदार्थतया प्राकृतपदार्थग्रहणमनुमन्तव्यम्। ततश्च प्राकृतेनैव पदार्थवर्गेण निराकाङ्क्षतया पुनर्गणानुप्रवेशो न सम्भवति इत्युक्तो विशेषः। प्रागेव प्रयाजादयश्च शब्दाः स्फुटे कर्मान्तरत्वे प्रकृताविव बहूनां वाचका इहापि भवितुमर्हन्ति अनेकार्थत्वाभ्युपगमात्। यथा एक एव प्रयाजशब्दः प्रकृतौ बहूनां समिदादीनां वाचकः तथाऽमीषामपि कर्मान्तराणामुत्पद्यमानानां वाचकः प्रयोगबलेनानेकार्थत्वात्।

**एवं प्राप्तेऽभिधीयते—सत्यं कार्यतः कारणोपकारलक्षणात् प्राकृतानां पदार्थानां अतिदेशो विकृत्यपूर्वतादर्थ्येनाभिसम्बन्धः, सत्यं च निर्ज्ञातोपायत्वात् नैराकाङ्क्ष्यम्। नियोगैक्यमपि तु सन्निधानान्नैवापन्होतुं शक्यते** [1]प्रकृतिवदेव। यथा प्रकृतौ सन्निधानमात्रेणाङ्गानां प्रधानानां च एक एव नियोगः साध्योऽभ्युपेयते तथा विकृतावपि तावत्तथैव प्रतीयते तदैक्याच्चाधिकाङ्गोपसंहारो न निष्प्रमाणकः नियोगैक्येऽवगते यथोपदिष्टाङ्गानामेव प्राकृतोपकारं प्रति जनकता परिकल्प्यते। असति ह्युपदेशे प्राकृतेनैव पदार्थजातेन तस्योपकारस्येहापि सिद्धिरवसीयते प्रकृतिक्लृप्तमेवोपकारसाधनं वैकृतो विधिरनुमन्यते। उपदिष्टेष्वधिकेष्वङ्गेषु तदनुप्रवेशसिद्ध्यर्थं तेषामपि तदुपकारजननानुप्रवेशः कल्प्यते। न च शङ्क्यं चोदक एव न प्रवर्तिष्यत इति, नियमानवाप्तेः। भवन्ति चात्र गाथाः—

नियमानवाप्तिविकलो लिङ्गबलोप(हितं)स्थितं विधिः प्रथमम्।
उपकारं परकीयं स्वीकुरुते तावदिति सिद्धम् ॥ १ ॥

उपकारजनकभूतः पदार्थवर्गो विवक्षितः प्रकृतौ।
तादर्थ्यमात्रेण प्रकारतः सन्निधिमुपैति विकृतौ ॥ २ ॥

उपदेशनिपतिताः श्रूयन्ते कतिपये च ये धर्माः।
[2]ते नियोगैक्यवशात् तादर्थ्यं तत्र गच्छन्ति ॥ ३ ॥

प्राकृतपदार्थराशेः वैकृतमुपदे(शिकीं)शढौकितं तु ततः।
विधिरुपकारजनने सहायभावेन कल्पयति ॥ ४ ॥

---

1. R प्रकृतिवदेकवदेव
2. A, तेपि नियो

ननु गुणविधौ वाक्येन विधानं, कर्मविधौ तु श्रुत्येत्यत्राह—न च गुणे कर्मणि विनियोगस्य कश्चिद्विशेषः । गुणविधावपि भावार्थविषय एव विधिरित्युक्तं यतः । अतो गुणविधि[1]सरूपेषु वाक्येषु सम्भवत्पदार्थेषु न विशिष्टविधानं विधिगौरवापादकं आत्मानं लभते । चोदकाच्चोक्तः सम्भवः । तस्माद्गुणविधानान्येवैतानीति युक्तम् । शेषं सनिदर्शनमुक्तम् ।

॥ २ ॥ हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥

लिङ्गात् प्रकाशनसामर्थ्यात्मकात् पूर्वस्यैवाघारस्य मन्त्रविधिरिति पूर्वपक्षवादी मन्यते । अन्यथा हि अदृष्टार्थो मन्त्रः स्यात् । इन्द्रप्रकाशनासामर्थ्यात् । द्वितीये आघारे एतस्यैव विनियोगाभ्युपगमे दृष्टार्थो मन्त्रः स्यात् । 'ऊर्ध्वो अध्वर' इति मन्त्रान्तरस्य चोदकप्राप्तस्य बाधश्च न कल्पितो भवति । अतत्कार्यकरणेनाभ्युपगतेन तत्कार्यकरणे त्वभ्युपगम्यमाने मन्त्रान्तरेण मन्त्रान्तरस्य बाधः स्यात् ।

एवं प्राप्ते अभिधीयते । न कार्यान्तरकल्पना सम्भवति । उपायान्तरमात्रविधानोपक्षीणत्वादुपदेशस्य । अस्यार्थः—द्वितीय आघारे मन्त्रकार्यं क्लृप्तमस्ति पूर्वस्मिंश्चाघारे मन्त्रान्तरकार्यं कल्पयितव्यम् । न च कल्पनायां प्रमाणमस्ति मन्त्रान्तरविधिमात्रेणोपदेशस्योपपत्तेः मन्त्रस्य चेन्द्राभिधानेपि तुल्यत्वात् । दर्शितं च भाष्यकारेण तुल्यत्वं च । तस्मादुत्तरस्यैव मन्त्रान्तरविधिरिति सूक्तम् ।

॥ ३ ॥ संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥

ननु च एकादश प्रयाजान् यजतीत्यनेनैव गतम् । गुणविधौ सम्भवति न विशिष्टविधानं सम्भवतीति । अस्यार्थः—प्राकृतयोरेवासादननियोजनयोरुत्करपरिधिलक्षणगुणविधानेन वाक्ययोरुपपन्नत्वात् न विशिष्टविधानं युक्तमाश्रयितुम् । समाधत्ते—सत्यमेतदेवं अशक्यत्वात्तु पुनराशङ्क्यते यथावगतस्वरूपयोरुत्करपरिध्योरुत्तुङ्गतीक्ष्णाग्रकुशयोः प्राकृतमासादनं नियोजनं च दृष्टार्थमशक्यमिति अदृष्टार्थं कर्मान्तरविधानमिति पुनराशङ्का । तदाह—नासादन-

---

1. स्वरूपेषु

**नियोजने प्राकृते दृष्टार्थे तूत्करपरिध्योः** तुङ्गतीक्ष्णाग्रकृशयोः सम्भवत इत्यभिप्रायः। एतच्च गुणविधावपि वाक्यभेदो नास्तीत्यभ्युपगम्यैव पूर्वपक्षितम्।

**राद्धान्तस्तु—यावच्छक्यं नियोगार्थोऽनुष्ठेयः।** अस्यार्थः—प्राकृतयोरेव गुणविधिरस्तु। तत्र यच्छक्यं तदनुष्ठास्यते तत्र तुङ्गाग्रता कृशता च अशक्येति नापेक्ष्यते पृथ्वग्रता स्थविमा च कल्पयिष्यते यथा भविष्यति शक्तिः। तदाह—[स] च **पृथ्वग्रकरणेनोत्करस्य स्थविम्ना च परिधेः नियोगार्थोऽनुष्ठास्यते।** अतो नादृष्टप्रयोजनकल्पना युक्ता, कर्तव्यतानिष्ठत्वान्नियोगावगतेः। कर्तव्यतानिष्ठो हि नियोगो न प्रयोजननिष्ठः। तेन प्रयोजनान्तरकल्पना नास्ति। क्लृप्तकार्याश्रयणेपि अनुष्ठानोपपत्तेः। तस्मादत्रापि गुणविधिरेव न्याय्यः।

एवं समाप्तेऽधिकरणे कृत्वाचिन्तामुद्घाटयति—**विशिष्टानुवादादि चात्र नाशङ्कनीयम्।** निर्ज्ञातकार्यविषयत्वादेवमादेरुपदेशस्य विशिष्टविधानेप्यदोषः। **यद्यप्यनेकगुणश्रवणात् नासादननियोजनान्तरविधिः तथापि प्राकृतकार्ये विधानान्न दोषः फलस्य तुल्यत्वात्।** गुणविधौ यादृशं फलं तादृशमेव विशिष्टविधावपि। सर्वत्र चेदमुक्तम्।

## ॥ ४ ॥ षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥

**अत्र पूर्वः पक्षः वैकृतास्तावन्मन्त्राः प्राकृतकार्य एव विनियुक्ताः शरा इव बर्हिषां कार्ये। अतः कार्यापहारात् प्राकृतानां निवृत्तिः।**

ननु होमानामभ्यासात् प्राकृता वैकृताश्च मन्त्राः समुच्चीयन्त इत्यत्राह—**न चाभ्यासे कार्यान्तरं मन्त्राणां सम्भवति होमानामभ्यासेपि** मन्त्राणां कार्यान्तरं नास्ति कार्यान्यत्वे हि अभ्यासानुपप(त्तिः)त्तेः तथाभूतस्यैव पुनरनुष्ठानमभ्यासः। मन्त्रकार्यभेदे च न तथाभूतत्वं एकत्वे च कार्यस्य तस्मिन्नेव मन्त्रान्तरविधानम्। तस्माद्बाधो न्याय्यः।

**राद्धान्तस्तु सत्यं प्राकृतकार्ये विधानं कृतत्वात्तु कार्यस्य न मन्त्राभ्यासं न्याय्यं मन्यामहे।** सकृदुपदिष्टैः कार्ये कृतेऽर्थवत्ता तदुपदेशस्य जातेति न मन्त्राभ्यासो युक्तः कार्याभ्यासेपि। **ननु तस्मिन्नेव कार्ये सत्यभ्यास उप-**

**पद्यते न कार्यान्तरे;** परिहरति—**एतदपि सत्यं न कार्यान्तरे सत्यभ्यास इति । किमिति तर्ह्यनभ्यासो मन्त्राणाम् ।** कार्यवन्मन्त्राभ्यासोऽपि [1]न्याय्य इति भावः । उत्तरं—**कृतं तदुपदेशेनेति वदामः ।** अस्यार्थः—मन्त्रोपदेशेन मन्त्रानुष्ठानं कृतम् । अकृते च तस्मिन् मन्त्राभ्यासे न प्रमाणमस्ति । **उपदेश-सम्पत्त्यर्थो ह्यत्र कार्ययोगो वैकृतानाम् । न कार्यतः कार्ययोगः ।** कार्य-मस्तीत्येतावता कार्यं न कर्तव्यम् किन्तूपदेशसम्पत्तये । तस्मात् सकृत्करणेनैवो-पदेशः सम्पन्न इत्यभ्यासान्तरे बाधायालं भवितुमर्हति । यदि पुनः कार्यत एव कार्यं स्यात् तदा कार्यस्य विद्यमानत्वात् मन्त्रप्राप्तेः प्राकृतबाध एव स्यात् । न चैतदस्ति तदाह—**कार्यतस्तु बाध एव । न चायं कार्यत इत्युक्तम् । तस्मात्समुच्चयः । शेषमुक्तम् ।**

**॥ ५ ॥ अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥**

**अत्र एकस्मिन् कार्ये विधानादनभ्यासाच्च निवृत्तिरिति स्थिते कथं पूर्वः पक्षः ? पुनराधाने या दक्षिणा सा प्राकृतदक्षिणाकार्ये विहिता । न च पुनराधेयस्याभ्यासोऽस्तीति बाध एव युक्तो न समुच्चय इति स्थिते कथं पूर्वः पक्षः ?** समाधत्ते—**वचनभ्रान्त्या उभयीर्ददातीति वचनमिति भ्राम्यतः पूर्वपक्षः । भ्रान्तिप्रदर्शनेन च राद्धान्तः ।** वचनमिदमिति भ्रान्ति-रेषा । किन्त्वनुवादोऽयं अग्न्याधेये आग्न्याधेयिकीर्ददाति, पुनराधेये पौनराधेयिकी-रिति राद्धान्तः । **लिङ्गमुक्तम् ।**

**॥ ६ ॥ वासोवत्सं च सामान्यात् ॥ ३४ ॥**

**उत्तरविवक्षयेति**—सत्यमुत्तरन्यायं वक्तुमिदमुक्तमिति सत्यं नान्यत् ।

**॥ ७ ॥ अर्थापत्तेस्तद्धर्मा स्यान्निमित्तस्याभिसंयोगात् ॥ ३५ ॥**

**अत्र तद्धर्मत्वे न तावन्न्यायोऽभिधीयत इत्युक्तं भाष्ये । तदयुक्तम् । उक्तं हि यो यस्य कार्ये वर्तते स तद्धर्मान् लभत इति नवमे ।** तस्मादयुक्तं-

---

1. R. कार्ये इति

वान्वाहार्यधर्मबाधाशङ्का वासोवत्सयोः । एकग्रन्थेनाह—**यदि धर्मप्राप्तिर्नास्ति कथं प्राप्तिपूर्वको बाधः ।** प्राप्तिश्चेत् सिद्धं तर्हि तद्धर्मत्वम् । समाधत्ते—**प्राप्तिरुत्तरविवक्षयेत्येतदर्थमेव तद्द्रष्टव्यम् । कथं तर्हि पूर्वमधिकरणम् ? प्राप्तिः स्मारणीयेति** । प्राप्तिं स्मारयितुमेव पूर्वमधिकरणम् । [1]यदि प्राप्तिः स्मर्यते तदा तत्स्मृतौ पूर्वपक्षाश्रयणमयुक्तम् । सिद्ध एवार्थः स्मरणीयः । समाधत्ते—**नायुक्तं पूर्वपक्षस्मारणम् ।** सहेतुकं हि स्मारणं निर्विशङ्कमुत्तरोपयोगि भवतीति सप्रतिपक्षमुक्तम् । पूर्वपक्षे ह्यस्मारिते तन्निराकरणपूर्वकः सिद्धान्तहेतुर्न शक्यते वदितुम् अनुक्ते च सिद्धान्तहेतौ मन्दबुद्धेः कथमेतदेवमिति शङ्का स्यात् । ततश्चोत्तरचिन्ता न शक्या कर्तुमिति सप्रतिपक्षमुपन्यस्यते ।

## ॥ ८ ॥ दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

यदर्था प्राप्तिः स्मारिता तदेवेदानीं चिन्त्यते । **तत्र** [2]**वत्से तावत् पाकश्चिन्त्यते—किं कर्तव्यो नेति । तत्र पूर्वपक्षवादी न्याय्यं पाकं मन्यते । एवं प्राकृतं अन्नं साधनं यस्य तदन्नसाधनं दक्षिणादानं न पीडितं भविष्यति ।**

ननु वत्सो दक्षिणेति श्रूयते कथं तन्मांसं दक्षिणा तत्राह—**वत्सोपदेशश्च प्रकृतिद्रव्यतयाप्युपपन्नो भवति व्रीहिभिर्यजेतेतिवत् ।**

ननु चात्र वत्सः पच्यमानोऽपि नान्नं भवतीत्यत्राह—**भवति च मांसे अन्नशब्दः परमं वा एतदन्नं यन्मांसं इति ।**

**एवं प्राप्तेऽभिधीयते—वत्सो दक्षिणेति वत्सस्य दक्षिणात्वं** श्रूयते । या च दक्षकरणी सा दक्षिणा । यच्च दीयते तत् दक्षकरम् । यद्यत्र श्रपणेन वत्समांसं दीयते न तर्हि वत्सो दक्षिणा । न च प्रदेयप्रकृतितया प्रदेयता भवति । तस्मान्न मांसलक्षणार्थो वत्सशब्दो वर्णनीयः । व्रीहिभिर्यजेतेत्यत्र तु यागं प्रति करणत्वं व्रीहीणामवगम्यते । भवति च पुरोडाशनिष्पत्तिं अवान्तरव्यापारीकृत्य करणता व्रीहीणामपि । तेन न तत्र लक्षणा । इह तु दर्शिता लक्षणा । न च कारणादृते लक्षणा न्याय्येत्युक्तम् ।

---

1. R. यदि प्राप्तिमेव स्मारयितुं
2. A. वासोवत्सयोः

ननु प्रकृतिवदिति लक्षणाकारणमुपन्यस्तम् । न कारणं भवितुमर्हति प्रकृतिवदिति कार्यमात्रस्यातिदेशात् । अन्वाहार्यकार्यं प्रकृतिवदित्यतिदिश्यते तदाक्षेपेणचान्वाहार्यं तत्र । वत्सेनान्वाहार्यकार्ये विहिते बाधितेऽन्वाहार्ये न लक्षणाकार्यमस्ति अनन्नस्यैवान्नकार्ये विधानात् । तदाह—**वत्सेन च तस्यान्वाहार्यकार्यस्य सिद्धेः न पाकप्राप्तौ प्रमाणमस्ति पाकस्यान्नहेतुत्वात्** । तस्मात् **श्रुतोपदेशसिद्ध्यर्थं वत्स एव दातव्यः** । पाके हि उपदिष्टार्थविनाशः स्यात् । **ननु च अदनीयेनानमनं प्रकृतौ तेन विकृतावप्यदनीयेनैवानतिः कर्तव्या । ततश्च तत्सिद्ध्यर्थं पाकोऽपि कर्तव्य इति ।**

परिहरति—**न, तस्यादनीयत्वस्यानुषङ्गिकत्वात्** अन्वाहार्यस्वरूपेणादनीयत्वमनुषज्यते न तु पृथक् शब्देन तस्य विधानमस्ति । अन्नमात्रं शब्दार्थो नादनीयत्वं; तदिदमुक्तं—**न पुरुषसंस्कारायेदं दानं भवतीति** । न पुरुषतृप्त्यर्थमिदं दानं भवतीत्यर्थः ।

**॥ ९ ॥ पाकस्य चान्नकारितत्वात् ॥ ३७ ॥**

**युक्तं वत्से उपदेशार्थविनाशात् पाको न क्रियत इति** । एकग्रन्थेनाह—**वाससि तर्हि अविनाशात् क्रियतां पाकः** । पक्वमपि वासो वास एव । इदानीमाक्षिपति—**ननु वासस्यपि कार्याभावान्निवृत्तिः** सिद्धैव । पाककार्यमन्वाहार्ये प्रसिद्धं वाससि नास्ति द्वारलोपात् वासस्यपि पाको बाधनीयः । न च शब्दार्थसम्पत्तये पदार्थाः क्रियन्ते, किं तर्हि ? कार्यार्थतयेत्युक्तम् । तस्मान्मन्दमत्र निराकरणीयम् । समाधत्ते—**विकारमात्राशङ्कया कार्यसम्भवं मन्यते पूर्वपक्षवादी** । अस्यार्थः—पूर्वपक्षवादी पाक्यविकारमात्रं पाककार्यं मन्यते । सम्भवति च वासस्यपि पाकाद्विकारः तेन नास्ति द्वारलोप इति पूर्वः पक्षः ।

**राद्धान्तस्तु विशिष्टविकारार्थो लोके पाकःप्रसिद्धः । कोऽसौ विशिष्टो विकारः ? अन्नशब्दाभिधाननिमित्तमिति ब्रूमः** । यस्मिन् सति अन्नशब्दवाच्यता भवति स विकारोऽन्वाहार्ये कार्यतया सम्मतः । न च पच्यमानं वासोऽन्नतां प्रतिपद्यते इत्यत्रापि वत्स इव पाकस्य निवृत्तिः ।

**॥ १० ॥ तथाऽभिघारणस्य ॥ ३८ ॥**

**अभिघारणमिदानीं चिन्त्यते - किं वत्से वाससि चाभिघारणं कर्तव्यं नेति । अत्र पूर्वपक्षवादी अदृष्टसंस्कारमभिघारणेनान्वाहार्यस्य मन्वानोऽभिघारणस्य कर्तव्यतां मन्यते ।**

**राद्धान्तस्तु—न हि दृष्टे सम्भवति अदृष्टकल्पना न्याय्येति हेतोः स्वादिमैवाभिघारणस्य प्रयोजनं ऋत्विजामानतावुपयोगात्** । यथा हि स्वादुनाऽन्नेनानमन्ते न तथेतरेणेति लोकप्रसिद्धम् । न च तेन स्वादिम्ना वत्से वाससि च प्रयोजनमस्ति अनदनीयत्वात्तयोः । अदनीयद्रव्यवर्ती हि स्वादिमा पुरुषानतावुपयुज्यते । न पुनरनदनीयवर्त्यपि इति प्रयोजनाभावादभिघारणं बाध्यते ।

**॥ ११ ॥ द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥**

**कः पुनरस्याधिकरणस्य बाधलक्षणे प्रसङ्गः ?** उत्तरं—**दक्षिणाबाधसिद्ध्यर्थमौपोद्घातिकमिदमधिकरणम्** । वर्णयिष्यते हि सङ्ख्यायुक्तानां भागशः कार्त्स्न्येन च बाधः । यदि हि गवां सङ्ख्यासम्बन्धः तदा विकृतिषु सङ्ख्यान्तरश्रवणे तासामेव बाधः । तत्रर्त्विग्भागे सङ्ख्यान्तरश्रवणे गोगतस्यैव भागस्य बाधः केवलसङ्ख्यान्तरश्रवणे कृत्स्नानामेव गवां बाध इति । न केवलमिदमधिकरणमेवमर्थं **विभागेन च दानमिदमर्थतयैव चिन्त्यते** । परिषदधिकरणमप्युपोद्घातभूतमित्यर्थः । तस्मादस्ति बाधलक्षणे प्रसङ्गोऽस्याधिकरणस्य ।

ननु 'तस्य द्वादशशतं' इति तच्छब्देन [1]प्रकृतत्वात् क्रतुरेवोच्यते न गवादिः तत्कथं गवादिपरं तच्छब्दं गृहीत्वा विचार इति तत्राह—**तस्य शब्दं क्रतोरपनीयैषा चिन्ता** । द्रव्याणामेव तच्छब्देनावमर्श इति चिन्तेयम् । अभ्युपगम्यापि तस्यशब्दान्तः पातिनां द्रव्याणां गवामेव सङ्ख्यासम्बन्ध इति वक्तुं कृत्वा चिन्तेयम् । **तत्रागृह्यमाणविशेषो वा सर्वेषां सङ्ख्या सम्बन्धहेतुः । तेन प्रत्येकं सङ्ख्यासम्बन्धः एकेन वा कृतार्थत्वात् येन केनचित् एकेनेत्ययमेव विशेषहेतुः** । अस्यार्थः—सङ्ख्या गवादयश्च दक्षिणया सम्बध्यन्ते । तत्रारुणैकहायनीन्यायेन द्रव्यमाश्रित्य सङ्ख्याया अन्वयोऽनुभवनीय इति यत्किञ्चिद् द्रव्यमाश्रीयते न सर्वाणीति । चशब्दयोगाद्वा संहतिः सङ्ख्यासम्बन्धिनीति प्रतिभा ।

---

1. R. प्राकृत

यद्यपि सङ्ख्या आश्रयमात्रमपेक्षते तथापि चशब्दश्रवणे द्रव्याणां समुच्चयोऽवगम्यते। स एव च सङ्ख्यासम्बन्धी भविष्यतीति प्रतिभामात्रम्।

**आनन्तर्याद्वा माषाः सम्बन्धिनः तदनन्तरं सङ्ख्याश्रवणात्।** सङ्ख्यामात्रव्यावहारिकतया प्राणिनः सङ्ख्यासम्बन्धिनः। सङ्ख्यामात्रेण व्यावहारिकाः व्यवहाराय प्रभवन्ति प्राणिनः न माषादय इव कुडबाद्यवच्छेदापेक्षिणः। तेन सापेक्षत्वात् व्रीह्यादीनां न सङ्ख्यासम्बन्धः। किन्तु प्राणिनामेव। उपकाराधिक्याद्वा गोष्वश्वेषु च प्रसक्तिः। ऋत्विजो हि महत्युपकारे वर्तन्ते। उपकुर्वतां चोपकारः कर्तव्य इति सदाचारः। तेन महोपकारा गावोऽश्वा वा सङ्ख्यासम्बन्धिनः। अस्मिंश्च पक्षेऽश्वः प्रतिषेधान्निवर्तते। उभयतोदतां व्यवहारो हि विप्रतिषिद्ध इति न प्रचुरोपयोगा अश्वाः। तेन तेऽपि सङ्ख्यया न सम्बध्यन्ते। किन्तु गाव एव प्रचुरोपयोगित्वात्। महाभागा हि ताः।

अत्राधिकरणे प्रत्येकं [1]सङ्ख्यासम्बन्धो द्रव्यप्राधान्येनाशङ्कितः। तत्र चोद्यमाह—**ननु द्रव्यप्राधान्यपक्षोपन्यासोऽसकृन्नवमे निराकृतः। तेन किमित्युपन्यस्यते।** द्रव्यमात्रसम्बन्धे हि आनर्थक्यमुदितम्। परिहारमाह—**उपादानत आनर्थक्यं परिह्रियत इत्यभिप्रायो द्रव्यप्राधान्यवादिनः।** यथा पश्वादीनामेकत्वादिकं द्रव्यमात्रसम्बन्ध्युपादानतोऽनर्थकं न भवति उपादानशेषत्वात् तथेयमपि सङ्ख्येति। **कथं तर्हि अयं पक्षो निराक्रियते निराकरणीयश्चायम्। अनिराकृते हि अरुणान्यायो नावतरति।** अनवतीर्णे च तस्मिन् गोमात्रसम्बन्धो न सङ्ख्यायाः स्यादित्यत्राह—**प्रातिपदिकोपात्ततया नोपादानतः शेषत्वं सम्भवतीति निराकरणम्।** प्रातिपदिकोपात्ता हि सङ्ख्या क्रिययैव शब्दात् सम्बध्यते इत्यरुणान्यायेन विनियोगशेषत्वमेव स्यात्, नोपादानशेषत्वम्। विभक्त्यभिहिता तु प्रातिपदिकमात्रसम्बन्धिनी श्रुत्यैव विभक्त्याऽभिधीयत इति भवत्युपादानशेषः। भवत्वरुणान्यायः तथापि चशब्दार्थः किमिति सङ्ख्यासम्बन्धी न भवतीत्यत्राह—**चशब्दार्थः पुनः नैवान्वयी। अन्विततार्थाभिधायिनो ह्येते।** अस्यार्थः—चशब्दस्यार्थो न पदार्थान्वयभाग्भवति समुच्चयशब्दवत् निष्कृष्टस्यार्थस्य चशब्देनानभिधानात्। न हि भवति चः शोभन इति। किन्तु परान्वितं परोपश्लिष्टं स्वार्थं निपाता अभिदधति।

1. R द्रव्यं प्राधान्येनाशङ्कितम्

ननु च यदीह न समुचितानां सङ्ख्यासम्बन्धः कुतस्तर्हि तेषां समुच्चयश्च-शब्देन द्योत्यत इत्यत्राह—**दक्षिणान्वयेन चशब्दश्चरितार्थः समुचितानां दक्षिणात्वमिति वक्ष्यते** इति चशब्दार्थो निरस्तः । सङ्ख्यासम्बन्धितया व्यवहाराभावात् अप्राणितो निरस्ताः । न हि कुडवादिनिरपेक्षं केवलसङ्ख्या-मात्रावच्छिन्नैः व्रीह्यादिबीजैः लोके व्यवहारोऽस्ति । तेन व्यवहाराननुरूपत्वात् न तेषां सङ्ख्यासम्बन्धः ।

ननु सर्वे प्राणिनः संहताः सङ्ख्यया किमिति न सम्बध्यन्ते इत्यत्राह—**एकेनापि प्राणिना सङ्ख्योपपद्यत इति प्राणिमात्रनिरासः । मात्रशब्दश्चात्र साकल्यार्थः । निरस्ते च प्राणिमात्रे एकप्राणिमात्रसम्बन्धे स्थिते मुख्य-त्वात् प्रथमोपनिपातित्वात् महोपकारित्वात् अप्रतिषिद्धत्वाच्च गाव एव सङ्ख्यासम्बन्धिन्यः इति निरूपितम् ।** तथा च दर्शनमित्युक्तम् ।

**॥ १२ ॥ तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥**

**ननु परस्वत्वापादनान्तो ददातिरिति लोके प्रसिद्धत्वात् पृथक्त्वेन चर्त्विजामुत्पत्तेः पूर्वपक्ष एवात्र न संवर्तते ।** यदि हि स्वत्वत्यागमात्ररूपो ददात्यर्थः स्यात् तदा विभागमन्तरेणापि त्यागस्य शक्यत्वात् अनियमेन दानं युक्तमेवाशङ्कितुम् । न च तदस्ति । न हि त्यागमात्रे दानशब्दं लोकः प्रयुङ्क्ते । किन्तु य एव परस्वत्वापादनान्तः त्यागः तत्रैव दानशब्दो लोके प्रसिद्धः । यदि च भेदेनर्त्विजामुत्पत्तिः न स्यात् एक एवर्त्विक् [1]तदापि विभागानियमेन दानं संवर्तेत । भिन्नाश्चर्त्विजः । तान् प्रत्यविभागेन न शक्यं दानं कर्तु, (म्) मिति ।

ननु कथमशक्तिः ? यदि तावत् स्वत्वापादनान्तत्वं न सम्भवतीत्युच्येत कथमसम्भवः । भवति हि अविभक्तमपि मध्यगं द्रव्यं [2]सम्भूयसमुत्थायिनां भ्रातॄणां च पितापुत्रयोर्दम्पत्योश्च । अन्यथा हि कुलाययज्ञादीनामनुत्पत्तिरेव[3] आर्जनं स्वत्वा-पादकमित्युक्तं चतुर्थे । यदाऽऽर्जनमेव साधारणं तत्र स्वत्वमपि साधारणमेव कथमन्यदीयमन्यस्येति नाशङ्कनीयम् । प्रतिपत्तिविरोधोऽयं न वस्तुविरोधः । तत्र

---

1. A तद विभक्तमपि मध्यगानियमे प्राप्ते
2. R. संसृष्टानां भ्रातॄणां
3. R. मनुत्पत्ति

यन्मध्यगं स्वं तत्रान्यदीयस्य सतो नान्यदीयतयाऽवगतिः किन्तु युगपदेव साधारणतया; यथा—यदातिथ्यायां बर्हिरिति ।

अथोच्येत यद्यपि भवति किञ्चित्स्वं मध्यगमपि तथापि युगपत् बहून् स्वामिनः प्रति न शक्यते स्वत्वमापादयितुमिति नाशक्तौ कारणं वाच्यम् ।

इदमुच्यते—परमुद्दिश्य त्यागं कुर्वाणो हि दाता परस्वत्वापादनान्तं ददात्यर्थमभिनिष्पादयति । न च युगपत् बहव एकेनोद्देष्टुं शक्यन्ते अन्योन्यनिरपेक्षाः अनापन्नसमुदायभावाश्च । देयास्तु बहवोऽन्योन्यनिरपेक्षा अपि सङ्ख्याद्यवच्छेदात् । गवादयश्च शतं सहस्रं वा शक्यन्त एव युगपद्बुद्धिस्थीकर्तुम्[1] परमुद्दिश्य च त्यक्तुम् । क्रमेण तूद्दिश्य त्यागे त्यक्तस्य पुनस्त्यागानुपपत्तेः द्वितीयादित्यागानुपपत्तिः । नाप्यन्योन्यसापेक्षान् युगपदुद्दिश्य त्यागोपपत्तिः । तथाभावेन च तेषां अनपेक्षत्वात् । चैतन्येन हि स्वामी । न चैतन्येऽन्योन्यापेक्षत्वं पुरुषाणाम् । अतोऽन्योन्यापेक्षाणां स्वामित्वं न सम्भवतीति पूर्वपक्ष एवात्राधिकरणे न संवर्तते । समाधत्ते —
**सत्यं तथापि लोक[2]व्यवहारोऽयथार्थो दृश्यते** व्यामोहमूलः । यथा केनचिन्मीमांसाज्ञानविकलचेतसा परिषदे दीयतेऽदृष्टार्थम् । यदा च कृपया दृष्टार्थं महाजनाय दीयते । तेच स्वयमेव विभजन्ति विभागेन च कर्म कुर्वते । तद्दर्शनात् कस्यचिन्मन्दधियः इयमाशङ्कोदयते—अविभज्यापि च दक्षिणा दातव्येति । तस्मात् व्यावहाराद्व्यामोहमूलात्[3] कस्यचिदविभज्यापि दातव्येति भ्रान्तिरुदयते । तदपनयनार्थमिदमधिकरणम् ।

अत्र चोदयति—**यद्येवं यदि लोके परिषदेपि दानव्यवहारोऽस्ति तदा कथमिदमुपगम्यते प्रत्येकं दानपदार्थो[4] निष्पद्यते न परिषदीति । यावता लोकव्यवहारबलेन एवमेव किमिति न भवति ।** परिहरति—**अत्र पदार्थविदः स्वीकरणपर्यन्तं ददात्यर्थं ब्रुवते ।** परस्वीकारपर्यन्तो ददात्यर्थ इति शब्दार्थविदो वदन्ति । **किंपुनस्तत्र भवतां प्रमाणं** स्वीकारपर्यन्तो ददातिरित्यत्रेति ।

---

1. P. बुद्ध्या स्वीकर्तुम
2. A व्यवहारे
3. R व्यवहारमूलतया
4. P ददात्यर्थो

**षष्ठयन्तादितरेभ्योपि दृश्यत इति** त्रल्। उत्तरं—**लोक एवैषां प्रमाणम् त्यागमात्रे ददातेरप्रयोगात्** । भवतु परस्वीकरणान्तो ददातिः तथापि कथं परिषदे दानानुपपत्तिः इत्यत्राह—**परिषदे यद्दत्तं तत्र परिषदिनो वक्तारो भवन्ति परेण प्रापितं नास्माकमिदमद्यापि स्वमिति** । तथा च लोकयात्राविदः परिषद्येकेन कृतं दत्तमकृतमदत्तं मन्यन्ते । तत्कस्य हेतोः अस्वामित्वादिति गम्यते । दत्ते परिषदः[1] स्वामित्वाभावात् न स्वीकरणान्तो ददातिः परिषद्युपपद्यते । प्रत्येकदाने नैतद्द्वयं पूर्वोक्तमस्ति । तत्र प्रतिग्रहीतारोऽस्माकमिदमिति मन्यन्ते । लोकयात्राविदश्च दत्तमेतदिति मन्यन्ते । तेन तत्र स्वीकरणमस्ति । तस्मात् पदार्थविदां साधुनिर्णयः स्वीकरणपर्यन्तो ददातिः इति । स च परिषदि नोपपद्यत इति । यावेव चोद्यपरिहारौ तावेव पूर्वोत्तरपक्षाविति । शेषमुक्तम् ।

अत्र चोदयति—**युक्तमेतत्परिषदि स्वत्वं न निष्पद्यत[2] इति दानानिर्वृत्तिस्तु कथं ?** त्यागमात्रं दानं मन्वानस्य चोद्यम् । तदेवाह—**उभयत्र दत्तमिति प्रयुञ्जते दातारः प्रतिग्रहीतारश्च** यत्परिषदे दत्तं यच्च प्रत्येकं तत्रोभयत्रापि दत्तमिति प्रयोगः तेन परिषद्यपि दानं निष्पद्यत एव । तस्मान्नायं निर्णयहेतुः ।

अत्रोच्यते—अयमेव निर्णयहेतुः यःपूर्वमुक्तः यदि हि स्वीकरणादृतेपि दानानिर्वृत्तिः तदा त्यागदानशब्दौ पर्यायौ स्याताम् । पर्यायत्वं लोके प्रसिद्धम् । नचान्यथा पर्यायत्वसिद्धिः । तस्मात् स्वीकरणान्तो ददातिः । तथा च लौकिकाः परेणास्वीकृते दत्तेपि स्वामिना सङ्कल्पितमिदं नाद्यापि दीयत इति ब्रुवते । तस्मात् स्वीकरणान्तो ददातिः । अतः परिषदे दत्तमिति यः प्रयोगः असावुपक्रम एव समाप्तिपर्यन्तस्य वाचकः प्रयुज्यते । त्यागोपक्रमः स्वीकरणपर्यन्तो ददातिरिति । तेन त्यागमात्रे दानोपक्रमे लक्षणया प्रयुज्यते । न केवलं लक्षणया त्यक्तमात्रे दत्तशब्दः अपि तु सङ्कल्पितेऽपि ददातिं प्रयुञ्जाना दृश्यन्ते दत्तमेदायुष्मता यत्सङ्कल्पितमिति । तस्माल्लक्षणयापि प्रयोगदर्शनात न प्रयोगमात्राच्छब्दार्थव्यवस्थितिः । **यदि न प्रयोगाच्छब्दार्थव्यवस्थितिः कथं तर्हि ?** उत्तरं—**यत्र न सम्बन्ध्यन्तरबलादवगतिः स शब्दार्थः इति** । यः पदार्थान्तरसम्बन्धानपेक्षः शब्दादर्थो-

---

1. R तेन परिषादिनां
2 R. नोपपद्यत इति

ऽवगम्यते स शब्दार्थः । यः पुनः सम्बन्ध्यन्तरबलेनार्थोऽवगम्यते स गौणो लाक्षणिको वा भवति । अत्र च देवदत्ताय गावो दीयन्तां इत्युक्ते स्वीकरणान्त एव ददात्यर्थः प्रतीयते परित्यागमात्रेप्यनन्वयो नास्ति । तथापि येयं स्वीकरणान्तप्रतीतिः सैव शब्दमात्रनिबन्धनेति गम्यते । परिषदे दत्तमिति या त्यागमात्रावगतिः परिषत्पदार्थसम्बन्धवशादिति नासौ शब्दमात्रनिबन्धना । **यदि परिषदे दानानुपपत्तिः कथं तर्हि परिषदे दानं लौकिकानाम्** । उत्तरं—**भ्रान्त्येति ब्रूमः चैत्यवन्दनादिवत्** । यथा निर्मूलमपि चैत्यवन्दनात् स्वर्गो भवतीति व्यामोहेनाद्रियमाणा भ्रान्त्या चैत्यवन्दनादिकं कुर्वते तथेहापि नावश्यमव्यामोहादेव लौकिकव्यवहारः प्रायेण व्यामोहपूर्वक एव लौकिको व्यवहारः । अत एव परीक्षणमपि न्यायविदां प्रवृत्तम् । यदि भ्रान्त्या लोको न व्यवहरति तदा किं परीक्षणेन ? तदाह—**परीक्षणं च न्यायविदां लौकिकव्यवहारमूढतयैव प्रवृत्तम्** । तस्मात् सप्रमाण एवायं निर्णयः पदार्थविदां स्वीकरणपर्यन्तो ददातिरिति स्थितम् ।

**॥ १३ ॥ समं स्यादश्रुतत्वात् ॥ ५३ ॥**

कथं पुनः पक्षद्वयेपि समाख्यानिर्देशः ; यदा समं दानं यदा च कर्मानुरूप्येण तदा कथमर्ध्यादिसमाख्यानिर्देशः ? परिहरति—**अभ्युदय एव द्वादशाह एवेति मन्यते** । अस्यार्थः—द्वादशाहे समाख्यानिर्देशः तेन परं तत्रैव भवत्वेषा भागकल्पना न पुनः क्रत्वन्तरे भवितुमर्हति । द्विविधश्च द्वादशाहः - सत्रमहीनश्च । तत्र यद्यपि सत्रे दानानुपपत्तिः तथाप्यहीने भविष्यति । **राद्धान्तवादी त्वविधानात्प्राकृतं तदित्याह** । अस्यार्थः - इदं वाक्यं सत्रभूते, तत्र न दानभागविधिः किन्तु सिद्धवद्भागसम्बन्धेनायमृत्विजां व्यपदेशो यजमाने प्रयुक्तः । न ह्यन्यथा प्राकृतं(तिक)विना सिद्धवदभिधानोपपत्तिः । अतः समाख्यातः तथाभूतो भाग इत्यवगम्यते । तथाभूतभागसम्बन्धश्च कर्मकरस्योपकारविशेषं विना न भवतीत्युपकारविशेषोऽपि कल्प्यते । तदाह—**अतस्समाख्यात उपकारविभागवत् दक्षिणाविभागः** । कथं पुनरुपकारविशेषोऽवगम्यते कर्मविशेषमन्तरेणेत्याशङ्क्याह—**सर्वं शब्दावगम्यं चोदनास्विति स्थितम्** । यद्यल्पमपि कर्म कुर्वाणो महान्तमुपकारं करोतीति शब्दात् प्रतीयते कःशक्नोत्यन्यथाकर्तुमिति ।

**॥ १४ ॥ तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारः स्यात् यथेष्टिर्गुणशब्देन ॥ ५६ ॥**

ननु तस्य धेनुर्दक्षिणेति श्रूयते। ततश्च सर्वेषां गवादीनां धेन्वा निवृत्तिर्युक्ता। कथमत्र संशयः? किं धेनुर्गवां निवर्तिका उत कृत्स्नक्रतुदाक्षिण्यस्येति। अत्राह— **अत्र विभागाविभागनिबन्धनः संशयः**। यदि विभक्ता दक्षिणा तदा गोरन्यापि दक्षिणा[1] धेनुर्गवां निवर्तिका। अथ त्वविभक्ता ततः सर्वेषां निवर्तिकेति। **विभागाविभागसंशयः पुनः कथं? उत्तरं—विशेषानवगमात्**। उभयथा च वाक्यार्थोपपत्तेः यदि गवादयः आनतय इत्युच्यन्ते तथापि वाक्यार्थ उपपद्यते, प्रत्येकं दक्षिणात्वेप्युपपद्यत इत्यर्थः। अथानतिर्गवादय इत्युच्यते तथाप्युपपद्यते वाक्यार्थः यदि समस्तं दाक्षिण्यं तथाप्युपपद्यत इत्यर्थः। यस्मादुभयथापि वाक्यार्थोपपत्तिः तस्माद्वरं गवादय आनतय इत्युक्तम्। एवं चोदकानुग्रहो भविष्यति द्रव्यान्तराणामबाधात्। स्वतन्त्रनिर्देशश्च समर्थितो भविष्यति। गौश्चाश्वश्चेति।

**ननु शब्दान्न स्वतन्त्रावगतिः। अपितु समुच्चीयमानानामवगतिः।** परिहरति—**नास्वतन्त्रावगतिः**। अवगम्यमाननिर्देशार्थत्वाच्चकारस्य योऽर्थः प्रमाणान्तरेण प्राप्तः तमेव निपाता वदन्तीत्यर्थः। तदाह—**सत्यन्वये योऽर्थोऽवगम्यते तस्यायं प्रतिनिर्देशकः [2]न पुनरन्वयभाजमर्थमाचष्टे।** चशब्दाभिहितो नार्थान्तरेणान्वयं भजते समुच्चयशब्दवदिति वैधर्म्यदृष्टान्तः। दर्शितं चैतत्। न चात्र समासः येनेतरेतरयुक्ताः समाहृताश्च दक्षिणया सम्बध्यन्ते। तस्माद्विभक्तं दाक्षिण्यमिति सिद्धम्। अतश्च गवां निवर्तिका धेनुः।

एवं प्राप्तेऽभिधीयते—**एकं दाक्षिण्यं, कुतः? एकवचननिर्देशात् दक्षिणेति। यदि गवादीनां प्राधान्येन निर्देशः तदा दक्षिणाः इति बहुवचनं स्यात्। गुणवचनानां आश्रयतो लिङ्गवचननिर्देशात्। यथा अग्नीषोमौ देवतेति।** अस्यार्थः—यदि प्रत्येकं दक्षिणा स्यात् तदा गवादीनां दक्षिणात्वं ज्ञापनीयम्। ततश्च गवादयः प्रधानं प्रधानसङ्ख्यानुरोधेन गुणेषु सङ्ख्यानिवेश इति बहुवचनं स्याद्दक्षिणा इति। यथा अग्नीषोमौ देवते। आग्नेये सौम्ये च कर्मणि अग्नीषोमीयचोदनार्थाभिप्रायेणेदमुच्यते इति मत्वा चोदयति—

---

1. R. गोमात्रस्यापि दक्षिणात्वाद्
2. R. कः पुनः

**ननु चाग्नीषोमौ देवता किमिदमुच्यते देवते इति** । परिहरति—**प्राधान्यनिर्देशप्रदर्शनपरमिदं भाष्यकारस्य न पुनरग्नीषोमीयचोदनार्थपरम्**। तत्राग्नेः सोमस्य च देवतात्वं गुणभूतं निर्दिश्यते तत्प्रदर्शनपरमिदं भाष्यकारस्य वचनं न पुनरग्नीषोमीयं पशुमित्यादिचोदनासिद्धो योऽर्थः तत्परमिदमुच्यते । कथमिदमवगम्यते प्राधान्यनिर्देशप्रदर्शनपरमिति अग्निरदेवतेति चोदनार्थपरे दर्शनात् । मनोताधिकरणेऽग्नीषोमीयचोदनार्थं प्रदर्शयन्नग्नेरदेवतात्वमाह भाष्यकारः । तेनाग्नीषोमीयचोदनासिद्धमिदं नोच्यते । अन्यथाहि तेन सह विरोधः स्यात् । चशब्दबलेन समुच्चितं दक्षिणेत्युक्तमिति मन्वानश्चोदयति—**ननु न चशब्दोऽन्वयभाजं निर्दिशति** । परिहरति—**केनोक्तं निर्दिशतीति । अत्राप्यन्यतोऽन्वितस्यैव**[1] **निर्देशकः** एकवचनान्तदक्षिणाशब्देन योऽवगतः स एव चशब्देन द्योत्यते ।

**नन्वेवं सति इतरेतरयोगः समाहारो वा प्राप्नोति** । यदि परस्परसापेक्षत्वं दाक्षिण्ये तदा इतरेतरयोगः समाहारो वा प्राप्नोति । उत्तरं—**प्राप्नोतु को दोषः** । दोषं दर्शयति —**समासेन भवितव्यम्** । परिहरति—**न भवितव्यं समासेन वाचनाद्भगवतः पाणिनेः** । एवं चैकं दाक्षिण्यं दृष्टप्रयोजनं भवति इतरथा बहूनां मध्ये एकेनैव दृष्टार्थस्य सिद्धत्वात् अन्येषां दाक्षिण्यानां अदृष्टार्थकल्पना ।

**ननु विकल्पो भविष्यति । उच्यते । उपदेशाभिप्रायेणेदमुच्यते** । एकस्मिन्नुपदिष्टे परोपदेशोऽदृष्टार्थः अनपेक्षितविधिः स्यादित्यर्थः । एष दोषः परिहृतो भविष्यति एकस्मिन् दाक्षिण्ये । अतश्चैकं दाक्षिण्यं कृत्स्नस्य च धेनुर्निवर्तिकेति सिद्धम् ।

**॥ १५ ॥ एकां पञ्चेति धेनुवत् ॥ ५९ ॥**

**ननु च गोष्वेव सङ्ख्यामात्रविधिर्युक्तः अतः कथं कृत्स्नक्रतुदाक्षिण्यस्य निवृत्त्याशङ्का ?** यदि च दाक्षिण्ये गोमात्रविधिः सङ्ख्याविधिश्च तदा वाक्यभेदः । तत्राह—**अत्र विशिष्टविधानात् पूर्वपक्षः** दक्षिणैव गोविशिष्टा

---

1. R. अन्वयावगतस्यैव

सङ्ख्याविशिष्टा च विधीयते। नन्वेवं दक्षिणान्तरे विहिते कथं प्राकृतस्य निवृत्तिः इत्यत्राह—**कृतत्वात्प्राकृतस्य कार्यस्य धेन्वा**। ननु ते लक्षणां स्यात् क्रतुदाक्षिण्यस्य प्राकृतस्य निवृत्तिः।

अत्र भाष्यकारः **त्रिवत्सश्च तथा च लिङ्गदर्शनम्** इति सूत्रद्वयं अन्तरागर्भिण्याश्रयणेन व्याख्याय पुनश्च तत्परित्यज्य पूर्वपक्षे लिङ्गदर्शनपरत्वेन वर्णितवान्। तदाह—**अन्तरागर्भिणीन्यायमुपन्यस्य तस्यानुचितत्वात् तत्परिहाराय लिङ्गत्वेन सूत्रद्वयमुपवर्णितवान्**। ततश्च सङ्ख्यामात्रविधानेन राद्धान्तमभिधाय गोषु सङ्ख्यामात्रं विधीयत इत्येवं राद्धान्तमभिधाय न लिङ्गवैषम्यमुपवर्णितम् यत्पूर्वपक्षे सूत्रद्वयेन लिङ्गमुक्तम् तेन सह वैषम्यं नोक्तम्। तत्रायमभिप्रायः—अन्तरागर्भिण्यैव वैषम्यमुक्तं या सा पूर्वमन्तरागर्भिण्युक्ता तयैव लिङ्गवैषम्यमुक्तं युक्तम्। साण्डस्य क्रयद्रव्यमात्रनिवर्तकत्वं क्रीणातिसम्बन्धेन विधानात् तस्य। इह तु न दक्षिणासम्बन्धेन गवां विधानम्। किन्तु गोसम्बन्धितया सङ्ख्यामात्रविधानमिति। ननु त्यक्ताऽन्तरागर्भिणी। कथं तया वैषम्यमुक्तं इत्यत्राह—**इह त्वन्तरागर्भिणीत्वं निराक्रियते न पुनर्युक्त्यभिधानम्**। अन्तरानुप्रवेशो नास्तीत्युक्तम्। न्यायस्तु शोभन एव। तेन भवति वैषम्यमित्युक्तम्।

**ननु तत्रापि त्रिवत्सेऽपि वयोमात्रविधानात् एकां पञ्चेत्यनेन तुल्यम्**। यथा गोषु सङ्ख्यामात्रविधिः तथाऽत्र ऋषभे त्रिवत्सविधिः। परिहरति—**न तुल्यम् विशिष्टवयोवचनत्वात्**। न च द्रव्यं द्रव्यान्तरे विधातुं शक्यते। द्रव्ये तु सङ्ख्यामात्रविधानं सुकरम्। तस्माद्वैषम्यम्। केवलं तु वयोमात्रविधानेऽङ्गीक्रियमाणेऽशब्दार्थतैवाभ्युपगता भवति।

॥ १७ ॥ **प्राकाशौ तथेति चेत्** ॥ ६३ ॥

ननु हिरण्मयौ प्राकाशावध्वर्यवे ददाति इत्यध्वर्युसम्बन्धेऽवगम्यमाने कथं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्त्याशङ्का यावता तद्भागविकार एवेत्याशङ्क्याह—**अत्र विशिष्टानुवादभयात्पूर्वपक्षः**। यद्यध्वर्युविशिष्टदानानुवादेन प्राकाशविधिः स्यात् तदा विशिष्टानुवादलक्षणो वाक्यभेदः स्यात्। तस्मादध्वर्युशब्दो न विशेषकः। तेन दानमात्रे प्राकाशविधिः ऋत्विङ्मात्रप्रदर्शनार्थश्चाध्वर्युशब्दो यौगिकः।

ननु चाध्वर्युप्राकाशसम्बन्ध एव विधीयतामित्यात्राह—**आनन्तर्यं च विभक्त्योः सम्बन्धायोग्यत्वेन नादृतम्** । यद्यप्यानन्तर्यमनयोः तथापि द्वितीयाचतुर्थ्योः परस्परसम्बन्धायोग्यत्वान्नाध्वर्युपरित्यागेन प्राकाशयोस्सम्बन्धः । ततश्चकथं तस्य विधिः । तस्माद्दानमात्रसम्बन्धित्वेन विधानात् कृत्स्नस्य निर्वर्तकौ प्राकाशाविति ।

**राद्धान्तस्तु—प्रतीयते तावद्विभागो दक्षिणानां न चात्र ददातिः पदान्तरपरित्यागेनाध्वर्युपरित्यागेन प्राकाशपदेन सम्बध्यत इति प्रतीतिरस्ति** । न चाध्वर्युः प्राकाशपदेन न सम्बध्यते । भवति हि कारकयोरपि क्रियानिमित्तकः सम्बन्धः ।

**ननु विभक्त्यर्थौ विहन्यते प्रथमाषष्ठ्यौ हि तदा स्याताम् । न द्वितीयाचतुर्थ्यावित्युक्तम्** ।

परिहरति—न विहन्यतेऽथप्राप्तत्वाद्विभक्त्यर्थस्य प्राकाशावध्वर्युसम्बन्धिनौ कर्तव्याविति विहितेऽर्थे द्वितीयाचतुर्थ्योरर्थप्राप्तिः । यदि हि तौ तस्मै दद्यात् तौ तत्सम्बन्धिनौ कुर्यात् । तस्मादार्थौ विभक्त्यर्थौ विभक्तिभ्यामनूद्यते ।

कथं पुनरध्वर्युप्राकाशयोः सम्बन्ध इत्यत्राह—**आनन्तर्यस्य सम्बन्धहेतुत्वात्** । तदिदमुक्तं असत्यानन्तर्ये सम्बन्धो नोपपद्यत इति । प्रत्युत चतुर्थीक्रियाविशेषस्य लिङ्गं भविष्यति । सा क्रिया सम्बन्धहेतुराश्रीयते यस्यां सत्यां चतुर्थ्यर्थो लभ्यत इति दानमेव क्रिया कल्प्यते । एषा कल्पनाऽध्वर्युशब्दबलेनाश्रिता । अन्यथाऽविवक्षितार्थोऽध्वर्युशब्दः स्यात् । रूढिं च परित्यज्य यौगिकाश्रयणे प्रकारान्तरं चाऽऽह—**विशिष्टविधानं वाऽभ्युपगम्यताम्** । दानमेवाध्वर्युप्राकाशविशिष्टं विधीयते । न पुनर्भागावगतिः शक्यतेऽपन्होतुम् तस्मादध्वर्युभागस्य प्रत्याम्नायो दानम् । तस्यापि दृष्टार्थत्वेन तत्कार्यकरणत्वादिति सूक्तम् ।

**॥ १८ ॥ धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥**

**कथं पुनरत्र ब्रह्मभागस्य निवर्तकोऽश्व इत्येतस्मिन् पूर्वपक्षे रुक्मललाटो दक्षिणेति वाक्यम्।** अस्मिन् वाक्ये सामान्येन दक्षिणासम्बन्धः प्रतिभाति। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिरेव युक्ता। उत्तरं—**विशेषसम्बन्धेऽपि सामान्यं न विरुद्धयत इत्यभिप्रायः।** ऋत्विग्विशेषदक्षिणात्वेपि दक्षिणाशब्दस्य सामान्यवाचिनो न विरोधः। अतो न कृत्स्नस्य क्रतुदाक्षिण्यस्य प्राप्तस्य निवर्तकोऽश्वः दर्शनलोभात् भ्रमः यथा स्रजमुद्गात्रे ददातीत्युद्गातृभागस्य निवर्तिका तथा कृत्स्नस्य निवर्तिकेति दृष्टान्तलोभात् भ्रमोऽयं पूर्वपक्षिणः। दृश्यतेऽस्मिन्निति दर्शनम्।

**राद्धान्तस्तु सत्यं सामान्यस्य विशेषेणाविरोधः एकवाक्यत्वे हेतुः सः यथा शाबलेयो गौरिति।** वाक्यभेदे पुनः यथाप्रतिपन्नमेव ग्रहीतव्यम्। एकवाक्यत्वेपि विशेषान्वितमेव सामान्यमभिधीयते। वाक्यभेदे तु स्वतन्त्रार्थद्वयावगतिः तेन प्रथमवाक्येऽश्वस्य सामान्येन दक्षिणात्वम्। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिः। द्वितीये तु वाक्ये तस्यैव ब्रह्मसम्बन्ध इति। यद्यश्व एव कृत्स्नक्रतुदक्षिणा ब्रह्मण एव देयः। तदा कथं दक्षिणामन्तरेण ऋत्विगन्तराणां प्रवर्तनम् तदाह—**कथं पुनरस्मिन् पक्षे कर्त्रन्तरं प्रवर्तनीयम्? उत्तरं—नात्र आर्थस्य बाधः। अर्थाद्येन केनचित्तेषामानतिः वाचनिकश्चायं प्रत्याम्नायश्चिन्त्यते।** वचनादप्रतिहतस्वार्थोऽभ्युपायः।

**ननु चार्थस्यैवायं नियमः।** अस्यार्थः - परकर्तृकं कर्म दक्षिणामन्तरेण न शक्यते कर्तुमिति अर्थाद्या दक्षिणा प्राप्ता तत्रैवायं नियम इति। **कथमपर आर्थोऽभ्युपायः।** परिहरति—**नायं नियमः। कुतः? वरणभरणनिमित्तत्वात्परकर्तृकावगतेः।** अस्यार्थः—न साक्षात्परकर्तृकत्वं श्रुतौ श्रूयते येन सामान्येनानमने[1] अदो नियमो भवेत्। किन्तु वरणभरणविधानादेव परकर्तृकतावगमः तेनायं नियमो भवतीति वरणभरणविधानात् प्राक् सामान्येनाप्राप्तेरिति सूक्तमुक्तम्। अतः कर्त्रन्तरापनये सर्वत्र न्यायो द्रष्टव्यः।

## ॥ १९ ॥ तथा सोमचमसः ॥ ६८ ॥

केन विशेषेणात्र पूर्वपक्ष इत्यत्राह—**एकवाक्यत्वेनात्र सामान्यं विशेषगतं मन्वानस्य पूर्वपक्षः।** एवं हि श्रूयते—**औदुम्बरः सोमचमसो दक्षिणा**

स प्रियाय सगोत्राय ब्रह्मणे देयः इति । एकवाक्यत्वात् सामान्यं विशेषनिष्ठमेव, तेन न कृत्स्ननिवृत्तिः एवं प्राप्तस्य बाधोऽन्यस्य न कल्पितो भवति ।

**राद्धान्तस्तु**–दक्षिणाशब्दश्रवणात् देयं सम्प्रदानं च कृत्स्नसम्बन्धितयाऽवगम्यते । उक्तं हि अविभक्तं दाक्षिण्यमिति । येन दक्षिणाशब्दश्रवणात् दक्षिणाकार्य एव सोमचमसस्यापि विधानमवगम्यते । तेन न दक्षिणाशब्दो विशेषेऽवस्थापयितुं शक्यते । द्रव्यस्य देयस्य प्रदानात्मकस्य तत्सम्बन्धित्वेनापि सामान्यदक्षिणासम्बन्धित्वेनाप्युपपत्तेर्न लक्षणाप्रमाणत्ति । दक्षिणाशब्देन दक्षिणाभागलक्षणात्वे प्रमाणं नास्तीति युक्तमुक्तं कृत्स्नस्य निवृत्तिरिति ।

नन्वेवं पौरस्त्यमधिकरणं दूरोत्सारितम् । नैवम् । इह दक्षिणाशब्दश्रवणाद्राद्धान्तः । पूर्वस्मिन्नधिकरणे तु दक्षिणाशब्दश्रवणेपि वाक्यभेदे कृत्स्नस्य निवृत्तिरिति द्रष्टव्यम् ।

॥ एवं वा ॥

प्रयोजनत्वेन "यदि तु ब्रह्मण" इति पूर्वत्र द्रव्यमुपवर्ण्य **एवं वेति वदतः कोऽभिप्रायः** । अस्यार्थः–निराकरणीयाभावात् पृथगधिकरणान्तरं नारब्धव्यम् । उत्तरं—**कार्योपदेशं वर्णयित्वा बाधोऽपि सयुक्तिक एव वक्तव्य इति मन्यते** । अस्यार्थः - अस्त्यत्र निराकरणीयं पूर्वपक्षी मन्यते । यदि कृत्स्नं दक्षिणाकार्यं सोमचमसेन क्रियते तदा भवेत् कृत्स्ननिवृत्तिः । नचैतदस्ति सोमचमसेन ब्रह्मणे दीयमानेन न ऋत्विगन्तरवर्तिन्यानतिः दक्षिणाकार्यं सम्पद्यते तस्मान्न तेन कृत्स्ननिवृत्तिरित्यस्यामाकाङ्क्षायां कृत्स्नदक्षिणाकार्ये सोमचमसस्योपदेशं वर्णयित्वा बाधोऽपि सयुक्तिक एव वक्तव्यः । अत इदमधिकरणमारब्धम् ।

कथं पुनः कृत्स्नकार्ये विधानम् । उच्यते । द्विविधं हि कार्यम् । एकं क्रतौ, अपरं तदङ्गेषु । तत्र क्रतौ कार्यं केवलागमादवगम्यते । तत्र यद्यपि सोमचमसेन क्रत्वन्तर्भूतपुरुषगतं कार्यं न क्रियते तथापि क्रत्वङ्गे क्रियत इति आगमप्रामाण्यादवगम्यते । तदर्थं चाङ्गगतं कार्यम् । तेन प्रधानकार्ये सोमचमसेन सिद्धे दक्षिणान्तरनिवृत्तिः । यद्यत्र दक्षिणाकार्यसम्पादकत्वाभावाशङ्कया पूर्वपक्षः **कथं तर्हि भाष्यकार एवमाह—"सोमचमसो ब्रह्मण इत्येष सम्बन्ध इति**

कृत्वा चिन्ता '' इति । एवं हि वदन् कृत्वाचिन्तेति दर्शयति । न चेयं कृत्वा चिन्ता । किन्तु पूर्वपक्षबलेनैवायं सम्बन्ध इति ।

उत्तरं—**एवं कृत्वा पूर्वपक्षोऽत्र वर्ण्यत इति वर्णनीयमिदं भाष्यम् ।** न्यायबलेनैव सोमचमसो ब्रह्मण इति कृत्वा पूर्वपक्ष इत्यर्थो भाष्यस्य ।

**॥ २१ ॥ यजुर्युक्ते त्वध्वर्योः दक्षिणाविकारः स्यात् ॥ ७४ ॥**

इहाधिकरणे सप्तसप्तदशकानि देयानि श्रुतानि । तथा यजुर्युक्तं रथं अध्वर्यवे ददातीति । अतश्च भागनियमोऽयं भवति । अथ तु स्वतन्त्रं ततो भागविकार इति । तत्र पूर्वपक्षी स्वातन्त्र्यं मन्यते । न हि स्वातन्त्र्ये सति पारतन्त्र्यं युक्तमिति भागोऽध्वर्योः तस्यायं विकारः । पुनर्दक्षिणाविकारपक्षे[रथा]दीनां दक्षिणासम्बन्धं मन्यते कस्मै तानि देयानीति भावः ।

उत्तरं—**दीयते तेभ्योऽध्वर्य्वादिभ्यो येऽन्ये तेभ्यः तद्युग्यादिकमिति शक्यते वक्तुम् ।** एवं पूर्वपक्षिते उच्यते—

नायं भागविकारश्शक्यते वक्तुम् । अप्राप्तस्य विशेषावगतौ भागविकारो युक्तः । यदि रथदानेऽध्वर्युः प्राप्तः तदा रथविशेषविधानं भागविकाराय स्यात् । इह तु प्राप्तानामध्वर्य्वादीनां नियममात्रेणैवोपदेशसिद्धेः न भागान्तरानुवृत्तिश्शक्यते वक्तुं चोदकानुग्रहाय । सप्तदशरथा इत्येतद्वाक्यपूर्वकमिदमिति राद्धान्तः तावन्मात्रेणैवोपदेशोपपत्तेः ।

ननु यदि सामान्येन प्राप्तौ सत्यां विशेषश्रवणं नियममात्रफलं, न भागविकारः तर्हि प्राकाशावपि नियमार्थावेव स्याताम् । अश्वमेधेपि सामान्येन प्राकाशविधिरस्ति हिरण्मयावध्वर्योर्नियम्येते इति तत्राह—**ये पुनरश्वमेधेप्यस्य प्राप्तिं मन्यन्ते न ते युक्तमिव मन्यन्ते ।** कुतः ? **न्यायाभिधानमात्रविवक्षायां हि तदनुगुणमुदाहरणं प्रदर्श्यते ।** तेन सन्तमपि सामान्यं प्राकाशे एककार्यावगमात् । परिहरति—**उदाहरणमात्रं त्वेतदिति नादर्तव्यम्** अदृष्टार्थमन्यार्थमपि अदृष्टार्थमपि कृत्वोदा[हरणम्] विधिमसन्तमिव कृत्वोदाहरणं स्यान्न पुनः लक्ष्यनिर्णयायोदाहरणदानम् । सामान्यन्यायामिधित्सयेदं शास्त्रम् । एवं सति

अयं न्यायो भवतीति यत्र सामान्यवचनं नास्ति तत्र भागविकार इति न्यायः कथ्यते न पुनः ग्रन्थविशेषामिधित्सया न वाक्यविशेषस्यार्थः कथ्यत इत्यर्थः। अन्यथा हि पौर्वापर्येणानुसरणं स्यात्। यदि हि वेदवाक्यव्याख्यार्थमिदं स्यात् तदा यथाक्रमं वेदवाक्यानि व्याख्येयानि न्यायपरत्वे तु नायं दोषः। तस्मान्न्यायनिष्ठं व्याख्यानमिति न दोषः।

इति ऋजुविमलायां पञ्चिकायां

दशमस्य तृतीयः पादः॥

—: * :—

# ॥ दशमाध्यायस्य चतुर्थः पादः ॥

## ॥ १ ॥ प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

कथं पुनरुपहोमादिभिः नारिष्ठहोमादीनां निवृत्तिरित्यत्राह—**अभिधानसामान्येन तुल्यार्थतां मन्वानस्य पूर्वः पक्षः ।** अस्यार्थः - यथैषामभिधानं तुल्यं तथा कार्यमपि भवितुमर्हति । अभिधानैक्ये च कार्यभेदानुपपत्तिः ।

**राद्धान्तस्तु विधेयत्वादभिधेयानां कार्यैक्यानवगमाच्च ।** अस्यार्थः- यद्यप्यभिधानमेकं तथापि अभिधेयानां विधेयत्वेनान्यत्वमेव । अन्यत्वेपि च यदि कार्यमेकं, स्यात् निवृत्तिः । न च कार्यैक्यमवगम्यते । यथा च कार्यैक्यं नावगम्यते तथा दर्शितमदृष्टार्थानामेककार्यत्वानवगमादिति । ननु च निवीते वासोविन्यासस्य दृष्टार्थत्वात् विन्यासान्तरोपमर्देन च विन्यासान्तरस्य आत्मलाभाद्बाध एव युक्तः । तस्माददोषः ।

### एवं वा

उपवर्णनापरिहारात् किमभ्यधिकमाशङ्कनीयं यन्निरस्यते? उत्तरं—सिद्धे प्रकृतिलिङ्गत्वे भवतूपवर्णनापरिहारः इह तु प्रकृतिलिङ्गत्वं बर्हिरित्यस्य साध्यत इति । विशेषान्तरं व्यक्तमेव बर्हिषः प्रकृतिलिङ्गत्वम् । किं परं साध्यते? अतस्तत्राशङ्का । **का पुनरसौ? इयम् ।** बर्हिः शब्देन कुशोऽभिधीयते । तस्य शरमयता विधीयते । न पुनः स्तरणे शरविधिरयम् । तत्र कुशानां शरमयता बहुतरशरयोगेन भवति "शालिमया मागधा जनपदा" इति यथा ।

कथं पुनरिदं निराक्रियते? इत्थम् । **क्लृप्तकार्याविवक्षया वैकृता विषयः । तत्र यदि बर्हिः कार्ये शराणां विधिः स्यात् तदा कार्यान्तरकल्पना नास्ति । इतरथा तु कार्यान्तरं प्रकल्प्यं स्यात् ।** तेन बर्हिः शब्दः कार्यसमर्पणार्थ एव । शरमयमिति च मयट्प्रत्ययो नित्यं वृद्धशरादिभ्य इति विकारे । यद्यपि स्तरणं न विकारः तथापि शरकार्यतया तद्विकार इत्युपचर्यते ।

एवं वा

तत्र रथघोषेणेति किं वाक्यार्थो निवर्तकः उत प्रत्येकं पदार्थ इति चिन्त्यते । आक्षिपति—किमिदं प्रलप्यते ? एकग्रन्थेनाह—ननु चोभयत्रापि वाक्यार्थ एव निवर्तकः रथघोषश्चेति पूर्वपक्षेऽपि वाक्यार्थ एव निवर्तकः । स तु माहेन्द्रस्तोत्रोपाकरणसम्बन्धी निवर्तकः तथा राद्धान्तेऽपि रथसम्बन्धी शब्दो वाक्यार्थ एव सन् मन्त्रदर्भनिवर्तक इति प्रतिपक्षत्वाभावात् संशयोऽयं प्रलापभूतः । समाधत्ते—सत्यमेवं श्रुताभिप्रायेणेदमुच्यते वाक्यार्थः पदार्थ इति । रथसम्बन्धी घोषो रथघोषशब्दाभ्यामुच्यत इति वाक्यार्थ इत्युच्यते । रथस्तु रथशब्देन घोषश्च घोषशब्देनोच्यत इति पदार्थ इत्युच्यते । न पुनर्माहेन्द्रस्तोत्रोपाकरणसम्बन्धाभिप्रायेण पदार्थत्वं वाक्यार्थत्वं वाऽभिमतम् । एतदेव विवृणोति—किं प्रतिपदं वाक्यसमाप्तिरुत समुदाय इति । रथोऽपि स्तोत्रोपाकरणसम्बन्धी घोषोऽपीति प्रतिपदं वाक्यासमाप्तिः । यदि रथसम्बन्धी घोषः स्तोत्रोपाकरणसम्बन्धी तदा समुदाये वाक्यपरिसमाप्तिरिति ।

किं तावत्प्राप्तम् ? प्रतिपदं वाक्यपरिसमाप्तिः द्वन्द्वसमासोऽयम् ; तेन प्रतिपदं वाक्यपरिसमाप्तिः । का युक्तिरित्यत आह—एवं स्वार्थपरता द्वयोरपि पदार्थयोः । षष्ठीतत्पुरुषे तु पूर्वपदार्थो विशेषणतया परार्थः । स्वार्थत्वं परार्थत्वाद्युक्तम् । ननु चैवं सति द्विवचनेन भवितव्यम्, रथघोषयोर्द्वित्वात् । न भवितव्यं द्विवचनेन द्विवचनाभावात् । वेदे हि प्रतिपत्तारो वयं न कर्तारः । तेन द्विवचनोपदर्शने द्वित्वेऽपि द्विवचनमत्र नास्तीत्यवगम्यते । द्विवचनाभावे कथं तर्हि द्वन्द्वावगतिरित्यत्राह—एतस्मादेव कार्यात् द्वन्द्वावगमः । यदिदं पदानां कार्यं स्वार्थस्य कार्यत्वापादनं एतस्मादेव द्वन्द्वावगतिः एकवद्भावं वा मन्यते । तेन द्विवचनानुत्पत्तिर्न दोषः ।

एवं प्राप्तेऽभिधीयते—तत्पुरुषोऽयं न द्वन्द्वनिर्देशः । कुतः ? उत्तरं—एकवचननिर्देशात् । ननु चैतस्मादेव कार्याद् द्वन्द्वावगतिरित्युक्तः परिहारः । नायं परिहारः । यदि तस्माद्द्वन्द्वावगतिः न तर्हि द्वन्द्वार्थस्य विधानं द्वन्द्वत्वे प्रमाणाभावात् कार्यं चेत्प्रमाणं इतरेतराश्रयम् । द्वन्द्वेऽवगते कार्यावगमः कार्यावगमाच्च द्वन्द्वावगतिरिति तत्पुरुषावगतिस्तु अभिधानादेव एकवचनानु(ग्या)ज्ञा न्यायया ।

यत्पुनरेकत्वद्धावादप्युपपद्यत इत्युक्तं सिद्धं तर्हि समुदायविधानं वाक्यार्थविधानं सिद्धम् । भवत्त्वेवमित्यत्राह—इयांस्तु विशेषः द्वन्द्वे द्वयोरपि पदार्थयोः समाहारपरत्वात् गुणभावोऽभ्युपगतो भवति । तत्पुरुषे पुनः एकस्यापि तावत् प्राधान्यमिति न्याय्यं तदाश्रयणम् । प्रयोजनमुक्तम् । यदि द्वन्द्वो भवेत्तदा निश्शब्दोऽपि रथो निवर्तको भवेत् अन्यसम्बन्ध्यपि घोषः । तत्पुरुषे तु रथसम्बद्धस्य निवर्तकत्वमिति ।

॥ २ ॥ सर्वत्र तु ग्रहाम्नानमधिकं स्यात् प्रकृतिवत् ॥ ३ ॥

अत्र केचिदेवं चिन्तयन्ति विकृतिषु ग्रहेषु गुणविधानात् किं गुणान्तरनिवृत्तिः नेति । तदाश्रयणेन चोदयति—ननु च युक्तं बार्हस्पत्यं गृह्णातीत्युदाहरणम् । अत्र ग्रहानुवादेन बृहस्पतिविधिराशङ्कितुं शक्यते तेनेदमुदाहरणं युक्तम् । ये पुनः नामविशिष्टा ग्रहा उदाहृताः अर्कं गृह्णातीत्येवमादयः तेषां संज्ञा चोत्पत्ति-संयोगादिति कर्मान्तरत्वसिद्धेः नोदाहरणत्वमुपपद्यते । कार्यान्तरावगमात् समुच्चयस्यैव तत्र युक्तत्वात् ।

परमसिद्धान्ती वदति—सत्यमाह भगवान् यद्यत्र गुणनिवृत्तिश्चिन्त्यते किं गुणान्तरविधानेन प्राकृतगुणनिवृत्तिरुत नेति यद्यत्र चिन्त्यते तदा स्यादेव पूर्वोक्तदोषः । इह तु ग्रहा एव निवर्त्या उत नेति चिन्त्यते । वैकृतग्रहान्तर-विधानात् किं प्राकृतग्रहा निवर्तन्ते नेति चिन्त्यते । ततश्च तत्रापि संज्ञान्तरयुक्त-ग्रहान्तरविधेः सोऽप्युदाहरणम् । यद्येवं यदि ग्रहान्तरेण ग्रहनिवृत्तिरेव चिन्त्यते तर्हि गुणविधिप्रदर्शनं किमर्थं ? आग्नेया ग्रहा इति पूर्वपक्षसिद्धान्त-योरसङ्गतत्वात् ।

उत्तरं—बाधप्रकारदर्शनार्थं तत् स्वार्थम् । सिद्धान्ते हि समुच्चयं वर्णयित्वा भाष्यकारेण बाधप्रकारो दर्शितः । यदि ग्रहशब्दमुच्चार्य गुणो विधीयते ततः प्राकृता एव ग्रहाः गुणविकृता भवेयुः । गुणमात्रं तदा बाध्येत । अथ ग्रहसम्बन्धेनाग्रहा विधीयन्ते ततोऽग्रहो ग्रहकार्ये वर्तत इति प्राकृतो निवर्तते । तत्र योऽयं बाधप्रकारः प्रदर्शितः तत्सिद्ध्यर्थमाग्नेया ग्रहा इत्युक्तम् । यावत् गुणमात्र-विधिरत्र न साध्यते तावदिदं बाधप्रकारदर्शनं न घटत इति गुणमात्रविधिं साधयित्वा आग्नेया इति गुणविकृतिप्रदर्शनं कृतम्, न पुनः पूर्वपक्षदृष्टान्तत्वेन । यद्यत्र गुण-

निवृत्तिरेव न चिन्त्यते किमर्थं पुनः बार्हस्पत्यपुनरुपन्यासः ? किमिति उत्तर विधातव्यम् नात्रास्याभिधेयैक्यमस्ति । अस्याभिधेयेन सह एकत्वं नास्ति कल्पनाविरोधस्त्वनन्त्रमित्युक्तम् । तस्मात् बार्हस्पत्यं गृह्णातीति कर्मान्तरविधानमत्र । यद्यत्र कर्मान्तरविधानं कथं तर्हि इदं "एकादश प्रयाजान् यजति" इति गुणविधानं ? उत्तरं—न सङ्ख्याऽनुरञ्जिकेत्युक्तं द्वितीये । पृथक्त्वनिवेशित्वमात्रं हि विधेयसङ्ख्या प्रभवति कर्तुं न पुनः स्वानुकारि कर्मावगमयति यथाद्रव्यम् । अस्यार्थः—सङ्ख्यायां श्रुतायां तावत्सङ्ख्याकानि कर्माण्यवगम्यन्ते न पुनस्तेषां सङ्ख्यातो रूपविशेषप्रतिपत्तिः । यथा द्रव्यं स्वानुरक्तं कर्मावगमयति न तथा सङ्ख्या. अननुरञ्जकत्वात् । तत्र च नियोगव्यापार एव वर्धते एक एव नियोगो बहूनि कर्माणि विधत्त इति । भवत्वेवं तथापि किमितरविधिनेत्यत्राह— शक्नोत्यतिदेशोऽपि कल्पनां विषयविषयिणीं वारयितुम् । अस्यार्थः —अरूपत्व त्सङ्ख्यायाः अरूपस्य च यज्यर्थस्य विधानानुपपत्तेः रूपवान् यागो विषयभूतः कल्पयितव्य । तत्र चातिदेशोऽपि कल्पनां निरोद्धुं शक्नोतीति । यद्युपदेशनात एव विषयो न विषयान्तरं कथं तर्हि सङ्ख्या शास्त्रान्तरत्वे हेतुः एकादश प्रयाजान् यजतीति नेदं शास्त्रान्तरं स्यात् । अनुवादशास्त्रमेवेदं भवतीत्यर्थः ।

परिहरति—केन चोक्तं सङ्ख्या शास्त्रान्तरत्वे हेतुर्भवतीति । भवत्येवेत्यर्थः । चोदयिता पृच्छति कथं विषयादृते सङ्ख्या शास्त्रं भिनत्ति । समाधाता उत्तरमाह—विषयाभ्यासादत्र सविषयः सिद्ध्यति । अभ्यासं विदधदिदं शास्त्रान्तरं भवति । यथा—एकादश प्रयाजान् कुर्यादित्येतावन्नात्र श्रूयते । तत्र यथाऽभ्यासविषयस्तथेदापि । यतः एवमादिष्वभ्यासविधानं अत एव भगवतः पाणिनेः कृत्वसुज् विधानं यथार्थमुपपन्नं भवति अन्यथा हि प्रतिक्षणमपवर्गवतः कर्मणाऽभ्यास एव नास्ति क्रियाभ्यासावृत्त्यसम्भवात् अयथार्थं पाणिनेर्वचनं स्यात्—' सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् " इति तथा स्तोमे डविधानमप्येवमेवोपपद्यते सप्तदशान्याज्यानीत्यावृत्तिविधानात् स्तोमावृत्तौ इति वार्तिकमुपपद्यते ।

एवं स्वमतं निबन्धनकारो दर्शयित्वा परमतमाह—अत्र पुनः केचित् एकादश प्रयाजानिति परिहारान्तरं ब्रुवते—नामयोगात् प्रकृतेषु सङ्ख्याविधानम् ।

अन्यथाहि नाम्नोऽनेकार्थकल्पना स्यात् । इह पुनर्नामान्तरं ग्रहशब्दे नास्तीति धात्वर्थविधानमेव । यतश्च ग्रहशब्दाभावात् कर्मविधितया आग्नेया ग्रहा भवन्तीति । यत्र ग्रहशब्दः श्रूयते तत्र गुणविकारस्सिद्धो भवतीति । शक्नोति हि विधेयावगतिकल्पनां अतिदेशो वारयितुमिति वदन्तः ।

केचिद्ब्रुवन्त इति पूर्वेण सम्बन्धः । परिहरति—**तदयुक्तमिति भाष्यविदः** प्रभाकरमिश्राः । इहापि बार्हस्पत्ये ग्रहशब्दश्रवणात् नामयोगात् गुणविधिः स्यात् । किञ्च दधिग्रहे ग्रहशब्दश्रवणादभिधेयनिरोधः स्यात् । ततश्च ग्रहणे क्रत्वङ्गसंस्काररूपे दधिश्रवणात् क्रतावेव द्रव्यान्तरविधाने दध्ना सोमस्य विकारः स्यात् पूतीकैरिवाभिषवे श्रुतैर्द्रव्यान्तरस्य प्रतिनिधेयस्य विकारः ।

**ननु सोमाभावे तेन विकारः तेन नास्ति तुल्यता दृष्टान्तदार्ष्टान्तिकयोः** । परिहरति—**नात्रैतद्विवक्षितव्यम्** एतदभावे सति विकार इति न विवक्षितव्यम् । किन्तु द्रव्यविधानं प्राम्नातमिति । ततश्च द्रव्यान्तरं विक्रियते । चोदकाद्वा प्राप्तमुपादानतो वा । सम्भवादिति को विशेषो विकारावगतौ । तस्मात् सहैव ग्रहशब्देन पूर्वोक्तः परिहारः । यदि विकृतौ कर्मान्तरविधिः **कस्तर्हि पुरोडाशदेवतयोः हविरन्तरं च सौत्रामण्यां विधीयते** । पुरोडाशेऽग्नीषोमीये चोदकप्राप्ते देवतान्तराणामिन्द्रादीनां विधानम् देवतायां चाग्नीषोमयोः हविरन्तरस्य ग्रहस्य विधानं सौत्रामण्यामयुक्तम् । तत्र कर्मान्तरविधिरेव युक्तः । [ उत्तरं ]—**युक्तमुक्तं पशुपुरोडाशाधिकरणे कार्यप्रत्यभिज्ञानात् स एवायं याग इति** । आग्नेया ग्रहा इति कथं तर्हि गुणविधिरित्यत्राह—**आग्नेया ग्रहा इति विधेयाभिधानमतिदेशोऽपि शक्नोति निरोद्धुम्** । विधेयाभिधानमत्र श्रूयते ग्रहा इत्यभिधानार्थत्वात् तेन भावार्थोऽत्र कल्पयितव्यः तत्कल्पनामतिदेशो वारयितुं शक्नोति । **लिङ्गमुक्तम् विरण्यादर्शनम्** । ननु च यदुक्तमाधस्त्येऽधिकरणे पृथक् होमविधानान्न मन्त्रविधिः । समन्त्रश्रवणे तु मन्त्रविधिरेवेति । तदयुक्तम् । समन्त्रकश्रवणेपि कर्मान्तरविधिरेव स्यात् यद्यसौ न नारिष्ठहोमे गुणविधिरित्याशङ्क्याह - **युक्तमग्नौ यदुक्तं भाष्यकारेण यस्मात् प्रकृतिरेव हि सा । ज्योतिष्टोम एवासौ** । तेनोपदेशतः सन्निहितेषु होमेषु समन्त्रकश्रवणे मन्त्रमात्रविधिरेव स्यात् यद्यसौ प्रकृतिः । कथं तर्हि चोदकप्राप्तो नारिष्ठहोम इत्युच्यते तत्राह—**नैमित्तिकं त्वभ्यधिकम्** । अस्यार्थः—नैमित्तिकोऽयं तस्यैव ज्योतिष्टोमस्य गुणविकारः । तेन प्रकृतिरपि विकृति-

रित्युच्यते। यथाग्निहोत्रहोमो दध्नेन्द्रियकामस्येति दधिविकृतौ विकृतिर्भवतीति। तेन न दोषः। नन्वेवमपि ग्रहाणां समुच्चयो न युक्तः किन्तु एककार्यत्वाद्बाध इत्याशङ्क्याह—**कार्यं पुनः यागनिर्वृत्तिर्ग्रहाणां न तां ग्रहचोदनयैवेति वैषम्यं** न ग्रहा यागोद्देशेन विधीयन्ते। किन्तु यागार्थद्रव्यसम्बन्धेन तेषां क्रत्वनुप्रवेशः। तेन ग्रहाणां सतां यागनिर्वृत्तिः कार्यं, न पुनः ग्रहचोदनाभिरेव यागसाधनत्वेन विधानम्। अतश्च समुच्चयस्तेषामिति दर्शितं द्वितीये इति वैषम्यं साक्षाद्यागसाधनत्वेनोपदिष्टैः द्रव्यादिभिः।

॥ ३ ॥ प्राजापत्येषु चाम्नानात् ॥ ६ ॥

**पशुशब्दः कार्यं लक्षयतीति मन्वानः पूर्वपक्षयति।** अस्यार्थः—सप्तदश प्राजापत्यान् पशूनालभत इति पशुशब्देन प्राकृतान् क्रतुपशून् लक्षयित्वा प्रजापतिदेवताया विधिः तेन पशुशब्दः उद्देश्यविशेषं समर्पयन् प्रकृतकार्य एव विधानमेतदिति ज्ञापयति। तेनाभिप्रायेणोच्यते पशुशब्दः कार्यं लक्षयतीति। ननु च सङ्ख्याविधानं नोपपद्यते देवतायां विधीयमानायाम् कुत इत्याह—**तद्विधाने च वाक्यभेदः प्रसज्यते यतः।** परिहरति—**नैव सङ्ख्या विधेयेति मन्यते।** कथमित्याह—**कर्मणि सङ्ख्या नैव विधीयते** यथा तिस्र आहुतीर्जुहोतीति। यथा वाऽस्मिन्नेवोदाहरणे सङ्ख्याधिकरणे द्वितीये उक्तम्—कर्मगता सङ्ख्या नैव विधीयत इति।

**राद्धान्तस्तु सत्यं न विधेया सङ्ख्या यदि कर्मान्तरविधानं स्यात्।** यदि प्रजापतिदेवताकपशुद्रव्यककर्मविधिःस्यात् तदा कर्मभेदकारिका सङ्ख्या न विधीयेत। कर्मान्तरत्वे च पशुशब्दोपलक्षणत्वे नोपपद्यते विधेयत्वेनावगमात्। देवतामात्रविधाने पुनरविधीयमानार्थः सङ्ख्याशब्दो नैवान्वेतीत्यसावपि सङ्ख्या न विधिशब्दार्थो विधातव्यः। ततश्च वाक्यभेदः। अतः सङ्ख्याशब्दश्रवणात् कर्मान्तरविधानमेवैतदिति स्थितम्। कर्मान्तरविधाने च नैव प्राकृतकार्यापत्तिरवगम्यते प्रमाणाभावात्। तत्र[ कथं ] गुणविधिराशङ्कितः पूर्वपक्षानौपयिकत्वात्? उत्तरं—**प्रकारनिदर्शने सति प्रसङ्गादिदमुपजातम्।** भाष्यकारेण प्रथमं बाधप्रकारे दर्शिते प्रसङ्गादिदमुपजातं प्रासङ्गिकमिदं न पुनः पूर्वपक्षौपयिकमित्यर्थः। **कः प्रसङ्गो येनेदमाख्यातम्?** उत्तरं—**यद्ययं बाधप्रकारः स्यात् योऽयं भाष्य-**

**कारेणोक्तः** । यदि ग्रहशब्दमुच्चार्य गुणो विधीयेत ततः प्राकृता एव ग्रहाः गुणविकृता भवेयुरिति । **न तर्हि बार्हस्पत्ये समुच्चयः तत्रापि गुणविकार एव स्यात् ।** भवतु का क्षतिरित्यत्राह **समुच्चयार्थं चैतदुदाहृतम् । बृहस्पतिसवे श्रूयते — बार्हस्पत्यं गृह्णातीति । तस्मान्न शुक्रवत् बार्हस्पत्ये समुच्चयः सम्भवति** यथा शुक्रे समुच्चयः तथा बार्हस्पत्ये न सम्भवति गुणमात्रविकारोपपत्तेरिति । कथं तर्हि समुच्चयसिद्धिरित्यत्राह—

**राद्धान्तस्तु बार्हस्पत्ये सत्यं न सिद्ध्यति समुच्चयः यदि गृह्णातीत्यस्यां चोदनायां नाम्नि गुणे वा कश्चिद्विशेषः ।** अस्यार्थः - गृह्णातीत्यस्यां चोदनायां श्रुत्या ग्रहविधानं भातीति राद्धान्तयुक्तिः या, सा गुणश्रवणे नाममात्रश्रवणे वाऽविशिष्टा, तेन बार्हस्पत्येपि समुच्चयः । **कथं पुनरविशेषं मन्यते यावता आधस्तय एवाधिकरणे उक्तम्—पृथगेव होमविधानं न मन्त्रविधानमिति ।** तथापि किमित्याह—**यदि समन्त्रकं स्यात् स्यान्मन्त्रविधिरिति ।** भाष्यकारेण मन्त्ररहितहोमविधानात् न मन्त्रविधिमात्रं भवतीति वदता उक्तं— विकृतावपि यत्र गुणः श्रूयते तत्र गुणविधिर्भवति । अपि च दध्ना जुहोतीत्येवमादिभिः सहाविशेषो बार्हस्पत्यं गृह्णातीत्यस्य । यथा तत्र होमानुवादेन दधिविधिः तथेहापि ग्रहानुवादेन गुणविधिरेव युक्तः ।

अथायमभिप्रायः—तत्र दध्ना जुहोतीत्येवमादौ उपदेशादेव प्रकृतत्वाद्धोमस्य युक्तं गुणविधानं इह पुनः कार्यतः प्राप्तौ सत्यां नानुवादो धात्वर्थस्येति । यावदेव हि कार्यतः प्राप्तिमाश्रित्य गुणविधिर्न शक्यते दर्शयितुं तस्य जघन्यत्वादिति । तदयुक्तम् । एकादश प्रयाजान् यजतीति का कथा । तत्रापि तर्हि यागविधिरेव स्यान्न सङ्ख्याविधिः । इष्यते च सङ्ख्याविधिः । कथं वा सोमरसो ग्राह्यः यदि कार्यतः प्राप्तिमाश्रित्योपदेशवर्गना नास्ति तदा कथं सोमरसो वैकृतेषु ग्रहेषु गृह्यते । तस्मान्नातीव विशेषो लक्ष्यते उपदेशकार्यतः प्राप्त्योः ।

एवं तावत् बार्हस्पत्ये समुच्चयानुपपत्तिः यत्रापि शुक्रं गृह्णातीति सगुणश्रवणं तत्रापि नामश्रवणं नोपपद्यत इत्याह—**शब्दस्य च ग्रहलक्षणार्थत्वं न शक्यतेऽपह्नोतुम् ।** ग्रहशब्देन प्राकृतं ग्रहकार्यं लक्षयित्वा ग्रहान्तरविधिर्युक्तः क्लृप्तकार्यविषयत्वाद्वैकृतानामुपदेशानां प्रकृतितोऽप्यर्थवत्ता भवति । प्रकृतौ हि ग्रहशब्दः प्रवृत्तिविशेषकरो न भवति । इह तु लक्षण(के)त्वेन प्रवृत्तिविशेषकरत्वेनार्थवान्

भवति। प्रकृतौ हि अर्थासम्भवात् किं क्रियताम्। इह पुनः सम्भवत्यर्थे नानर्थको ग्रहशब्दो युक्त इति पूर्वपक्ष एव श्रेयानिति ब्रूते।

अत्राभिधीयते - गृह्णात्यर्थाविशेषात् ग्रहशब्दस्य केयमर्थान्तरकल्पना। अस्यार्थः - यथा प्रकृतावैन्द्रवायवं गृह्णातीति गृह्णातिः ग्रहणं ब्रूते तथा विकृतावपि। (त)यथा ग्रहणं ग्रह इति व्युत्पत्त्या प्रकृतौ ग्रहशब्दो मुख्यार्थः तथेहापि युक्तः न पुनर्यथा ग्रहशब्दो ग्रहणमात्रं ब्रूते तथा कार्यमित्याह — **प्रयोजनं हि ग्रहकार्यं ग्रहशब्दस्य नाभिधेयं** ग्रहकार्ये लक्ष्यमाणे ग्रहशब्दोऽर्थवान् भवतीति प्रयोजनं ग्रहकार्यं ग्रहशब्दस्य नाभिधेयम्। अभिधेयं तु ग्रहणमेव। तस्मिन् विद्यमाने न लक्षणाप्रमाणमस्ति। अभिधेयार्थापरित्यागेन च कार्यं सर्वे शब्दा लक्षयितु क्षमाः न परित्यज्याभिधेयार्थमनर्थका लक्षयेयुः। अत्रापि चायं गृह्णातिः श्रूयते। अभिन्नार्थश्चायं गृह्णातिना ग्रहशब्दः प्रकृतिवत्। न चायं[किं चायं] गृह्णातिः यदि कार्यलक्षणार्थस्तदा ग्रहशब्दोऽपि। अथ तु विधेयार्थः सः तदा सग्रहशब्दक एव विधेयार्थः न तु ग्रहशब्दं परित्यज्य। नाप्रयोगाच्च वश्यं शुक्रादिषु गृह्णातिरपूर्वो विधातव्यः। उक्तं द्वितीये - संज्ञा शास्त्रं भिनत्तीति। न च विधेयाद्भिन्नाद्दते शास्त्रभेदः सम्भवति, अनुबन्धस्य शास्त्रभेदहेतुत्वादिति सिद्धं गृह्णातिविधानम्। ग्रहशब्दश्च तत्समानाधिकरणो न कार्यलक्षणार्थः। किन्तु मुख्यवृत्तिरेव। पूर्वपक्ष्याह—**युक्तं साम्नु, बार्हस्पत्ये तु का कथा** तत्र गुणविधानमेव युक्तमित्यर्थः। सौवर्णरजताभ्यामिति प्राकृतयोर्भेदोऽध्वर्योरभावात् युक्तः गुणविधिपरिहार इति मन्यते। यदि द्वौ स्यातां तत्र सौवर्णराजतमिति विधिः स्यात् यथा वार्त्रघ्नी पौर्णमास्यामनूच्येते इति। न च प्रकृतौ द्वौ स्त इति। तदयुक्तम्। अश्वदाभ्ययोर्विद्यमानत्वात् अश्वदाभ्यौस्तः तत्र गुणविधिः सम्भवतीति। राद्धान्ती त्वाह— **महिमानाविरयनेनैकवाक्यत्वात्परिहारः केवलं बार्हस्पत्ये परिहारो वक्तव्यः सोऽयमभिधीयते।** दध्ना जुहोतीति धात्वर्थविधानं गुणानुरक्तमिष्टम्। न केवलं गुणविधानं क्रियाविषयत्वान्नियोगानाम्। यदि होमविधानं तर्हि अग्निहोत्रहोमाद्धोमान्तरं स्यादित्यत्राह— **अनुरज्यमानं तु स्वरूपत एवोपदिष्टमस्त्विति क्रियान्तरविधानम्।** प्रकृते हि जुहोतिस्तस्मिन् वर्तते। अत एव गुणानुरक्तो विधेयः तद्रूपस्य तस्य विहितत्वादिति न होमान्तरविधानम्।

नन्वत्राप्येवं भवत्वित्यत्राह—उपदेशश्चोपदेशमुपोद्बलयति तद्बुद्धिहेतुत्वान्नातिदेशः उपदेशेन सन्निहिते होमे पुनरुपदेशान्तरे जुहोतिः श्रूयमाणः तत्रैव बुद्धिं जनयतीत्युपदेशान्तरसहायो भवति । पुनरतिदेशः कार्यनिष्ठत्वात् कार्यप्रधानत्वात् भवतु कार्यः तथापि किमित्याह—न कार्यं कर्मणि बुद्धिमुत्पादयितुं क्षमम् अतत्स्वाभाव्यात् । अस्यार्थः—अतिदेशेन प्राप्तं तावत् करणोपकारलक्षणं कार्यम् न प्राकृतकर्मविशेषे बुद्धिं जनयितुं क्षमम् । अकर्मस्वभावत्वात् । एतदुक्तं भवति—विकृतिषु श्रुतमाख्यातं, तेन कार्यबलेन पदार्था उपतिष्ठमाना न प्रत्येकं भेदेनोपतिष्ठन्ते इति नाख्यातं विशेषेऽवस्थापयितुं शक्नुवन्ति ।

नन्वेवमपि प्राकृते पदार्थे विद्यमाने किमिति पदार्थान्तरमभ्युपगम्यते तेन गुणविधिरेव युक्तः न कर्मान्तरविधिः । दध्ना जुहोतीत्यत्रापि प्रकृतामिव.ने अयमेव हेतुः सन्निहिते होमे कर्मान्तरकल्पना नोपपद्यत इति यो मन्यते तत्राह—न च कल्पनानिरोधो दध्ना जुहोतीत्येकाभिधेयता अग्निहोत्रं जुहोतीत्यनेन । किं तर्हि तद्बुद्ध्यैव । न चात्र तद्बुद्धिरस्ति कारणाभावात् ।

यदि कल्पनाविरोधो न भवति युक्तिः किमिति तत्र भाष्यकार एवमाह—"कृते न कल्पनोपपद्यत" इति अत्राह—यत्पुनः कल्पनेति काचिद्वचोव्यक्तिः सा नियोगविषयेति मन्तव्यम् । कृतेऽधिकारनियोगे नियोगान्तरकल्पना न युक्तेति तत्रार्थः । इह च गुणादिति समुच्चयः क्रतुपशुभिस्सह प्राजापत्यानाम् । लिङ्गमुक्तम् ।

॥ ४ ॥ आमने लिङ्गदर्शनात् ॥ ७ ॥

अत्र सङ्ख्या प्रकृतिलिङ्गत्वे नोपपद्यत इति मन्वानो मन्त्रविधानाच्चोपदेशोपपत्तिं अनूयाजानां निवृत्तिं मन्यते । अस्यार्थः—आमनमस्यामनस्य देवा ये सजाता इति तिस्र आहुतीरिति तिस्रः शब्देन त्रयाणामनूयाजानां कार्यं लक्षयित्वा मन्त्रविशेषवत्य आहुतयो विधीयन्ते तेनानूयाजानां निवृत्तिरिति पूर्वपक्षः । अथवा मन्त्र एवानूयाजाहुतिषु विधीयत इति प्राकृतमन्त्रवत्तया अनूयाजानां निवृत्तिरिति ।

राद्धान्तस्तु न तावत् सङ्ख्यानूयाजकार्यं त्रिशब्देन लक्ष्येत सङ्ख्यामात्रवचनस्त्वयं त्रिशब्दः । [त्रिसङ्ख्या] नामाहुतीनां....लौकिकस्य कर्मण

उपपद्यत इति न त्रिशब्देनानूयाजानामेवोपादानमिति न तत्कार्ये होमान्तरविधानम् ।

ननु न लौकिके त्रिशब्दो वर्तते यस्मात् प्रकरणसम्बन्धे त्रिशब्दो वर्तत इति चेत् तदाह—प्रकरणादवच्छेद इति चेत् । उत्तरं—विधेयेऽपि तुल्यं प्रकरणं यतः । अत्र भाष्यम्—लिङ्गं त्विदं प्राप्तिरुच्यतां " इति । तदाक्षिपति—एवमुक्तेन न्यायेन त्रिशब्दस्य प्रकृतिलिङ्गत्वे निरस्ते "लिङ्गं त्विदं प्राप्तिर्वक्तव्या" इति वदतः कोऽभिप्रायः ? एकग्रन्थेनाह—ननु प्रकृतिलिङ्गासंयोगादुक्तैव प्राप्तिः । उक्तायां च पुनः प्रश्नो नोपपद्यते । समाधत्ते—अयमभिप्रायः किमिति सङ्ख्यावन्तमनूद्य गुणो विधातुं न शक्यते । एकग्रन्थेनाह—न नाम सङ्ख्या कार्यं लक्षयति । सङ्ख्यावन्त एव हि त्रिशब्दात् प्रतीयन्ते न सङ्ख्यावतां कार्यम् यज्जुहोति तदामनमस्यामनस्य देवा इत्यनेन मन्त्रेणेति । तेनानूयाजेष्वेव मन्त्रमात्रविधानात् न समुच्चय इत्युच्यते भाष्यकारेणेति सम्बन्धः ।

परिहारस्तु गृह्णातिवज्जुहोतेः श्रुत्यर्थत्वाद्विधानमित्युक्तम् । यथा बार्हस्पत्यं गृह्णातीति श्रुत्या ग्रहणविधानं तथेहापि होमविधानमेव न मन्त्रविधानमिति परिहारः । वाजपेयवच्च वाक्यभेदः सङ्ख्यामन्त्रयोर्विधानात् । यदि तु त्रिशब्दार्थो न विधीयेत किन्तु आहुतीर्विशिनष्टि तदा विशिष्टानुवादलक्षणो वाक्यभेदः । तस्मात् कर्मान्तराण्येवैतानि ।

एवं च सति यदा कर्मान्तरविधानं तदा विधीयमानकर्मान्तरभेदापादकतयापि सङ्ख्या समर्थितैवेति । समुच्चयलिङ्गमुक्तम् ।

॥ ५ ॥ उपगेषु शरवत्स्यात् प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥

अत्र भाष्यकारः पत्नीभिरुपगायन्तीभिः ऋत्विजो निवर्तन्ते नेति चिन्तयति तद्यथाश्रुतमिति मन्वानो न्याय्यं सन्देहमाह—प्राकृतमुपगानं निवर्त्यते नेति चिन्त्यत इति । कथं पुनर्यथाश्रुतमयुक्तम् ? उच्यते । यदि हि प्राकृते उपगाने पत्नीमात्रविधिमाश्रित्य पूर्वपक्षो भवेत् अपूर्वोपगानेन च राद्धान्तः तदा युक्तो यथाश्रुतसन्देहः । यदा तु (अपमेव) पूर्वमेव गानापचयकरं गानमाश्रित्य पूर्वपक्षितं

तदङ्गीकारेणैव च राद्धान्तितं तदा निबन्धनोक्त एव सन्देहो युक्तः। भाष्यवाक्यानि-उपगाननिवृत्तावपि ऋत्विजां निवृत्तिरस्तीत्यनेनैवाभिप्रायेण वर्णनीयानि।

कथं पुनरुपगानं विक्रियते कथं वा न? उत्तरं—यदि प्रकृतिलिङ्गसंयोगोऽस्ति तदा विकारः अथ नास्ति तदा समुच्चयः। कथं प्रकृतिलिङ्गसंयोगो भवति कथं वा न सम्भवति। उत्तरं—यद्यत्रापि प्रकृतिगानस्यैव शारीरस्य उपार्थ उपचयश्चोद्यते तदा प्रकृतिलिङ्गसंयोगः अवयवो ह्युपचयकार्ये वर्तत इति युक्तम्। अथापि गृह्णतिवन्न विकृतौ केवलोपार्थविधानं सम्भवतीति उपार्थविशिष्टधात्वर्थविधानेऽपि तुल्यकार्यत्वान्निवृत्तिः प्राकृतस्योपगानस्य। यद्यपि गानोपचयकारि गानान्तरं विधीयते तथापि तुल्यकार्यत्वात् प्राकृतमुपगानं निवर्तत इति यथापूर्वप्राकाशदानविधावपि प्राकृतदाननिवृत्तिः। कथं पुनः तुल्यकार्यत्वं? उत्तरं—उपान्वयात्। उपशब्दो हि उपचयकारितां द्योतयति। ननूपशब्दोऽनर्थको दृष्टः यथा गमनमेवोपगमनं तद्वदत्र किमिति न भवतीत्यत्राह—न ह्यर्थे सम्भवत्यानर्थक्यं शक्यते कल्पयितुमित्युभयथा उपार्थविधौ धात्वर्थविधौ च प्राकृतं निवर्तयति। यदि पुनर्वादित्रस्योपगानं वादित्रमेवोपगानमिति तदा प्रकृतिलिङ्गासंयोगात् समुच्चयः। यस्मादेतस्मिन्नुभयविधेऽपि पक्षे वादित्रोपचयः कार्यं न सामगानोपचयः। यद्येवं यद्युभयथापि समुच्चयः तदा राद्धान्ते धात्वर्थोपन्यासतन्त्वेऽपि गानशब्दो दृश्यते इत्येतदेव वक्तव्यम्। तावतैव राद्धान्तसिद्धेः यदा हि कोऽप्युज्येत। भाष्यकारः किमिति धात्वर्थविधानमाहेत्यर्थः। धात्वर्थविधानेऽपि हि प्रकृतिलिङ्गसंयोग उक्त एव। तस्माद्वादित्रगानेऽपि गानशब्दो वर्तत इति तदेव चोदकानुग्रहाय वैकृते वादित्रे उपचयः कार्यमिति शब्दाविरोधेनाङ्गीक्रियत इति।

समाधत्ते—अस्त्यत्राभिप्रायः यदि केवलोपसर्गार्थश्चोद्यते तदा न प्राकृताद्गानात् अन्यच्छक्यते वक्तुम्। अस्यार्थः—वादित्रमेव गानमित्युक्तं तन्न सिद्ध्यति यद्युपसर्गार्थः केवलो विधीयते। तदा श्रौ[तगान] विधानमित्युक्ते वाक्येन प्राकृत एवोपगानोपचयः[कृतः] इहापि तथैव मा प्रसाङ्क्षीत् इत्याघाटलिकादिविधिः। धात्वर्थविधाने पुनः कार्यान्तरेणाप्युपार्थान्वयः सम्भवतीति नावश्यं प्राकृतमेव कार्यं गानोपचयकारि। धात्वर्थे विधीयमाने उपचयः कार्यभूत आश्रयणीयः।

न च स प्राकृत एव, दिक्षु दुन्दुभयो नदन्ति इत्यत्रापि उपचयस्य कार्यस्य सम्भवात् । स एव चोदकानुग्रहायाश्रीयते । तदिदमुक्तं वादित्रस्योपगानमिति ।

कथं तर्हि उपसर्गार्थविधानेपि राद्धान्तो दर्शित इत्यत्राह— अथाति प्रकृतत्वाद्वादित्रस्य तस्यापि गानशब्दवाच्यत्वात् वादित्र एवोपचये उपगायतिर्वर्तते तदा वादित्रस्य उपार्थविधानेऽप्येतत्सिद्ध्यति वादित्रोपगानमिति । तस्मात् सर्वं सूक्तम् । पूर्वपक्षोत्तरपक्षावपि विषयाभिधानेनैवोपवर्णितावित्युपरम्यते । तत्र शारीरमेव गानं न वादित्रमिति पूर्वपक्षः । न हि वादयन् गायतीत्युच्यते ।

राद्धान्तस्तु वादित्रमपि गानमुच्यते, स्वरविशिष्टाभिव्यक्तिर्हि गानं सा च वादित्रेऽपि विद्यते तदपि गानमिति ।

॥ ६ ॥ संस्कारे चान्यसंयोगात् ॥ १० ॥

अत्र अञ्जत इत्युपदेशार्थत्वात् तुल्यं कार्यं मन्वानस्य पूर्वपक्षः । गौग्गुलवेन प्रातस्सवनेऽञ्जते इत्यञ्जनस्येह लेपनमात्रमेव कार्यम् । नवनीतस्यापि लेपनमेव कार्यमिति मन्वानः पूर्वपक्षी नवनीतस्य निवृत्तिमाह ।

ननु दीक्षाकाले नवनीतेनाभ्यञ्जनं सुत्याकाले च गौग्गुलवं कषायाञ्जनं इति कथं तस्य तेन निवृत्तिरित्यत्राह—तुल्यकार्यत्वे च न कालान्यत्वमुपघाते हेतुः कालान्यत्वं नावनीतस्य घोपघाते हेतुः प्रयाजवत् । यथा कालान्तरीयैरपि पाशुकैः प्रयाजैः कृते कार्ये पौरोडाशिकप्रयाजनिवृत्तिः तथेहापीत्यभिप्रायः ।

राद्धान्तस्तु नोपदेशार्थ एव प्रकृतौ कार्यं नावनीतस्याभ्यञ्जनस्य । किं तर्हि वैशद्यमङ्गानां स्नेहनेन नवनीतेन कृतम् । इह गौग्गुलवे कषाये स्नेहनं कार्यं नास्तीति कार्यान्तरकल्पना । तच्च कार्यं दृष्टमदृष्टं वा यथार्थं अर्थस्वरूपानतिक्रमेण कल्पनीयम् । अतः कालान्तरात्समुच्चयः न तु कार्यान्यत्वमेव समुच्चयहेतुः ।

किमिदं कालान्यत्वात्समुच्चय इत्युच्यते । समाधत्ते–एककालीनानां हि कार्यभेदेऽपि कालान्तराभावात् भवति बाध इति प्रदर्शितं भवति । भिन्नकार्ये अपि नवनीताञ्जनगौग्गुलवाञ्जने वैशद्यविलक्षकरणे समानकाले विरुध्येते

इति वा एतत् स्यादिति दर्शयितुं कालभेद उक्तः । नवनीताञ्जने स्थिते गौग्गुलवाञ्जनं पश्चात् विरुक्षीकरणमिति ।

॥ ७ ॥ आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥ १२ ॥

अत्र कौपीनाच्छादनार्थेन वाससो दृष्टार्थत्वात् बाधं मन्यते पूर्वपक्षवादी । तात्पर्यादिभिः कौपीनस्य गुह्यदेशाच्छादित्वात् अहतं वासो निवर्तते । दृष्ट चैतत् । इदमेव कार्यं वाससोऽपि कौपीनाच्छादनमिति राद्धान्तवादी मन्यते ।

उक्तं वैकृतमन्त्रेपदेशे षड्भिर्दीक्षयतीत्यत्र नाभ्यासोमन्त्राणाम् उपदेशार्थवत्त्वाय हि ते क्रियन्ते । कार्यप्रयुक्तत्वेन कार्यमस्तीत्येतावता न क्रियन्ते । किन्तु उपदेशम्यार्थवत्त्वायेति । एवमत्राप्युपदेशस्यार्थवत्ता करणीया उपदेशतः प्राप्तेः स्वार्थादीनाम् । परिधानं चोपदेशार्थः ।

॥ ८ ॥ सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

सामान्तराणि निवर्तन्त इति । कोऽभिप्रायोऽस्याश्चिन्तायाः ? यावता युक्तैव निवृत्तिः स्तुतौ साधनान्तरविधानेन साधनान्तरस्य । उत्तरं—नात्र किञ्चित् प्राकृतलिङ्गं श्रूयते येन प्राकृतनिवृत्तिः । स्तुत्यर्थस्यानवगमात् । यदि हि स्तुतिमुद्दिश्य सामान्तरविधानं स्यात् स्यात् सामान्तरनिवृत्तिः । न चैतदस्ति । तस्मात् परिसामादावनुच्चारणमात्रं विधीयमानसामान्तराणामदृष्टयेति समुच्चय एव युक्त इति पूर्वपक्षः । राद्धान्तस्तु उक्तं तावत्साम्नामविशेषेण संस्कारकत्वम् तेन क्रौञ्चादयोऽपि संस्कारकारका एव । सामान्येन चायं न्यायः—स्वभावतः कार्यसिद्धौ सम्भवन्त्यां पदार्थस्वभावत्यागेन कार्यान्तरकल्पना न युक्तेति । एवं चाक्षराभिव्यक्त्या स्तुत्यभिनिर्वृत्या च दृष्टे उपदेशार्थवत्त्वे सम्भवति नादृष्टकल्पना द्रव्याणां सम्भवति । अस्यार्थः—साम्नां हि साधनत्वं गुणाभिधानसमर्थाक्षराभिव्यक्तिद्वारेण । तच्च स्वभावापरित्यागात् दृष्टेनैव व्यापारेण । उच्चारणमात्रेण त्वदृष्टार्थत्वम् । स्वभावपरित्यागेन हि तत्राक्षराभिव्यञ्जकत्वमुपयोगि । तस्मात् स्तुति [रा]श्रीयताम् न पुनरुच्चारणमात्रेणादृष्टम् । ननु च कार्यप्रवृत्तिरस्ति । अस्यार्थः—यद्यपि साम्नामुपदेशस्तथापि कार्यतोऽपि सामान्तराणां प्राप्तत्वात् तैस्सह समुच्चय एव न्याय्यः । न बाधः । उत्तरं—

बाढमस्ति कार्यात् प्राप्तिः । सा तु कार्ये सिद्धावसत्याम् । इह तु उपदेशत एव सिद्धं कार्यमिति प्रति(निवृत्तितं) निवर्तितं विधेस्तं प्रति प्रयोजकत्वम् । तस्माद्बाधो युक्तः । अयं च सर्वत्र न्यायो द्रष्टव्यः प्राकृतपदार्थप्रयुक्तिबाधेन वैकृतं तत्कार्ये साधनान्तरं विधीयत इति ।

नन्वेवं तर्हि परिसामस्वपि स्तुतिरेव स्यात् इत्यत्राह—परिसामसु पुनरुप-देशान्तरे विधानात् दृष्टं न सम्भवतीत्यदृष्टमेव कार्यमिति युक्त उपदेशान्तरे कार्ये स्तुतेरन्यस्मिन् कार्यान्तरे वचनेनैव विधानात् युक्तं परिसाम्नामदृष्टं कार्यम् । यदस्माभिरुक्तं तदिदमुक्तं देवदत्तयज्ञदत्तस्तैलेनेति । कथमनेनैतदुक्तमित्यत्राह— स्वभावापरित्यागेन तैलं स्नेहनरूपं न कार्यान्तरे वर्तत इत्यर्थोऽस्य तैलदृष्टान्तस्य । तथापि स्वभावापरित्यागेनापि उपदेशे सिद्धे सर्वेषां साम्यकारीये सन्देहे कारणसन्देहमाह—अतेदानीं स्थिते सामान्तरबाधकत्वे चिन्त्यते । किं कार्यविशेषाज्ञानात् स्तुतिमात्रकार्यविज्ञानात् (सर्वकार्य) प्राकृतसामकार्यार्थत्वात् वैकृतानां साम्नामुपदेशस्य उपदेशार्थनिवृत्तिमात्रमेवानुष्ठानेनोपदेशार्थः स्वीकृतो भवति तावदेवानुष्ठानं कार्यमिति ।

ननु चायमस्मदुक्तोऽर्थः उपदेशार्थनिर्वृत्तिमात्रमेवानुष्ठानमिति किं चिन्त्यते निर्णीतत्वात् ।

परिहरति—सत्यमुक्तम् कार्यविशेषानवगमादुपदेशमात्रमेवाप्रतिपन्नं मन्यते । यथा षड्भिर्दीक्षयतीत्यादौ कार्यविशेषो ज्ञातः तथेह कार्यविशेषज्ञानं नास्ति तेनोपदेशार्थ एव न प्रतिपन्नः । तेन सामान्युपदिष्टानि तावतां प्रयोगे यत्कार्यं तदेतदेव तत्कार्यं न कार्यत उपदेशनिर्णयः परिवासस्यप्युपपद्यत इति न कार्यार्थं कार्यतः प्राप्तमहतं वासो न विहन्ति कौपीनाच्छादनादन्यद् दृष्टमपि कार्यं सम्भवति । परिधानस्य सम्भवादुपरिवासस्यपि । उपदेशो हि शब्दार्थानुष्ठानं ततःकार्यम् । न कार्यतोऽनुष्ठानं यथा कार्यतः प्रवृत्तानां कार्यतोऽनुष्ठानं न तथा साक्षादुपदिष्टानां, किन्तु तेषां कार्यं कल्प्यम् । न च शब्दार्थविशिष्टस्य दधात्यर्थस्य कौपीनाच्छादनेनैव कार्यम् कार्यान्तरस्याप्युपरिवाससि दर्शनात् । तेनानैकान्तिकत्वात् न कार्यविशेषा-वधारणम् । दर्शनमुक्तम् । अदृष्टार्थे हि नोपरिवाससापि सह समुच्चय इति वासांसीति बहुवचनं लिङ्गम् ।

॥ ८ ॥ सामस्त्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

अत्र कालविधानमेव मन्वानो न शक्नोति पूर्वपक्षयितुम्। विकृतौ भावार्थविधानात्। दर्शनग्रहाधिकरणवदप्रतिपक्षत्वाच्च भावार्थविधानस्ये-त्युक्तम्। अनेकगुणश्रवणाच्चेत्यपि द्रष्टव्यम्। अतः स्तुत्यन्तरमेवेदं सामविशिष्टं विधीयते दानवद्दानान्तरकार्ये, स्तुतिरपि स्तुत्यन्तरकार्ये वर्तेत इति पूर्वपक्षयति — समानजातीयत्वात् स्तुत्यन्तरकार्ये वर्तेत इति शक्यते वक्तुमिति प्राकृत-स्तुतिनिवृत्तिः।

राद्धान्तस्तु स्यादेतदेवं यदि गुणमात्रविधिः स्यात् क्रौञ्चादिवत् इह तु विशिष्टविधानम्। अन्यथा यदि विशिष्टविधानं नाश्रीयते तदा यथाश्रुतान्व-यानुपपत्तिः देशविशिष्टस्याप्यन्वयावगमात्। ततः किं? यदि विशिष्टविधानं न स्तुत्यन्तरकार्ये वर्तेत इति शक्यते वक्तुं अदृष्टार्थत्वात् स्तुतीनाम्। दानेन दृष्टार्थ-तया युक्तो दानान्तरेण वैकृतेन प्राकृतदानप्रत्याम्नायः।

ननु च भाष्यकारेण साम्नां निवृत्तिरित्युक्तं न स्तुत्यन्तरेण स्तुतीनां निवृत्तिरित्युक्तम्। अतो भाष्यविरोधः। उत्तरं – फलतस्तद्व-[चनम्]।

॥ अत्र पातः ॥

—: * :—

## ॥ द्वादशाध्यायस्य प्रथमः पादः ॥

अत्र भाष्यकारः फलमाह—'एकादशाध्याये तन्त्रावापलक्षणं व्याख्यातम्। अधुना द्वादशे प्रसङ्गलक्षणं व्याख्यास्यामः' तच्चैतद्वृत्तवर्तिष्यमाणानुकीर्तनं सम्बन्धकथनार्थम्। तत्र पृच्छति—कः पुनरनयोर्लक्षणयोः सम्बन्धः यत्कथनार्थमिदं भाष्यमिति। पृच्छतश्चायमाशयः तन्त्रेऽपि सकृदनुष्ठानं प्रसङ्गेऽपि। तदनयोर्न हेतुहेतुमद्भावसम्भवति। न च सम्बन्धान्तरस्य शङ्कापि युक्तेति। उत्तरं—हेतुहेतुमद्भावकृत एव सम्बन्ध इति। कुत इत्याह—स्थिते ह्येकप्रयोगवचनाद्भिन्नाकाशकालकर्तृत्वे तन्त्रमनुष्ठानमगृह्यमाणविशेषत्वादिति इदानीं गृह्यमाणे विशेषे अन्यतोऽपि प्रयोगसिद्धेः देशकालकर्तृत्वाभेदे किं तन्त्रमेवानुष्ठानं उत भेदेनेति चिन्त्यते। अस्यार्थः-दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येकस्मात् प्रयोगवचनात् प्रयोगविधिशेषभूतानां देशकालकर्तॄणामभेदे स्थिते प्रयाजादीनामङ्गानां तन्त्रमनुष्ठानमिति यत् तदगृह्यमाणविशेषत्वात् न प्रयाजाद्यनुष्ठानस्य विशेषो गृह्यते अस्य प्रधानस्येदं नास्येति।

एतदुक्तं भवति—यद्येकः प्रयोगवचनो न स्यात् तदा प्रयोगचोदनाशेषभूता देशकालकर्तारोऽपि भेदेन सम्बध्येरन् सौर्याग्नेयणप्राजापत्येष्विव; यदा त्वेक एव प्रयोगवचनः तदा देशत्वं देशस्य कालत्वं कालस्य कर्तृत्वं कर्तुर्न भिद्यते। ततश्च प्रयोगानुबन्धभूतानां तेषां भेदादेक एव प्रयोगो गृह्यमाणविशेषत्वादिति।

इदानीं पश्वर्थमनुष्ठानं न पुरोडाशार्थमिति गृह्यमाणेपि विशेषे अन्यतोऽपि प्रयोगसिद्धेः अनुष्ठानस्यागृह्यमाणविशेषत्वात् देशकालकर्तृत्वाभेदसाधकादन्यतः तन्त्रमध्यविधानादेकप्रयोगसिद्धेः देशकालकर्तृत्वाभेदेपि किं तन्त्रमेव सकृदेवानुष्ठानं प्रयाजादेः उत भेदेनेति चिन्त्यते यतः ततो हेतुहेतुमद्भावोऽस्तीति। एतच्च ग्रहणवाक्यम्।

एतदेव चोद्यपरिहारद्वारेण विवरीतुं चोदयति—कः पुनरत्र पूर्वस्य हेत्वर्थः। हेतुर्हि भवन् कञ्चिदर्थमुपकुर्वन् हेतुर्भवति। अत्र पूर्वस्य को हेत्वर्थः। एकदेश्याह—एकदेशकालकर्तृत्वसिद्धिः। देशकालकर्तॄणामेकता

पूर्वाध्याये सिद्धयति । भवत्वेवं तथापि केन हेत्वर्थतेत्यत्राह—**तस्यां हि सत्यां गृह्यमाणे विशेषे सकृदनुष्ठानम् ।**

यद्यपि क्रम(सङ्ख्या) [समाख्या?] अप्यविशेषेण गृह्यन्ते विशेष[त]: पाशुकमिदमनुष्ठानमिति तथापि देशकालकर्त्रैकतया सकृदनुष्ठानम् । नन्वेवमपि कथं पूर्वस्य हेतुत्वमित्यत्राह—**सा चैकप्रयोगवचनतया साधिताऽधस्तात् ।**

आक्षेप्ताऽह—**नन्वत्रापि तुल्यम् ।** अस्यार्थः - यदिदं एकप्रयोगवचनतया देशादीनामेकत्वसाधनं तत्तुल्यमत्रापि । ज्योतिष्टोम एव प्रयोगः पशोः पुरोडाशस्य च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन प्रधानस्याङ्गानां च प्रयोग उच्यत इति । उपदेशात् ज्योतिष्टोमाङ्गस्य पशुपुरोडाशस्य च पश्वङ्गस्यैकः प्रयोगवचनः । पाशुक एव वा पुरोडाशस्य तदङ्गत्वात् । यद्वा पाशुक एव प्रयोगवचनः अग्नीषोमीयं पशुमालभेत इति पुरोडाशस्यप्रयोगं वक्ति । पुरोडाशस्य पश्वङ्गत्वात् साङ्गस्य च प्रधानस्य चोदनायैव प्रयुक्तोऽयं इति चोदयति—**स एव तदङ्गमपीति ।** यत एवमेकप्रयोगवचनताऽत्रापि तन्निबन्धनश्च देशादीनामभेदः तन्निबन्धनं च सकृदनुष्ठानं अतः तन्त्रप्रसङ्गयोः भेद एव दुर्लभः हेतुहेतुमद्भावस्तु दूरत एव नास्तीत्याह—**तस्मान्नानयोर्हेतुहेतुमद्भावस्सम्भवति ।**

इदानीमाक्षेप्ता तन्त्रप्रसङ्गयोः भेदमाशङ्कते—**अथात्राङ्गप्राप्तिर्भिन्ननियोगलभ्या प्रसङ्गे । तन्त्रे तु पुनरेकनियोगलभ्या इति भेदः ।** किं तौ पशुनियोगपुरोडाशनियोगावतिदेशतः प्रापयतः प्रसङ्गे, तन्त्रे पुनरेक एव दर्शपूर्णमासाधिकारनियोगः प्रयाजादिकमङ्गजातं प्रति करणं प्रापयति । तेनैकनियोगप्रापितानां सकृदनुष्ठानं तन्त्रम् । भिन्ननियोगप्रापितानां तु प्रसङ्ग इति विशेषः । निराकरोति—**अयमपि विशेषो नैव शक्यते वक्तुं यस्मात् ज्योतिष्टोमनियोगलभ्यैवेयमुभयोरितिकर्तव्यता ।** अस्यार्थः - यद्यपि प्रापकभेदः तथापि प्रयोजकभेदस्तावन्नास्ति । प्रसङ्गेऽपि ज्योतिष्टोमनियोगस्य यत्तन्त्रे प्रयुक्तिः तल्लभ्यैव तत्प्रयोज्यैवोभयोः पशुपुरोडाशयोरितिकर्तव्यता । प्रयोजकविशेषनिबन्धनश्चानुष्ठानविशेषो न्याय्यः तदधीनत्वात्तस्य । तन्त्रप्रसङ्गौ च अनुष्ठानस्य विशेषौ । तेनोभयत्रापि प्रयोजकविशेषाभावान्नानुष्ठानविशेषो युक्तः । एवमेव चायं ग्रन्थो व्याख्येयः । न ज्योतिष्टोमस्य प्रापकत्वमाश्रित्य कृत्स्नविधानाधिकरणे तस्य प्रापकत्वनिषेधात् । न चानेन प्रसङ्गतन्त्रयोः विशेषेण हेतुहेतुमद्भावसिद्धिः ।

पुनरपि तन्त्रप्रसङ्गयोः विशेषमाशङ्कते—**अथेदमुच्यते गुणादिविकारेपि तुल्यमनुष्ठानमिति प्रसङ्गः** । यद्यपि वृत्तादिना सङ्ख्यया च एकादशादिकया विकृताः पदार्थाः तथाप्येकमेवानुष्ठानमित्येवंरूपः प्रसङ्गः । विकारे तु तन्त्रमिति किं तन्त्रप्रसङ्गयोर्विशेषः इति । निराकरोति—**यद्यप्ययं विशेषः तथापि हेतुहेतुमद्भावो वक्तव्यः** । स एवाह—**कः खलु कृतस्य विकारे हेतुभावः** ।

ननु किमत्र हेतुहेतुमद्भावेनेत्यत्राह—**न च हेतुहेतुमद्भावं विना इदं वृत्तं इदं वर्तिष्यमाणमिति युक्तं वक्तुं** सम्बन्धान्तरस्य[ा]विद्यमानत्वात् । आक्षेपैव शङ्कामाह—**अथाङ्गानां सकृदनुष्ठानलक्षणस्सम्बन्ध उच्यते** । अस्यार्थः- तन्त्रेपि सकृदनुष्ठानं प्रसङ्गेपि । तेन सकृदनुष्ठानरूपतन्त्रप्रसङ्गात् प्रसङ्गश्छिन्त्यत इति । तेन प्रासङ्गिकस्सम्बन्ध इति । निराकरोति—**तथापि वृत्तग्रहणमकिञ्चित्करम् विपरीतस्यापि प्रसङ्गस्य सम्भवात् प्रसङ्गप्रसङ्गेन तन्त्रमेव कस्मान्नोच्यते** तेन तन्त्रे वृत्ते प्रसङ्ग इति वृत्तग्रहणमकिञ्चित्करम् । तत्तु एवमुपयोगि स्याद्यदि वृत्त एव तस्मिन्निदं विचार्यते । यावता वर्तिष्यमाणेपि तस्मिन्निदं शक्यमेव चिन्तयितुम् ।

दूषणान्तरमाह—**तद्धेतूपजीवनं चात्र लक्ष्यते** । [1]तद्धेतूपजीवनञ्च प्रसङ्गे कृते । कस्यासौ तद्धेतुरित्यत्राह—**अभिन्नदेशकालकर्तृत्वमिति** । तन्त्रे प्रसङ्गे च तदेव हेतुरिति समानहेतुकतया परस्परं हेतुहेतुमद्भावो नास्तीत्यभिप्रायः । उपसंहरति—**तस्माद्वक्तव्योऽत्र हेतुहेतुमद्भावः** ।

समर्थयिता आह—**अयमभिधीयते** । हेतुहेतुमद्भावदेशकालकर्तृशास्त्रार्थाविशेषेण हि तन्त्रे सकृदनुष्ठानात् तन्त्रेण कार्यसिद्धिरुक्ता अनुष्ठानोद्देशविशेषाग्रहणादिति । समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेत दर्शपूर्णमासयोर्यज्ञक्रत्वोः चत्वारऋत्विज इति यानि देशकालकर्तॄणां शास्त्राणि तेषां योऽर्थः तस्याविशेषेण प्रयाजादीनां सकृदनुष्ठानात् कार्यसिद्धिः तन्त्रमित्यनुष्ठानोद्देशो अनुष्ठाने यद्देशः अस्मा इदमनुष्ठानमिति तस्य विशेषाग्रहणादिति तन्त्रे तन्त्रलक्षणे उक्तम् ।

**इदानीमनुष्ठानोद्देशे विशेषग्रहणेपि देशकालकर्तृशास्त्रार्थविशेषात् अङ्गकार्यस्य किमन्यत्वं भवति नेति संशयः । यदि हि अङ्गकार्यस्य भेदो**

---

1. R तद्धेतुत्वम्

भवति एकस्यार्थेन कृतमङ्गजातं अपरस्योपकर्तुं न शक्नुयात् तदा भेदेनाङ्गाना-मनुष्ठानं भवति। अथ न भिन्नं कार्यं तदा सकृदनुष्ठानमिति अनुष्ठानभेदाभेदेन कार्यस्य भेदाभेदौ चिन्त्येते।

नन्वेवमपि पूर्वस्य कथं हेतुहेतुमद्भावः इत्यत्राह—**सत्यं उद्देश्याविशेषेण सर्वार्थमनुष्ठानमिति स्थितम्। कार्याविशेषस्तु कर्त्राद्यभेदनिबन्धन एव इति अनुष्ठानविशेषेण साधितस्तन्त्रे प्रसङ्गे हेतुतां प्रतिपद्यत इति सोऽयं हेतु-हेतुमद्भावः।** अस्यार्थः—सत्यं तत्रोद्देश्याविशेषेण सर्वार्थमनुष्ठानमिति स्थितम्। कार्याविशेषस्तु यस्तत्र कर्त्राद्यभेदनिबन्धन एव। कर्त्रादीनां हि प्रयोगचोदनाशेषत्वात् सत[र्व]पदार्थेष्वभेदेन कर्तृत्वं देशत्वं कालत्वं च शास्त्रार्थः। तत्र येषां पदार्थानां स्वरूपभेदः तत्र प्रधानभेदादङ्गभूतानां कर्त्रादीनां कर्तृत्वादिकमावर्तते प्रतिप्रधानमा-वर्तन्ते गुणा इति न्यायात्। ये तु पदार्थाः न स्वरूपतो भिन्नाः तान् प्रति कर्तृत्वा-दिकं न भिद्यत इति बलात् सकृदेवानुष्ठानम्। अन्यथा हि कर्तृत्वादिकमपि भिद्यते। ततश्च सकृदनुष्ठाने निश्चिते कार्यमप्यङ्गानां तन्त्रमेवेति निश्चीयते अनुष्ठितानां कार्यासाधकत्वात्। प्रतिप्रधानं चाङ्गानां विनियोगादवश्याभ्युपगमनीयत्वात् कार्य-स्येति। अत इदमुच्यते—कार्याद्यभेदस्तु कर्त्राद्यभेदनिबन्धन एवेति योऽयं कार्याविशेषस्तन्त्रे तन्त्रलक्षणे अनुष्ठानाविशेषेण साधितः अनुष्ठानोद्देशाविशेषात् कर्त्राद्यभेदः तदभेदादनुष्ठानाभेदः अनुष्ठानाभेदात् कार्याभेद इति मत्वा उक्तमनु-ष्ठान[ा]विशेषेण साधितस्तन्त्रे कार्याविशेष इति।

स चायं कार्याविशेषः अङ्गकार्यं तन्त्रता तन्त्रलक्षणेन साधिता। सति(ती)-च प्रसङ्गे परोद्देशानुष्ठितेनापि परोपकारलाभे निश्चेतव्ये हेतुतां प्रतिपद्यत इति सोऽयं हेतुहेतुमद्भावः।

तदेष सङ्क्षेपार्थः—पशूद्देशेनानुष्ठितानामप्यङ्गानां यदवान्तकार्यं तत पशुपुरो-डाशयोर्द्वयोरपि साधारणमिति स्थिते अङ्गावान्तरकार्यतन्त्रत्वे तन्त्रलक्षणे सिद्धे परार्था-ष्ठितैरपि पदार्थैः परस्योपकारलक्षणकार्यसिद्धेः उदासीना प्रधानान्तरप्रयुक्तिर्भवतीति प्रसङ्गनिश्चयो जायत इति भवति तन्त्रस्य प्रसङ्गं प्रति हेतुभावः। दृष्टं हि परार्थानु-ष्ठितस्यापि परं प्रत्युपकारत्वमिति।

तत्र भवन्ति श्लोकाः—

परोद्देशप्रवृत्तानामङ्गानां यत्परान् प्रति ।
महोपकारसामर्थ्य स प्रसङ्ग उदाहृतः ॥ १ ॥

अङ्गावान्तरकार्याणां तन्त्रता तस्य बोधिका ।
हेतुता हेतुमत्ता च तेन तन्त्रप्रसङ्गयोः ॥ २ ॥

कर्तृत्वाद्यविशेषेण कर्त्रादीनां प्रसिद्ध्यति ।
अनुष्ठानसकृद्भावः तेन कार्यस्य तन्त्रता ॥ ३ ॥

अनुष्ठानाविशेषेण तन्त्रे कर्त्राद्यभिन्नता ।
तन्त्रमध्यनिपातेन प्रसङ्गे सा च सिद्ध्यति ॥ ४ ॥

एकप्रयोगतासिद्धिः तन्त्रमध्यविधानतः ।
ऐक्येन च प्रयोगस्य कर्त्रादीनामभिन्नता ॥ ५ ॥

यत एव तन्त्रे अनुष्ठानविशेषाग्रहणात् कार्याविशेषः अत एवात्र पूर्वःपक्षः अनुष्ठाने विशेषाग्रहणात् कार्यविशेषो नास्तीत्येवंरूपः । पशूद्देशेन हि क्रियमाणाः प्रयाजादयः पशूपकारानुगुणमेवावान्तरकार्यं कुर्वन्ति इति युक्तम् । तेन पुरोडाशार्थं भेदेनानुष्ठातव्या इति पूर्वः पक्षः ।

राद्धान्तस्तु—सत्यं अनुष्ठाने विशेषो गृह्यते न पुनः देशकालकर्तॄणां विशेषः तत्कृतश्चायं कार्याविशेषः । अस्यार्थः - यद्यप्युद्देशे विशेषो गृह्यते तथापि देशादीनां देशत्वा(न्य)द्यभेदात् सकृदनुष्ठानेन भवितव्यम् । ततश्चाङ्गकार्येणापि सकृदेवेत्यङ्गावान्तरतन्त्रता तावद्गम्यते । ततश्च परमोपकारोऽपि तद्द्वारकत्वात् पुरोडाशस्यापि तेन सिद्ध्यति यथा प्रासादोद्देशेनापि कृतस्य प्रदीपस्य यदवान्तरकार्यं प्रभालक्षणं तस्य साधारणत्वात् गमनकार्यजनकता राजमार्गेपि भवति । तथेहापि द्रष्टव्यम् ।

यद्यनुष्ठानविशेषग्रहणेऽपि कार्याविशेषः किमर्थं तर्हि तन्त्रे अनुष्ठानविशेषाग्रहणं प्रयत्नेनोच्यते । उत्तरं—कर्त्राद्यविशेषसिद्धये । यत्र ह्यनुष्ठाने विशेषो गृह्यते तत्र कर्त्रादीनां कर्तृत्वादिकं भिद्यते यथा संस्पर्शिषु [ संसर्पिषु ? ] यथा वा आग्नेयकृष्णग्रीवयोः । तेन कर्त्रादीनामभेदसिद्ध्यर्थं विशेषाग्रहणं साध्यते ।

**यदि विशेषाग्रहणे कर्त्रादीनामभेदः इह तर्हि तदभावात् विशेषाग्रहणाभावात् कर्त्राद्यभेदः [न]प्राप्नोति।** ततश्च कुतःकार्याविशेषः कुतस्तरां च प्रसङ्गः इति। परिहरति—**अन्यतः प्रयोगैक्यसिद्धेः न प्राप्नोति कर्त्रादीनां भेदः।** **अन्यतः** तन्त्रमध्यविधानात् प्रयोगैक्यं पशुपुरोडाशयोः अवगम्यते। एकप्रयोगत्वे च प्रयोगशेषाणां कर्त्रादीनामभेदोऽवगम्यते। अतः अङ्गेषु सिद्धेऽपि प्रयोगविशेषग्रहणे अन्यतः कर्त्राद्यभेदलाभात् कार्याविशेषात् तन्त्रवत्प्रसङ्गसिद्धिरिति स्थितम्।

तन्त्रेऽपि सकृदनुष्ठानेनोपकारसिद्धिरेवाभेदानुष्ठानहेतुः इहापि चोक्तेन न्यायेन अस्ति सकृदनुष्ठानेनाप्युपकारसिद्धिरिति युक्तमभेदेनानुष्ठानम्। यत एव कर्त्रादीनामभेदेनानुष्ठानस्यैक्यनिश्चयः **अत एव पदार्थद्वारकाः क्रमसङ्ख्यादयः न पदार्थकार्यं विहन्तुं क्षमाः तदानुगुण्यात्।** अस्यार्थः—पूर्वपक्षिणा ह्येतदुक्तम् तिष्ठन्तं पशुं प्रयजति पृषदाज्येनानूयान् यजति एकादश प्रयाजान् यजति इति पशौ प्रयाजादीनां गुणकालविकारविधानात् विकृताः पशोरुपकुर्वन्ति न पुरोडाशानामिति।

तत्रेदमुच्यते—यदा तन्त्रमध्यविधानसिद्धैकप्रयोगनिबन्धनकर्त्राद्यभेदबलादायातः कार्याविशेषः पशौ पुरोडाशे च प्रयाजादीनां तदा ये पदार्थद्वारकाः क्रमसङ्ख्यादयः ते पदार्थकार्यं साधारणं न विहन्तुं क्षमाः कार्यानुगुणत्वात् गुणविधानस्य। ये हि प्रयोगाद्वारकाः ते प्रयोगभेदमावहन्तो भवन्त्येव कार्याभेदविघातकाः। या तु सङ्ख्या यच्च द्रव्यं तन्न प्रयोगद्वारकम्। यःपुनः तिष्ठन्तं पशुं प्रयजतीति कालविधिः स कालस्य वचनान्तरेण सुत्यालक्षणस्य विहितत्वात् क्रममात्रपर एवेति न भेदेनानुष्ठानमापादयितुं क्षमः। अत एव क्रमसङ्ख्यादय इति क्रमग्रहणं कृतमिति हेतोः नानुष्ठानान्तरमावहन्ति क्रमसङ्ख्यादयः।

**यत्पुनरिदं भाष्यकारेण पदार्थान्तरनिराकृतौ प्रयाजादयः सङ्ख्याभेदेऽपि न प्राकृतेभ्योऽर्थान्तरभूता इत्यत्र यतितं प्रयाजादिषु।** यतिः प्रकृत्यन्तरमस्ति न पुनर्यती प्रयत्ने इत्यस्येदं रूपम्, श्वीदित इति इडभावप्रसङ्गात्। तदबुद्धिपूर्वकमिव प्रतिभाति। **पदार्थान्तरत्वेऽपि पशावेव तत्कार्यं भविष्यति** तस्य पदार्थान्तरस्य कार्यं पशावेव भविष्यति पशोरेव तस्य विहितत्वात् सङ्ख्यादीनामिव। **यथा सङ्ख्यादीनां पशावेव कार्यं तस्मात् कर्मान्तरत्वेऽपि न पुरोडाशे प्रकृतिवत्कार्यविघातः शक्यते वक्तुम्।** अस्यार्थः—प्राकृतानां प्रयाजादीनां पश्वर्थमनुष्ठितानां पुरोडाशे प्रकृतिवत्कार्यविघातो न शक्यते वक्तुं ये प्रयाजादयः

प्रकृताः तदभिप्रायेणापि प्रसङ्गो भवत्येवेति किं पदार्थान्तरनिराकरणप्रयत्नेनेति भावः ।

परिहरति—**सत्यमाह भवान् किन्त्वत्र गुणविकारस्तन्त्रमित्युक्तम् । तत्सिद्ध्यर्थं प्रयाजादीनां स्वरूपवत् कार्यमपि नान्यद्भवितुमर्हति प्राप्तिसिद्ध्यर्थोऽयं यत्नः ।**

अस्यार्थः—यद्यपि पदार्थान्तरत्वेपि पृषदाज्येनानूयाजान् यजतीत्येवमादीनां प्रसङ्गश्चिन्तयितुं शक्यते तथापि भाष्यकारेणापि तु गुणविकारस्तन्त्रमित्युक्तम् । गुणेन पृषत्त्वादिना अनुयाजादीनां विकारो यस्मिन् अङ्गावान्तरोपकारे स गुणविकारस्तन्त्रमित्युक्तम् तस्य तन्त्रत्वसिद्ध्यर्थम् । केन हेतुना तत्सिद्ध्यर्थत्वं इत्याह—**स्वरूपवत् कार्यमपि नान्यद्भवितुमर्हति इति ।** यथा स्वरूपं पदार्थस्य तदेवेत्येकरूपतया कार्यस्य तन्त्रतां साधयितुं प्राप्तिसिद्ध्यर्थो अनुयाजादिप्राप्तिप्रतिपादनार्थोऽयं भाष्यकारस्य पदार्थान्तरनिराकरणे यत्नः । कथं पुनः प्राप्तिसिद्ध्या कार्यैक्यसिद्धिरित्यत्राह **—कार्यविशेषे हि प्राप्तिः यदा प्रकृतिविकृत्योः । अङ्गकार्याविशेषो भवति तदाऽस्तु तावदङ्गानां प्राप्तिर्भवति विकृतिभूतश्च पशुः ।**

एतावत्येव मातृका ॥

—: * :—

## INDEX OF SUTRAS

—: × :—

